

बृहज्ज्योतिषार्णवकर्ता औदीच्यसहस्रज्ञातीय

व्यङ्कटरामात्मज हरिकृष्णशर्मा.

श्रीः

# दुर्गासप्तशती ।

दुर्गाप्रदीप-गुप्तवती-चतुर्धरी-शान्तनवी-नागोजीभट्टी
जगच्चन्द्रचन्द्रिका-दंशोद्धार इति
**सप्तटीकासंवलिता ।**

इयं
औरङ्गाबादनगरस्थ औदीच्य सहस्रज्ञातीय
**पण्डित व्यङ्कटरामात्मज हरिकृष्णशर्मणा**
अतिश्रमात्संगृह्य
पणशीकरोपाह्व लक्ष्मणात्मज वासुदेवशर्मद्वारा
संशोधय्य
**मुम्बय्यां**
जावजी दादाजी इत्येतेषां "निर्णयसागराख्य" मुद्रणालयेऽङ्कयित्वा
प्राकाश्यं नीता ।

शकाब्दाः १८१६, सन १८९४.



मूल्यं रूप्यकत्रयम् ।

# विज्ञापनम् ।

यावद्भूमण्डलं धत्ते सशैलवनकाननम् ।
तावत्तिष्ठति मेदिन्यां संततिः पुत्रपौत्रिकी ॥
देहान्ते परमं स्थानं यत्सुरैरपि दुर्लभम् ।
प्राप्नोति पुरुषो नित्यं महामायाप्रसादतः ॥

भोभो विद्वदग्रेसराः संततमाम्नायानुशासनपरिशीलन-तत्प्रतिपादितकर्मतन्त्रप्रवणस्वान्तत्वेनातिचतुराः, विदितमस्त्वेतत्तत्र-भवतां येयमन्यसाधननिकरनैरपेक्ष्येणापि यथावत्पठतामनुतिष्ठतां च चतुर्विधपुरुषार्थवितरणक्षमेति सडिण्डिमघोषं जगति **दुर्गासप्तशती**त्याख्यया वरीवर्ति । विदिता चेयमाबालवृद्धमखिलभूमण्डले भक्तकामकल्पदुघेति । सर्वत्र चास्याः पाठानुष्ठानादिक्रमोऽव्याहतः सत्क्षुण्णराजमार्ग इव दरीदृश्यते । संप्रत्यपि बहवः श्रद्धालवो विपद्रोगदुःखबन्धदुर्गमसंकटेषु तत्तद्धानाय तदातदा स्वयं विप्रद्वारा वास्याश्चरन्ति पाठं । तेन च केचन सूरयः पूर्णकामाः संतः प्रमोदभरेणान्यानपीदमेव श्रेयःसाधनमिति कुर्वन्त्येतत्प्रवणान् । एतावता सिद्धमस्याः सर्वतः श्रैष्ठ्यम् ।

उक्तं च लक्ष्मीतन्त्रे—

"सम्यक् हृदि स्थिता सेयं जन्मकर्मावलिस्तुतिः ।
एतां द्विजमुखाज्ज्ञात्वा अधीयानो नरः सदा ॥
विधूय निखिलां मायां सम्यग्ज्ञानं समश्नुते ।
सर्वसंपद आप्नोति धुनोति सकलापदः ॥" इति ।

पठितृषु केषांचित्संकल्पफलवैगुण्यमपि दृश्यते तत्र हेतुरविदितानुष्ठानविध्यनुसरणादृते नान्य इति साक्षेपं निश्चिनुमः । न चैतस्या अनुष्ठानमज्ञसुलभम् । यतः—

"ज्ञात्वा प्रारभ्य कुर्वीत ह्यकुर्वाणो विनश्यति ।
ततो ज्ञात्वैव संपन्नमिदमारभ्यते बुधैः ॥" इति ।

तथाच—

चरितार्धं तु न जपेज्जपंश्छिद्रमवाप्नुयात्" इति ।

अत एव तत्र ब्राह्मणवरणेपि—

"जितेंद्रियान्सदाचारान्कुलीनान्सत्यवादिनः ।
व्युत्पन्नांश्चण्डिकापाठरतान्लज्जादयावतः ॥"

इत्यादिवचनजातैरस्याः पाठक्रमोऽतीव दुष्कर इति सर्वसंमतमेव । सप्तशत्यां तत्र तत्र पाठबाहुल्यं मन्त्रविभागविषये च पृथक्पृथङ्मतानि संति । व्याख्यातृभिरपि यथास्वमनीषं स्वव्याख्यासु बहुविधा व्यवस्थाऽकारि । परंतु तासां दौर्लभ्यात्कचन कस्यचिद्विविदिषायामपि बुद्धिः कुण्ठीभूय परावर्तत इति तत्रतत्र शङ्कानामपरिहार्यत्वेनाज्ञानावरणं दृढं सत्प्रावृणोति । सर्वसामान्यः पाठनियमस्तु—

"गीती शीघ्री शिरःकम्पी तथा लिखितपाठकः ।
अनर्थज्ञोऽल्पकण्ठश्च षडेते पाठकाधमाः ॥"

इति वेदाङ्गाम्यशिक्षोक्त'अनर्थज्ञ'पदेन यावत्पाठजपानुष्ठानादावर्थज्ञानमन्तरा नैवानुष्ठानसिद्धिः । प्रत्युत शुद्धाशुद्धविवेचनादृते कृतेपि पाठादौ फलवैगुण्यं दोषबाहुल्यं च दुर्वारमापतति । दृष्टे चैकवारं फलविघाते पुनस्तत्रादराऽसिद्ध्या स्वीयं दोष-

मूलमचिन्त्यैवाविवेकिनः पराङ्मुखाः स्वदोषमन्यत्रारोप्य भ्रमन्ति । पुनश्च सांसारिकदुःखभागिनो दुःखतरङ्गमालिनि संसारेऽसकृदहर्दिवं निमज्जनोन्मज्जनं पारवश्येनानुभवन्ति । एतत्सर्वं कण्ठचामीकरन्यायेन निकटवर्तिन्यपि सप्तशतीचिन्तामणौ कान्तारभ्रमणमिव वृथा परिभ्रमन्तः क्लिश्यन्तीति मनसिकृत्य बहूनामेतदनुष्ठानप्रवणधिषणानामर्थावगत्यै यथाशक्ति यथामनीषं साहाय्याकरणमपि श्रेयस्करमिति बहुकालमन्वेषणेन सप्तशत्युपरि टीकासप्तकमलाभि । तास्वङ्केन द्वित्राः प्रसिद्धाः काश्चन नाम्नैव श्रुतिपथमागता लोकेषु । नैतदवधि काश्चन केषांचिल्लोचनविषयीबभूवुः । तासां सर्वासामपि प्रतिपद्यार्थज्ञीप्सासमये समकालमर्थावधृत्या तत्तत्पृथक्पृथङ्मतावधृतार्थस्य तत्रतत्र पाठान्तराणां वैशद्येन सर्वेपि सानन्दाः कृतकार्याश्च भूयासुरित्येकस्मिन्नेव पुस्तके सप्तशतीस्थप्रतिश्लोकाधः सप्त टीकाः समावेशिताः सन्ति ।

श्रीमच्चण्डिकायाः प्रसादसिद्धयेऽनुष्ठानपद्धतिरवश्यमपेक्षिताप्यत्र ग्रन्थविस्तरभयान्न संगृहीता । साचान्यस्मिन्बृहज्ज्योतिषार्णवे धर्मस्कन्धे ६० षष्टिप्रकरणात्मके दुर्गोपासनाध्याये जपार्चनहवनाराधनानुष्ठानानां तत्रतत्र प्रमाणपुरःसरं विवरणं गुप्तवतीमतेन यथाश्रुतग्राहिमतेन च द्विविधं मन्त्रविभागादि च तत एवावगन्तव्यम् ।

संप्रति चैवं महता प्रयासेन संगृहीतमेतत्पुस्तकमन्यैरादर्शपुस्तकैश्च संयोज्य शोधनेन संस्कृतमस्ति तथापि केषांचित्प्रत्यन्तरालाभात्क्वचन मतिमान्द्यात्कुत्रचिद्दृग्दोषाच्च निसर्गमानुषशेमुषीसुलभं स्खलितं विदुषामक्षिविषयमापतेच्चेत्तर्हि गच्छतः स्खलनं न दोषायेति तत्स्खलितजातं हंसक्षीरन्यायेन शोधयन्तु सहिष्णवः सारग्राहिणो दयालवो वयमप्यस्य पुनःसंस्करणसमये शोधयाम इति सविनयमभ्यर्थना ।

---

श्रीः ।

# दुर्गासप्तशती

## गुप्तवत्यादिसप्तटीकासंवलिता ।

### उपोद्घातः ।

श्रीगणेशाय नमः। वृषवाहनविघ्नेशौ हंसवाहं सरस्वतीं । स्वेष्टं श्रीबटुकं नत्वा पितरं व्यंकटं ततः ॥ १ ॥ श्रीगौतमकुलोत्पन्नो ज्योतिर्विद्व्यंकटात्मजः । हरिकृष्णः करोत्यत्र दुर्गोपासनसंग्रहं ॥ २ ॥ अस्यामुपासनायां वै साधारणमपेक्षितं । तत्सर्वं पूर्वमेवोक्तं विज्ञेयमिह चादरात् ॥ ३ ॥ पूर्वोक्तानां पदार्थानामत्र वक्ष्याम्यनुक्रमं । लक्षणं गुरुशिष्याणां दीक्षाग्रहणनिर्णयः ॥ ४ ॥ पारायणविधानं चाभिषेकस्य विधानकं । बीजानां लक्षणं चैव पुरश्चर्याविधिस्तथा ॥ ५ ॥ स्थानस्य निर्णयश्चैवासनस्य च विनिर्णयः । मुद्राणां लक्षणाध्यायो मालानिर्णय एव च ॥ ६ ॥ जपस्य लक्षणं चैव ह्यजपाजपलक्षणं । तान्त्रिकं स्नानसंध्यादिनित्यकर्मनिरूपणं ॥ ७ ॥ भूशुद्धिर्द्वारपूजादिदेहरक्षानिरूपणं । भूतशुद्धिश्च प्राणानां प्रतिष्ठाविधिरेव च ॥ ८ ॥ न्यासानां निर्णयश्चैव मातृकान्यासनिर्णयः । अनेकविधन्यासानां सप्रमाणं निरूपणं ॥ ९ ॥ अर्चनं द्विविधं चैव वामदक्षिणभेदतः । वामेन वा दक्षिणेन पूजनं तु यथारुचि ॥ १० ॥ पात्राणां लक्षणं चैव पात्रस्थापननिर्णयः । शुद्धिः पञ्चमकाराणां या वामे परिकीर्तिता ॥ ११ ॥ पात्राणां ग्रहणं चैव तिरस्करणिपूजनं । अन्तर्यागविधानं च वैश्वदेवनिरूपणं ॥ १२ ॥ बहिर्यागविधानं च देवतापीठनिर्णयः । सर्वयन्त्रप्रतिष्ठा च सापि भेदद्वयात्मिका ॥ १३ ॥ इष्टदेवस्थापनार्थं प्रथमं यन्त्रपूजनं । वश्याद्यनेककार्येषु यानि यन्त्राणि सन्ति हि ॥ १४ ॥ तेषां चैव प्रतिष्ठा च यन्त्रं सिद्धिकरं यतः । अनेकविधपूजाया भेदलक्षणवर्णनम् ॥ १५॥ शङ्खघण्टापूजनं च तन्माहात्म्यनिरूपणं । उपासनाप्रभेदेन भस्मरुद्राक्षधारणं ॥१६॥ गोपीचन्दनमाहात्म्यं तुलसीकाष्ठधारणं । निर्णयश्चैव संप्रोक्तो ह्यावाहनविसर्जने ॥१७॥ आसनस्य च ध्यानस्य तथा पाद्यार्घ्यनिर्णयः । विधिराचमनीयस्य मधुपर्कस्य निर्णयः ॥ १८ ॥ विधिः स्नानाभिषेकस्य जलाहरणनिर्णयः । वस्त्रस्य चोपवीतस्य तथालंकरणस्य च ॥ १९ ॥ गन्धाक्षतानां पुष्पाणां पत्राणां च विनिर्णयः । धूपदीपविधानं च नैवेद्यस्य विनिर्णयः ॥ २० ॥ फलताम्बूलयोश्चैव दक्षिणायाश्च निर्णयः । आरार्तिकमन्त्रपुष्पप्रदक्षिणविनिर्णयः ॥ २१ ॥ प्रणामस्य प्रार्थनायास्तीर्थस्य च विनिर्णयः । अङ्गपूजाऽऽवर्णपूजा बलिदानादिनिर्णयः ॥ २२ ॥ कुमारिकादिपूजायाः शक्तिपूजननिर्णयः । स्तोत्रादिपठनं चैव तीर्थग्रहणनिर्णयः ॥ २३ ॥ होमस्य च विधानं वै कुण्डमण्डपलक्षणं । तर्पणस्य मार्जनस्य द्विजसंतर्पणस्य च ॥ २४ ॥ विधानं च पृथक्प्रोक्तं निर्णयश्च पृथक्पृथक् । मन्त्रस्य शीघ्रसिध्यर्थं विधिरुक्तो मया नृणां ॥ २५ ॥ सर्वसिद्धिकरः साक्षान्मन्त्रसंस्कारपूर्वकः । मूलिकाग्रहणे मन्त्रा दिशां नियम एव च ॥ २६ ॥ ऋतुमासर्क्षवाराणां तिथीनां नियमस्तथा । अङ्गुलीनिर्णयश्चैव वन्दाग्रहणनिर्णयः ॥ २७ ॥ सिद्धार्यादिचक्रमार्गशोधनं साधकेष्टयोः । शापोद्धारोत्कीलने च सूतकादिविनिर्णयः ॥ २८ ॥ नपुंसकादिभेदाश्च मन्त्राणां ये प्रकीर्तिताः । पुरश्चरणतः पूर्वकृत्यं यच्चान्तिमे तथा ॥ २९ ॥ तत्सर्वमपि ग्रन्थेऽस्मिन्पूर्वमेव प्रकीर्तितं । आवर्णदेवतानां च यजनार्थं विशेषतः ॥ ३० ॥ उद्धारश्चैव यन्त्राणां मन्त्रोद्धारस्तथैव च । सर्वेषां चैव देवानां गायत्रीमन्त्रसंग्रहः ॥ ३१ ॥ चक्रपूजाविधिश्चैव काम्यपूजाविधिस्तथा । नैमित्तिकार्चनविधिर्विशेषेण निरूपितः ॥ ३२ ॥ गर्भाधानादिसंस्कारास्तान्त्रिकाश्च निरूपिताः । दीक्षितस्योपासकस्य ह्यन्त्येष्टिकर्मनिर्णयः ॥ ३३ ॥ कौलमार्गप्रकाशश्च कौलखण्डनमेव च । पूजापराधाः संप्रोक्ताः स्वस्तिकादिनिरूपणं ॥ ३४ ॥ देवालयस्य मर्यादा सेवनं च निरूपितं । निर्णयश्चाधिकारस्य शब्दसृष्टिनिरूपणं ॥ ३५ ॥ षडाम्नायस्य चोत्पत्तिः पवित्रदमनार्चनं । मूर्तीनां लक्षणं चैव तपोमार्गनिदर्शनं ॥ ३६ ॥ जातिस्मरस्य चोपायाः प्रशंसा च निरूपिता । दुष्कर्मप्रायश्चित्तानि नित्यशीक्षानिरूपणं ॥ ३७ ॥ शरीरस्य स्वरूपं च कामनाभेदनिर्णयः । पृथक्पृथक् तथाध्यायैः सर्वेषां निर्णयः स्फुटः ॥ ३८ ॥ परिभाषाभिधेऽध्याये केषांचिन्निर्णयस्तथा । कृतस्तदनुरोधेन प्रयोगः सिद्धिदो नृणां ॥ ३९ ॥ अदृष्टैव विधानं तु कृतश्चेन्नैव सेत्स्यति । एषां सर्वोपासनेषु ह्युपयोगो भवेत्किल ॥ ४० ॥ तेषां सर्वपदार्थानां पूर्वमेव निरूपणं । कृतं तस्माद्विशेषेण दृष्ट्वोपासनमारभेत् ॥ ४१ ॥ सर्वे शाक्ता द्विजाः प्रोक्ता न शैवा न च वैष्णवाः । आदिदेवीमुपासन्ते गायत्रीं वेदमातरं ॥ ४२ ॥ तस्मादादौ प्रयत्नेन गायत्रीं प्रयुतं जपेत् । पटलं पद्धतीवर्म तथा नामसहस्रकं ॥ ४३ ॥ स्तोत्राणि चेति पञ्चाङ्गं देवतोपासने स्मृतं । कवचं देवतागात्रं पटलं देवताशिरः ॥ ४४ ॥ पद्धतिर्देवहस्तौ तु मुखं साहस्रकं स्मृतं । स्तोत्राणि देवतापादौ पञ्चाङ्गं पञ्चभिः स्मृतं ॥ ४५ ॥ जपो

होमस्तर्पणं च मार्जनं विप्रभोजनं । आराधनं पञ्चविधं देवतानां प्रकीर्तितं ॥ ४६ ॥ पञ्चाङ्गैः सहितं स्वेतद्दशाङ्गं कथ्यते बुधैः । हृदयं दीपदानं च स्तवराजादिकं तथा ॥ ४७ ॥ मालामन्त्रस्तथा कल्पः सर्वमेतद्ब्रवीम्यहं । उपासना शराङ्गेषु या प्रोक्ता पद्धतिः पुरा ॥ ४८ ॥ इष्टदेवार्चनार्थं वै द्वितीयाङ्गं च तत्स्मृतं । तस्योपयोगिकं ह्येतत्सर्वं पूर्वं मयोदितं ॥ ४९ ॥ सविस्तरं च तद्दृष्ट्वा कार्या पद्धतिरुत्तमा । सनिर्णयां च सर्वत्र लिखामि यदि पद्धतिं ॥ ५० ॥ तदा ग्रन्थो महानेव भवेत्तस्माच्च पूर्वतः । लिखित्वा निर्णयं पश्चात्पटलादिकमत्र वै ॥ ५१ ॥ प्रवक्ष्यामि विशेषेण ग्रन्थानालोक्य यत्नतः । तस्माद्यत्नपरो भूयात्स्वस्य सिद्ध्यै न संशयः ॥ ५२ ॥ उपोद्घातप्रकरणं प्रथमं परिकीर्तितं । दुर्गामाहात्म्यं प्राह्मोक्तं द्वितीयं च ततः परं ॥ ५३ ॥ देवी रहस्यतन्त्रोक्तं दुर्गापञ्चाङ्गमीरितं । अष्टमं च प्रकरणं दुर्गाभुवनवर्णनं ॥ ५४ ॥ पञ्चरत्नेश्वरीविद्या दुर्गास्तोत्रं ततः परं । ब्रह्मवैवर्तसंप्रोक्तं दुर्गाकवचमुत्तमं ॥ ५५ ॥ अष्टोत्तरशतं नामस्तोत्रं तन्त्रोक्तमेव च । रुद्रचण्डीप्रकरणं त्रयोदशममीरितं ॥ ५६ ॥ रुद्रयामलतन्त्रोक्तं सूक्तत्रयमतः परं । मालामन्त्रश्चण्डिकायाः शूलिनीमन्त्र एव च ॥ ५७ ॥ वनदुर्गोपनिषदं दुर्गोपनिषदं तथा । देवीमहिम्नस्तोत्रं च दुर्गास्तवमतः परं ॥ ५८ ॥ एकविंशे प्रकरणे दुर्गाकल्पः प्रकीर्तितः । मार्कण्डेयपुराणोक्तं सूक्तत्रयमुदीरितं ॥ ५९ ॥ चण्डिकाहृदयं चैव चण्डिकास्तोत्रमेव च । लघुदुर्गासप्तशतीस्तोत्रं कवचमेव च ॥ ६० ॥ कुब्जिकातन्त्रसंप्रोक्तं दुर्गास्तोत्रं ततः परं । गुरुकीलकसंज्ञं वै पटलं परिकीर्तितं ॥ ६१ ॥ तथा मन्त्रविभागश्च संप्रोक्तोऽष्टप्रभेदतः । दुर्गायाः पटलं चैव नित्यदुर्गाविधानकं ॥ ६२ ॥ नवचण्डीविधानं च नवरात्रिविधानकं । शतचण्डीविधानं च सहस्रायुतलक्षकं ॥ ६३ ॥ दुर्गामखप्रयोगश्च दीपदानविधिस्ततः । नित्यार्चनप्रयोगश्च तथा नैमित्तिकार्चनं ॥ ६४ ॥ दुर्गादमनपूजा च पवित्रारोपणं तथा । एकचत्वारिंशके तु जयदुर्गाविधानकं ॥ ६५ ॥ दुर्गाषोडशनामाख्यं स्तोत्रं सार्थं ततः परं । श्रीजामदग्न्यसंप्रोक्तं दुर्गास्तोत्रं सविस्तरं ॥ ६६ ॥ तथा गणेशखण्डोक्तं दुर्गाकवचमेव च । दकारपूर्वकं स्तोत्रं दुर्गानामसहस्रकं ॥ ६७ ॥ नामावली च तस्यैव तथा चाष्टोत्तरस्य च । शतस्य नामावलिका दुर्गानीराजनं ततः ॥ ६८ ॥ श्रीदुर्गाब्रह्मकवचमर्गलाकीलकं तथा । न्यासाश्च रात्रिसूक्तं च दुर्गासप्तशती तथा ॥ ६९ ॥ देवीसूक्तं रहस्यानि दुर्गासंहार एव च । देवीगीता च संप्रोक्ता साक्षान्निर्वाणदायिनी ॥ ७० ॥ एतत्सर्वं मया पूर्वं हरिकृष्णेन धीमता । ज्योतिषार्णवमध्यस्थे स्कन्धे वै धर्मसंज्ञके ॥ ७१ ॥ उपासनाख्ये स्तबके विस्तारेण निरूपितं । अतः परं चार्थबोधज्ञानार्थमिद मुच्यते ॥ ७२ ॥

---

## गुप्तवतीटीकास्थः सप्तशत्युपोद्घातः ।

श्रीगणेशाय नमः । श्रीरामं प्रतिपुष्कराभिधमहायक्षेण वेदत्रयव्याख्यानावसरे विशिष्य कथितं श्रीविष्णुधर्मोत्तरे । तां धेनुं समुपह्वयामि सुदुघामित्यृग्गतं शङ्कराचार्यं शिष्यचतुष्टयेन सहितं वन्दे गुरूणां गुरुम् ॥ १ ॥ विधिविष्णुमुखामरोदयस्थितिनाशेषु शिवोऽप्यनीश्वरः । जगदम्ब तव त्वयं क्रमः क्षणमुद्दालकपुष्पभञ्जिका ॥ २ ॥ कवचार्गले च कीलकमादौ मध्ये त्रयोदशाध्यायी । अन्ते प्राधानिकवैकृतिके मूर्तित्रयं रहस्यानाम् ॥ ३ ॥ इति मार्कण्डेयपुराणाध्यायेषूनविंशतौ गुप्तान् । अर्थान् प्रकटीकुरुते भास्कररायोऽग्निचित् कतिचित् ॥ ४ ॥ सप्तशती लुप्तघतीराप्तवती सत्यतीव तप्तवती । मम तु मतीरचितवती गुप्तवती नाम बिभ्रतीं विवृतिम् ॥ ५ ॥ काव्यव्याकृतितार्किकौपनिषदेष्वेकैकविद्भिः कृताष्टीकाः सन्ति चतुर्विधा अपि चमत्कारावहास्तद्विदां । ताश्चण्डीजपहोमतर्पणमुखानुष्ठानमात्रोपयोग्यर्थज्ञानमभीप्सतां न विदुषां चित्ते चमत्कुर्वते ॥ ६ ॥ एतद्ग्रन्थरसास्वादसामर्थ्ये विदुषां यदि । किमिति प्रार्थनीयास्ते न चेत् प्रार्थनयापि किम् ॥ ७ ॥ कैः पुष्पैरक्षतान् दत्त्वा भृङ्गा भुवि निमन्त्रिताः । केन वा चम्पकेनार्धचन्द्रं दत्त्वा निराकृताः ॥ ८ ॥ यत् सप्तशत्यायुषि गुप्तवत्यामपेक्षणीयं तदवेक्षणीयम् । चण्डीसपर्याक्रमकल्पवल्ल्यां यत्तत्र गुप्तं तदिहास्ति कृत्स्नम् ॥ ९ ॥ तत्रादौ वक्ष्यमाणार्थानुक्रमणीश्लोकाश्चतुर्दश लिख्यन्ते । मङ्गलाचरणं ग्रन्थप्रतिपाद्यार्थसंग्रहः । ततश्चण्डीति शब्दस्य तदर्थस्य च निर्णयः ॥ १ ॥ तन्मन्त्रस्य नवार्णस्योद्धारस्तस्यार्थवर्णनम् । चण्डीस्तवेऽपि हृल्लेखा वाग्भवं चेतनी रमा ॥ २ ॥ कामः कामकला विघ्नो वाराही नारसिंहकाः । परा प्रासादत योगसर्वमङ्गलकालिकाः ॥ ३ ॥ नवार्णश्चेति सर्वेषां मन्त्रोद्धारप्रवेशनम् । संक्षेपेण नवार्णस्य साधनक्रमवर्णनम् ॥ ४ ॥ अङ्गाङ्गीभावनिष्कर्षश्चण्डीस्तवनवार्णयोः । ततः सप्तशतीशब्दस्तदर्थस्तत्प्रशंसनम् ॥ ५ ॥ शापोद्धारोत्कीलने च तत्स्तोत्रपठनक्रमः । तत्पुरश्चरणं काम्यप्रयोगे बलिनिर्णयः ॥ ६ ॥ आवृत्तौ पाठवैचित्र्यमृत्विजान् दक्षिणाक्रमः । कवचस्यार्गलायाश्च कीलकस्यार्थवर्णनम् ॥ ७ ॥ ततो रहस्यतन्त्रस्थगुरुकीलकलेखनं । तदर्थवर्णनं कात्यायनीतन्त्रस्य मुख्यता ॥ ८ ॥ तत्राद्यपटलव्याख्या परोक्ताभासखण्डनम् । ततस्तत्संग्रहशतश्लोक्या अंशेन लेखनम् ॥ ९ ॥ स्तोत्राद्यचरितव्याख्या द्वितीयपटलस्य च । तत्संग्रहांशो व्याख्यानं मध्यमेऽथ चरित्रके ॥ १० ॥ तृतीयपटलव्याख्या ततस्तत्संग्रहांशकः । तृतीयचरितेऽध्यायषट्कमन्त्रार्थवर्णनम् ॥ ११ ॥ चतुर्थपटलव्याख्या ततस्तत्संग्रहांशकः । एकादशादित्रितयमन्त्राध्यायार्थवर्णनम् ॥ १२ ॥ अथ यामलतन्त्रोक्तः प्रकारस्तस्य संग्रहः । ततस्तन्त्रान्तरप्रोक्तसंग्रहांशसमापनम् ॥ १३ ॥ प्राधानिकरहस्यस्य व्याख्या वैकृतिकस्य च । ततो मूर्तिरहस्यस्येत्यनुक्रमणिका मता ॥ १४ ॥ तत्र चण्डीनाम परब्रह्मणः पट्टमहिषीदेवता । चण्डभानुश्चण्डवाद

इत्यादावियत्तानवच्छिन्नाऽसाधारणगुणशालिपरत्वेन चण्डपदस्य प्रयोगदर्शनात्, इयत्तायाश्च देशकालवस्तुकृतत्रैविध्येन तादृशपरिच्छेदत्रितयराहित्यस्य परब्रह्मैकलिङ्गत्वात्; यद्यपि चडि कोप इति धातोर्निष्पत्तिस्तदापि 'कस्य बिभ्यति देवाश्च जातरोषस्य संयुगे' इत्यादिना 'प्रसादो निष्फलो यस्य कोपोऽपि च निरर्थकः । न तं भर्तारमिच्छन्ति षण्ढं पतिमिव स्त्रियः' इत्यादिना च महाभयजनकत्वेनैव कोपस्य साफल्योक्तेस्तादृश एव कोपे चडिधातोर्मुख्यवृत्त्या प्रवृत्तेस्त-द्वशादेव 'नमस्ते रुद्रमन्यव' इत्यादिना प्रथमं मन्यव एव नमस्कारदर्शनात् 'भीषास्माद्वातः पवते भीषोदेति सूर्यः भीषास्माद-ग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः' इत्यादिश्रुत्या वाय्वादिभयजनककोपस्यापि परब्रह्मलिङ्गत्वमक्षतमेव । अतएव महद्भयं वज्रमुद्यत-मिति श्रुतौ वज्रपदेन ब्रह्मैव उच्यते, नायुधविशेषो भयजनकत्वलिङ्गादित्युक्तमुत्तरमीमांसायां कम्पनादित्यधिकरणे । तस्माच्छ-ब्दात् पुंयोगलक्षणे ङीषि चण्डीति पदनिष्पत्तिः । तत्स्वरूपं चोक्तं रत्नत्रयपरीक्षायां दीक्षितैः । 'नित्यं निर्दोषगन्धं निरति-शयसुखं ब्रह्मचैतन्यमेकं धर्मो धर्मीति भेदद्वितयमिति पृथग्भूय मायावशेन । धर्मस्तत्रानुभूतिः सकलविषयिणी सर्वकार्या-नुकूला शक्तिश्चेच्छादिरूपा भवति गुणगणश्चाश्रयस्त्वेक एव ॥ कर्तृत्वं तत्र धर्मी कलयति जगतां पञ्चसृष्ट्यादिकृत्ये धर्मः पुंरूपमाद्या सकलजगदुपादानभावं बिभर्ति । स्त्रीरूपं प्राप्य दिव्या भवति च महिषी स्वाश्रयस्यादिकर्तुः प्रोक्तो धर्मप्रभेददापि निगमविदां धर्मिवत् ब्रह्मकोटी' इति । एकमेव ब्रह्मानादिसिद्धया मायया धर्मो धर्मश्चेति द्विविधमभूत् सृष्ट्यारम्भे यत् प्राथ-मिकमीक्षणं 'तदैक्षत बहु स्यां प्रजायेय' इति 'सोऽकामयत' 'तत्तपोऽकुरुत' इत्यादित्रिविधश्रुतिसिद्धं ज्ञानेच्छाक्रियासमष्ट्या-त्मकत्वं स एव ब्रह्मधर्मः स च धर्म्यभिन्न एव 'स्वाभाविकी ज्ञानबलक्रिया च' इति श्रुतेः तस्यैव धर्मत्वाच्छक्तिरिति संज्ञा । अत-एव 'अथातो धर्मजिज्ञासा' इति कौलोपनिषत्प्रथमसूत्रे जैमिनितन्त्रस्थप्रथमसूत्र इव न धर्मशब्दश्चोदनालक्षणार्थजडवस्तुपरः अपितु ब्रह्मधर्मरूपचिच्छक्तिपर एव । तेन तत्र धर्मपदमपनीय ब्रह्मपदप्रक्षेपस्त्वविदुषामेवेति समर्थितं तद्भाष्येऽस्माभिः । अ-स्यैव धर्मस्यान्या अपि संज्ञाः कथयता नागानन्दसूत्रेण धर्मस्वरूपमेव विशिष्य विवृतं, 'एष एव विमर्शश्चितिः चैतन्यमात्मा स्वरसोदिता परावाक् स्वातन्त्र्यं परमात्मौन्मुख्यमैश्वर्यं सत्तत्वं सत्ता स्फुरता सारो मातृका मालिनी हृदयमूर्तिः स्वसंवित् स्पन्द इत्यादिशब्दैरागमैरुद्घोष्यते' इति । तत्तत्प्रवृत्तिनिमित्तानि तद्भाष्ये एव विवृतानि । स एव धर्मो महाविष्णु-भवानीभेदेन द्विविधो भूत्वा जगतः सृष्टिस्थितिलयतिरोधानानुग्रहात्मककृत्यपञ्चककर्ताऽभूत् । जपाकुसुमस्यैव रञ्जनकर्तृत्वे-ऽपि रागाश्रयत्वेन मात्रा स्फटिकस्यैव शुद्धस्यापि धर्मिणः सान्निध्यमात्रेण कर्तृत्वव्यवहारः । तद्वतो धर्मोऽपि न जडो न जीवः अपि तु 'चितिः स्वतन्त्रा विश्वसिद्धिहेतुः' इत्यादिशक्तिसूत्रोक्तस्वरूपं ब्रह्मैवेत्युपनिषत्सिद्धान्त इति श्लोकद्वयस्य पि-ण्डितो निश्चयोतितोऽर्थः । अस्मदादीनां हि स्रष्टव्यपदार्थालोचनात्मिका ज्ञानेच्छाकृतिरूपा वृत्तिर्घटमहं जानामीत्यादि । भाविघटविषयकज्ञानाद्याकारभेदेन परस्परविलक्षणा त्रिविधा स्वयं जडा घना, जडस्य घनस्यान्तःकरणस्य परिणामो, घनानामेव जडानां विषयीकाररूपसम्बन्धेनापि घनेनैव विशिष्टा, स्वयमपि परिच्छिन्ना, परिचारैरपि परिच्छिन्नैरेव युक्ता, परिच्छिन्न-जडघनाहङ्कारसम्बन्धेनाध्याससहिता च । शुद्धब्रह्मणः प्राथमिकी वीक्षा तु सर्वांशे कोमलत्वात् वृत्तिरूपाऽप्यास्माकीनवृत्ति-धर्मराहित्यादत्यन्तविलक्षणा सती ब्रह्मकोटावेव निविशते इति भावः ॥ तदेतदुक्तं बृहद्वासिष्ठे उत्पत्तिप्रकरणे द्वादशे सर्गे सृष्ट्यारम्भकालिकं ब्रह्मसत्तामात्रं प्रक्रम्य 'तदात्मनि स्वयं किञ्चिच्चेत्यतामधिगच्छति । अगृहीतात्मकं संविदहंमर्श-नपूर्वकम् । भाविनामार्थकलनैः किञ्चिदूहितरूपकं । आकाशादणु शुद्धं च सर्वस्मिन् भाति बोधनम् । ततः सा परमा सत्ता सचेतश्चेतनोन्मुखी । चिन्नामयोग्या भवति किञ्चिल्लभ्यतया तदा । घनसंवेदना पश्चाद्भावि जीवादिनामिका । सम्भवत्यात्तकलना यदोज्झति परं पदम्' इत्यादि । तट्टीकायामपि, सन्मात्रस्य ब्रह्मणः 'स ईक्षत लोकान्नु सृजा' इति श्रुतिसिद्धमीक्षणभावं दर्शयति तदिति त्रिभिः 'अगृहीतात्मकं' अहङ्काराध्यासरहितं अतएव संविन्मात्रेणाहंताविमर्शः 'सर्वस्मिन्नपि' सृज्यविषयी-भाविनामरूपानुसन्धानांशेऽपि किञ्चिदेव संपृक्तमिव । अतएव 'आकाशादण्वेव' न तु घनं 'अतएव' शुद्धमेव घनमालिन्या भावाद्ब्रह्मैव चेत्यतां गच्छतीव सती 'सचेतश्चेतना' ईक्षणावृत्त्यभिव्यक्तचैतन्यं तदुन्मुखी तत्प्रधाना सती 'किञ्चिल्लभ्य-तया वाक्यविषयधर्मलाभेन तदा चिन्नामयोग्या भवतीत्यर्थः । पश्चात्तु सैव वृत्तिश्चिरावृत्त्या घनीभूता सम्यगेव आत्तक-लना सूक्ष्मप्रपञ्चात्मभावलक्षणपरिच्छेदग्राहिणी सती परं पदमपरिच्छिन्नभूमानन्दात्मभावं यदा विस्मरति तदा भाविहिर-ण्यगर्भाख्यसमष्टिजीवादिनामिका भवतीत्याह घनेति । ईदृशेक्षणाद्यात्मकचण्डी चिदादिनामकसमष्टिवृत्तिरूपधर्मात्मकशुद्धब्रह्मा-भिन्नानां ज्ञानेच्छाक्रियाणां तिसृणां व्यष्टीनां महासरस्वती महाकाली महालक्ष्मीरिति प्रवृत्तिनिमित्तवैलक्षण्येन नामरूपान्त-राणि । तादृशनामरूपविशिष्टदेवतात्रयसमष्टित्वं प्रवृत्तिनिमित्तीकृत्य धर्मे चण्डिकेति व्यवहारः । एवं व्यष्टीनां वामा ज्येष्ठा-ऽतिरौद्रीति, पश्यन्ती मध्यमा वैखरीति, ब्रह्मा विष्णू रुद्र इति रूपभेदेन । समष्टेरपि अम्बिका शान्ता परेत्यादि संज्ञा अन-न्तास्तन्त्रान्तरादवगन्तव्याः । त्रितयसमष्टित्वादेवैषा तुरीयेति शक्तिरहस्यादौ निर्दिश्यते । आचार्यभगवत्पादैरप्युक्तम् । 'गिरामाहुर्देवीं द्रुहिणगृहिणीमागमविदो हरेः पत्नीं पद्मां हरसहचरीमद्रितनयां । तुरीया कापि त्वं दुरधिगमनिःसीममहिमा महामाये ! विश्वं भ्रमयसि परब्रह्ममहिषि' इति । अयमेव चार्थः प्राधानिकरहस्ये 'लक्ष्यालक्ष्यस्वरूपा सा' इत्यत्राऽलक्ष्यप-

देन व्यक्तीकरिष्यते । ईदृशानामरूपोपाधिकस्य शक्तिरूपब्रह्मण उपासनाप्रकाशकेषु बहुषु मन्त्रेषु द्वावत्युत्तमौ । नवार्णः सप्तशती चेति । तत्राद्यस्य चतुर्विंशतिवर्णात्मत्वेऽपि व्यञ्जनानां स्वराङ्गत्वेन स्वातन्त्र्येणाक्षरसंख्या व्यवहारानुपयोगित्वेन 'एष वै सप्तदशः प्रजापतिर्यज्ञेऽन्वायत्त' इत्यादाविव स्वरसंख्ययैव नवर्णता । अर्णशब्दोऽपि वर्णपरः सुवर्णे स्वर्णव्यवहारदर्शनात् । वर्णशब्द एव च्युतकालङ्कारेण वकारप्रतीकारादेशप्रयोगस्तन्त्रेष्वेवेति कश्चित् । तदुद्धारस्तु देव्यथर्वशीर्षोपनिषदि । तत्रहि—'सर्वे वै देवा देवीमुपतस्थुः कासि त्वं महादेवि' इति देवानां प्रश्ने सति सा ब्रवीत् 'अहं ब्रह्मस्वरूपिणी' इत्यादिना बहुप्रकारैः सगुणनिर्गुणस्वरूपभेदाभ्यां देवोत्तरिते सति 'ते देवा अब्रुवन्नित्युपक्रम्य 'नमो देव्यै महादेव्यै' इति श्लोकमन्त्रेण ऋग्भिश्च नमस्कारादिकं निर्वर्ण्य श्रीविद्यामुद्धृत्य तत्रत्य कूटत्रयस्यैव रूपान्तरेषु वाक्कामशक्तिबीजेषु श्रुत्यन्तरेवबाला । घटकत्वेन प्रसिद्धेषु शक्तिबीजमात्रं प्रकारान्तरेण 'वियदीकारसंयुक्तम्' इत्यादिना । हृल्लेखात्मकत्वेनोद्धृत्य । तादृशबीजत्रयघटितो नवार्णो मन्त्र उद्धृतः । तथा 'वाङ्माया ब्रह्मसूस्तस्मात् षष्ठं वक्त्रसमन्वितं । सूर्यो वामश्रोत्रबिन्दुसंयुक्तष्टात्तृतीयकः । नारायणेन संमिश्रो वायुश्चाधरयुक्ततः । विच्चे नवार्णकोऽणुः स्यान्महदानन्ददायकः' इति । 'वाक्' वाग्भवबीजम् । (ऐं) । 'माया' शक्तिः हृल्लेखैव (ह्रीं) । 'ब्रह्मसूः' कामः (क्लीं) । 'तस्मात्' कामबीजात् तत्र प्रथमोपस्थितात् ककारात् 'षष्ठ'मक्षरं चकारः त'द्वक्त्रेण' मुखवृत्तेन आकारेण समन्वितं (चा) । 'सूर्यो' मः 'अवाम श्रोत्रं' पञ्चमस्वरः 'बिन्दु'रनुस्वारः (मुं) । 'टात्' टकारात् 'तृतीयको' वर्णो डकारः स च 'नारायणेना'ऽऽकारेण संमिश्रः (डा) 'वायु'र्यकारः स चा 'धरेणाऽधरोष्ठेन द्वादशस्वरेण युक्तः (यै) । 'विच्चे' इति स्वरूपम् 'अणु'र्मन्त्रः महतामुपासकानामानन्ददायकः ब्रह्मसायुज्यप्रद इति तदर्थः । एतन्महिमातिशयो डामरादितन्त्रेषु द्रष्टव्यः । मन्त्रार्थश्च तत्रैव 'निर्धूतनिखिलध्वान्ते नित्यमुक्ते परात्परे । अखण्डब्रह्मविद्यायै चित्सदानन्दरूपिणि । अनुसंदध्महे नित्यं वयं त्वां हृदयाम्बुजे । इत्थं विशदयत्येषा या कल्याणी नवाक्षरी । अस्या महिमलेशोऽपि गदितुं केन शक्यते । बहूनां जन्मनामन्ते प्राप्यते भाग्यगौरवात् । एतमर्थं गुरोर्लब्ध्वा तस्मै दत्त्वा च दक्षिणाम् । आशिषं च परां लब्ध्वा मन्त्रसिद्धिमवाप्नुयात्' इत्यादि । अत्र प्रथमश्लोके सम्बुद्धित्रयं ततः चतुर्थ्यन्तं ततः पुनः संबुद्धित्रयमिति सप्तभिः पदैः क्रमेण मन्त्रे सप्तधा परिच्छेदः पदानां तत्तद्विभक्त्यन्तता तत्तदर्थाश्चेति कथितं । तदुत्तरार्धेनाकाङ्क्षितपदानामध्याहार उक्तः इतरत्स्पष्टम् । सच्चिदानन्दात्मकपरब्रह्मधर्मत्वादेव शक्तेरपि त्रिरूपत्वम् । तत्र चिद्रूपा महासरस्वती वाग्बीजेन सम्बोध्यते । ज्ञानेनैवाज्ञाननाशान्निर्धूतनिखिलध्वान्तपदेन तद्विवरणं युक्तमेव । नित्यत्वं त्रिकालाबाध्यत्वं अत एव मुक्तत्वं कल्पितवियदादिप्रपञ्चनिरासाधिष्ठानत्वं । एतेन सद्रूपात्मकमहालक्ष्मीरूपस्य हृल्लेखया सम्बोधनमिति व्याख्यातं । पर उत्कृष्टः सर्वानुभवसंवेद्य आनन्द एव तस्यैव पुरुषार्थत्वात् 'आत्मनः कामाय सर्वं प्रियं भवति' इति श्रुत्या तदितरेषामपि तदर्थत्वेनानन्दस्यैव सर्वशेषितया परत्वात् स च मानुषानन्दमारभ्योत्तरोत्तरं शतगुणाधिक्येन श्रुतौ बहुविधो वर्णितः तेषु परमातिशायी 'स एको ब्रह्मण आनन्द' इति परमावधित्वेनाम्नात एव परात्परः, 'स्वात्मानन्दलवीभूतब्रह्माद्यानन्दसन्ततिः' इति पुराणं च । तेन आनन्दप्रधानेन महाकालीस्वरूपस्य कामबीजेन सम्बोधनमुक्तम् । चामुण्डाशब्दो हि मोक्षकारणीभूतनिर्विकल्पकवृत्तिविशेषपरः । तादर्थ्ये चतुर्थी । चमुं सेनां वियदादिसमूहरूपां डाति डलयोरैक्याल्लाति आदत्ते स्वात्मसात्कारेण नाशयतीति व्युत्पत्तेः । पृषोदरादित्वात् सर्वं सुस्थमित्याहुः । 'मया तवात्रोपहृतौ चण्डमुण्डौ महापशू' इत्यत्र पशुपदद्विवचनयोः स्वारस्येन तूलमूलभेदेनाविद्याद्वयकथनेन 'यस्माच्चण्डं च मुण्डं च गृहीत्वा त्वमुपागता । चामुण्डेति ततो लोके ख्याता देवी भविष्यसि' इत्यत्रापि तूलमूलाविद्ययोरादानमेव गृहीत्वेति पदेनानूद्य निर्वचनकथनादण्डब्रह्मविद्येत्वेव चामुण्डापदस्यार्थो वर्णित इति सूक्ष्मदृशां रहस्यम् । विच्चे इति तु वित् च इ इति पदत्रयात्मकं बीजक्रमेणोक्तानां चित्सदानन्दानां वाचकं संबुध्यन्तम् । अस्य स्त्री ई इत्यस्य ह्रस्वे सति 'इ' हे आनन्दब्रह्ममहिषि इत्यर्थः । वित्पदं ज्ञानपरं प्रसिद्धमेव । चकारोऽपि नपुंसकः सत्यपर इति योज्यं । अनुसंदध्महे इत्यादि शेषः । इत्थं च हे महासरस्वत्यादिरूपे चिदादिरूपे चण्डिके त्वां ब्रह्मविद्याप्राप्त्यर्थं वयं सर्वदा ध्यायाम इति मन्त्रार्थः फलितः । तस्यायं संग्रहः 'महासरस्वति चिते महालक्ष्मि सदात्मके । महाकाल्यानन्दरूपे त्वत्तत्त्वज्ञानसिद्धये । अनुसंदध्महे चण्डि वयं त्वां हृदयाम्बुजे' इति । यद्यपि श्रीमित्येव बीजं महालक्ष्म्याः प्रसिद्धं न हृल्लेखा तथापि हकारशकारयोरूष्मत्वेन साजात्यात्नातीव भेदः । अतएव 'ह्रीश्च ते लक्ष्मीश्च पत्न्यौ' इति श्रुतौ । शाखान्तरे ह्रीपदस्थाने श्रीपदस्य पाठः । एवं स कामबीज एव लकारस्य स्थाने रेफयोजनेन कालीबीजतारस्तयोश्चान्तस्थत्वेनैक्यात्नात्यन्तं भेदः । तन्त्रान्तरेषु कालीसरस्वत्योर्वास्तविकाभेदमभिप्रेत्य बीजयोर्वैपरीत्याद्भेदव्यवहारोऽपि दृश्यत इति द्रष्टव्यम् । अयं चार्थः प्राचीनैर्वर्णितप्राय एव सम्यक्परिष्कृत्योक्तः । वस्तुतस्तुलक्षणविरोधस्य छान्दसत्वेन वृषोदरादिपाठकल्पनया च समाधानस्याविशेषादन्योऽपि प्रकारः सुवचः । चमु अदन इति धातोश्चामुरदनीयः पदार्थः । स च ब्रह्मातिरिक्तः सर्वोऽपि अत्ताचराचरग्रहणादित्यधिकरणे तथा निर्णयात् । तं डापयति उड्डापयति न विषयीकुरुते ब्रह्ममात्रविषयिणीति यावत् । अथवा चकार एकाक्षरनिघण्टुरीत्या चन्द्रवाचक आह्लादप्रकाशगुणयोगादिह ज्ञानपर आनन्दपरो वा सन् ब्रह्मैव वक्ति । तदासमन्तान्मुण्डयतीति चामुण्डा । मुण्डनं नामाधारापेक्षया न्यूनसत्ताकवस्तुनिरासः । शिरश्चर्मापेक्षया

न्यूनतादात्म्यवतामेव केशानां वपने प्रयोगात् । गौडपादीयभाष्ये तु शरीरराहित्यलक्षणमुण्डताया मुण्डकोपनिषत्प्रोक्तशरीरविशेषवत्ताया असुण्डतायाश्च सत्वाच्चामुण्डात्वमित्यर्थ इत्युक्तम् । अथवा चानां बुद्धीनां सुखानां वा मुण्डमिव शीर्षमिव स्थिता, सर्वोत्तमा चरमवृत्तिरूपा ब्रह्मविद्येति यावत् । अथवा । चण्डिकारूपदेवतापर एव चामुण्डाशब्दः । अतएव मन्त्रान्ते वह्निजायायोजनेन होमे चामुण्डाया इदमित्येव त्यागो विधिशब्दस्य मन्त्रत्वमित्यधिकरणन्यायसिद्धो युज्यते । चतुर्थीबलाच्च नमः शब्दस्यैवाध्याहारः । बीजत्रयमप्यव्ययरूपं चतुर्थ्यन्तमेव व्यष्टिदेवतात्रयवाचकमभेदद्योतकं । तद्विशेषणं विच्चे इत्यप्यखण्डमव्ययं मोचनार्थकं । स्वरादेराकृतिगणत्वात् । मन्त्रस्य पदखण्डशो न्यासप्रकरणे अस्य युगलस्य विभजनं विनैव न्यासविधानात् । भगमालिनी नित्या मन्त्रादिषु बहुषु तस्य प्रयोगसत्वेन तन्त्रोक्तार्थरीत्या निर्वाहाभावाच्च । ततश्च हे अम्ब बन्धनकारणीभूतामिमां रज्जुं ग्रन्थिविसर्जनादिना मोचयेति स्त्रीसम्बोध्यकमोक्षप्रार्थनारूपो विशिष्टस्तदर्थः । यदापि दक्षिणामूर्तिसंहितायां भगमालिनीति मन्त्रस्थदेवतागणनावसरे 'अमोघां चैव विच्चां च तथेशीं क्लिन्नदेवताम्' इति पाठात् विच्चानामिका काचिद्देवतैवेत्यालोच्यते तदापि परिकरालङ्कारेण साभिप्रायं चामुण्डाविशेषणं । मोचयतीत्येव तदर्थः । तस्मिन्नेवार्थे कर्णाटभाषाविद्भिरान्ध्रभाषाविद्भिश्च शिष्टैः प्रयोगेण शक्तिग्रहसम्भवात् । 'पृणीयादिन्नाधमानायतव्यानिति' श्रुतौ तव्यपदस्य सूपादिभक्ष्यपरतायाः । नुवन्तं याञ्चयासुपेति श्रुतौ नौतेर्दुःखपरतायाः । तासां वायुः पृष्ठे व्यवर्ततेति श्रुतौ पृष्ठपदस्य योनिपरतायाः । पढमञ्ची हंसपदमिति प्राकृतपिङ्गलसूत्रे मञ्चीत्यस्य सुन्दरपरताया अन्यत्र च कर्णाटद्रविडान्ध्रभाषाप्रसिद्धैव । शक्तिनिर्णयस्य बहुशोऽङ्कितत्वात्, पिकनेमाधिकरणस्यैतदर्थमेव विशिष्य प्रवृत्तेर्भट्टचन्द्रोदयेऽस्माभिर्वर्णितत्वाच्च । भाषाणां संस्कृतापभ्रंशत्वेनापेक्षितार्थे विरोधाभावे निर्णायकत्वसम्भवाच्च, तन्त्रोद्धृतमन्त्रेषु भाषामिश्रणस्यापि बहुशो दर्शनेन चरणायुधादिदैवत्यमन्त्रेषु पुंकोलीत्यादिशब्दानां कुक्कुटादिष्विव प्रवृत्तेश्चेति द्रष्टव्यम् । काल्यै लक्ष्म्यै सरस्वत्यै चण्डिकायै नमोऽस्तु ते । अविद्यायापाशहृदयग्रन्थिं विस्रस्य मुञ्च मामिति तु मन्त्रार्थसंग्रहः । रहस्यतन्त्रे तु महावाक्यस्येव जीवब्रह्मणोरभेद एव मन्त्रस्यार्थ इत्युक्तं तन्निर्वाहे गुरुचरणावेव शरणमिति दिक् ॥ अत्र प्राञ्चः । तिसृणामपि देवीनां तुरीयया सहाभेदाऽविशेषेऽपि महालक्ष्म्या एव प्राधानिकरहस्ये 'सर्वस्याद्या महालक्ष्मीः' इत्यादिना तुर्यास्थाने गणनादितरयोः देव्योरेतज्जन्यत्वस्य कथनात् । महालक्ष्मीजननस्य पार्थक्येनाकथनाच्चोपास्यदेवतायास्तुरीयत्वेपि तस्यां रजःप्राधान्येनेतरगुणयोर्न्यग्भावेनैव भावनमावश्यकमित्याहुः । तामेव च रीतिमाश्रित्य महालक्ष्मीबोधकहृल्लेखाया एव नवार्णे प्रधानबीजत्वादथर्वशीर्षे तावन्मात्रेण पुनः स्वातन्त्र्येणोद्धारस्यापि प्राधान्यध्वननार्थत्वात् । सप्तशतीस्तोत्रेऽपि प्रथमश्लोके बिन्दुरहिताया अपि तस्या उद्धारेण समष्टिव्यष्टिभेदाच्चत्वारोऽपि मन्त्रा उद्धृतप्राया इति वदन्तष्टीकाकारास्तदुद्धारप्रकारं देवीचन्द्रकलास्तवे दीक्षितैः प्रदर्शितमेव लिखन्ति । यथा—'सावर्णिः सूर्यतनयो यो मनुः कथ्यतेऽष्टमः । निशामय तदुत्पत्तिं विस्तराद्गदतो मम' । अस्यार्थः । यः यकारादष्टमो हकारः सूर्यतनयोऽग्निः रेफः दिनान्ते सवितृतेजसोऽग्नौ निक्षेपेण पित्र्यस्य धनस्य पुत्रे निक्षेपदर्शनेन तत्सादृश्यादग्नौ सूर्यपुत्रत्वम् । वर्णैः सहिता सवर्णा 'अजामेकां लोहितशुक्लकृष्णाम्' इति श्रुतिप्रसिद्धा मूलप्रकृतिः, तस्या वाचकत्वेन पुत्रत्वोपचारादिप्रत्यये सति सावर्णिरीकारः तेन निर्बिन्दुको ह्रींकारः सिद्धः, स मनुर्मन्त्रः कथ्यते देवीमन्त्रयोरभेदात् । तदुत्पत्तिं तदवतारान् गदतो मम मुखान्निशामयेति वर्णयन्ति । आर्षवाक्यानां सर्वतोमुखत्वादस्तु कथञ्चिद् युक्तमेवैतत् । वयंतु ब्रूमः अम् गत्यादिष्विति धातोर्निशाममतीति व्युत्पत्त्या निशाम् चन्द्रो बिन्दुः, अयेत्येतावानेव धातुः इट्किट्कटी गतावित्यत्र प्रश्लिष्टस्येकारस्य रूपं, सूर्यतनयशब्द एव वाऽवृत्त्याबिन्दुपरोऽपि; जलमण्डले सूर्यकिरणानां प्रवेशेनैव चन्द्रात्मतया परिणामेन 'पतिर्जायां प्रविशती'ति न्यायेन चन्द्रस्य सूर्यपुत्रत्वात् 'नवो नवो भवति जायमानः' इत्यस्यामृचि योऽह्नां केतुरुषसामग्र उदेति स एव देवेभ्यो भागं विदधत् पुनः पुनर्जायमानश्चन्द्रमा भवतीति कथनाच्च । अपि च चतुर्थस्वरस्य वर्णे वाच्ये स्त्रीलिङ्गाभावेन नदीसंज्ञाभावात्पञ्चम्यां य इत्येवंरूपम् ईकारादित्यर्थः । दिग्योगपञ्चम्या ईकारात्परत इत्यर्थः । परित्यज्येति ल्यब्लोपे वा पञ्चमी । तेन तत्परतोऽष्टमो द्वादशस्वरः । बिन्दुः पूर्ववत् इति वाग्भवोद्धारः ॥ अपि च । यः अष्टम इत्येतयोरन्यतरस्य द्विरावृत्त्येकारात्परोऽष्टम ईकारात्पूर्वः कार्य इति वा । ईकारादष्टमः तस्मादपि विलोमाष्टम इति वा व्याख्येयं । ततो मनुश्चतुर्दशस्वरः औकारः । तेनेयं त्र्यक्षरी त्रैपुरकंदाख्या विद्या । एतां प्रकृत्य तन्त्रराजे 'एषा त्रैपुरकंदा स्यात्' इति वचनात् । तन्त्रान्तरे त्वस्या एव चेतनीति नाम । एतदुद्धारो योगिनीतन्त्रे 'शिवाष्टमं केवलमादिबीजं भगस्य पूर्वाष्टमबीजमन्यत्। परं शिवान्तं मनुयुक् त्रिवर्णा संकेतविद्या गुरुवक्त्रगम्या' इति । 'शिवा' ईकारः शिव उकार इति वा तस्या 'अष्टमं' तत्परतस्तमारभ्य वाष्टमं द्वादशस्वरात्मकं 'केवलं' बिन्दुरहितं 'भगस्य' ऐकारस्य एकारस्य वा 'पूर्वाष्टमं' ततः पूर्वेषु तमारभ्य वा विलोमाष्टमं चतुर्थस्वरात्मकं । शिवोनुस्वारोऽन्ते यस्य तत् । ततो 'मनुयुक्' चतुर्दशस्वरयुक्ता त्र्यक्षरीविद्या स्त्रीदेवत्या 'संकेतगम्या' गोपनीयेति तद्व्याख्यातारः । तेन 'ऐं ईं औं' इति विद्यासिद्ध्यति । अपिच 'अकारः सर्ववर्णाग्र्यः प्रकाशः परमः शिवः । हकारोऽन्त्यकलारूपो विमर्शाख्यः प्रकीर्तितः । अकारादि हकारान्तं मातृकामण्डलं त्विदम्' इत्यादिव्यवहाराल्लकारस्य लकारेन्तर्भावेन क्षकारस्य संयुक्तत्वेन पार्थक्याभावादूनपञ्चाशद्वर्णं मातृकामण्डलमिति पक्षे

व्युत्क्रमेण गणनायां चतुर्थस्वरादष्टमः शकारः रेफेकारबिन्दवः पूर्ववदिति रमाबीजोद्धारः ॥ अपिच यो मनुः यकाराच्चतुर्दश ईकारो बिन्दुश्चेति कामकलोद्धारः । अष्टम इति कादिनवकादिपरिभाषयैकपञ्चाशदक्षरं । स च क्षकारः रेफौकारबिन्दुभिर्योगे नारसिंहोद्धारः ॥ गदतो ममेत्यत्र गकारः स्वरूपं । दतो दकारं परित्यज्य 'मम' पञ्चकद्वयं दशमो लकारः औंकारबिन्दुयोगे वाराहीबीजोद्धारः ॥ यो मनुरीकाराच्चतुर्दशः ककारः तस्य लकारेकारबिन्दुयोगे कामबीजोद्धारः । ग इति स्वरूपस्य बिन्दुयोगे गणपतिबीजोद्धारः सवर्णः सकारः । आत्मन एव पुत्रत्वविवक्षायां स्वार्थे पर्यवसन्न इञ् । सूर्यतनयो यमो हकारः मनुरौकारः । तत्परतो विसर्गान्तस्याऽनचिन्चेति प्रश्लेषेण परायाः प्रासादस्य तयोर्योगयोरप्युद्धारा द्रष्टव्याः ॥ एवमन्यत्रापि– 'मेधासि देवि विदिताखिलशास्त्रसारा' इत्यत्र पादभेदेन वाक्–सर्वमङ्गला–लक्ष्मीणामुद्धारः । शास्त्रशब्दो वेदपरः । शास्त्रयोनित्वादिति ( वे० सू० २।३ अ० १ पा० १ ) व्याससूत्रादिषु व्यवहृतः । अखिलशब्देन त्रयी कथ्यते । तत्र व्यञ्जनानामविवक्षितत्वादाद्यन्तयोरकारद्वयं मध्य इकारः सिद्धः । वेदत्रयाद्याक्षराण्यपि क्रमेण तथैव । तेषां मध्ये द्वयोः क्रमेण सन्धौ गुणे सत्येकारः । अवशिष्टयोर्व्युत्क्रमेण सन्धौ वृध्या ऐकारः । एवं साद्यस्क्रियपशुत्रयालम्भसाहित्यन्यायेन मध्यभागे मिलितैर्वेदत्रयाद्याक्षरैरेव वाग्भवबीजोत्पत्तेस्तन्त्रराजे स्पष्टं कथनात् । तदिदमखिलशास्त्रसारत्वम् । एतेन 'ऋक्सामयोर्यजुषि सन्धिवशादुदीर्णं बीजं सरस्वति सकृत्तव ये जपन्ति । ते सत्यवाक्यमुनिवद्विदितत्रयीका आथर्वणादिकमवाप्य सुखीभवन्ति' इति श्लोकोऽपि व्याख्यातः । सत्यवाक्यो नाम मुनिर्भयेनैकारमात्रोच्चारणेन वेदचतुष्टयमङ्गानि चाधिगतवानिति भगवतीपुराणस्थाया आख्यायिकायाः पृथ्वीधराचार्यैर्निबन्धनात् । आथर्वणादिकमित्यस्य शमिति । तत्प्रथमाक्षरमित्यर्थः । सुखीभवन्तीति निश्चितं । मुक्ता भवन्तीति यावत् ॥ 'दुर्गासि दुर्गभवसागरनौरसंगा' इति तद्द्वितीयचरणे भवः शिवः । सकारः सागरो जलरूपो वकारः नौ असङ्गा व्यञ्जनसङ्गहीना इति च । तेन स्वौ इति सर्वमङ्गलाख्या दुर्गा । तदुत्तरार्द्धे 'श्रीः कैटभारि हृदयैककृताधिवासा गौरि त्वमेव शशिमौलिकृतप्रतिष्ठा' इत्यत्र श्रीरिति कण्ठरवेणैवोद्धृत्य तद्देवताध्यानस्थं विशेषणद्वयं कैटभारीत्यादिना कथितं । 'भूयाद्भूयो द्विपद्माभयवरदकरा तप्तगाङ्गेयगौरी पद्माक्षीः पद्मनाभोरसि कृतवसतिः पद्मगा श्रीः श्रिये नः । इत्यादितद्ध्यानश्लोकस्य प्रपञ्चसारादौ कथनात् । उद्धृतस्य बीजत्रयस्य बिन्दुयोगं तन्त्रेणाह शशिमौलीति स्पष्टोऽर्थः ॥ अपिच। 'त्वं स्वाहा त्वं स्वधा त्वं हि वषट्कारस्वरात्मिका' इत्यत्र 'का'ककारेण सह रः रेफः । स्वरात्मिका स्वरेषु चतुर्थवती आत्माऽन्तरात्म-परमात्म-ज्ञानात्मनां चतुष्टयस्यात्मोपनिषदि पीठन्यासादौ च प्रसिद्धत्वात् ॥ 'स्वधा त्वमक्षरे नित्ये' इत्यत्र तकाराविवक्षया वमिति सुधाबीजं । 'त्रिधामात्रात्मिकास्थिता' इति प्रणवमुक्त्वा अर्धमात्रस्थितानित्येत्यनेन कालीबीजप्रणवयोरर्धमात्रात्मकानुस्वारयोगमुपदिश्य 'यानुच्चार्या विशेषतः' इत्यनेन तदन्ते नादोऽप्युद्धृतः ॥ अपिच 'यस्याः प्रभावमतुलं भगवाननन्तो ब्रह्मा हरश्च नहि वक्तुमलं बलं च । सा चण्डिका' इत्यत्र नवार्णमन्त्रगतानां चतुर्विंशतिवर्णानामुद्धारः । मन्त्रे हि आकाराद्याश्चत्वारः स्वरा एकारादिद्वयं च । एतेष्वाकार ईकार ऐकारश्च द्विरावृता इति नव स्वराः । चत्वारो बिन्दवः । कचडतामादिपञ्चकं हकारश्चेति दश व्यञ्जनानि । तत्र चकारो द्विरावृतः । विच्चे इति प्रथमचकारस्य तकाररूपत्वात् संहत्य चतुर्विंशतिः । तेषु वमतुलमित्यनेन व्यञ्जनचतुष्टयं पञ्चमस्वरो बिन्दुश्चेति षण्णां निर्देशः । अकारा उच्चारणार्थाः । भग एकारः वातीति वान् शत्रन्तः । तेन वायुर्यकारः । अनन्त आकारः । ब्रह्मा ककारः । ह र इति स्वरूपं । चकारोऽपि स्वरूपं । वक्तुं वाग्भवम् ऐकारः तस्य द्विरन्वयः । आत्तचण्डिकैः 'आकारादिभिरिकारान्तैः पञ्चभिरीकाराभ्यां च' सहिता सा चण्डिका, चण्डिकापदद्वयस्य तुर्यस्वरवाचकस्य विरूपैकशेषः इपदात् । स्वार्थे कप्रत्ययेनेकार एक एव । लं चं इति बिन्दुद्वयस्य द्विर्द्विरन्वयः । इत्थं चतुर्विंशतिवर्णाः । अनन्तादिपदत्रयस्य नवार्णमन्त्रद्रष्टृऋषिपरत्वेनापि पुनरन्वयादक्षराणि ऋषयश्च यस्या देव्याः प्रभा किरणसमूहः । बलं तत्वं च वक्तुं नालं वाचामगोचरः । साखिलजगत्परिपालनाय आसुरभयनाशाय च मतिं करोतु इत्यन्वयः । एवं तृतीयचरित्रे त्रिपाद्गायत्रीमन्त्रा विभागानुषङ्गोद्भवास्त्रिस्त्रिरावर्त्यमाना वक्ष्यन्ते ते च कात्यायनीतन्त्ररीत्या द्वाविंशतिरेव। तत्रान्तरेषु धृतिपुष्ट्योरधिकयोराम्नानाच्चतुर्विंशतिः । ते प्रकृतमन्त्रवर्णानामेकैकस्योद्धारकाः । परन्तु बहुकोशलेखनादिक्लेशसापेक्षत्वान्नेह तदायासः प्रदर्श्यते ॥ एवमन्यत्राप्यम्बानुग्रहपात्रतातारतम्येन सर्वमिदं स्तोत्रं मन्त्रोद्धारगर्भितमेव दृश्यते । उक्तं च वेदागमे 'निर्विशेषपरा मन्त्राः सविशेषपराश्च ये । प्रत्यध्यायं निगूढास्ते तेनेयं सर्वतः परा' इति । ईदृशवह्वाशयेनैव 'चक्षुष्मन्तोऽनुपश्यन्ति नेतरेऽतद्विदो जनाः' इति रहस्योक्तिर्द्रष्टव्येति दिक् ॥ अयं च मन्त्रः स्वतन्त्रोपास्यः सप्तशत्यङ्गं चेति द्विप्रकारोपास्तिमस्य केचिदाहुः वैपरीत्यात् । सप्तशत्यैव तु तद्द्वियोपास्येति स्पष्टीकरिष्यतेऽनुपदमेव । उभयथापि नवार्णस्य संक्षेपेण साधनप्रकार इह वक्तव्य एवेत्युच्यते ॥ 'नवाक्षरस्य ऋषयो ब्रह्मविष्णुमहेश्वराः । छन्दांस्युक्तानि मुनिभिर्गायत्र्युष्णिगनुष्टुभः ॥ देव्यः प्रोक्ता महापूर्वाः काली लक्ष्मीः सरस्वती । नन्दाशाकम्भरीभीमाः शक्तयोऽस्य मनोः स्मृताः ॥ स्याद्रक्तदन्तिकादुर्गाभ्रामर्यो बीजसन्ततिः । अग्निर्वायुः सूर्यस्तत्वं फलं वेदत्रयोद्भवम् ॥ सर्वाभीष्टप्रसिद्ध्यर्थे विनियोग उदाहृतः । ऋषिच्छन्दोदैवतानि शिरो-मुख-हृदि न्यसेत् ॥ शक्तिबीजानि स्तनयोस्तत्वानि हृदये पुनः । ह्रीं चण्डिकायै व्यस्तेन सर्वेण च षडङ्गकौ' ॥ एते पञ्चवर्णाः समस्तश्चैक इति षड्भिरङ्गुष्ठादिन्यासो हृदयादिन्यासश्च कार्य इत्यर्थः । 'खड्गिनी शूलिनीत्यादि पठित्वा श्लोकपञ्चकं ।

आद्यं कृष्णतरं बीजं ध्यात्वा सर्वाङ्के न्यसेत्' ॥ 'आद्यं' वाग्भवं, श्लोकास्तु सप्तशतीस्तोत्रस्थाः । 'विश्वातीतमहामन्त्रात् प्रोच्य श्लोकचतुष्टयम् । ध्यात्वा सूर्यनिभं बीजं द्वितीयं सर्वतो न्यसेत्' । 'द्वितीयं' हृल्लेखा । क्वचित्तु चरणत्रयस्यान्यथा पाठः 'शूलेन पाहि नो देवि' इत्यादिश्लोकचतुष्टयं पठित्वा सूर्यसदृशमिति । तेन तदेव विश्वातीतमहामन्त्रपदस्य व्याख्यारूपम् । सूर्यस्य द्वादशकलास्तापिन्यादयः । तासु ककारादीनां क्रमेण द्वादशानां भकारादीनां व्युत्क्रमेण द्वादशानां च वर्णानां युग्मशो योगस्तन्त्रेषु विहितः । तासु नवम्यां विश्वानाम्न्यां कलायां झकारतकारयोर्योगसत्त्वेपि प्रकृते विश्वापदेन तकार एव विवक्षितः । तेन तकारशून्यं श्लोकमारभ्येत्यर्थः । कयापि विधया शतसंख्यां तादृशस्य श्लोकमन्त्रान्तरस्याऽभावादेव नातिप्रसक्तिः । एकं जग्राह केशेष्विति श्लोके द्वात्रिंशदक्षरात् परतो व्यञ्जनरूपो वा श्रूयत एव । 'इत्थं निशम्य देवानां वचांसि मधुसूदनः' इति श्लोके थकारयोगेन श्रूयते । 'हन्यमानं महासैन्यं विलोक्यामर्षमुद्वहन् । अभ्यधावन्निशुम्भोथ' इत्यत्राभ्यधावदिति पदच्छेददशायां तकारव्यक्तिरस्त्येव, 'चुक्षुभुः सकला लोकाः' इति श्लोकस्तु पूर्वोत्तरमन्त्रयोरुत्तरपूर्वार्धरूपत्वादखण्डो मन्त्र एव न भवतीति कयापि रीत्या तकाराभावः शूलेनेति श्लोकमन्त्र एव, 'ततो देवा ददुस्तस्याः' इत्यर्धसद्भावपक्षे तु चुक्षुभुरित्यस्य निरासः । साम्प्रदायिकव्याख्यानत एवेति गुप्तं रहस्यम् । 'सर्वस्वरूप इत्यादिश्लोकानां पञ्चकं पुनः पठित्वा स्फटिकाभासं तृतीयं स्वतनौ न्यसेत्' । 'तृतीयं' कामबीजम् । अत्र प्रथमतृतीययोर्बीजयोर्महासरस्वतीमहाकालीरूपयोः श्वेतकृष्णरूपत्वेपि वैपरीत्येन रूपनिर्देशो वास्तविकाभेदसत्त्वेन रहस्ये वक्ष्यमाणं सरस्वत्याः कृष्णाङ्गविष्णुजनकत्वं काल्याः श्वेताङ्गशिवजनकत्वं चाभिप्रेत्येति बोध्यम् । 'ततः षडङ्गं कुर्वीत विभक्तैर्मूलमन्त्रकैः । एकैकेन चैकेन चतुर्भिर्युगलेन च । समस्तेन च मन्त्रेण कुर्यादङ्गानि षट् सुधीः' ॥ अथ ध्यानं । 'खड्गं चक्रगदेषुचापपरिघान् शूलं भुशुण्डीं शिरः शङ्खं संदधतीं करैस्त्रिनयनां सर्वाङ्गभूषावृतां । नीलाश्मद्युतिमास्यपाददशकां सेवे महाकालिकां यामस्तौत्स्वपिते हरौ कमलजो हन्तुं मधुं कैटभम् ॥ १ ॥ अक्षस्रक्परशुं गदेषुकुलिशं पद्मं धनुःकुण्डिकां दण्डं शक्तिमसिं च चर्म जलजं घण्टां सुराभाजनं । शूलं पाशसुदर्शने च दधतीं हस्तैः प्रवालप्रभां सेवे सैरिभमर्दिनीमिह महालक्ष्मीं सरोजस्थिताम् ॥ २ ॥ घण्टां शूलहलानि शङ्खमुसले चक्रं धनुः सायकान् हस्ताब्जैर्दधतीं घनान्तविलसच्छीतांशुतुल्यप्रभां । गौरीदेहसमुद्भवां त्रिजगतामाधारभूतां महापूर्वामत्र सरस्वतीमनुभजे शुम्भादिदैत्यार्दिनीम् ॥३॥' इति ध्यात्वा मनसांऽतर्यागं कृत्वा बहिर्यागमपि यन्त्रे कुर्यात् । यन्त्रं यथा 'लिखेदष्टदलं पद्मं कुङ्कुमागरुचन्दनैः । पद्ममध्ये लिखेच्चक्रं षट्कोणं चण्डिकामयम् । षट्कोणचक्रमध्यस्थमाद्यं बीजत्रयं न्यसेत् । पूर्वादिकोणषट्के तु बीजान्यन्यानि विन्यसेत्' । बीजानीत्यनेन अन्येषामपि बिन्दुयोगेनैव लेख उक्तः । लेखस्तु प्रादक्षिण्येन दक्षिणाद्वामान्तमिति ज्ञेयम् । 'एवं कृत्वा जपेल्लक्षचतुष्कं तद्दशांशतः । पायसान्नेन जुहुयात्पूजिते हेमरेतसि' । इदमेकं पुरश्चरणम् । अथवा 'आश्विनस्य सितेपक्षे आरभ्याग्नितिथिं सुधीः । अष्टम्यन्तं जपेल्लक्षं दशांशं होममाचरेत्' । अग्नितिथिः प्रतिपत् 'प्रथमां पिबते वह्निर्द्वितीयां पिबते रविरित्याद्युक्तेः । उभयत्र मन्त्रान्ते स्वाहायोजनेन होमः । तर्पणं तु मन्त्रान्ते चण्डिका तृप्यत्विति योजनेन । अयमुभयविधोऽपि जपः सप्तशतीस्तोत्रेण संपुटीकृतो विधेयः । तदुक्तं डामरतन्त्रे 'मार्कण्डेयपुराणोक्तं नित्यं चण्डीस्तवं पठन् । पुटितं मूलमन्त्रस्य जपेनाप्नोति वाञ्छितम्' इति । पुटितमिति पाठे क्रियाविशेषणं । 'पुटितं' स्वसंपुटाकारता । तथा च स्तवो यथा मूलमन्त्रजपस्य संपुटाकारो भवति तथा पठनान्मूलजपस्य यद्वाञ्छितं फलं तत्सिध्यतीत्यर्थः । ततश्च स्तवीय ऋष्यादिन्यासपूर्वकं चरित्रत्रयं पठित्वा मध्ये स्वसङ्कल्पितसङ्ख्याऽनुसारेण सहस्रादिसङ्ख्याकनवार्णं जपित्वा पुनश्चण्डीस्तवं पूर्ववत् पठेत् । परन्त्वेतदन्ते पुनर्मूलमष्टोत्तरशतमात्रं जप्त्वा निवेदनादिकं कुर्यात् । अयं जपोऽङ्गभूतो न प्रधानसङ्ख्यायामुपयुज्यत इति विशेषः । तदप्युक्तं तत्रैव चरित्रत्रयस्य ऋष्यादीनुक्त्वा । 'एवं संस्मृत्य ऋष्यादीन् ध्यात्वा पूर्वोक्तमार्गतः । सार्थस्मृति पठेच्चण्डीस्तवं सप्तपदाक्षरं । समाप्तौ तु महालक्ष्मीं ध्यात्वा कृत्वा षडङ्गकं । जपेदष्टशतं मूलं देवतायै निवेदयेत्' इत्यादि । केचित्तु मूलमन्त्रस्य जपेन पुटितं चण्डीस्तवं पठन्निति प्रथमश्लोकं योजयन्तश्चरमश्लोके पुनर्विधानं संख्यामात्रपरमिति मन्यमानाः सप्तशतीस्तोत्रस्यैव मूलेन संपुटिताकारो विधीयत इत्यङ्गाङ्गिभाववैपरीत्यमिच्छन्ति । तदयुक्तम् । बहुषु तन्त्रेषु नवार्णं प्रकृत्य तत्प्रकरणे सप्तशतीपाठविधानेन नवार्णजपस्य प्राकरणिकत्वेनान्याङ्गत्वायोगात् । तत्र विद्यमानाया अपि स्तोत्रफलश्रुतेः प्रयाजफलश्रुतेर्वसन्तमेवर्तुनाम च रुन्ध इत्यस्या इवाविवक्षितार्थकत्वात् । मरीचिकल्पे—'रात्रिसूक्तं जपेदादौ मध्ये चण्डीस्तवं पठेत् । प्रान्ते तु जपनीयं वै देवीसूक्तमिति क्रमः । एवं संपुटितं स्तोत्रं पूर्वोक्तफलदायकम्' इत्यनेन वैदिकसूक्तद्वयेन संपुटितायाः सप्तशत्या विधानाच्च । परन्त्वन्वारम्भणीयेष्टिवन्नवार्णस्य स्तोत्रजपप्रारम्भमात्राङ्गत्वं जपाधिकारितावच्छेदकत्वं चेति बोध्यम् । रहस्यं तु कीलकाध्याये स्पष्टीभविष्यति । अत्रापेक्षितः सामान्यविधिरन्ये विशेषा अपि कल्पवल्लीकारैरुक्ता इति तत एव सर्वमवगन्तव्यम् । इति नवार्णनिर्णयः ॥ ॥ द्वितीयस्तु चरित्रत्रयात्मकः श्लोकसमूहरूपो मन्त्रः । स च वामनपुराणदेवीभागवतमार्कण्डेयपुराणादिषु लक्ष्मीतन्त्रादिषु च बहुविध उपलभ्यते । तथापि मार्कण्डेयपुराणस्थ एव त्रिसप्तत्यध्यायोत्तरं षडशीतितमाध्यायान्तमभिव्याप्तः 'सावर्णिः सूर्यतनयः' इत्यारभ्य 'सावर्णिर्भवितामनुः' इत्यन्तस्त्रयोदशभिरध्यायैः परिच्छिन्नैः श्लोकसमूहात्मको मालामन्त्रत्वेन ग्राह्यः । पूर्वोक्तडामरतन्त्रवचनात् । वाराहीतन्त्र-कात्यायनीतन्त्र-मरीचितन्त्र-हरगौ-

रीतन्त्र-लक्ष्मीतन्त्रादीनां बहूनामैक्यकण्ठ्याच्च तस्यैवात्युत्तमत्वसिद्धेः तस्य पुरुषार्थत्वेन क्रत्वर्थत्वादिना च पाठादिविधिर्मूल एव द्वादशेऽध्याये प्रदर्शयिष्यते । तन्त्रान्तरेषु च बहवो विधयः । अस्य सप्तशतीति व्यवहारस्तु न श्लोकसंख्यया । तेषां षट्-च्छतीतोऽपि न्यूनत्वात् । नापि कवचादित्रयरहस्यत्रययोर्मेलनेन । संख्याधिक्यापत्तेः । तस्माच्छकारसकारयोरभेदात् सप्तानां सतीनां देवीनां प्रतिपादनादेव तथा व्यवहारो नेयः । तुरीयैका महाकाल्यादित्रयं तन्निर्मितमिथुनत्रये देवीत्रयं चेति सप्तानामेव प्राधानिकरहस्ये प्रतिपादनादिति केचित् । तच्चिन्त्यम् । नन्दजारक्तदन्तीशताक्षीशाकम्भरीदुर्गाभीमाभ्रामरीत्ये-तेषामपि सप्तानां रूपाणां मन्त्र एव प्रतिपादनेन विनिगमनाविरहात् संख्याधिक्यापत्तेः । तस्माज्जपे एकमन्त्रात्मकस्यापि माला-मन्त्रस्य होमाङ्गेन सप्तशतधा विभजनाच्छतरुद्रियस्येवैकानेकमन्त्रात्मकत्वे विरोधाभावात्तथा व्यवहारोपपत्तिः । मन्त्रविभजनेऽपि यद्यामलवाराहीकात्यायनीतन्त्राणां वैमत्यं तत् तन्मन्त्रव्याख्यानावसरे परिहरिष्यते । यद्यपि कात्यायनीतन्त्रे पञ्चशतोत्तरमष्ट-सप्तति श्लोकाः यामलेत्वेकोनाशीतिः वाराह्यां तु सार्धाष्टाशीतिः कथिताः । उपपद्यते च वेदे शाखाभेदेनेव पुराणेषु कल्पभे-देन मनुपराशरहारीतादीनां वृद्धतरुणभेदेन तत्तत्स्मृतिवैलक्षण्यवत्पाठवैलक्षण्येऽपि प्रामाण्यं । ततश्च कवचस्य सार्धाः पञ्चाशद-र्गलायास्त्रयोविंशतिः कीलकस्य लघुगुरुभेदेन द्वैविध्यादाद्यस्य चतुर्दशाऽन्त्यस्य त्रयोविंशतिरित्येतेषां श्लोकानां वाराहीतन्त्रानु-मतस्तोत्रश्लोकैः सह मेलनेनैकोनासप्तशतीसम्पद्यते । रहस्यत्रयस्याङ्गत्वे प्रमाणाभावेन तन्मेलनस्याप्रसक्तेः एकन्यूनाधिक-भावस्यान्तरत्वेन तदनादरेण व्यवहारस्य पञ्चाशत्पीठरूपिणीति ललितानाम व्याख्यानावसरेऽस्माभिः समर्थितत्वात् । कात्या-यनीतन्त्रोक्तविभागेऽपि द्वयोरन्त्ययोरिवैकस्य श्लोकस्यावृत्तेरपि सुवचत्वाद्वा । तथापि 'जपेत्सप्तशतीं चण्डीं कृत्वा तु कवचं पुरा' इत्यादिना कवचमेलनाभावेऽपि सप्तशतीत्वप्रतीतेः कीलकद्वयप्रतिपाद्यस्यार्थस्याङ्गत्वेऽपि तयोरङ्गत्वे रहस्यवदेव माना-भावाच्चोक्त एव प्रकारो निर्दोषः । 'कवचं बीजमादिष्टमर्गलाशक्तिरिष्यते । कीलकं कीलकं प्राहुः सप्तशत्या महामनोः' इति गौडपादधृतवचनादङ्गत्वेऽप्यदोष इति । यानि तु क्वचिद्देशे सार्धानि षट्शतानि क्वचित्तदधिकान्यपि श्लोकानां पठ्यन्ते तानि कात्यायनी भगवत्येव जानाति परन्तु तन्त्रत्रयेऽप्यदृष्टानीति दिक् । एतस्यैवोत्तमत्वं तु तन्त्रान्तरे 'यथाश्वमेधः क्रतुषु देवा-नां च यथा हरिः । स्तवानामपि सर्वेषां तथा सप्तशतीस्तवः' । तत्रापि कलावतिप्रशस्तः 'कलौ चण्डीविनायकौ' इति वचनात् । वाराहीतन्त्रे सर्वेषां स्तोत्राणां परशुरामशापमुक्त्वा तद्विरहितानि कतिचिद्गणितानि । 'भीष्मपर्वणि या गीता सा प्रशस्ता कलौ युगे । विष्णोर्नामसहस्राख्यं महाभारतमध्यगम् । चण्ड्याः सप्तशतीस्तोत्रं तथा नाम सहस्रकम्' इत्यादि । भार्गवाख्येन रामेण शप्तान्यन्यानि कारणादित्यन्तेन । यद्यपि तन्त्रान्तरेऽस्यापि स्तोत्रस्य शिवशापः कीलनं चेति सिद्धिनिरोधकावुक्तौ त-थापि तत्रैव शापोद्धारोत्कीलनयोः कर्मविशेषयोस्तदङ्गत्वेन सकृत्करणविधानादकरणे सिद्धिविरहोक्त्या तदावश्यकत्वपरौ तावर्थवादौ । तत्र शापोद्धारो यथा । त्रयोदशप्रथमौ द्वादशद्वितीयौ एकादशतृतीयौ दशमचतुर्थौ नवमपञ्चमावष्टमषष्ठाव-ध्यायौ पठित्वा सप्तममध्यायं द्विःपठेदित्याकारकः प्रयोगः । उत्कीलनं यथा । आदौ मध्यमचरित्रं पठित्वा ततः प्रथमचरित्रं ततस्तृतीयचरित्रं पठेदित्याकारकः । 'अन्त्या १३ द्या १ कें १२ द्वि २ रुद्र ११ त्रि ३ दिग १० ब्ध्यं ४ के ९ ष्वि ५ भं ८ र्तवः ६ । अश्वो ७ ऽश्व ७ इति सर्गाणां शापोद्धारे मनोः क्रमः । उत्कीलने चरित्राणां मध्याद्यान्त्यमिति क्रमः' । अङ्को नवकः । इषुः पञ्चमः । इभोऽष्टमः । 'ददाति प्रतिगृह्णाति नान्यथैषा प्रसिध्यति' इति विहितं दानप्रतिग्रहनामकं महो-त्कीलनं तु कीलकाध्यायव्याख्यावसरे विशदीकरिष्यते । एवं सम्प्रदायज्ञस्य निर्दोषमुत्तमं कलौ शीघ्रसिद्धिदमिदमिति सि-द्धम् । एतद्वाचनक्रमो वाराहीतन्त्रे 'यावन्न पूर्यतेऽध्यायस्तावन्न विरमेत्पठन् । यदि प्रमादादध्याये विरामो भवति प्रिये । पुनरध्यायमारभ्य पठेत्सर्वं मुहुर्मुहुः । अनुक्रमात्पठेदेव शिरःकम्पादिकं त्यजेत् । न मानसं पठेत्स्तोत्रं वाचिकं तु प्रशस्यते' ॥ कण्ठतः पाठाभावे तु पुस्तकोपर्यपि वाचयेत् ॥ तल्लेखनेऽपि विशेषः 'न स्वयं लिखितं स्तोत्रं नाब्राह्मणलिपिं पठेत्' इति । यत्तु 'आधारे स्थापयित्वा तु पुस्तकं वाचयेत्ततः । हस्तसंस्थापनादेव भवेदर्धफलं ध्रुवमिति । तस्य व्यवस्थापि तत्रैव 'पुस्त-केऽवाचनं हस्ते सहस्रादधिकं यदि । ततो न्यूनस्य तु भवेद्वाचनं पुस्तकं विना' । सहस्रान्न्यूनमन्त्रस्य पाठसत्वे तु पुस्तकं विनैव वाचनम् । तदभावे आधारे पुस्तकस्थापनेनैव वाचनम् । सहस्राधिकस्य तु पाठसत्वेप्याधारस्थापितपुस्तकोपर्येव वाच-नमिति वचनार्थः । प्रकृतस्तोत्रस्य सहस्रान्न्यूनत्वात् 'ततः कृताञ्जलिपुटः स्तुवीत चरितैरिमैः' इति वैकृतिकरहस्ये विधानाच्च पाठाभावे पुस्तकस्याधारस्थापनेनैव वाचनं । कण्ठपाठीकृत्य पुस्तकं विनैव तु कृताञ्जलितया पठनमुत्तममिति द्रष्टव्यम् । अत्र सहस्रशब्देन द्वात्रिंशत्स्वरात्मिकस्यैकैकानुष्टुप्त्वकल्पनेन तादृशानुष्टुप्छन्दः सहस्रं ज्ञेयमिति स्पष्टं । शक्तिसङ्गमतन्त्रराजे-'द्वात्रिंश-ता स्वरैर्युक्त एको ग्रन्थो निगद्यते । स एव गदितः श्लोकस्तारानेत्रसमुद्भवः' इत्यादिना तेन गद्यात्मकमालामन्त्रेष्वप्यस्य निय-मस्य प्रसरो ज्ञेयः । स्तोत्रपूर्वोत्तरभागपाठाभावे नैष्फल्यादिवचनानि शक्तिसङ्गम एव द्रष्टव्यानि ॥ 'ऋषिच्छन्दोदेवतादि पठेत् स्तोत्रे समाहितः । यत्र स्तोत्रे न दृश्येत प्रणवन्यासमाचरेत्' । डामरे-'सप्तशत्याश्चरित्रे तु प्रथमे पद्मभूर्मुनिः । छन्दो गायत्रमुदितं महाकाली तु देवता ॥ वाग्बीजं पावकस्तत्वं धर्मार्थे विनियोजनम् । मध्यमस्य चरित्रस्य मुनिर्विष्णुरु-दाहृतः ॥ उष्णिक्छन्दो महालक्ष्मीर्देवता बीजमद्रिजा । वायुस्तत्वं धनप्राप्त्यै विनियोग उदाहृतः । उत्तमस्य चरित्रस्य

ऋषिः शङ्कर ईरितः ॥ त्रिष्टुप् छन्दो देवतास्य महापूर्वा सरस्वती । कामो बीजं रविस्तत्त्वं कामार्थे विनियोजनम् ॥ ह्रीं चण्डिकायै व्यस्तेन समस्तेन षडङ्गकौ । वाक् अद्रिजा काम इति नवार्णप्रथमबीजत्रयध्यानादिकं नवार्णवत् । अस्य पुरश्चरणस्वरूपं मरीचिकल्पे—'कृष्णाष्टमीं समारभ्य यावत्कृष्णचतुर्दशी । वृद्ध्यैकोत्तरया जाप्यं पूर्वसंपुटितं तु तत् । एवं देवि मया प्रोक्तः पौरश्चरणिकः क्रमः । तदन्ते हवनं कुर्यात्प्रतिश्लोकेन पायसम् । रात्रिसूक्तं प्रतिऋचं तथा देव्याश्च सूक्तकम् । हुत्वाऽन्ते प्रजपेत्स्तोत्रमादौ पूजादिकं मुने' इति । पूर्वाभ्यां पूर्वोक्ताभ्यां रात्रिसूक्तदेवीसूक्ताभ्यां संपुटितं । प्रतिश्लोकेनेति मन्त्रविभागोपलक्षणम् । कात्यायन्यादितन्त्रोक्तसप्तशतीविभागग्रन्थस्य हवनादिविधिं प्रति वाक्यशेषत्वेन तेनैव वैधपदस्यार्थनिर्णयावश्यम्भावात् । यत्न दुःखेनेत्यादेः स्थलान्तरस्थस्याप्यग्निहोत्रादिविधिशेषतास्वीकारेण स्वर्गपदार्थनिर्णयस्य वैदिकसम्मतत्वात् । होमसंख्या तु स्तोत्रस्य त्रिरावृत्तिरूपेति वृद्धाः । रात्रिसूक्तदेवीसूक्ते ऋग्वेदे शाकल्यसंहितायां प्रसिद्धे । तथेत्यनेन जपोक्तक्रमः संपुटाकारो निर्दिश्यते । तच्छब्दस्य पूर्वपरामर्शित्वात् । तस्य श्लोकपूरणमात्रार्थत्वे तु द्वाभ्यामपि सूक्ताभ्यां त्रिरावृत्तसप्तशतीहोमोत्तरमेव पाठक्रमानुसारेण होमः । विश्वेश्वरीं जगद्धात्रीमिति स्तवो रात्रिसूक्तम् । नमो देव्यै महादेव्या इति स्तवो देवीसूक्तमिति कश्चित् । तन्न । प्रतिश्लोकेन प्रतिऋचमिति प्रतिनियतनिर्देशविरोधात् । ऋक्सूक्तादिशब्दानां वैदिकमन्त्रेष्वेव रूढ्या प्रसिद्धेः । मत्स्यसूक्तमित्यादिक्वाचित्कतान्त्रिकव्यवहारस्य केवलयौगिकत्वेनोपपत्तेः । तेन ऋक्पदस्य श्लोके लक्षणेत्युक्तिरपि साहसमात्रं । समुद्रमनोध्यानादिविधौ बृहद्रथंतरपदयोः प्रतिनियतनिर्देशबलादेव लक्षणाव्यवस्थाया इव । प्रकृते क्लृप्ताया एव शक्तेर्व्यवस्थादार्ढ्यस्य कैमुतिकन्यायेनैव सिद्धेः । यदि त्वेवमालोच्यते । 'विश्वेश्वर्यादिकं सूक्तं दृष्टं तद्ब्रह्मणा पुरा । स्तुतये योगिनिद्राया मम देव्याः पुरन्दर । महिषान्तकरीसूक्तं सर्वसिद्धिप्रदं तथा । देव्या ययादिकं दिव्यं दृष्टं देवैर्महर्षिभिः । देवि प्रपन्नार्तिहरे प्रसीदेत्यादिकं तथा । नारायणीस्तुतिर्नाम सूक्तं परमशोभनम् । अमुष्याः स्तुतये दृष्टं ब्रह्माद्यैः सकलैः सुरैः ॥ नमो देव्यादिकं सूक्तं सर्वकामफलप्रदम्' इति विशकलितवेषेण । पाञ्चरात्रलक्ष्मीतन्त्रे व्यवहारदर्शनादेतेषां स्तोत्राणामपौरुषेयत्वसिद्धान्ताच्च सूक्तर्चव्यवहारो युज्यत एवेति । तदा कात्यायनीतन्त्रमते विश्वेश्वरीमिति श्लोकात्पूर्वं ब्रह्मोवाचेत्यस्य पाठाभावात्तदुत्तरमेव तत्पाठाच्च त्वं स्वाहेत्यारभ्यैव स्तोत्रारम्भः । तस्य च योगनिद्रात्मकरात्रिदैवत्यत्वान्मरीचितन्त्रे रात्रिसूक्तपदेन निर्देश इति समाधेयम् । परंत्वेतत्तन्त्रमनुसरता विश्वेश्वरीमिति श्लोकोऽङ्गहोमदशायां न होतव्यः । स्तोत्रान्तिमश्लोकस्य द्वेधाविभागोऽपि न कार्यः । देवीसूक्तेऽपि त्रेधाविभागोऽङ्गहोमे न विधेयः । प्रधानविशेषस्याङ्गविधावनन्वयेन प्रतिऋचमिति पदे लक्षणाकल्पने मानाभावादित्यवधेयम् । एवं सिद्धमन्त्रस्य क्रोडतन्त्रे । 'प्रत्येकावर्तनं देवि हयमेधेन संमितम् । त्रिरावृत्त्या लभेत्कामान्पञ्चावृत्त्या रिपून् जयेत्' । काम्ये तु प्रयोगे विशेषः । कात्यायनीतन्त्रे 'एकावृत्तादिपाठानां प्रत्यहं पठतां नृणाम् । संकल्पपूर्वं संपूज्य न्यस्याङ्गेषु मनून्सकृत् । पश्चाद्बलिप्रदानेन फलं प्राप्नोति मानवः । बलिश्च ब्राह्मणादिभेदेन व्यवस्थयोक्तः कालिकापुराणे द्रष्टव्यः । तत्राशक्तानामपि तत्रैव 'कूष्माण्डमिक्षुदण्डं च मद्यमासवमेव च । एते बलिसमाः प्रोक्तास्तृप्तौ छागसमाः सदा' । छागसमाः पञ्चविंशतिवर्षावस्थायितृप्तिजनकाः । 'अजाविकानां रुधिरैः पञ्चविंशतिवार्षिकीम् । तृप्तिमाप्नोति परमां शार्दूलरुधिरैस्तथा' इति तत्रैवोक्तेः । वस्तुतस्तु नहिंस्यादिति निषेधस्य संकोचमन्तरेणैव छागसमानतृप्तिसम्भवे छागबलिर्ब्राह्मणैर्न कार्य एव । एवं मद्यासवे अपि नदेये । 'वरं प्राणाः प्रगच्छन्तु ब्राह्मणो नार्पयेत् सुराम्' इति ब्राह्मणो मदिरां दत्वा ब्राह्मण्यादेव हीयते इति च बृहत्सङ्गमतन्त्रवचनात् । अतएव तत्प्रतिनिधिरपि कालिकापुराणे स्मर्यते 'अवश्यं विहितं यत्र मद्यं तत्र द्विजः पुनः । नारिकेलजलं कांस्ये ताम्रे वा विसृजेन्मधु' इति । कात्यायनीतन्त्र एव, 'उपसर्गोपशान्त्यर्थं त्रिरावृत्तं पठेन्नरः । ग्रहदोषोपशान्त्यर्थं पञ्चावृत्तं वरानने । महाभये समुत्पन्ने सप्तावृत्तमुदीरयेत्' इत्यादिना फलभेदेन संख्याभेदाननेकानुक्त्वोपसंहृतम् 'अथवा बहुनोक्तेन किमनेन वरानने । चण्ड्याः शतावृत्तिपाठात् सर्वाः सिध्यन्ति सिद्धयः' इति । इतोऽप्यधिकाः सहस्रचण्ड्यादयोऽन्यत्र द्रष्टव्याः । हरगौरीतन्त्रे । 'श्रीकामः पुत्रकामो वा सृष्टिमार्गक्रमेण तु । जपेच्छक्रादिमारभ्य शुम्भदैत्यवधावधि । आदिमारभ्य प्रजपेत्पश्चाच्छेषं समापयेत् । शान्त्यादिकामः सर्वत्र स्थितिमार्गक्रमेण तु । सावर्णिः सूर्यतनयः सावर्णिर्भविता मनुः । संकटे चान्त्यमारभ्य पश्चादादादिसमापयेत् । इत्यादिकस्य कामनाभेदेन पाठवैचित्र्यस्य कतिपयश्लोकमात्रपाठेन तत्तत्प्रयोगवैचित्र्यस्य च विस्तरो डामरादितन्त्रस्थो ग्रन्थान्तरेभ्य एवावगन्तव्यः । केरलास्तु एकैकस्मिन् दिवसे एकैकमेव चरित्रं पठेदिति दिनत्रयेणैकावृत्तिरित्येकः पक्षः । चन्द्रा १ ऽक्षि २ भू १ वेद ४ करे २ न्दु १ दस्र २ सङ्ख्याकानध्यायात् क्रमेण दिनभेदेन पठेदिति सप्तभिर्दिनैरेकावृत्तिरित्यन्यः पक्ष इत्याहुः । अत्र द्वितीयमेव पक्षं 'पाठोयं विप्रकारः' इति सप्ताक्षर्या संग्रहन्तो बहवस्तदनुयायिनोऽनुतिष्ठन्ति च । 'कटपयवर्गभवैरिह पिण्डान्त्यैरक्षरैरङ्काः । नेत्रे शून्यं ज्ञेयं तथा स्वरे केवले कथितः' इति प्रसिद्धपरिभाषया पकार—यकार—ककारा एकस्मिन् ठप्रेफा द्वयोः विशब्दश्चतुर्षु सङ्केतित इति । तत्र मूलतन्त्राणि त एव जानन्तु सन्त्यपि तानि तन्त्रवचनानि एकदिनेनैकावृत्त्यशक्तपराणि । अस्ति हि तादृशोऽप्यस्य प्रयोगः कात्यायनीतन्त्रे मन्त्रविभजनान्ते, 'होमे स्वाहान्तिमा एते पूजायातु नमोऽन्तिमाः । तर्पणे तर्पयाम्यन्ता ऊहनीया बुधैर्मताः' इति वचनात्सप्तशतब्राह्मणभोजने प्रतिव्यक्त्यैकैकमन्त्रेण काण्डानुसमयेन षोडशोपचाराणां पदा-

र्थानुसमयेन च पञ्चोपचाराणां वा कर्तुमशक्यतया स्वेच्छयाध्यायभेदेन वानेकदिनसाध्यैकप्रयोगप्रसक्तौ उक्तवचनैर्विभजननियमो विधीयत इति । अत्र स्वयं पठितुमसमर्थस्य प्रभोर्ब्राह्मणद्वारापि प्रयोग इष्टः । तत्पक्षे दक्षिणानियमः तन्त्रेषु 'पञ्चस्वर्णाः शतावृत्तेः पक्षावृत्तेषु तत्त्रयम् । पञ्चावृत्तेः स्वर्णमेकं त्रिरावृत्तेस्तदर्धकम् । एकावृत्तौ पादमेकं देयाद्वा शक्तितो बुधः' इति सर्वं शिवम् । इति श्रीमद्भारत्युपाह्वयगम्भीररायदीक्षितसूरिसूनुना भास्कररायदीक्षितमहाग्निचिता रचितायां सप्तशतीटीकागुप्तवतीसमाख्यायामुपोद्घातप्रकरणं संपूर्णम् । **अथ पुरश्चरणप्रयोगः ।** दुर्गाप्रदीपे । जपेद्बिल्वं समाश्रित्य मासमेकं तु यो नरः । हुत्वा बिल्वदलैर्मासं मधुरत्रययोगतः ॥ हुत्वा दशांशतो वापि कमलैः क्षीरसंयुतैः । धनदेन समां लक्ष्मीं प्राप्नुयादुत्तमां ध्रुवम् ॥ इति । अथ प्रयोगान्तराणि कात्यायनीतन्त्रोक्तानि । प्रतिश्लोकमाद्यन्तयोः मन्त्रं जपेन्मन्त्रसिद्धिः । सप्रणवमनुलोमव्याहृतित्रयमादौ अन्ते तु विलोमं तदित्येवं प्रतिश्लोकं कृत्वा शतावृत्तिपाठे अतिशीघ्रं सिद्धिः । प्रतिश्लोकमादौ जातवेदस इति ऋचं पठेत्सर्वकामसिद्धिः । अपमृत्युवारणायादावन्ते शतं त्र्यम्बकमन्त्रं जपेत् । प्रतिश्लोकं तन्मन्त्रजप इति वा । प्रतिश्लोकं शरणागतेति श्लोकं पठेत्सर्वकार्यसिद्धिः । प्रतिश्लोकं करोतु सा नः शुभेत्यर्धं पठेत् सर्वकामावाप्तिः । स्वाभीष्टवरप्राप्त्यै एवं देव्या वरमिति श्लोकं प्रतिश्लोकं पठेत् । सर्वापन्निवारणाय प्रतिश्लोकं दुर्गे स्मृतेति पठेत् । अस्य केवलस्यापि श्लोकस्य कार्यानुसारेण लक्षमयुतं सहस्रं शतं वा जपः । सर्वाबाधेत्यस्य लक्षजपे श्लोकोक्तं फलम् । इत्थं यदा यदेति श्लोकस्य जपे महामारीशान्तिः । ततो वव्रे नृपो राज्यमिति मन्त्रस्य लक्षजपे पुनः स्वराज्यलाभः । हिनस्ति दैत्यतेजांसीत्यनेन सदीपबलिदाने घण्टावादने च बालग्रहशान्तिः । आद्यावृत्तिमनुलोमेन त्रयोदशाध्यायं पठित्वा ततो विपरीतक्रमेण द्वितीयां कृत्वा पुनरनुलोमेन तृतीयेत्येवमावृत्तित्रये उक्तेषु प्रकारेषु शीघ्रं कार्यसिद्धिः । सर्वापत्तिनिवारणाय दुर्गे स्मृतेत्यर्धं । ततो यदन्ति यच्च दूरके इत्यृचं तदन्ते दारिद्र्यदुःखेत्यर्धमेवं कार्यानुसारेण लक्षमयुतं सहस्रं शतं वा जपः । कांसोऽस्मीत्यृचं प्रतिश्लोकं पठेल्लक्ष्मीप्राप्तिः । मारणार्थमेवमुक्त्वा समुत्पन्नेति श्लोकं पठेन्मारणोक्तावृत्तिभिः फलसिद्धिः । ज्ञानिनामपि चेतांसीति श्लोकस्य जपमात्रेण सद्यो मोहनमित्यनुभवसिद्धम् । प्रतिश्लोकं तच्छ्लोकपाठे त्ववश्यम् । रोगानशेषानिति श्लोकस्य प्रतिश्लोकं पाठे सकलरोगनाशः, तन्मन्त्रजपेऽपि सः । इत्युक्त्वा सा भगवतीगम्भीरेति श्लोकस्य प्रतिश्लोकं पाठे पृथग्जपे वा विद्याप्राप्तिर्वाग्विकारनाशश्च । भगवत्या कृतं सर्वमित्यादि द्वादशोत्तरशताक्षरो मन्त्रः सर्वकामदः सर्वापन्निवारणश्च । देवि प्रपन्नार्ति हरे प्रसीदेति श्लोकस्य यथाकार्यं लक्षायुतसहस्रशतान्यतमजपे प्रतिश्लोकं तन्मन्त्रपाठे वा सर्वापन्निवृत्तिः सर्वकामसिद्धिश्च । एषु प्रयोगेषु प्रतिश्लोकं दीपाग्रे केवलमेव वा नमस्कारकरणेऽतिशीघ्रं सिद्धिः । प्रतिश्लोकं कामबीजसंपुटितस्यैकचत्वारिंशद्दिनं त्रिरावृत्तौ सर्वकामसिद्धिः । एकविंशतिदिनपर्यन्तमुक्तरीत्या प्रत्यहं त्रयोदशावृत्तौ वशीकरणम् । मायाबीजपुटितस्य फट्पल्लवसहितस्य सप्तदिनपर्यन्तं त्रयोदशावृत्तौ उच्चाटनसिद्धिः । तादृशस्यैव दिनचतुष्टयमेकादशावृत्तौ सर्वोपद्रवनाशः । एकोनपञ्चाशद्दिनपर्यन्तं प्रतिश्लोकं लक्ष्मीबीजसंपुटितस्य पञ्चदशावृत्तौ लक्ष्मीप्राप्तिः । प्रतिश्लोकमैंबीजसंपुटितस्य शतावृत्त्या विद्याप्राप्तिरिति प्रत्येकमन्त्रस्य प्रयोगाः । इति गुप्तवतीस्थसप्तशतीप्रयोगविधिः ॥

---

## देवीकवचम् ।

### मार्कण्डेय उवाच ।

**यद्गुह्यं परमं लोके सर्वरक्षाकरं नृणाम् । यन्न कस्यचिदाख्यातं तन्मे ब्रूहि पितामह ॥ १ ॥**

(गुप्तवती) श्रीगणेशाय नमः । ॐ सत्संप्रदायप्रथनाय तिष्ये शिष्यैश्चतुर्भिः सह योऽवतीर्णः । उक्तो बृहत्सङ्गमतन्त्रराजे श्रीशङ्कराचार्यगुरुं तमीडे ॥ १ ॥ ब्रह्मा मार्कण्डेयं प्रति वक्ति । मार्कण्डेयस्तु क्रौष्टुकिं भागुरिं प्रति वक्तीति पक्षिरूपैर्द्रोणमुनिपुत्रैर्जैमिनिमुनिं प्रत्युच्यत इति संवादस्थितिः । तत्र कवचांशे ब्रह्माणं प्रति मार्कण्डेयस्य प्रश्नमाह । यद्गुह्यमिति । सर्वस्मिन्सर्वावयवावच्छेदेन रक्षाकरं कवचमित्यर्थः । लोके वर्मणः सर्वतनुत्रत्वदर्शनात् ॥ १ ॥

(प्रदीपः) ॐ नमो भगवत्यै । 'अङ्गहीनो यथा देही सर्वकर्मसु न क्षमः । अङ्गषट्कविहीना तु तथा सप्तशतीस्तुतिः ॥ तस्मादेतत्पठित्वैव जपेत्सप्तशतीं पराम् । अन्यथा शापमाप्नोति हानिं चैव पदे पदे ॥ रावणाद्याः स्तोत्रमेतदङ्गहीनं निषेविरे । हता रामेण ते यस्मान्नाङ्गहीनं पठेत्ततः' ॥ इति कात्यायनीतन्त्रे कवचादित्रयरहस्यत्रयरूपाङ्गषट्कयुतस्यैव सप्तशतीस्तोत्रस्य पठनीयत्वं श्रूयते तत्प्रामाण्याच्च कवचादित्रयं रहस्यत्रयं च तन्त्रान्तरस्थमेवाङ्गं भवति । तत्र कवचांशे ब्रह्माणं प्रति प्रश्नं करोति मार्कण्डेयः । यद्गुह्यमिति । लोके यत्परमं उत्कृष्टं गुह्यं रहस्यमस्ति तन्मे ब्रूहि । तत् किं ब्रह्मरूपं नेत्याह । सर्वरक्षाकरं येन सर्वेषामपि रक्षा भवति । नृणां पामरप्रभृतीनामपि तादृशमित्यर्थः । ब्रह्म तूत्तमाधिकारिणामेव रक्षकं न सर्वेषामित्यर्थः । ननु सन्त्यन्यानि कवचानि लोके इति चेत्सत्यं सन्ति तथापि यद्भवता कस्यचित् कस्यापि नाख्यातं निधिबुद्ध्या स्थापितमस्ति तदित्यर्थः । तेन च निःसंशयमेव रक्षणं झटिति स्यादिति भावः । अन्यथा निधिबुद्ध्या तस्य रक्षणं निरर्थकं स्यादिति । ननु किमित्युत्कृष्टं वस्तु मया देयमिति चेत्तत्राह । हे पितामह स्वसन्ततिरक्षणार्थं पितामहेनावश्यं देयमित्यर्थः ॥ १ ॥

ब्रह्मोवाच ।

**अस्ति गुह्यतमं विप्र सर्वभूतोपकारकम् । देव्यास्तु कवचं पुण्यं तच्छृणुष्व महामुने ॥ २ ॥**

(**गुप्तवती**) ॥ २ ॥ (**प्रदीपः**) उत्तरमाह । ब्रह्मोवाच । अस्ति गुह्यतमं विप्रेति । हे विप्र त्वया यत्पृष्टं तादृशं देव्यास्तु देव्या एव कवचं पुण्यं एकं निधिबुद्ध्या स्थापितमस्ति तन्महामुने शृणुष्व । सर्वभूतोपकारार्थं प्रवृत्तत्वान्महामुने इति सम्बोधनम् ॥ २ ॥

**प्रथमं शैलपुत्रीति द्वितीयं ब्रह्मचारिणी । तृतीयं चन्द्रघण्टेति कूष्माण्डेति चतुर्थकम् ॥ ३ ॥**

(**गुप्तवती**) ॥ ३ ॥ (**प्रदीपः**) परंतु सा देवी नवमूर्त्यात्मिका ध्येयेत्यभिप्रायेण तासां मूर्तीनां नामान्याह । प्रथमं शैलपुत्रीति । नामज्ञाने जाते तद्वाच्याकारस्य प्रसिद्धत्वादेव ज्ञानं भविष्यतीति भावः । सर्वोत्तरैश्वर्यवत्यपि भगवती शैलेन भक्तेनातितपश्चर्यया प्रार्थिता सती कारुण्यवशादतिनीचमपि पुत्रीत्वं स्वीकृतवतीत्यहो भक्तवात्सल्यं कियद्वर्णनीयं भगवत्या इति कूर्मपुराणे प्रसिद्धम् । ब्रह्मचारिणीति । ब्रह्म सच्चिदानन्दरूपं तच्चारयितुं प्रापयितुं शीलमस्याः सा ब्रह्मचारिणी ब्रह्मरूपप्रदेत्यर्थः । चन्द्रघण्टेति चन्द्रो हस्तगतायां घण्टायां यस्याश्चन्द्रवन्निर्मला वा घण्टा यस्या इत्यर्थः । यद्वा आह्लादकारिणी देवी चन्द्रघण्टेति कीर्तितेति रहस्यागमोक्तेश्चन्द्रं घण्टयति प्रतिवादितया भाषते स्वस्याह्लादकारित्वाभिमानेनेति चन्द्रघण्टा । चन्द्रापेक्षयाप्यतिशयेन लावण्यवतीत्यर्थः । पटपुटेति दण्डकपठितस्य चुरादेर्घटिधातोर्भाषार्थस्य पचाद्यचि रूपं । चन्द्रस्य घण्टा चन्द्रघण्टा वा । कूष्माण्डेति कुत्सित ऊष्मा सन्तापस्तापत्रयरूपो यस्मिन्संसारे स संसारो अण्डे मांसपेश्यामुदररूपायां यस्याः त्रिविधतापयुक्तसंसारभक्षणकर्त्रीत्यर्थः । 'अण्डः पेशी च मुष्कं च' इति मेदिनी ॥ ३ ॥

**पञ्चमं स्कन्दमातेति षष्ठं कात्यायनीति च । सप्तमं कालरात्रीति महागौरीति चाष्टमम् ॥ ४ ॥**

(**गुप्तवती**) ॥ ४ ॥ (**प्रदीपः**) स्कन्दमातेति । सनत्कुमारस्य भगवतीवीर्योद्भूतस्य स्कन्द इति संज्ञा 'भगवान्सनत्कुमारस्तं स्कन्द इत्याचक्षते' इति छान्दोग्यश्रुतेः । तथा च ज्ञानिभिरपि यदुदरे जन्माभिलषणीयमित्यतिशुद्धेत्यर्थः । कात्यायनीति देवकार्यार्थं कात्यायनाश्रमे आविर्भूता तेन कन्यात्वेन स्वीकृतेति कात्यायनीति नाम भगवत्याः । अस्या निरन्तरं कुमारीत्वेन पत्यनधीनतया स्वतन्त्रत्वम् । कालरात्रीति सर्वमारकस्य कालस्यापि रात्रिर्नाशिकेत्यर्थः । प्रलये कालस्यापि नाशात् । 'कृदिकारादक्तिनः' इति ङीप् । महागौरीति । इयं च महामानिनी । नर्मोक्त्या शिवेन कालीत्युक्ते तपसा गौरवर्णस्य सम्पादितत्वात् । कालीपुराणे स्पष्टमेतत् ॥ ४ ॥

**नवमं सिद्धिदा प्रोक्ता नवदुर्गाः प्रकीर्तिताः । उक्तान्येतानि नामानि ब्रह्मणैव महात्मना ॥ ५ ॥**

(**गुप्तवती**) ॥ ५ ॥ (**प्रदीपः**) सिद्धिदेति । मोक्षदेत्यर्थः । इतीति शेषः । सिद्धिदेति नवममित्यन्वयः । नवदुर्गा इति । योगिनः कायव्यूहवदेकस्या एव दुर्गाया एते नवभेदा ये शास्त्रे ध्येयत्वेन प्रोक्तास्ते मया कीर्तिता इत्यर्थः । अत एव देव्यास्तु कवचमित्येकवचनं संगच्छते । नाम्नां स्वकल्पितत्वशङ्काव्युदासार्थमाह । उक्तान्येतानीति । महात्मना सर्वज्ञेन ब्रह्मणैव वेदेनैवैतान्युक्तानीत्यर्थः ॥ ५ ॥

**अग्निना दह्यमानस्तु शत्रुमध्ये गतो रणे । विषमे दुर्गमे चैव भयार्ताः शरणं गताः ॥ ६ ॥**

(**गुप्तवती**) अग्निनेति । यो नवनामानि पठेदिति शेषः । पठन्तमेकमपि बहवोऽन्ये ये शरणं गताः तेषां तस्य चानिष्टनिवृत्तिरिति श्लोकद्वयार्थः ॥ ६ ॥

(**प्रदीपः**) इत्थं कवचपाठे ध्येयं देवतास्वरूपं प्रदर्श्य तत्फले अविश्वासो नैव कर्तव्य इति कैमुतिकन्यायेनाह । अग्निनेति । योऽग्निना दह्यमानो रणे शत्रुमध्ये च गतः सन् शरणं गत इति शेषः । अथ ये विषमे दुर्गमे चातिसङ्कटे भयार्ता भयपीडिताः सन्तः शरणं गताः ॥ ६ ॥

**न तेषां जायते किंचिदशुभं रणसंकटे । नापदं तस्य पश्यामि शोकदुःखभयं न हि ॥ ७ ॥**

(**गुप्तवती**) ॥ ७ ॥ (**प्रदीपः**) तेषां तस्य च भक्तिरहितेन स्मरणमात्रेणापि तजन्यं भयादिकं न भवतीत्याह । न तेषामिति ॥ ७ ॥

**यैस्तु भक्त्या स्मृता नूनं तेषामृद्धिः प्रजायते । प्रेतसंस्था तु चामुण्डा वाराही महिषासना ॥ ८ ॥**
**ऐन्द्री गजसमारूढा वैष्णवी गरुडासना । माहेश्वरी वृषारूढा कौमारी शिखिवाहना ॥ ९ ॥**

(**गुप्तवती**) आर्तभक्तिफलमुक्त्वा जिज्ञासुभक्तेः फलमाह । यैस्त्विति । सिद्धिर्दर्शनम् । आर्तानिष्टनिरासानुगुण एव सप्तमातृणां सार्वदिक उद्योग इत्याह । प्रेतसंस्थेत्यादिना ॥ ८ ॥ ९ ॥

रीतन्त्र-लक्ष्मीतन्त्रादीनां बहूनामैक्यकण्ठ्याच्च तस्यैवात्युत्तमत्वसिद्धेः तस्य पुरुषार्थत्वेन क्रत्वर्थत्वादिना च पाठादिविधिर्मूल एव द्वादशेऽध्याये प्रदर्शयिष्यते । तन्त्रान्तरेषु च बहवो विधयः । अस्य सप्तशतीति व्यवहारस्तु न श्लोकसंख्यया । तेषां षट्च्छतीतोऽपि न्यूनत्वात् । नापि कवचादित्रयरहस्यत्रययोर्मेलनेन । संख्याधिक्यापत्तेः । तस्माच्छकारसकारयोरभेदात् सप्तानां सतीनां देवीनां प्रतिपादनादेव तथा व्यवहारो नेयः । तुरीयैका महाकाल्यादित्रयं तन्निर्मितमिथुनत्रये देवीत्रयं चेति सप्तानामेव प्राधानिकरहस्ये प्रतिपादनादिति केचित् । तच्चिन्त्यम् । नन्दजारक्तदन्तीशताक्षीशाकम्भरीदुर्गाभीमाभ्रामरीत्वेतेषामपि सप्तानां रूपाणां मन्त्र एव प्रतिपादनेन विनिगमनाविरहात् संख्याधिक्यापत्तेः । तस्माज्जपे एकमन्त्रात्मकस्यापि मालामन्त्रस्य होमाङ्गेन सप्तशतधा विभजनाच्छतरुद्रियस्येवैकानेकमन्त्रात्मकत्वे विरोधाभावात्तथा व्यवहारोपपत्तिः । मन्त्रविभजनेऽपि यद्यामलवाराहीकात्यायनीतन्त्राणां वैमत्यं तत् तन्मन्त्रव्याख्यानावसरे परिहरिष्यते । यद्यपि कात्यायनीतन्त्रे पञ्चशतोत्तरमष्टसप्तति श्लोकाः यामलेत्वेकोनाशीतिः वाराह्यां तु सार्धाष्टाशीतिः कथिताः । उपपद्यते च वेदे शाखाभेदेनेव पुराणेषु कल्पभेदेन मनुपराशरहारीतादीनां वृद्धतरुणभेदेन तत्तत्स्मृतिवैलक्षण्यवत्पाठवैलक्षण्येऽपि प्रामाण्यं । ततश्च कवचस्य सार्धाः पञ्चाशदर्गलायास्त्रयोविंशतिः कीलकस्य लघुगुरुभेदेन द्वैविध्यादाद्यस्य चतुर्दशाऽन्त्यस्य त्रयोविंशतिरित्येतेषां श्लोकानां वाराहीतन्त्रानुमतस्तोत्रश्लोकैः सह मेलनेनैकोनासप्तशतीसम्पद्यते । रहस्यत्रयस्याङ्गत्वे प्रमाणाभावेन तन्मेलनस्याप्रसक्तेः एकन्यूनाधिकभावस्यान्तरत्वेन तदनादरेण व्यवहारस्य पञ्चाशत्पीठरूपिणीति ललितानाम व्याख्यानावसरेऽस्माभिः समर्थितत्वात् । कात्यायनीतन्त्रोक्तविभागेऽपि द्वयोरन्त्ययोरिवैकस्य श्लोकस्यावृत्तेरपि सुवचत्वाद्वा । तथापि 'जपेत्सप्तशतीं चण्डीं कृत्वा तु कवचं पुरा' इत्यादिना कवचमेलनाभावेऽपि सप्तशतीत्वप्रतीतेः कीलकद्वयप्रतिपाद्यस्यार्थस्याङ्गत्वेऽपि तयोरङ्गत्वे रहस्यवदेव मानाभावाच्चोक्त एव प्रकारो निर्दोषः । 'कवचं बीजमादिष्टमर्गलाशक्तिरिष्यते । कीलकं कीलकं प्राहुः सप्तशत्या महामनोः' इति गौडपादधृतवचनादङ्गत्वेऽप्यदोष इति । यानि तु क्वचिद्देशे सार्धानि षट्शतानि क्वचित्तदधिकान्यपि श्लोकानां पठ्यन्ते तानि कात्यायनी भगवत्येव जानाति परन्तु तन्त्रत्रयेऽप्यदृष्टानीति दिक् । एतस्यैवोत्तमत्वं तु तन्त्रान्तरे 'यथाश्वमेधः क्रतुषु देवानां च यथा हरिः । स्तवानामपि सर्वेषां तथा सप्तशतीस्तवः' । तत्रापि कलावतिप्रशस्तः 'कलौ चण्डीविनायकौ' इति वचनात् । वाराहीतन्त्रे सर्वेषां स्तोत्राणां परशुरामशापमुक्त्वा तद्विरहितानि कतिचिद्गणितानि । 'भीष्मपर्वणि या गीता सा प्रशस्ता कलौ युगे । विष्णोर्नामसहस्राख्यं महाभारतमध्यगम् । चण्ड्याः सप्तशतीस्तोत्रं तथा नाम सहस्रकम्' इत्यादि । भार्गवाख्येन रामेण शप्तान्यन्यानि कारणादित्यन्तेन । यद्यपि तन्त्रान्तरेऽस्यापि स्तोत्रस्य शिवशापः कीलनं चेति सिद्धिनिरोधकावुक्तौ तथापि तत्रैव शापोद्धारोत्कीलनयोः कर्मविशेषयोस्तदङ्गत्वेन सकृत्करणविधानादकरणे सिद्धिविरहोक्त्या तदावश्यकत्वपरौ तावर्थवादौ । तत्र शापोद्धारो यथा । त्रयोदशप्रथमौ द्वादशद्वितीयौ एकादशतृतीयौ दशमचतुर्थौ नवमपञ्चमावष्टमषष्ठावध्यायौ पठित्वा सप्तममध्यायं द्विःपठेदित्याकारकः प्रयोगः । उत्कीलनं यथा । आदौ मध्यमचरित्रं पठित्वा ततः प्रथमचरित्रं ततस्तृतीयचरित्रं पठेदित्याकारकः । 'अन्त्या १३ द्या १ के १२ द्वि २ रुद्र ११ त्रि ३ दिग १० ब्धयं ४ के ९ ष्वि ५ भ ८ र्त्तवः ६ । अश्वो ७ ऽश्व ७ इति सर्गाणां शापोद्धारे मनोः क्रमः । उत्कीलने चरित्राणां मध्याद्यान्त्यमिति क्रमः' । अङ्को नवकः । इषुः पञ्चमः । इभोऽष्टमः । 'ददाति प्रतिगृह्णाति नान्यथैषा प्रसिध्यति' इति विहितं दानप्रतिग्रहनामकं महोत्कीलनं तु कीलकाध्यायव्याख्यावसरे विशदीकरिष्यते । एवं सम्प्रदायज्ञस्य निर्दोषमुत्तमं कलौ शीघ्रसिद्धिदमिदमिति सिद्धम् । एतद्वाचनक्रमो वाराहीतन्त्रे 'यावन्न पूर्यतेऽध्यायस्तावन्न विरमेत्पठन् । यदि प्रमादादध्याये विरामो भवति प्रिये । पुनरध्यायमारभ्य पठेत्सर्वं मुहुर्मुहुः । अनुक्रमात्पठेदेव शिरःकम्पादिकं त्यजेत् । न मानसं पठेत्स्तोत्रं वाचिकं तु प्रशस्यते' ॥ कण्ठतः पाठाभावे तु पुस्तकोपर्यपि वाचयेत् ॥ तल्लेखनेऽपि विशेषः 'न स्वयं लिखितं स्तोत्रं नाब्राह्मणलिपिं पठेत्' इति । यत्तु 'आधारे स्थापयित्वा तु पुस्तकं वाचयेत्ततः । हस्तसंस्थापनादेव भवेदर्धफलं ध्रुवमिति । तस्य व्यवस्थापि तत्रैव 'पुस्तकेऽवाचनं हस्ते सहस्रादधिकं यदि । ततो न्यूनस्य तु भवेद्वाचनं पुस्तकं विना' । सहस्रान्यूनमन्त्रस्य पाठसत्वे तु पुस्तकं विनैव वाचनम् । तदभावे आधारे पुस्तकस्थापनेनैव वाचनम् । सहस्राधिकस्य तु पाठसत्वेप्याधारस्थापितपुस्तकोपर्येव वाचनमिति वचनार्थः । प्रकृतस्तोत्रस्य सहस्रान्यूनत्वात् 'ततः कृताञ्जलिपुटः स्तुवीत चरितैरिमैः' इति वैकृतिकरहस्ये विधानाच्च पाठाभावे पुस्तकस्याधारस्थापनेनैव वाचनं । कण्ठपाठीकृत्य पुस्तकं विनैव तु कृताञ्जलितया पठनमुत्तममिति द्रष्टव्यम् । अत्र सहस्रशब्देन द्वात्रिंशत्स्वरात्मिकस्यैकैकानुष्टुब्वकल्पनेन तादृशानुष्टुप्छन्दः सहस्रं ज्ञेयमिति स्पष्टं । शक्तिसङ्गमतन्त्रराजे–'द्वात्रिंशता स्वरैर्युक्त एको ग्रन्थो निगद्यते । स एव गदितः श्लोकस्तारानेत्रसमुद्भवः' इत्यादिना तेन गद्यात्मकमालामन्त्रेष्वप्यस्य नियमस्य प्रसरो ज्ञेयः । स्तोत्रपूर्वोत्तरभागपाठाभावे नैष्फल्यादिवचनानि शक्तिसङ्गम एव द्रष्टव्यानि ॥ 'ऋषिच्छन्दोदेवतादि पठेत् स्तोत्रे समाहितः । यत्र स्तोत्रे न दृश्येत प्रणवन्यासमाचरेत्' । डामरे–'सप्तशत्याश्चरित्रे तु प्रथमे पद्मभूर्मुनिः । छन्दो गायत्रमुदितं महाकाली तु देवता ॥ वाग्बीजं पावकस्तत्वं धर्मार्थे विनियोजनम् । मध्यमस्य चरित्रस्य मुनिर्विष्णुरुदाहृतः ॥ उष्णिक्छन्दो महालक्ष्मीर्देवता बीजमद्रिजा । वायुस्तत्वं धनप्राप्त्यै विनियोग उदाहृतः । उत्तमस्य चरित्रस्य

ऋषिः शङ्कर ईरितः ॥ त्रिष्टुप् छन्दो देवतास्य महापूर्वा सरस्वती । कामो बीजं रविस्तत्त्वं कामार्थे विनियोजनम् ॥ ह्रीं चण्डिकायै व्यस्तेन समस्तेन षडङ्गकौ । वाक् अद्रिजा काम इति नवार्णप्रथमबीजत्रयध्यानादिकं नवार्णवत् । अस्य पुरश्चरणस्वरूपं मरीचिकल्पे—'कृष्णाष्टमीं समारभ्य यावत्कृष्णचतुर्दशी । वृद्ध्यैकोत्तरया जाप्यं पूर्वसंपुटितं तु तत् । एवं देवि मया प्रोक्तः पौरश्चरणिकः क्रमः । तदन्ते हवनं कुर्यात्प्रतिश्लोकेन पायसम् । रात्रिसूक्तं प्रतिऋचं तथा देव्याश्च सूक्तकम् । हुत्वाऽन्ते प्रजपेत्स्तोत्रमादौ पूजादिकं मुने' इति । पूर्वाभ्यां पूर्वोक्ताभ्यां रात्रिसूक्तदेवीसूक्ताभ्यां संपुटितं । प्रतिश्लोकेनेति मन्त्रविभागोपलक्षणम् । कात्यायन्यादितन्त्रोक्तसप्तशतीविभागग्रन्थस्य हवनादिविधिं प्रति वाक्यशेषत्वेन तेनैव वैधपदस्यार्थनिर्णयावश्यम्भावात् । यत्र दुःखेनेत्यादेः स्थलान्तरस्थस्याप्यग्निहोत्रादिविधिशेषतास्वीकारेण स्वर्गपदार्थनिर्णयस्य वैदिकसम्मतत्वात् । होमसंख्या तु स्तोत्रस्य त्रिरावृत्तिरूपेति वृद्धाः । रात्रिसूक्तदेवीसूक्ते ऋग्वेदे शाकल्यसंहितायां प्रसिद्धे । तथेत्यनेन जपोक्तक्रमः संपुटाकारो निर्दिश्यते । तच्छब्दस्य पूर्वपरामर्शित्वात् । तस्य श्लोकपूरणमात्रार्थत्वे तु द्वाभ्यामपि सूक्ताभ्यां त्रिरावृत्तसप्तशतीहोमोत्तरमेव पाठक्रमानुसारेण होमः । विश्वेश्वरीं जगद्धात्रीमिति स्तवो रात्रिसूक्तम् । नमो देव्यै महादेव्या इति स्तवो देवीसूक्तमिति कश्चित् । तन्न । प्रतिश्लोकेन प्रतिऋचमिति प्रतिनियतनिर्देशविरोधात् । ऋक्सूक्तादिशब्दानां वैदिकमन्त्रेष्वेव रूढ्या प्रसिद्धेः । मत्स्यसूक्तमित्यादिकाचित्कतान्त्रिकव्यवहारस्य केवलयौगिकत्वेनोपपत्तेः । तेन ऋक्पदस्य श्लोके लक्षणेत्युक्तिरपि साहसमात्रं । समुद्रमनोध्यानादिविधौ बृहद्रथंतरपदयोः प्रतिनियतनिर्देशबलादेव लक्षणाव्यवस्थाया इव । प्रकृते क्लृप्ताया एव शक्तेर्व्यवस्थादार्ढ्यस्य कैमुतिकन्यायेनैव सिद्धेः । यदि त्वेवमालोच्यते । 'विश्वेश्वर्यादिकं सूक्तं दृष्टं तद्ब्रह्मणा पुरा । स्तुतये योगिनिद्राया मम देव्याः पुरन्दर । महिषान्तकरीसूक्तं सर्वसिद्धिप्रदं तथा । देव्या ययादिकं दिव्यं दृष्टं देवैर्महर्षिभिः । देवि प्रपन्नार्तिहरे प्रसीदेत्यादिकं तथा । नारायणीस्तुतिर्नाम सूक्तं परमशोभनम् । अमुष्याः स्तुतये दृष्टं ब्रह्माद्यैः सकलैः सुरैः ॥ नमो देव्यादिकं सूक्तं सर्वकामफलप्रदम्' इति विशकलितवेषेण । पाञ्चरात्रलक्ष्मीतन्त्रे व्यवहारदर्शनादेतेषां स्तोत्राणामपौरुषेयत्वसिद्धान्ताच्च सूक्तर्चव्यवहारो युज्यत एवेति । तदा कात्यायनीतन्त्रमते विश्वेश्वरीमिति श्लोकात्पूर्वं ब्रह्मोवाचेत्यस्य पाठाभावात्तदुत्तरमेव तत्पाठाच्च त्वं स्वाहेत्यारभ्यैव स्तोत्रारम्भः । तस्य च योगनिद्रात्मकरात्रिदैवत्यत्वान्मरीचितन्त्रे रात्रिसूक्तपदेन निर्देश इति समाधेयम् । परं त्वेतत्तन्त्रमनुसरता विश्वेश्वरीमिति श्लोकोऽङ्गहोमदशायां न होतव्यः । स्तोत्रान्तिमश्लोकस्य द्वेधाविभागोऽपि न कार्यः । देवीसूक्तेऽपि त्रेधाविभागोऽङ्गहोमे न विधेयः । प्रधानविशेषस्याङ्गविधावनन्वयेन प्रतिऋचमिति पदे लक्षणाकल्पने मानाभावादित्यवधेयम् । एवं सिद्धमन्त्रस्य क्रोडतन्त्रे । 'प्रत्येकावर्तनं देवि हयमेधेन संमितम् । त्रिरावृत्त्या लभेत्कामान्पञ्चावृत्त्या रिपून् जयेत्' । काम्ये तु प्रयोगे विशेषः । कात्यायनीतन्त्रे 'एकावृत्तादिपाठानां प्रत्यहं पठतां नृणाम् । संकल्पपूर्वं संपूज्य न्यस्याङ्गेषु मनून्सकृत् । पश्चाद्बलिप्रदानेन फलं प्राप्नोति मानवः । बलिश्च ब्राह्मणादिभेदेन व्यवस्थयोक्तः कालिकापुराणे द्रष्टव्यः । तत्राशक्तानामपि तत्रैव 'कूष्माण्डमिक्षुदण्डं च मद्यमासवमेव च । एते बलिसमाः प्रोक्तास्तृप्तौ छागसमाः सदा' । छागसमाः पञ्चविंशतिवर्षावस्थायितृप्तिजनकाः । 'अजाविकानां रुधिरैः पञ्चविंशतिवार्षिकीम् । तृप्तिमाप्नोति परमां शार्दूलरुधिरैस्तथा' इति तत्रैवोक्तेः । वस्तुतस्तु नहिंस्यादिति निषेधस्य संकोचमन्तरेणैव छागसमानतृप्तिसम्भवे छागबलिर्ब्राह्मणैर्न कार्य एव । एवं मद्यासवे अपि नदेये । 'वरं प्राणाः प्रगच्छन्तु ब्राह्मणो नार्पयेत् सुराम्' इति ब्राह्मणो मदिरां दत्वा ब्राह्मण्यादेव हीयते इति च बृहत्सङ्गमतन्त्रवचनात् । अतएव तत्प्रतिनिधिरपि कालिकापुराणे स्मर्यते 'अवश्यं विहितं यत्र मद्यं तत्र द्विजः पुनः । नारिकेलजलं कांस्ये ताम्रे वा विसृजेन्मधु' इति । कात्यायनीतन्त्र एव, 'उपसर्गोपशान्त्यर्थं त्रिरावृत्तं पठेन्नरः । ग्रहदोषोपशान्त्यर्थं पञ्चावृत्तं वरानने । महाभये समुत्पन्ने सप्तावृत्तमुदीरयेत्' इत्यादिना फलभेदेन संख्याभेदाननेकानुक्त्वोपसंहृतम् 'अथवा बहुनोक्तेन किमनेन वरानने । चण्ड्याः शतावृत्तिपाठात् सर्वाः सिध्यन्ति सिद्धयः' इति । इतोऽप्यधिकाः सहस्रचण्ड्यादयोऽन्यत्र द्रष्टव्याः । हरगौरीतन्त्रे । 'श्रीकामः पुत्रकामो वा सृष्टिमार्गक्रमेण तु । जपेच्छक्रादिमारभ्य शुम्भदैत्यवधावधि । आदिमारभ्य प्रजपेत्पश्चाच्छेषं समापयेत् । शान्त्यादिकामः सर्वत्र स्थितिमार्गक्रमेण तु । सावर्णिः सूर्यतनयः सावर्णिर्भविता मनुः । संकटे चान्त्यमारभ्य पश्चादादिसमापयेत् । इत्यादिकस्य कामनाभेदेन पाठवैचित्र्यस्य कतिपयश्लोकमात्रपाठेन तत्तत्प्रयोगवैचित्र्यस्य च विस्तरो डामरादितन्त्रस्थो ग्रन्थान्तरेभ्य एवावगन्तव्यः । केरलास्तु एकैकस्मिन् दिवसे एकैकमेव चरित्रं पठेदिति दिनत्रयेणैकावृत्तिरित्येकः पक्षः । चन्द्रा १ ऽक्षि २ भू १ वेद ४ करे २ न्दु १ दस्र २ सङ्ख्याकानध्यायात् क्रमेण दिनभेदेन पठेदिति सप्तभिर्दिनैरेकावृत्तिरित्यन्यः पक्ष इत्याहुः । अत्र द्वितीयमेव पक्षं 'पाठोयं विप्रकारः' इति सप्ताक्षर्या संग्रहन्तो बहवस्तदनुयायिनोऽनुतिष्ठन्ति च । 'कटपयवर्गभवैरिह पिण्डान्त्यैरक्षरैरङ्काः । नेत्रे शून्यं ज्ञेयं तथा स्वरे केवले कथितः' इति प्रसिद्धपरिभाषया पकार-यकार-ककारा एकस्मिन् ठप्ररेफा द्वयोः विशब्दश्चतुर्षु सङ्कोचित इति । तत्र मूलतन्त्राणि त एव जानन्तु सन्त्यपि तानि तन्त्रवचनानि एकदिनेनैकावृत्त्यशक्तपराणि । अस्ति हि तादृशोऽप्यस्य प्रयोगः कात्यायनीतन्त्रे मन्त्रविभजनान्ते, 'होमे स्वाहान्तिमा एते पूजायातु नमोऽन्तिमाः । तर्पणे तर्पयाम्यन्ता ऊहनीया बुधैर्मताः' इति वचनात्सप्तशतब्राह्मणभोजने प्रतिव्यक्त्यैकैकमन्त्रेण काण्डानुसमयेन षोडशोपचाराणां पदा-

देन व्यक्तीकरिष्यते । ईदृशानामरूपोपाधिकस्य शक्तिरूपब्रह्मण उपासनाप्रकाशकेषु वहुषु मन्त्रेषु द्वावत्युत्तमौ । नवार्णः सप्तशती चेति । तत्राद्यस्य चतुर्विंशतिवर्णात्मत्वेऽपि व्यञ्जनानां स्वराङ्गत्वेन स्वातन्त्र्येणाक्षरसंख्या व्यवहारानुपयोगित्वेन 'एष वै सप्तदशः प्रजापतिर्यज्ञेऽन्वायत्त' इत्यादाविव स्वरसंख्ययैव नवर्णता । अर्णशब्दोऽपि वर्णपरः सुवर्णे स्वर्णव्यवहारदर्श- नात् । वर्णशब्द एव च्युतकालङ्कारेण वकारप्रतीकारादेशप्रयोगस्तन्त्रेष्वेवेति कश्चित् । तदुद्धारस्तु देव्यथर्वशीर्षोपनिषदि । तत्रहि—'सर्वे वै देवा देवीमुपतस्थुः कासि त्वं महादेवि' इति देवानां प्रश्ने सति सा ब्रवीत् 'अहं ब्रह्मस्वरूपिणी' इत्यादिना बहुप्रकारैः सगुणनिर्गुणस्वरूपभेदाभ्यां देवोत्तरिते सति 'ते देवा अब्रुवन्नित्युपक्रम्य 'नमो देव्यै महादेव्यै' इति श्लोकमन्त्रेण ऋग्भिश्च नमस्कारादिकं निर्वर्ण्य श्रीविद्यामुद्धृत्य तत्रत्य कूटत्रयस्यैव रूपान्तरेषु वाक्कामशक्तिबीजेषु श्रुत्यन्तरेषवाला । घटकत्वेन प्रसिद्धेषु शक्तिबीजमात्रं प्रकारान्तरेण 'वियदीकारसंयुक्तम्' इत्यादिना । हृल्लेखात्मकत्वेनोद्धृत्य । तादृशबीजत्रय- घटितो नवार्णो मन्त्र उद्धृतः । तथा 'वाङ्माया ब्रह्मसूस्तस्मात् षष्ठं वक्त्रसमन्वितं । सूर्यो वामश्रोत्रबिन्दुसंयुक्तष्टात्तृतीयकः । नारायणेन संमिश्रो वायुश्चाधरयुक्ततः । विच्चे नवार्णकोऽणुः स्यान्महदानन्ददायकः' इति । 'वाक्' वाग्भवबीजम् । (ऐं) । 'माया' शक्तिः हृल्लेखैव (ह्रीं) । 'ब्रह्मसूः' कामः (क्लीं) । 'तस्मात्' कामबीजात् तत्र प्रथमोपस्थितात् ककारात् 'षष्ठ'मक्षरं चकारः त'द्वक्त्रेण' मुखवृत्तेन आकारेण समन्वितं (चा) । 'सूर्यो' मः 'अवाम श्रोत्रं' पञ्चमस्वरः 'बिन्दु'रनुस्वारः (मुं) । 'टात्' टकारात् 'तृतीयको' वर्णो डकारः स च 'नारायणेना'ऽऽकारेण संमिश्रः (डा) 'वायु'र्यकारः स चा 'धरेणाऽधरोष्ठेन द्वादशस्वरेण युक्तः (यै) । 'विच्चे' इति स्वरूपम् 'अणु'र्मन्त्रः महतामुपासकानामानन्ददायकः ब्रह्मसायुज्यप्रद इति तदर्थः । एतन्महिमातिशयो डामरादितन्त्रेषु द्रष्टव्यः । मन्त्रार्थश्च तत्रैव 'निर्धूतनिखिलध्वान्ते नित्यमुक्ते परात्परे । अखण्डब्रह्मवि- द्यायै चित्सदानन्दरूपिणि । अनुसंदध्महे नित्यं वयं त्वां हृदयाम्बुजे । इत्थं विशदयत्येषा या कल्याणी नवाक्षरी । अस्या महिमलेशोऽपि गदितुं केन शक्यते । वहूनां जन्मनामन्ते प्राप्यते भाग्यगौरवात् । एतमर्थं गुरोर्लब्ध्वा तस्मै दत्त्वा च दक्षिणाम् । आशिषं च परां लब्ध्वा मन्त्रसिद्धिमवाप्नुयात्' इत्यादि । अत्र प्रथमश्लोके सम्बुद्धित्रयं ततः चतुर्थ्यन्तं ततः पुनः संबुद्धित्रय- मिति सप्तभिः पदैः क्रमेण मन्त्रे सप्तधा परिच्छेदः पदानां तत्तद्विभक्त्यन्तता तत्तदर्थाश्चेति कथितं । तदुत्तरार्धेनाकाङ्क्षि- तपदानामध्याहार उक्तः इतरत्स्पष्टम् । सच्चिदानन्दात्मकपरब्रह्मधर्मत्वादेव शक्तेरपि त्रिरूपत्वम् । तत्र चिद्रूपा महासरस्वती वाग्बीजेन सम्बोध्यते । ज्ञानेनैवाज्ञाननाशान्निर्धूतनिखिलध्वान्तपदेन तद्विवरणं युक्तमेव । नित्यत्वं त्रिकालाबाध्यत्वं अत एव मुक्तत्वं कल्पितवियदादिप्रपञ्चनिरासाधिष्ठानत्वं । एतेन सद्रूपात्मकमहालक्ष्मीरूपस्य हृल्लेखया सम्बोधनमिति व्याख्यातं । पर उत्कृष्टः सर्वानुभवसंवेद्य आनन्द एव तस्यैव पुरुषार्थत्वात् 'आत्मनः कामाय सर्वं प्रियं भवति' इति श्रुत्या तदितरेषामपि तदर्थत्वेनानन्दस्यैव सर्वशेषितया परत्वात् स च मानुषानन्दमारभ्योत्तरोत्तरं शतगुणाधिक्येन श्रुतौ बहुविधो वर्णितः तेषु परमातिशायी 'स एको ब्रह्मण आनन्द' इति परमावधित्वेनाम्नात एव परात्परः, 'स्वात्मानन्दलवीभूतब्रह्माद्यानन्दसन्ततिः' इति पुराणं च । तेन आनन्दप्रधानेन महाकालीस्वरूपस्य कामबीजेन सम्बोधनमुक्तम् । चामुण्डाशब्दो हि मोक्षकारणीभूतनि- विकल्पकवृत्तिविशेषपरः । तादर्थ्ये चतुर्थी । चमुं सेनां वियदादिसमूहरूपां डाति डलयोरैक्याल्लाति आदत्ते स्वात्मसात्कारेण नाशयतीति व्युत्पत्तेः । पृषोदरादित्वात् सर्वं सुस्थमित्याहुः । 'मया तवात्रोपहृतौ चण्डमुण्डौ महापशू' इत्यत्र पशुपदद्वि- वचनयोः स्वारस्येन तूलमूलभेदेनाविद्याद्वयकथनेन 'यस्माच्चण्डं च मुण्डं च गृहीत्वा त्वमुपागता । चामुण्डेति ततो लोके ख्याता देवी भविष्यसि' इत्यत्रापि तूलमूलाविद्ययोरादानमेव गृहीत्वेति पदेनानूद्य निर्वचनकथनादण्डब्रह्मविद्यैत्येव चामुण्डापदस्यार्थो वर्णित इति सूक्ष्मदृशां रहस्यम् । विच्चे इति तु वित् च इ इति पदत्रयात्मकं बीजक्रमेणोक्तानां चित्सदानन्दानां वाचकं संबुध्यन्तम् । अस्य त्री ई इत्यस्य ह्रस्वे सति 'इ' हे आनन्दब्रह्ममहिषि इत्यर्थः । वित्पदं ज्ञानपरं प्रसिद्धमेव । चकारोऽपि नपुंसकः सत्यपर इति योज्यं । अनुसंदध्महे इत्यादि शेषः । इत्थं च हे महासरस्वत्यादिरूपे चिदादिरूपे चण्डिके त्वां ब्रह्म- विद्याप्राप्त्यर्थं वयं सर्वदा ध्यायाम इति मन्त्रार्थः फलितः । तस्यायं संग्रहः 'महासरस्वति चिते महालक्ष्मि सदात्मके । महा- काल्यानन्दरूपे त्वत्तत्त्वज्ञानसिद्धये । अनुसदध्महे चण्डि वयं त्वां हृदयाम्बुजे' इति । यद्यपि श्रीमित्येव बीजं महालक्ष्म्याः प्रसिद्धं न हृल्लेखा तथापि हकारशकारयोरूष्मत्वेन साजात्यान्नातीव भेदः । अतएव 'ह्रीश्च ते लक्ष्मीश्च पत्न्यौ' इति श्रुतौ । शाखान्तरे ह्रीपदस्थाने श्रीपदस्य पाठः । एवं स कामबीज एव लकारस्य स्थाने रेफयोजनेन कालीबीजतारस्तयोश्चान्त- स्थत्वेनैक्यात्रात्यन्तं भेदः । तन्त्रान्तरेषु कालीसरस्वत्योर्वास्तविकाभेदमभिप्रेत्य बीजयोर्वैपरीत्याद्भेदव्यवहारोऽपि दृश्यत इति द्रष्टव्यम् । अयं चार्थः प्राचीनैर्वर्णितप्राय एव सम्यक्परिष्कृत्योक्तः । वस्तुतस्तुलक्षणविरोधस्य छान्दसत्वेन पृषोदरादि- पाठकल्पनया च समाधानस्याविशेषादन्योऽपि प्रकारः सुवचः । चमु अदन इति धातोश्चामुरदनीयः पदार्थः । स च ब्रह्मा- तिरिक्तः सर्वोऽपि अत्ताचराचरग्रहणादित्यधिकरणे तथा निर्णयात् । तं डापयति उड्डापयति न विषयीकुरुते ब्रह्ममात्रवि- षयिणीति यावत् । अथवा चकार एकाक्षरनिघण्टुरीत्या चन्द्रवाचक आह्लादप्रकाशगुणयोगादिह ज्ञानपर आनन्दपरो वा सन् ब्रह्मैव वक्ति । तदासमन्तान्मुण्डयतीति चामुण्डा । मुण्डनं नामाधारापेक्षया न्यूनसत्ताकवस्तुनिरासः । शिरश्चर्मापेक्षया

न्यूनतादात्म्यवतामेव केशानां वपने प्रयोगात् । गौडपादीयभाष्ये तु शरीरराहित्यलक्षणमुण्डतायां मुण्डकोपनिषत्प्रोक्त-शरीरविशेषवत्ताया अमुण्डतायाश्च सत्वाचामुण्डात्वमित्यर्थ इत्युक्तम् । अथवा चानां बुद्धीनां सुखानां वा मुण्डमिव शीर्ष-मिव स्थिता, सर्वोत्तमा चरमवृत्तिरूपा ब्रह्मविद्येति यावत् । अथवा । चण्डिकारूपदेवतापर एव चामुण्डाशब्दः । अतएव मन्त्रान्ते वह्निजायायोजनेन होमे चामुण्डाया इदमित्येव त्यागो विधिशब्दस्य मन्त्रत्वमित्यधिकरणन्यायसिद्धो युज्यते । चतुर्थीबलाच्च नमः शब्दस्यैवाध्याहारः । बीजत्रयमप्यव्ययरूपं चतुर्थ्यन्तमेव व्यष्टिदेवतात्रयवाचकमभेदद्योतकं । तद्विशेषणं विच्चे इत्यप्यखण्डमव्ययं मोचनार्थकं । स्वरादेराकृतिगणत्वात् । मन्त्रस्य पदखण्डशो न्यासप्रकरणे अस्य युगलस्य विभजनं विनैव न्यासविधानात् । भगमालिनी नित्या मन्त्रादिषु बहुषु तस्य प्रयोगसत्वेन तन्त्रोक्तार्थरीत्या निर्वाहाभावाच्च । ततश्च हे अम्ब बन्धनकारणीभूतामिमां रज्जुं ग्रन्थिविसर्जनादिना मोचयेति स्त्रीसम्बोध्यकमोक्षप्रार्थनारूपो विशिष्टस्तदर्थः । यदापि दक्षिणामूर्तिसंहितायां भगमालिनीति मन्त्रस्थदेवतागणनावसरे 'अमोघां चैव विच्चां च तथेशीं क्लिन्नदेवताम्' इति पाठात् विच्चानामिका काचिद्देवतैवेत्यालोच्यते तदापि परिकरालङ्कारेण साभिप्रायं चामुण्डाविशेषणं । मोचयतीत्येव तदर्थः । तस्मि-न्नेवार्थे कर्णाटभाषाविद्भिरान्ध्रभाषाविद्भिश्च शिष्टैः प्रयोगेण शक्तिग्रहसम्भवात् । 'पृणीयादिन्नाधमानायतव्यानिति' श्रुतौ तव्यपदस्य सूपादिभक्ष्यपरतायाः । नुवन्तं याञ्चयामुपेति श्रुतौ नौतेर्दुःखपरतायाः । तासां वायुः पृष्ठे व्यवर्ततेति श्रुतौ पृष्ठपदस्य योनिपरतायाः । पढमञ्ची हंसपदमिति प्राकृतपिङ्गलसूत्रे मञ्चीत्यस्य सुन्दरपरताया अन्यत्र च कर्णाटद्रविडान्ध्र-भाषाप्रसिद्धैव । शक्तिनिर्णयस्य बहुशोऽङ्कितत्वात्, पिकनेमाधिकरणस्यैतदर्थमेव विशिष्य प्रवृत्तेर्भट्टचिन्द्रोदयेऽस्माभिर्वर्णि-तत्वाच्च । भाषाणां संस्कृतापभ्रंशत्वेनापेक्षितार्थे विरोधाभावे निर्णायकत्वसम्भवाच्च, तन्त्रोद्धृतमन्त्रेषु भाषामिश्रणस्यापि बहुशो दर्शनेन चरणायुधादिदैवत्यमन्त्रेषु पुंकोलीत्यादिशब्दानां कुक्कुटादिष्विव प्रवृत्तेश्चेति द्रष्टव्यम् । काल्यै लक्ष्म्यै सरस्वत्यै च-ण्डिकायै नमोऽस्तु ते । अविद्यायापाशहृदयग्रन्थिं विस्रस्य मुञ्च मामिति तु मन्त्रार्थसंग्रहः । रहस्यतन्त्रे तु महावाक्यस्येव जीवब्रह्मणोरभेद एव मन्त्रस्यार्थ इत्युक्तं तन्निर्वाहे गुरुचरणावेव शरणमिति दिक् ॥ अत्र प्राञ्चः । तिसृणामपि देवीनां तुरी-यया सहाभेदाऽविशेषेऽपि महालक्ष्म्या एव प्राधानिकरहस्ये 'सर्वस्याद्या महालक्ष्मीः' इत्यादिना तुर्यास्थाने गणनादितरयोः द्वेव्योरेतज्जन्यत्वस्य कथनात् । महालक्ष्मीजननस्य पार्थक्येनाकथनाच्चोपास्यदेवतायास्तुरीयत्वेपि तस्यां रजःप्राधान्येनेतरगु-णयोर्न्यग्भावेनैव भावनमावश्यकमित्याहुः । तामेव च रीतिमाश्रित्य महालक्ष्मीबोधकहृल्लेखाया एव नवार्णे प्रधानबीजत्वा-दथर्वशीर्षे तावन्मात्रेण पुनः स्वातन्त्र्येणोद्धारस्यापि प्राधान्यध्वननार्थत्वात् । सप्तशतीस्तोत्रेऽपि प्रथमश्लोके बिन्दुरहिताया अपि तस्या उद्धारेण समष्टिव्यष्टिभेदाच्चत्वारोऽपि मन्त्रा उद्धृतप्राया इति वदन्तष्टीकाकारास्तदुद्धारप्रकारं देवीचन्द्रकलास्तवे दीक्षितैः प्रदर्शितमेव लिखन्ति । यथा—'सावर्णिः सूर्यतनयो यो मनुः कथ्यतेऽष्टमः । निशामय तदुत्पत्तिं विस्तराद्गदतो मम' । अस्यार्थः । यः यकारादष्टमो हकारः सूर्यतनयोऽग्निः रेफः दिनान्ते सवितृतेजसोऽग्नौ निक्षेपेण पित्र्यस्य धनस्य पुत्रे नि-क्षेपदर्शनेन तत्सादृश्यादग्नौ सूर्यपुत्रत्वम् । वर्णैः सहिता सवर्णा 'अजामेकां लोहितशुक्लकृष्णाम्' इति श्रुतिप्रसिद्धा मूलप्रकृतिः, तस्या वाचकत्वेन पुत्रत्वोपचारादिप्रत्यये सति सावर्णिरीकारः तेन निर्बिन्दुको ह्रींकारः सिद्धः, स मनुर्मन्त्रः कथ्यते देवीमन्त्रयोरभेदात् । तदुत्पत्तिं तदवतारान् गदतो मम मुखान्निशामयेति वर्णयन्ति । आर्षवाक्यानां सर्वतोमुखत्वादस्तु कथ-ञ्चिद् युक्तमेवैतत् । वयंतु ब्रूमः अम् गत्यादिष्विति धातोर्निशासमतीति व्युत्पत्त्या निशाम् चन्द्रो बिन्दुः, अयेत्येतावानेव धातुः इट्किट्कटी गतावित्यत्र प्रश्लिष्टस्येकारस्य रूपं, सूर्यतनयशब्द एव वाऽवृत्याबिन्दुपरोऽपि; जलमण्डले सूर्यकिरणानां प्रवेशेनैव चन्द्रात्मतया परिणामेन 'पतिर्जायां प्रविशती'ति न्यायेन चन्द्रस्य सूर्यपुत्रत्वात् 'नवो नवो भवति जायमानः' इत्यस्यामृचि योऽह्नां केतुरुषसामग्र उदेति स एव देवेभ्यो भागं विदधत् पुनः पुनर्जायमानश्चन्द्रमा भवतीति कथनाच्च । अपि च चतुर्थस्वरस्य वर्णे वाच्ये स्त्रीलिङ्गाभावेन नदीसंज्ञाभावात्पञ्चम्यां य इत्येवंरूपम् ईकारादित्यर्थः । दिग्योगपञ्चम्या ईकारात्परत इत्यर्थः । परित्यज्येति ल्यब्लोपे वा पञ्चमी । तेन तत्परतोऽष्टमो द्वादशस्वरः । बिन्दुः पूर्ववत् इति वाग्भवो-द्धारः ॥ अपि च । यः अष्टम इत्येतयोरन्यतरस्य द्विरावृत्त्यैकारात्परोऽष्टम ईकारात्पूर्वः कार्य इति वा । ईकारादष्टमः तस्मा-दपि विलोमाष्टम इति वा व्याख्येयं । ततो मनुश्चतुर्दशस्वरः औकारः । तेनेयं त्र्यक्षरी त्रैपुरकंदाख्या विद्या । एतां प्रकृत्य तन्त्रराजे 'एषा त्रैपुरकंदा स्यात्' इति वचनात् । तन्त्रान्तरे त्वस्या एव चेतनीति नाम । एतदुद्धारो योगिनीतन्त्रे 'शिवाष्टमं केवलमादिबीजं भगस्य पूर्वाष्टमबीजमन्यत् । परं शिवान्तं मनुयुक् त्रिवर्णा संकेतविद्या गुरुवक्त्रगम्या' इति । 'शिवा' ईकारः शिव उकार इति वा तस्या 'अष्टमं' तत्परतस्तमारभ्य वाष्टमं द्वादशस्वरात्मकं 'केवलं' बिन्दुरहितं 'भगस्य' ऐकारस्य एकारस्य वा 'पूर्वाष्टमं' ततः पूर्वेषु तमारभ्य वा विलोमाष्टमं चतुर्थस्वरात्मकं । शिवोनुस्वारोऽन्ते यस्य तत् । ततो 'मनुयुक्' चतुर्दशस्वर-युक्ता त्र्यक्षरीविद्या स्त्रीदेवत्या 'संकेतगम्या' गोपनीयेति तद्व्याख्यातारः । तेन 'ऐं ईं औं' इति विद्यासिद्ध्यति । अपिच 'अकारः सर्ववर्णाग्र्यः प्रकाशः परमः शिवः । हकारोऽन्त्यकलारूपो विमर्शाख्यः प्रकीर्तितः । अकारादि हकारान्तं मातृकामण्डलं त्विदम्' इत्यादिव्यवहाराळ्ळकारस्य लकारेन्तर्भावेन क्षकारस्य संयुक्तत्वेन पार्थक्याभावादूनपञ्चाशद्वर्णं मातृकामण्डलमिति पक्षे

व्युत्क्रमेण गणनायां चतुर्थस्वरादष्टमः शकारः रेफेकारबिन्दवः पूर्ववदिति रमाबीजोद्धारः ॥ अपिच यो मनुः यकाराच्चतुर्दश ईकारो बिन्दुश्चेति कामकलोद्धारः । अष्टम इति कादिनवकादिपरिभाषयैकपञ्चाशदक्षरं । स च क्षकारः रेफौकारबिन्दुभिर्योगे नारसिंहोद्धारः ॥ गदतो ममेत्यत्र गकारः स्वरूपं । दतो दकारं परित्यज्य 'मम' पञ्चकद्वयं दशमो लकारः ओंकारबिन्दुयोगे वाराहीबीजोद्धारः ॥ यो मनुरीकाराच्चतुर्दशः ककारः तस्य लकारेकारबिन्दुयोगे कामबीजोद्धारः । ग इति स्वरूपस्य बिन्दुयोगे गणपतिबीजोद्धारः सवर्णः सकारः । आत्मन एव पुत्रत्वविवक्षायां स्वार्थे पर्यवसन्न इञ् । सूर्यतनयो यमो हकारः मनुरौकारः । तत्परतो विसर्गान्तस्याऽनचिचेति प्रश्लेषेण परायाः प्रासादस्य तयोर्योगयोरप्युद्धारा द्रष्टव्याः ॥ एवमन्यत्रापि–'मेधासि देवि विदिताखिलशास्त्रसारा' इत्यत्र पादभेदेन वाक्–सर्वमङ्गला–लक्ष्मीणामुद्धारः । शास्त्रशब्दो वेदपरः । शास्त्रयोनित्वादिति ( वे० सू० २।३ अ० १ पा० १ ) व्याससूत्रादिषु व्यवहृतः । अखिलशब्देन त्रयी कथ्यते । तत्र व्यञ्जनानामविवक्षितत्वादाद्यन्तयोरकारद्वयं मध्य इकारः सिद्धः । वेदत्रयाद्याक्षराण्यपि क्रमेण तथैव । तेषां मध्ये द्वयोः क्रमेण सन्धौ गुणे सत्येकारः । अवशिष्टयोर्व्युत्क्रमेण सन्धौ वृध्या ऐकारः । एवं साद्यस्क्रियपशुत्रयालम्भसाहित्यन्यायेन मध्यभागे मिलितैर्वेदत्रयाद्याक्षरैरेव वाग्भवबीजोत्पत्तेस्तन्त्रराजे स्पष्टं कथनात् । तदिदमखिलशास्त्रसारत्वम् । एतेन 'ऋक्सामयोर्यजुषि सन्धिवशादुदीर्णं बीजं सरस्वति सकृत्तव ये जपन्ति । ते सत्यवाक्यमुनिवद्विदितत्रयीका आथर्वणादिकमवाप्य सुखीभवन्ति' इति श्लोकोऽपि व्याख्यातः । सत्यवाक्यो नाम मुनिर्भयेनैकारमात्रोच्चारणेन वेदचतुष्टयमङ्गानि चाधिगतवानिति भगवतीपुराणस्थाया आख्यायिकायाः पृथ्वीधराचार्यैर्निबन्धनात् । आथर्वणादिकमित्यस्य शमिति । तत्प्रथमाक्षरमित्यर्थः । सुखीभवन्तीति निश्चितं । मुक्ता भवन्तीति यावत् ॥ 'दुर्गासि दुर्गभवसागरनौरसंगा' इति तद्द्वितीयचरणे भवः शिवः । सकारः सागरो जलरूपो वकारः नौ असङ्गा व्यञ्जनसङ्गहीना इति च । तेन स्वौ इति सर्वमङ्गलाख्या दुर्गा । तदुत्तरार्द्धे 'श्रीः कैटभारि हृदयैककृताधिवासा गौरि त्वमेव शशिमौलिकृतप्रतिष्ठा' इत्यत्र श्रीरिति कण्ठरवेणैवोद्धृत्य तद्देवताध्यानस्थं विशेषणद्वयं कैटभारीत्यादिना कथितं । 'भूयाद्भूयो द्विपद्माभयवरदकरा तप्तगाङ्गेयगौरी पद्माक्षीः पद्मनाभोरसि कृतवसतिः पद्मगा श्रीः श्रिये नः । इत्यादितद्ध्यानश्लोकस्य प्रपञ्चसारादौ कथनात् । उद्धृतस्य बीजत्रयस्य बिन्दुयोगं तन्त्रेणाह शशिमौलीति स्पष्टोऽर्थः ॥ अपिच । 'त्वं स्वाहा त्वं स्वधा त्वं हि वषट्कारस्वरात्मिका' इत्यत्र 'का'ककारेण सह रः रेफः । स्वरात्मिका स्वरेषु चतुर्थवती आत्माऽन्तरात्म-परमात्म-ज्ञानात्मनां चतुष्टयस्यात्मोपनिषदि पीठन्यासादौ च प्रसिद्धत्वात् ॥ 'स्वधा त्वमक्षरे नित्ये' इत्यत्र तकाराविवक्षया वमिति सुधाबीजं । 'त्रिधामात्रात्मिकास्थिता' इति प्रणवमुक्त्वा अर्धमात्रस्थितानित्येत्यनेन कालीबीजप्रणवयोरर्धमात्रात्मकानुस्वारयोगमुपदिश्य 'यानुचार्या विशेषतः' इत्यनेन तदन्ते नादोऽप्युद्धृतः ॥ अपिच 'यस्याः प्रभावमतुलं भगवाननन्तो ब्रह्मा हरश्च नहि वक्तुमलं बलं च । सा चण्डिका' इत्यत्र नवार्णमन्त्रगतानां चतुर्विंशतिवर्णानामुद्धारः । मन्त्रे हि आकाराद्याश्चत्वारः स्वरा एकारादिद्वयं च । एतेष्वाकार ईकार ऐकारश्च द्विरावृता इति नव स्वराः । चत्वारो बिन्दवः । कचडतामादिपञ्चकं हकारश्चेति दश व्यञ्जनानि । तत्र चकारो द्विरावृतः । विच्चे इति प्रथमचकारस्य तकाररूपत्वात् संहत्य चतुर्विंशतिः । तेषु वमतुलमित्यनेन व्यञ्जनचतुष्टयं पञ्चमस्वरो बिन्दुश्चेति षण्णां निर्देशः । अकारा उच्चारणार्थाः । भग एकारः वातीति वान् शत्रन्तः । तेन वायुर्यकारः । अनन्त आकारः । ब्रह्मा ककारः । ह र इति स्वरूपं । चकारोऽपि स्वरूपं । वक्तुं वाग्भवम् ऐकारः तस्य द्विरन्वयः । आच्चण्डिकैः 'आकारादिभिरिकारान्तैः पञ्चभिरीकाराभ्यां च' सहिता सा चण्डिका, चण्डिकापदद्वयस्य तुर्यस्वरवाचकस्य विरूपैकशेषः ङपदात् । स्वार्थे कप्रत्ययेनेकार एक एव । लं चं इति बिन्दुद्वयस्य द्विर्द्विरन्वयः । इत्थं चतुर्विंशतिवर्णाः । अनन्तादिपदत्रयस्य नवार्णमन्त्रद्रष्टृऋषिपरत्वेनापि पुनरन्वयादक्षराणि ऋषयश्च यस्या देव्याः प्रभा किरणसमूहः । बलं तत्वं च वक्तुं नालं वाचामगोचरः । साखिलजगत्परिपालनाय आसुरभयनाशाय च मतिं करोतु इत्यन्वयः । एवं तृतीयचरित्रे त्रिपाद्गायत्रीमन्त्रा विभागानुषङ्गोद्भवास्त्रिस्त्रिरावर्त्यमाना वक्ष्यन्ते ते च कात्यायनीतन्त्ररीत्या द्वाविंशतिरेव । तन्त्रान्तरेषु धृतिपुष्ट्योरधिकयोराम्नानाच्चतुर्विंशतिः । ते प्रकृतमन्त्रवर्णानामेकैकस्योद्धारकाः । परन्तु बहुकोशलेखनादिक्लेशसापेक्षत्वान्नेह तदायासः प्रदर्श्यते ॥ एवमन्यत्राप्यम्बानुग्रहपात्रतातारतम्येन सर्वमिदं स्तोत्रं मन्त्रोद्धारगर्भितमेव दृश्यते । उक्तं च वेदागमे 'निर्विशेषपरा मन्त्राः सविशेषपराश्च ये । प्रत्यध्यायं निगूढास्ते तेनेयं सर्वतः परा' इति । ईदृशवह्वाशयेनैव 'चक्षुष्मन्तोऽनुपश्यन्ति नेतरेऽतद्विदो जनाः' इति रहस्योक्तिर्द्रष्टव्येति दिक् ॥ अयं च मन्त्रः स्वतन्त्रोपास्यः सप्तशत्यङ्गं चेति द्विप्रकारोपास्तिमस्य केचिदाहुः वैपरीत्यात् । सप्तशत्यैव तु तद्द्वियोपास्येति स्पष्टीकरिष्यतेऽनुपदमेव । उभयथापि नवार्णस्य संक्षेपेण साधनप्रकार इह वक्तव्य एवेत्युच्यते ॥ 'नवाक्षरस्य ऋषयो ब्रह्मविष्णुमहेश्वराः । छन्दांस्युक्तानि मुनिभिर्गायत्र्युष्णिगनुष्टुभः ॥ देव्यः प्रोक्ता महापूर्वाः काली लक्ष्मीः सरस्वती । नन्दाशाकम्भरीभीमाः शक्तयोऽस्य मनोः स्मृताः ॥ स्याद्रक्तदन्तिकादुर्गाभ्रामर्यो बीजसन्ततिः । अग्निर्वायुः सूर्यस्तत्वं फलं वेदत्रयोद्भवम् ॥ सर्वाभीष्टप्रसिद्ध्यर्थे विनियोग उदाहृतः । ऋषिच्छन्दोदैवतानि शिरो-मुख-हृदि न्यसेत् ॥ शक्तिबीजानि स्तनयोस्तत्वानि हृदये पुनः । ह्रीं चण्डिकायै व्यस्तेन सर्वेण च षडङ्गकौ' ॥ एते पञ्चवर्णाः समस्तश्चैक इति षड्भिरङ्गुष्ठादिन्यासो हृदयादिन्यासश्च कार्य इत्यर्थः । 'खड्गिनी शूलिनीत्यादि पठित्वा श्लोकपञ्चकं ।

आद्यं कृष्णतरं बीजं ध्यात्वा सर्वाङ्गके न्यसेत्' ॥ 'आद्यं' वाग्भवं, श्लोकास्तु सप्तशतीस्तोत्रस्थाः । 'विश्वातीतमहामन्त्रात् प्रोच्य श्लोकचतुष्टयम् । ध्यात्वा सूर्यनिभं बीजं द्वितीयं सर्वतो न्यसेत्' । 'द्वितीयं' हृल्लेखा । क्वचित्तु चरणत्रयस्यान्यथा पाठः 'शूलेन पाहि नो देवि' इत्यादिश्लोकचतुष्टयं पठित्वा सूर्यसदृशमिति । तेन तदेव विश्वातीतमहामन्त्रपदस्य व्याख्यारूपम् । सूर्यस्य द्वादशकलास्तापिन्यादयः । तासु ककारादीनां क्रमेण द्वादशानां भकारादीनां व्युत्क्रमेण द्वादशानां च वर्णानां युग्मशो योगस्तन्त्रेषु विहितः । तासु नवम्यां विश्वानाम्न्यां कलायां ङकारतकारयोर्योगसत्त्वेऽपि प्रकृते विश्वापदेन तकार एव विवक्षितः । तेन तकारशून्यं श्लोकमारभ्येत्यर्थः । कयापि विभया शप्तशत्यां तादृशस्य श्लोकमन्त्रान्तरस्याऽभावादेव नातिप्रसक्तिः । एकं जग्राह केशेष्विति श्लोके द्वात्रिंशदक्षरात् परतो व्यञ्जनरूपो वा श्रूयत एव । 'इत्थं निशम्य देवानां वचांसि मधुसूदनः' इति श्लोके थकारयोगेन श्रूयते । 'हन्यमानं महासैन्यं विलोक्यामर्षमुद्वहन् । अभ्यधावन्निशुम्भोथ' इत्यत्राभ्यधावदिति पदच्छेददशायां तकारव्यक्तिरस्त्येव, 'चुक्षुभुः सकला लोकाः' इति श्लोकस्तु पूर्वोत्तरमन्त्रयोरुत्तरपूर्वार्धरूपत्वादखण्डो मन्त्र एव न भवतीति कयापि रीत्या तकाराभावः शूलेनेति श्लोकमन्त्र एव, 'ततो देवा ददुस्तस्याः' इत्यर्धसद्भावपक्षे तु चुक्षुभुरित्यस्य निरासः । साम्प्रदायिकव्याख्यानत एवेति गुप्तं रहस्यम् । 'सर्वस्वरूप इत्यादिश्लोकानां पञ्चकं पुनः पठित्वा स्फटिकाभासं तृतीयं स्वतनौ न्यसेत्' । 'तृतीयं' कामबीजम् । अत्र प्रथमतृतीययोर्बीजयोर्महासरस्वतीमहाकालीरूपयोः श्वेतकृष्णरूपत्वेऽपि वैपरीत्येन रूपनिर्देशो वास्तविकाभेदसत्त्वेन रहस्ये वक्ष्यमाणं सरस्वत्याः कृष्णाङ्गविष्णुजनकत्वं काल्याः श्वेताङ्गशिवजनकत्वं चाभिप्रेत्येति बोध्यम् । 'ततः षडङ्गं कुर्वीत विभक्तैर्मूलमन्त्रकैः । एकैनैकेन चैकेन चतुर्भिर्युगलेन च । समस्तेन च मन्त्रेण कुर्यादङ्गानि षट् सुधीः' ॥ अथ ध्यानं । 'खड्गं चक्रगदेषुचापपरिघान् शूलं भुशुण्डीं शिरः शङ्खं संदधतीं करैस्त्रिनयनां सर्वाङ्गभूषावृताम् । नीलाश्मद्युतिमास्यपाददशकां सेवे महाकालिकां यामस्तौत्स्वपिते हरौ कमलजो हन्तुं मधुं कैटभम् ॥ १ ॥ अक्षस्रक्परशुं गदेषुकुलिशं पद्मं धनुःकुण्डिकां दण्डं शक्तिमसिं च चर्म जलजं घण्टां सुराभाजनम् । शूलं पाशसुदर्शने च दधतीं हस्तैः प्रवालप्रभां सेवे सैरिभमर्दिनीमिह महालक्ष्मीं सरोजस्थिताम् ॥ २ ॥ घण्टां शूलहलानि शङ्खमुसले चक्रं धनुः सायकान् हस्ताब्जैर्दधतीं घनान्तविलसच्छीतांशुतुल्यप्रभाम् । गौरीदेहसमुद्भवां त्रिजगतामाधारभूतां महापूर्वामत्र सरस्वतीमनुभजे शुम्भादिदैत्यार्दिनीम् ॥३॥' इति ध्यात्वा मनसाऽन्तर्यागं कृत्वा बहिर्यागमपि यन्त्रे कुर्यात् । यन्त्रं यथा 'लिखेदष्टदलं पद्मं कुङ्कुमागरुचन्दनैः । पद्ममध्ये लिखेच्चक्रं षट्कोणं चण्डिकामयम् । षट्कोणचक्रमध्यस्थमाद्यं बीजत्रयं न्यसेत् । पूर्वादिकोणषट्के तु बीजान्यन्यानि विन्यसेत्' । बीजानीत्यनेन अन्येषामपि विन्दुयोगेनैव लेख उक्तः । लेखस्तु प्रादक्षिण्येन दक्षिणाद्वामान्तमिति ज्ञेयम् । 'एवं कृत्वा जपेल्लक्षचतुष्कं तद्दशांशतः । पायसान्नेन जहुयात्पूजिते हेमरेतसि' । इदमेकं पुरश्चरणम् । अथवा 'आश्विनस्य सितेपक्षे आरभ्याग्नितिथिं सुधीः । अष्टम्यन्तं जपेल्लक्षं दशांशं होममाचरेत्' । अग्नितिथिः प्रतिपत् 'प्रथमां पिबते वह्निर्द्वितीयां पिबते रविरित्याद्युक्तेः । उभयत्र मन्त्रान्ते स्वाहायोजनेन होमः । तर्पणं तु मन्त्रान्ते चण्डिका तृप्यत्विति योजनेन । अयमुभयविधोऽपि जपः सप्तशतीस्तोत्रेण संपुटीकृतो विधेयः । तदुक्तं डामरतन्त्रे 'मार्कण्डेयपुराणोक्तं नित्यं चण्डीस्तवं पठन् । पुटितं मूलमन्त्रस्य जपेनाप्नोति वाञ्छितम्' इति । पुटितमिति पाठे क्रियाविशेषणं । 'पुटितं' स्वसंपुटाकारता । तथा च स्तवो यथा मूलमन्त्रजपस्य संपुटाकारो भवति तथा पठनान्मूलजपस्य यद्वाञ्छितं फलं तत्सिध्यतीत्यर्थः । ततश्च स्तवीय ऋष्यादिन्यासपूर्वकं चरित्रत्रयं पठित्वा मध्ये स्वसङ्कल्पितसङ्ख्याऽनुसारेण सहस्रादिसङ्ख्याकनवार्णं जपित्वा पुनश्चण्डीस्तवं पूर्ववत् पठेत् । परन्त्वेतदन्ते पुनर्मूलमष्टोत्तरशतमात्रं जप्त्वा निवेदनादिकं कुर्यात् । अयं जपोऽङ्गभूतो न प्रधानसङ्ख्यायामुपयुज्यत इति विशेषः । तदप्युक्तं तत्रैव चरित्रत्रयस्य ऋष्यादीनुक्त्वा । 'एवं संस्मृत्य ऋष्यादीन् ध्यात्वा पूर्वोक्तमार्गतः । सार्थस्मृति पठेच्चण्डीस्तवं सप्तपदाक्षरं । समाप्तौ तु महालक्ष्मीं ध्यात्वा कृत्वा षडङ्गकं । जपेदष्टशतं मूलं देवतायै निवेदयेत्' इत्यादि । केचित्तु मूलमन्त्रस्य जपेन पुटितं चण्डीस्तवं पठन्निति प्रथमश्लोकं योजयन्तश्चरमश्लोके पुनर्विधानं संख्यामात्रपरमिति मन्यमानाः सप्तशतीस्तोत्रस्यैव मूलेन संपुटिताकारो विधीयत इत्यङ्गाङ्गिभाववैपरीत्यमिच्छन्ति । तदयुक्तम् । बहुषु तन्त्रेषु नवार्णं प्रकृत्य तत्प्रकरणे सप्तशतीपाठविधानेन नवार्णजपस्य प्राकरणिकत्वेनान्याङ्गत्वायोगात् । तत्र विद्यमानाया अपि स्तोत्रफलश्रुतेः प्रयाजफलश्रुतेर्वसन्तमेवर्तुनाम च रुन्ध इत्यस्या इवाविवक्षितार्थकत्वात् । मरीचिकल्पे—'रात्रिसूक्तं जपेदादौ मध्ये चण्डीस्तवं पठेत् । प्रान्ते तु जपनीयं वै देवीसूक्तमिति क्रमः । एवं संपुटितं स्तोत्रं पूर्वोक्तफलदायकम्' इत्यनेन वैदिकसूक्तद्वयेन संपुटितायाः सप्तशत्या विधानाच्च । परन्त्वन्वारम्भणीयेष्टिवन्नवार्णस्य स्तोत्रजपप्रारम्भमात्राङ्गत्वं जपाधिकारितावच्छेदकत्वं चेति बोध्यम् । रहस्यं तु कीलकाध्याये स्पष्टीभविष्यति । अत्रापेक्षितः सामान्यविधिरन्ये विशेषा अपि कल्पवल्लीकारैरुक्ता इति तत एव सर्वमवगन्तव्यम् । इति नवार्णनिर्णयः ॥ ॥ द्वितीयस्तु चरित्रत्रयात्मकः श्लोकसमूहरूपो मन्त्रः । स च वामनपुराणदेवीभागवतमार्कण्डेयपुराणादिषु लक्ष्मीतन्त्रादिषु च बहुविध उपलभ्यते । तथापि मार्कण्डेयपुराणस्थ एव त्रिसप्तत्यध्यायोत्तरं षडशीतितमाध्यायान्तमभिव्याप्तः 'सावर्णिः सूर्यतनयः' इत्यारभ्य 'सावर्णिर्भविता मनुः' इत्यन्तस्त्रयोदशभिरध्यायैः परिच्छिन्नैः श्लोकसमूहात्मको मालामन्त्रत्वेन ग्राह्यः । पूर्वोक्तडामरतन्त्रवचनात् । वाराहीतन्त्र-कात्यायनीतन्त्र-मरीचितन्त्र-हरगौ-

रीतन्त्र-लक्ष्मीतन्त्रादीनां बहूनामैक्यकण्ठ्याच्च तस्यैवात्युत्तमत्वसिद्धेः तस्य पुरुषार्थत्वेन क्रत्वर्थत्वादिना च पाठादिविधिर्मूल एव द्वादशेऽध्याये प्रदर्शयिष्यते । तन्त्रान्तरेषु च बहवो विधयः । अस्य सप्तशतीति व्यवहारस्तु न श्लोकसंख्यया । तेषां षट्च्छतीतोऽपि न्यूनत्वात् । नापि कवचादित्रयरहस्यत्रययोर्मेलनेन । संख्याधिक्यापत्तेः । तस्माच्छकारसकारयोरभेदात् सप्तानां सतीनां देवीनां प्रतिपादनादेव तथा व्यवहारो नेयः । तुरीयैका महाकाल्यादित्रयं तन्निर्मितमिथुनत्रये देवीत्रयं चेति सप्तानामेव प्राधानिकरहस्ये प्रतिपादनादिति केचित् । तच्चिन्त्यम् । नन्दजारक्तदन्तीशताक्षीशाकम्भरीदुर्गाभीमाभ्रामरीत्येतेषामपि सप्तानां रूपाणां मन्त्र एव प्रतिपादनेन विनिगमनाविरहात् संख्याधिक्यापत्तेः । तस्माज्जपे एकमन्त्रात्मकस्यापि मालामन्त्रस्य होमाङ्गेन सप्तशतधा विभजनाच्छतरुद्रियस्येवैकानेकमन्त्रात्मकत्वे विरोधाभावात्तथा व्यवहारोपपत्तिः । मन्त्रविभजनेऽपि यद्यामलवाराहीकात्यायनीतन्त्राणां वैमत्यं तत् तन्मन्त्रव्याख्यानावसरे परिहरिष्यते । यद्यपि कात्यायनीतन्त्रे पञ्चशतोत्तरमष्टसप्तति श्लोकाः यामलेत्वेकोनाशीतिः वाराह्यां तु सार्धाष्टाशीतिः कथिताः । उपपद्यते च वेदे शाखाभेदेनेव पुराणेषु कल्पभेदेन मनुपराशरहारीतादीनां वृद्धतरुणभेदेन तत्तत्स्मृतिवैलक्षण्यवत्पाठवैलक्षण्येऽपि प्रामाण्यं । ततश्च कवचस्य सार्धाः पञ्चाशदर्गलायास्त्रयोविंशतिः कीलकस्य लघुगुरुभेदेन द्वैविध्यादाद्यस्य चतुर्दशाऽन्त्यस्य त्रयोविंशतिरित्येतेषां श्लोकानां वाराहीतन्त्रानुमतस्तोत्रश्लोकैः सह मेलनेनैकोनासप्तशतीसम्पद्यते । रहस्यत्रयस्याङ्गत्वे प्रमाणाभावेन तन्मेलनस्याप्रसक्तेः एकन्यूनाधिकभावस्यान्तरत्वेन तदनादरेण व्यवहारस्य पञ्चाशत्पीठरूपिणीति ललितानाम व्याख्यानावसरेऽस्माभिः समर्थितत्वात् । कात्यायनीतन्त्रोक्तविभागेऽपि द्वयोरन्त्ययोरिवैकस्य श्लोकस्यावृत्तेरपि सुवचत्वाद्वा । तथापि 'जपेत्सप्तशतीं चण्डीं कृत्वा तु कवचं पुरा' इत्यादिना कवचमेलनाभावेऽपि सप्तशतीत्वप्रतीतेः कीलकद्वयप्रतिपाद्यस्यार्थस्याङ्गत्वेऽपि तयोरङ्गत्वे रहस्यवदेव मानाभावाच्चोक्त एव प्रकारो निर्दोषः । 'कवचं बीजमादिष्टमर्गलाशक्तिरिष्यते । कीलकं कीलकं प्राहुः सप्तशत्या महामनोः' इति गौडपादधृतवचनादङ्गत्वेऽप्यदोष इति । यानि तु क्वचिद्देशे सार्धानि षट्शतानि क्वचित्तदधिकान्यपि श्लोकानां पठ्यन्ते तानि कात्यायनी भगवत्येव जानाति परन्तु तन्त्रत्रयेऽप्यदृष्टानीति दिक् । एतस्यैवोत्तमत्वं तु तन्त्रान्तरे 'यथाश्वमेधः क्रतुषु देवानां च यथा हरिः । स्तवानामपि सर्वेषां तथा सप्तशतीस्तवः' । तत्रापि कलावतिप्रशस्तः 'कलौ चण्डीविनायकौ' इति वचनात् । वाराहीतन्त्रे सर्वेषां स्तोत्राणां परशुरामशापमुक्त्वा तद्विरहितानि कतिचिद्वर्णितानि । 'भीष्मपर्वणि या गीता सा प्रशस्ता कलौ युगे । विष्णोर्नामसहस्राख्यं महाभारतमध्यगम् । चण्ड्याः सप्तशतीस्तोत्रं तथा नाम सहस्रकम्' इत्यादि । भार्गवाख्येन रामेण शप्तान्यन्यानि कारणादित्यन्तेन । यद्यपि तन्त्रान्तरेऽस्यापि स्तोत्रस्य शिवशापः कीलनं चेति सिद्धिनिरोधकावुक्तौ तथापि तत्रैव शापोद्धारोत्कीलनयोः कर्मविशेषयोस्तदङ्गत्वेन सकृत्करणविधानादकरणे सिद्धिविरहोक्त्या तदावश्यकत्वपरौ तावर्थवादौ । तत्र शापोद्धारो यथा । त्रयोदशप्रथमौ द्वादशद्वितीयौ एकादशतृतीयौ दशमचतुर्थौ नवमपञ्चमावष्टमषष्ठावध्यायौ पठित्वा सप्तममध्यायं द्विःपठेदित्याकारकः प्रयोगः । उत्कीलनं यथा । आदौ मध्यमचरित्रं पठित्वा ततः प्रथमचरित्रं ततस्तृतीयचरित्रं पठेदित्याकारकः । 'अन्त्या १३ द्या १ र्क १२ द्वि २ रुद्र ११ त्रि ३ दिग १० ब्ध्यं ४ के ९ ष्वि ५ भ ८ र्तवः ६ । अश्वो ७ ऽश्व ७ इति सर्गाणां शापोद्धारे मनोः क्रमः । उत्कीलने चरित्राणां मध्याद्यान्त्यमिति क्रमः' । अङ्को नवकः । इषुः पञ्चमः । इभोऽष्टमः । 'ददाति प्रतिगृह्णाति नान्यथैषा प्रसिद्ध्यति' इति विहितं दानप्रतिग्रहनामकं महोत्कीलनं तु कीलकाध्यायव्याख्यावसरे विशदीकरिष्यते । एवं सम्प्रदायज्ञस्य निर्दोषमुत्तमं कलौ शीघ्रसिद्धिदमिदमिति सिद्धम् । एतद्वाचनक्रमो वाराहीतन्त्रे 'यावन्न पूर्यतेऽध्यायस्तावन्न विरमेत्पठन् । यदि प्रमादादध्याये विरामो भवति प्रिये । पुनरध्यायमारभ्य पठेत्सर्वं मुहुर्मुहुः । अनुक्रमात्पठेदेव शिरःकम्पादिकं त्यजेत् । न मानसं पठेत्स्तोत्रं वाचिकं तु प्रशस्यते' ॥ कण्ठतः पाठाभावे तु पुस्तकोपर्यपि वाचयेत् ॥ तल्लेखनेऽपि विशेषः 'न स्वयं लिखितं स्तोत्रं नाब्राह्मणलिपिं पठेत्' इति । यत्तु 'आधारे स्थापयित्वा तु पुस्तकं वाचयेत्ततः । हस्तसंस्थापनादेव भवेदर्धफलं ध्रुवमिति । तस्य व्यवस्थापि तत्रैव 'पुस्तकेऽवाचनं हस्ते सहस्रादधिकं यदि । ततो न्यूनस्य तु भवेद्वाचनं पुस्तकं विना' । सहस्रान्न्यूनमन्त्रस्य पाठसत्वे तु पुस्तकं विनैव वाचनम् । तदभावे आधारे पुस्तकस्थापनेनैव वाचनम् । सहस्राधिकस्य तु पाठसत्वेप्याधारस्थापितपुस्तकोपर्येव वाचनमिति वचनार्थः । प्रकृतस्तोत्रस्य सहस्रान्न्यूनत्वात् 'ततः कृताञ्जलिपुटः स्तुवीत चरितैरिमैः' इति वैकृतिकरहस्ये विधानाच्च पाठाभावे पुस्तकस्याधारस्थापनेनैव वाचनं । कण्ठपाठीकृत्य पुस्तकं विनैव तु कृताञ्जलितया पठनमुत्तममिति द्रष्टव्यम् । अत्र सहस्रशब्देन द्वात्रिंशत्स्वरात्मिकस्यैकैकानुष्टुप्त्वकल्पनेन तादृशानुष्टुप्छन्दः सहस्रं ज्ञेयमिति स्पष्टं । शक्तिसङ्गमतन्त्रराजे–'द्वात्रिंशता स्वरैर्युक्त एको ग्रन्थो निगद्यते । स एव गदितः श्लोकस्तारानेत्रसमुद्भवः' इत्यादिना तेन गद्यात्मकमालामन्त्रेष्वप्यस्य नियमस्य प्रसरो ज्ञेयः । स्तोत्रपूर्वोत्तरभागपाठाभावे नैष्फल्यादिवचनानि शक्तिसङ्गम एव द्रष्टव्यानि ॥ 'ऋषिच्छन्दोदेवतादि पठेत् स्तोत्रे समाहितः । यत्र स्तोत्रे न दृश्येत प्रणवन्यासमाचरेत्' । डामरे–'सप्तशत्याश्चरित्रे तु प्रथमे पद्मभूर्मुनिः । छन्दो गायत्रमुदितं महाकाली तु देवता ॥ वाग्बीजं पावकस्तत्वं धर्मार्थे विनियोजनम् । मध्यमस्य चरित्रस्य मुनिर्विष्णुरुदाहृतः ॥ उष्णिक्छन्दो महालक्ष्मीर्देवता बीजमद्रिजा । वायुस्तत्वं धनप्राप्त्यै विनियोग उदाहृतः । उत्तमस्य चरित्रस्य

ऋषिः शङ्कर ईरितः॥ त्रिष्टुप् छन्दो देवतास्य महापूर्वा सरस्वती। कामो बीजं रविस्तत्त्वं कामार्थे विनियोजनम्॥ ह्रीं चण्डिकायै व्यस्तेन समस्तेन षडङ्गकौ। वाक् अद्रिजा काम इति नवार्णप्रथमबीजत्रयध्यानादिकं नवार्णवत्। अस्य पुरश्चरणस्वरूपं मरीचिकल्पे—'कृष्णाष्टमीं समारभ्य यावत्कृष्णचतुर्दशी। वृद्ध्येकोत्तरया जाप्यं पूर्वसंपुटितं तु तत्। एवं देवि मया प्रोक्तः पौरश्चरणिकः क्रमः। तदन्ते हवनं कुर्यात्प्रतिश्लोकेन पायसम्। रात्रिसूक्तं प्रतिऋचं तथा देव्याश्च सूक्तकम्। हुत्वाऽन्ते प्रजपेत्स्तोत्रमादौ पूजादिकं मुने' इति। पूर्वाभ्यां पूर्वोक्ताभ्यां रात्रिसूक्तदेवीसूक्ताभ्यां संपुटितं। प्रतिश्लोकेनेति मन्त्रविभागोपलक्षणम्। कात्यायन्यादितन्त्रोक्तसप्तशतीविभागग्रन्थस्य हवनादिविधिं प्रति वाक्यशेषत्वेन तेनैव वैधपदस्यार्थनिर्णयावश्यम्भावात्। यत्र दुःखेनेत्यादेः स्थलान्तरस्थस्याप्यग्निहोत्रादिविधिशेषतास्वीकारेण स्वर्गपदार्थनिर्णयस्य वैदिकसम्मतत्वात्। होमसंख्या तु स्तोत्रस्य त्रिरावृत्तिरूपेति वृद्धाः। रात्रिसूक्तदेवीसूक्ते ऋग्वेदे शाकल्यसंहितायां प्रसिद्धे। तथैत्यनेन जपोक्तक्रमः संपुटाकारो निर्दिश्यते। तच्छब्दस्य पूर्वपरामर्शित्वात्। तस्य श्लोकपूरणमात्रार्थत्वे तु द्वाभ्यामपि सूक्ताभ्यां त्रिरावृत्तसप्तशतीहोमोत्तरमेव पाठक्रमानुसारेण होमः। विश्वेश्वरीं जगद्धात्रीमिति स्तवो रात्रिसूक्तम्। नमो देव्यै महादेव्या इति स्तवो देवीसूक्तमिति कश्चित्। तन्न। प्रतिश्लोकेन प्रतिऋचमिति प्रतिनियतनिर्देशविरोधात्। ऋक्सूक्तादिशब्दानां वैदिकमन्त्रेष्वेव रूढ्या प्रसिद्धेः। मत्स्यसूक्तमित्यादिकाचित्कतान्त्रिकव्यवहारस्य केवलयौगिकत्वेनोपपत्तेः। तेन ऋक्पदस्य श्लोके लक्षणेत्युक्तिरपि साहसमात्रं। समुद्रमनोध्यानादिविधौ बृहद्रथंतरपदयोः प्रतिनियतनिर्देशबलादेव लक्षणाव्यवस्थाया इव। प्रकृते क्लृप्ताया एव शक्तेर्व्यवस्थादार्ढ्यस्य कैमुतिकन्यायेनैव सिद्धेः। यदि त्वेवमालोच्यते। 'विश्वेश्वर्यादिकं सूक्तं दृष्टं तद्ब्रह्मणा पुरा। स्तुतये योगिनिद्राया मम देव्याः पुरन्दर। महिषान्तकरीसूक्तं सर्वसिद्धिप्रदं तथा। देव्या ययादिकं दिव्यं दृष्टं देवैर्महर्षिभिः। देवि प्रपन्नार्तिहरे प्रसीदेत्यादिकं तथा। नारायणीस्तुतिर्नाम सूक्तं परमशोभनम्। असुष्याः स्तुतये दृष्टं ब्रह्माद्यैः सकलैः सुरैः॥ नमो देव्यादिकं सूक्तं सर्वकामफलप्रदम्' इति विशकलितवेषेण। पाञ्चरात्रलक्ष्मीतन्त्रे व्यवहारदर्शनादेतेषां स्तोत्राणामपौरुषेयत्वसिद्धान्ताच्च सूक्तर्चव्यवहारो युज्यत एवेति। तदा कात्यायनीतन्त्रमते विश्वेश्वरीमिति श्लोकात्पूर्वं ब्रह्मोवाचेत्यस्य पाठाभावात्तदुत्तरमेव तत्पाठाच्च त्वं स्वाहेत्यारभ्यैव स्तोत्रारम्भः। तस्य च योगनिद्रात्मकरात्रिदैवत्यत्वान्मरीचितन्त्रे रात्रिसूक्तपदेन निर्देश इति समाधेयम्। परंत्वेतत्तन्त्रमनुसरता विश्वेश्वरीमिति श्लोकोऽङ्गहोमदशायां न होतव्यः। स्तोत्रान्तिमश्लोकस्य द्वेधाविभागोऽपि न कार्यः। देवीसूक्तेऽपि त्रेधाविभागोऽङ्गहोमे न विधेयः। प्रधानविशेषस्याङ्गविधावनन्वयेन प्रतिऋचमिति पदे लक्षणाकल्पने मानाभावादित्यवधेयम्। एवं सिद्धमन्त्रस्य क्रोडतन्त्रे। 'प्रत्येकावर्तनं देवि हयमेधेन संमितम्। त्रिरावृत्त्या लभेत्कामान्पञ्चावृत्त्या रिपून् जयेत्'। काम्ये तु प्रयोगे विशेषः। कात्यायनीतन्त्रे 'एकावृत्तादिपाठानां प्रत्यहं पठतां नृणाम्। संकल्पपूर्वं संपूज्य न्यस्याङ्गेषु मनून्सकृत्। पश्चाद्बलिप्रदानेन फलं प्राप्नोति मानवः। बलिश्च ब्राह्मणादिभेदेन व्यवस्थयोक्तः कालिकापुराणे द्रष्टव्यः। तत्राशक्तानामपि तत्रैव 'कूष्माण्डमिक्षुदण्डं च मद्यमासवमेव च। एते बलिसमाः प्रोक्तास्तृप्तौ छागसमाः सदा'। छागसमाः पञ्चविंशतिवर्षावस्थायितृप्तिजनकाः। 'अजाविकानां रुधिरैः पञ्चविंशतिवार्षिकीम्। तृप्तिमाप्नोति परमां शार्दूलरुधिरैस्तथा' इति तत्रैवोक्तेः। वस्तुतस्तु नहिंस्यादिति निषेधस्य संकोचमन्तरेणैव छागसमानतृप्तिसम्भवे छागबलिर्ब्राह्मणैर्न कार्य एव। एवं मद्यासवे अपि नदेये। 'वरं प्राणाः प्रगच्छन्तु ब्राह्मणो नार्पयेत् सुराम्' इति ब्राह्मणो मदिरां दत्वा ब्राह्मण्यादेव हीयते इति च बृहत्सङ्गमतन्त्रवचनात्। अतएव तत्प्रतिनिधिरपि कालिकापुराणे स्मर्यते 'अवश्यं विहितं यत्र मद्यं तत्र द्विजः पुनः। नारिकेलजलं कांस्ये ताम्रे वा विसर्जेन्मधु' इति। कात्यायनीतन्त्र एव, 'उपसर्गोपशान्त्यर्थं त्रिरावृत्तं पठेन्नरः। ग्रहदोषोपशान्त्यर्थं पञ्चावृत्तं वरानने। महाभये समुत्पन्ने सप्तावृत्तमुदीरयेत्' इत्यादिना फलभेदेन संख्याभेदाननेकानुक्त्वोपसंहृतम् 'अथवा बहुनोक्तेन किमनेन वरानने। चण्ड्याः शतावृत्तिपाठात् सर्वाः सिध्यन्ति सिद्धयः' इति। इतोऽप्यधिकाः सहस्रचण्ड्यादयोऽन्यत्र द्रष्टव्याः। हरगौरीतन्त्रे। 'श्रीकामः पुत्रकामो वा सृष्टिमार्गक्रमेण तु। जपेच्छक्रादिमारभ्य शुम्भदैत्यवधावधि। आदिमारभ्य प्रजपेत्पश्चाच्छेषं समापयेत्। शान्त्यादिकामः सर्वत्र स्थितिमार्गक्रमेण तु। सावर्णिः सूर्यतनयः सावर्णिर्भविता मनुः। संकटे चान्त्यमारभ्य पश्चादादिसमापयेत्। इत्यादिकस्य कामनाभेदेन पाठवैचित्र्यस्य कतिपयश्लोकमात्रपाठेन तत्तत्प्रयोगवैचित्र्यस्य च विस्तरो डामरादितन्त्रस्थो ग्रन्थान्तरेभ्य एवावगन्तव्यः। केरलास्तु एकैकस्मिन् दिवसे एकैकमेव चरित्रं पठेदिति दिनत्रयेणैकावृत्तिरित्येकः पक्षः। चन्द्रा १ ऽक्षि २ भू १ वेद ४ करे २ न्दु १ दस्र २ सङ्ख्याकानध्यायात् क्रमेण दिनभेदेन पठेदिति सप्तभिर्दिनैरेकावृत्तिरित्यन्यः पक्ष इत्याहुः। अत्र द्वितीयमेव पक्षं 'पाठोयं विप्रकारः' इति सप्ताक्षर्यां संग्रहन्तो बहवस्तदनुयायिनोऽनुतिष्ठन्ति च। 'कटपयवर्गभवैरिह पिण्डान्त्यैरक्षरैरङ्काः। नेत्रे शून्यं ज्ञेयं तथा स्वरे केवले कथितः' इति प्रसिद्धपरिभाषया पकार–यकार–ककारा एकस्मिन् ठरेफा द्वयोः विशब्दश्चतुर्षु सङ्केतित इति। तत्र मूलतन्त्राणि त एव जानन्तु सन्त्यपि तानि तन्त्रवचनानि एकदिनेनैकावृत्त्यशक्तपराणि। अस्ति हि तादृशोऽप्यस्य प्रयोगः कात्यायनीतन्त्रे मन्त्रविभजनान्ते, 'होमे स्वाहान्तिमा एते पूजायातु नमोऽन्तिमाः। तर्पणे तर्पयान्यन्ता ऊहनीया बुधैर्मताः' इति वचनात्सप्तशतब्राह्मणभोजने प्रतिव्यक्त्यैकैकमन्त्रेण काण्डानुसमयेन षोडशोपचाराणां पदा-

र्थानुसमयेन च पञ्चोपचाराणां वा कर्तुमशक्यतया स्वेच्छयाध्यायभेदेन वानेकदिनसाध्यैकप्रयोगप्रसक्तौ उक्तवचनैर्विभजननियमो विधीयत इति । अत्र स्वयं पठितुमसमर्थस्य प्रभोर्ब्राह्मणद्वारापि प्रयोग इष्टः । तत्पक्षे दक्षिणानियमः तन्त्रेषु 'पञ्चस्वर्णाः शतावृत्तेः पक्षावृत्तेस्तु तत्त्रयम् । पञ्चावृत्तेः स्वर्णमेकं त्रिरावृत्तेस्तदर्धकम् । एकावृत्तौ पादमेकं देयाद्वा शक्तितो बुधः' इति सर्वं शिवम् । इति श्रीमद्भारत्युपाह्वयगम्भीररायदीक्षितसूरिसूनुना भास्कररायदीक्षितमहाग्निचिता रचितायां सप्तशतीटीकागुप्तवतीसमाख्यायामुपोद्घातप्रकरणं संपूर्णम् । **अथ पुरश्चरणप्रयोगः ।** दुर्गाप्रदीपे । जपेद् बिल्वं समाश्रित्य मासमेकं तु यो नरः । हुत्वा बिल्वदलैर्मासं मधुरत्रययोगतः ॥ हुत्वा दशांशतो वापि कमलैः क्षीरसंयुतैः । धनदेन समां लक्ष्मीं प्राप्नुयादुत्तमां ध्रुवम् ॥ इति । अथ प्रयोगान्तराणि कात्यायनीतन्त्रोक्तानि । प्रतिश्लोकमाद्यन्तयोः मन्त्रं जपेन्मन्त्रसिद्धिः । सप्रणवमनुलोमव्याहृतित्रयमादौ अन्ते तु विलोमं तदित्येवं प्रतिश्लोकं कृत्वा शतावृत्तिपाठे अतिशीघ्रं सिद्धिः । प्रतिश्लोकमादौ जातवेदस इति ऋचं पठेत्सर्वकामसिद्धिः । अपमृत्युवारणायादावन्ते शतं त्र्यम्बकमन्त्रं जपेत् । प्रतिश्लोकं तन्मन्त्रजप इति वा । प्रतिश्लोकं शरणागतेति श्लोकं पठेत्सर्वकार्यसिद्धिः । प्रतिश्लोकं करोतु सा नः शुभेत्यर्धं पठेत् सर्वकामावाप्तिः । स्वाभीष्टवरप्राप्त्यै एवं देव्या वरमिति श्लोकं प्रतिश्लोकं पठेत् । सर्वापन्निवारणाय प्रतिश्लोकं दुर्गे स्मृतेति पठेत् । अस्य केवलस्यापि श्लोकस्य कार्यानुसारेण लक्षमयुतं सहस्रं शतं वा जपः । सर्वाबाधेत्यस्य लक्षजपे श्लोकोक्तं फलम् । इत्थं यदा यदेति श्लोकस्य जपे महामारीशान्तिः । ततो वव्रे नृपो राज्यमिति मन्त्रस्य लक्षजपे पुनः स्वराज्यलाभः । हिनस्ति दैत्यतेजांसीत्यनेन सदीपबलिदाने घण्टावादने च बालग्रहशान्तिः । आद्यावृत्तिमनुलोमेन त्रयोदशाध्यायं पठित्वा ततो विपरीतक्रमेण द्वितीयां कृत्वा पुनरनुलोमेन तृतीयेत्येवमावृत्तित्रये उक्तेषु प्रकारेषु शीघ्रं कार्यसिद्धिः । सर्वापत्तिनिवारणाय दुर्गे स्मृतेत्यर्धं । ततो यदन्ति यच्च दूरके इत्यृचं तदन्ते दारिद्र्यदुःखेत्यर्धमेवं कार्यानुसारेण लक्षमयुतं सहस्रं शतं वा जपः । कांसोऽस्मीत्यृचं प्रतिश्लोकं पठेल्लक्ष्मीप्राप्तिः । मारणार्थमेवमुक्त्वा समुत्पत्येति श्लोकं पठेन्मारणोक्तावृत्तिभिः फलसिद्धिः । ज्ञानिनामपि चेतांसीति श्लोकस्य जपमात्रेण सद्यो मोहनमित्यनुभवसिद्धम् । प्रतिश्लोकं तच्छ्लोकपाठे त्ववश्यम् । रोगानशेषानिति श्लोकस्य प्रतिश्लोकं पाठे सकलरोगनाशः, तन्मन्त्रजपेऽपि सः । इत्युक्ता सा भगवतीगम्भीरेति श्लोकस्य प्रतिश्लोकं पाठे पृथग्जपे वा विद्याप्राप्तिर्वाग्विकारनाशश्च । भगवत्या कृतं सर्वमित्यादि द्वादशोत्तरशताक्षरो मन्त्रः सर्वकामदः सर्वापन्निवारणश्च । देवि प्रपन्नार्ति हरे प्रसीदेति श्लोकस्य यथाकार्यं लक्षायुतसहस्रशतान्यतमजपे प्रतिश्लोकं तन्मन्त्रपाठे वा सर्वापन्निवृत्तिः सर्वकामसिद्धिश्च । एषु प्रयोगेषु प्रतिश्लोकं दीपाग्रे केवलमेव वा नमस्कारकरणेऽतिशीघ्रं सिद्धिः । प्रतिश्लोकं कामबीजसंपुटितस्यैकचत्वारिंशद्दिनं त्रिरावृत्तौ सर्वकामसिद्धिः । एकविंशतिदिनपर्यन्तमुक्तरीत्या प्रत्यहं त्रयोदशावृत्तौ वशीकरणम् । मायाबीजपुटितस्य फट्पल्लवसहितस्य सप्तदिनपर्यन्तं त्रयोदशावृत्तौ उच्चाटनसिद्धिः । तादृशस्यैव दिनचतुष्टयमेकादशावृत्तौ सर्वोपद्रवनाशः । एकोनपञ्चाशद्दिनपर्यन्तं प्रतिश्लोकं लक्ष्मीबीजसंपुटितस्य पञ्चदशावृत्तौ लक्ष्मीप्राप्तिः । प्रतिश्लोकमैंबीजसंपुटितस्य शतावृत्त्या विद्याप्राप्तिरिति प्रत्येकमन्त्रस्य प्रयोगाः । इति गुप्तवतीस्थसप्तशतीप्रयोगविधिः ॥

---

## देवीकवचम् ।

### मार्कण्डेय उवाच ।

**यद्गुह्यं परमं लोके सर्वरक्षाकरं नृणाम् । यन्न कस्यचिदाख्यातं तन्मे ब्रूहि पितामह ॥ १ ॥**

(गुप्तवती) श्रीगणेशाय नमः । ॐ सत्संप्रदायप्रथनाय तिष्ये शिष्यैश्चतुर्भिः सह योऽवतीर्णः । उक्तो बृहत्सङ्गमतन्त्रराजे श्रीशङ्कराचार्यगुरुं तमीडे ॥ १ ॥ ब्रह्मा मार्कण्डेयं प्रति वक्ति । मार्कण्डेयस्तु क्रौष्टुकिं भागुरिं प्रति वक्तीति पक्षिरूपैर्द्रोणमुनिपुत्रैर्जैमिनिमुनिं प्रत्युच्यत इति संवादस्थितिः । तत्र कवचांशे ब्रह्माणं प्रति मार्कण्डेयस्य प्रश्नमाह । यद्गुह्यमिति । सर्वस्मिन्सर्वावयवावच्छेदेन रक्षाकरं कवचमित्यर्थः । लोके वर्मणः सर्वतनुत्रत्वदर्शनात् ॥ १ ॥

(प्रदीपः) ॐ नमो भगवत्यै । 'अङ्गहीनो यथा देही सर्वकर्मसु न क्षमः । अङ्गषट्कविहीना तु तथा सप्तशतीस्तुतिः ॥ तस्मादेतत्पठित्वैव जपेत्सप्तशतीं पराम् । अन्यथा शापमाप्नोति हानिं चैव पदे पदे ॥ रावणाद्याः स्तोत्रमेतदङ्गहीनं निषेविरे । हता रामेण ते यस्मान्नाङ्गहीनं पठेत्ततः' ॥ इति कात्यायनीतन्त्रे कवचादित्रयरहस्यत्रयरूपाङ्गषट्कयुतस्यैव सप्तशतीस्तोत्रस्य पठनीयत्वं श्रूयते तत्प्रामाण्याच्च कवचादित्रयं रहस्यत्रयं च तन्त्रान्तरस्थमेवाङ्गं भवति । तत्र कवचांशे ब्रह्माणं प्रति प्रश्नं करोति मार्कण्डेयः । यद्गुह्यमिति । लोके यत्परमं उत्कृष्टं गुह्यं रहस्यमस्ति तन्मे ब्रूहि । तत् किं ब्रह्मरूपं नेत्याह । सर्वरक्षाकरं येन सर्वेषामपि रक्षा भवति । नृणां पामरप्रभृतीनामपि तादृशमित्यर्थः । ब्रह्म तूत्तमाधिकारिणामेव रक्षकं न सर्वेषामित्यर्थः । ननु सन्त्यन्यानि कवचानि लोके इति चेत्सत्यं सन्ति तथापि यद्भवता कस्यचित् कस्यापि नाख्यातं निधिबुद्ध्या स्थापितमस्ति तदित्यर्थः । तेन च निःसंशयमेव रक्षणं झटिति स्यादिति भावः । अन्यथा निधिबुद्ध्या तस्य रक्षणं निरर्थकं स्यादिति । ननु किमित्युत्कृष्टं वस्तु मया देयमिति चेत्तत्राह । हे पितामह स्वसन्ततिरक्षणार्थं पितामहेनावश्यं देयमित्यर्थः ॥ १ ॥

## ब्रह्मोवाच ।

**अस्ति गुह्यतमं विप्र सर्वभूतोपकारकम् । देव्यास्तु कवचं पुण्यं तच्छृणुष्व महामुने ॥ २ ॥**

(**गुप्तवती**) ॥ २ ॥ (**प्रदीपः**) उत्तरमाह । ब्रह्मोवाच । अस्ति गुह्यतमं विप्रेति । हे विप्र त्वया यत्पृष्टं तादृशं देव्यास्तु देव्या एव कवचं पुण्यं एकं निधिबुद्ध्या स्थापितमस्ति तन्महामुने शृणुष्व । सर्वभूतोपकारार्थं प्रवृत्तत्वान्महामुने इति सम्बोधनम् ॥ २ ॥

**प्रथमं शैलपुत्रीति द्वितीयं ब्रह्मचारिणी । तृतीयं चन्द्रघण्टेति कूष्माण्डेति चतुर्थकम् ॥ ३ ॥**

(**गुप्तवती**) ॥ ३ ॥ (**प्रदीपः**) परंतु सा देवी नवमूर्त्यात्मिका ध्येयेत्यभिप्रायेण तासां मूर्तीनां नामान्याह । प्रथमं शैलपुत्रीति । नामज्ञाने जाते तद्वाच्याकारस्य प्रसिद्धत्वादेव ज्ञानं भविष्यतीति भावः । सर्वोत्तरैश्वर्यवत्यपि भगवती शैलेन भक्तेनातितपश्चर्यया प्रार्थिता सती कारुण्यवशादतिनीचमपि पुत्रीत्वं स्वीकृतवतीत्यहो भक्तवात्सल्यं कियद्वर्णनीयं भगवत्या इति कूर्मपुराणे प्रसिद्धम् । ब्रह्मचारिणीति । ब्रह्म सच्चिदानन्दरूपं तच्चारयितुं प्रापयितुं शीलमस्याः सा ब्रह्मचारिणी ब्रह्मरूपप्रदेत्यर्थः । चन्द्रघण्टेति चन्द्रो हस्तगतायां घण्टायां यस्याश्चन्द्रवन्निर्मला वा घण्टा यस्या इत्यर्थः । यद्वा आह्लादकारिणी देवी चन्द्रघण्टेति कीर्तितेति रहस्यागमोक्तेश्चन्द्रं घण्टयति प्रतिवादितया भाषते स्वस्याह्लादकारित्वाभिमानेनेति चन्द्रघण्टा । चन्द्रापेक्षयाप्यतिशयेन लावण्यवतीत्यर्थः । पटपुटेति दण्डकपठितस्य चुरादेर्घटिधातोर्भाषार्थस्य पचाद्यचि रूपं । चन्द्रस्य घण्टा चन्द्रघण्टा वा । कूष्माण्डेति कुत्सित ऊष्मा सन्तापस्तापत्रयरूपो यस्मिन्संसारे स संसारो अण्डे मांसपेश्यामुदररूपायां यस्याः त्रिविधतापयुक्तसंसारभक्षणकर्त्रीत्यर्थः । 'अण्डः पेशी च मुष्कं च' इति मेदिनी ॥ ३ ॥

**पञ्चमं स्कन्दमातेति षष्ठं कात्यायनीति च । सप्तमं कालरात्रीति महागौरीति चाष्टमम् ॥ ४ ॥**

(**गुप्तवती**) ॥ ४ ॥ (**प्रदीपः**) स्कन्दमातेति । सनत्कुमारस्य भगवतीवीर्यादुद्भूतस्य स्कन्द इति संज्ञा 'भगवान्सनत्कुमारस्तं स्कन्द इत्याचक्षते' इति छान्दोग्यश्रुतेः । तथा च ज्ञानिभिरपि यदुदरे जन्माभिलषणीयमित्यतिशुद्धेत्यर्थः । कात्यायनीति देवकार्यार्थं कात्यायनाश्रमे आविर्भूता तेन कन्यात्वेन स्वीकृतेति कात्यायनीति नाम भगवत्याः । अस्या निरन्तरं कुमारीत्वेन पत्यनधीनतया स्वतन्त्रत्वम् । कालरात्रीति सर्वमारकस्य कालस्यापि रात्रिर्नाशिकेत्यर्थः । प्रलये कालस्यापि नाशात् । 'कृदिकारादक्तिनः' इति ङीप् । महागौरीति । इयं च महामानिनी । नर्मोक्त्या शिवेन कालीत्युक्ते तपसा गौरवर्णस्य सम्पादितत्वात् । कालीपुराणे स्पष्टमेतत् ॥ ४ ॥

**नवमं सिद्धिदा प्रोक्ता नवदुर्गाः प्रकीर्तिताः । उक्तान्येतानि नामानि ब्रह्मणैव महात्मना ॥ ५ ॥**

(**गुप्तवती**) ॥ ५ ॥ (**प्रदीपः**) सिद्धिदेति । मोक्षदेत्यर्थः । इतीति शेषः । सिद्धिदेति नवममित्यन्वयः । नवदुर्गा इति । योगिनः कायव्यूहवदेकस्या एव दुर्गाया एते नवभेदा ये शास्त्रे ध्येयत्वेन प्रोक्तास्ते मया कीर्तिता इत्यर्थः । अत एव देव्यास्तु कवचमित्येकवचनं संगच्छते । नाम्नां स्वकल्पितत्वशङ्काव्युदासार्थमाह । उक्तान्येतानीति । महात्मना सर्वज्ञेन ब्रह्मणैव वेदेनैवैतान्युक्तानीत्यर्थः ॥ ५ ॥

**अग्निना दह्यमानस्तु शत्रुमध्ये गतो रणे । विषमे दुर्गमे चैव भयार्ताः शरणं गताः ॥ ६ ॥**

(**गुप्तवती**) अग्निनेति । यो नवनामानि पठेदिति शेषः । पठन्तमेकमपि बहवोऽन्ये ये शरणं गताः तेषां तस्य चानिष्टनिवृत्तिरिति श्लोकद्वयार्थः ॥ ६ ॥

(**प्रदीपः**) इत्थं कवचपाठे ध्येयं देवतास्वरूपं प्रदर्श्य तत्फले अविश्वासो नैव कर्तव्य इति कैमुतिकन्यायेनाह । अग्निनेति । योऽग्निना दह्यमानो रणे शत्रुमध्ये च गतः सन् शरणं गत इति शेषः । अथ ये विषमे दुर्गमे चातिसङ्कटे भयार्ता भयपीडिताः सन्तः शरणं गताः ॥ ६ ॥

**न तेषां जायते किंचिदशुभं रणसंकटे । नापदं तस्य पश्यामि शोकदुःखभयं न हि ॥ ७ ॥**

(**गुप्तवती**) ॥ ७ ॥ (**प्रदीपः**) तेषां तस्य च भक्तिरहितेन स्मरणमात्रेणापि तज्जन्यं भयादिकं न भवतीत्याह । न तेषामिति ॥ ७ ॥

**यैस्तु भक्त्या स्मृता नूनं तेषामृद्धिः प्रजायते । प्रेतसंस्था तु चामुण्डा वाराही महिषासना ॥ ८ ॥**
**ऐन्द्री गजसमारूढा वैष्णवी गरुडासना । माहेश्वरी वृषारूढा कौमारी शिखिवाहना ॥ ९ ॥**

(**गुप्तवती**) आर्तभक्तिफलमुक्त्वा जिज्ञासुभक्तेः फलमाह । यैस्त्विति । सिद्धिर्ज्ञानम् । आर्तानिष्टनिरासानुगुण एव सप्तमातृणां सार्वदिक उद्योग इत्याह । प्रेतसंस्थेत्यादिना ॥ ८ ॥ ९ ॥

(**प्रदीपः**) यैस्तु भक्त्या स्मृता भवति तेषां पूर्वोक्तं फलम् । ऋद्धिर्धर्मार्थकाममोक्षाणां च भवतीत्यत्र किमु वक्तव्यमित्याह। यैस्त्विति। इदानीं देव्या अतिवात्सल्यं दर्शयति भक्त्युत्पादनार्थं प्रेतसंस्थेति। तत्र सप्तमातृणां वर्णनं श्लोकद्वयेन॥८॥९॥

**ब्राह्मी हंससमारूढा सर्वाभरणभूषिता। नानाभरणशोभाढ्या नानारत्नोपशोभिताः ॥ १० ॥**
**दृश्यन्ते रथमारूढा देव्यः क्रोधसमाकुलाः । शङ्खं चक्रं गदां शक्तिं हलं च मुसलायुधम् ॥११॥**

(**गुप्तवती**) तेषां सिद्धिरिति पाठान्तरम् ॥ १० ॥ ११ ॥

(**प्रदीपः**) नानेति । वक्ष्यमाणा देव्यः दृश्यन्त इति । सप्तमातृभिन्ना याश्च देव्यस्ता अपि भक्तरक्षणार्थं क्रोधसमाकुला रथमारूढा। जात्यैकवचनं रथानारूढा दृश्यन्ते अर्थाद्देवादिभिरिति ॥ १० ॥ ११ ॥

**खेटकं तोमरं चैव परशुं पाशमेव च । कुन्तायुधं त्रिशूलं च शार्ङ्गायुधमनुत्तमम् ॥ १२ ॥**

(**गुप्तवती**) ॥ १२ ॥ (**प्रदीपः**) तासामायुधान्याह । शङ्खमिति ॥ १२ ॥

**दैत्यानां देहनाशाय भक्तानामभयाय च। धारयन्त्यायुधानीत्थं देवानां च हिताय वै॥ १३ ॥**

(**गुप्तवती**) ॥ १३ ॥ (**प्रदीपः**) दैत्यानिति । ताः सप्तमातरश्च शङ्खं चक्रमित्यादिश्लोकोक्तानीत्थमायुधानि धारयन्ति । किमर्थं दैत्यानां देहनाशार्थं भक्ताभयार्थं देवहितार्थं चेत्यर्थः । अयं भावः । अप्रार्थिता अपि एता महत्यो देवता जगद्रक्षणे वत्सलतयैव प्रवृत्ता मातृवत् ताः कुतो न मन्दभाग्येन स्वरक्षणार्थं प्रार्थ्यन्त इति ॥ १३ ॥

**महाबले महोत्साहे महाभयविनाशिनि । त्राहि मां देवि दुष्प्रेक्ष्ये शत्रूणां भयवर्धिनी ॥ १४ ॥**

(**गुप्तवती**) इत आरभ्य भक्तः प्रार्थयते महाबले इत्यादिना ॥ १४ ॥

(**प्रदीपः**) कवचपाठस्यादाविमं प्रार्थनामन्त्रं पठित्वा पश्चात्कवचं पठनीयं इत्यभिप्रायेणाह । महाबलेति । महद्बलं मायाशक्तिरूपं यस्याः । महानुत्साहो जगद्रक्षणे यस्याः । महाभयं मृत्युरूपं तस्य ज्ञानदानेन नाशिनी । दुःप्रेक्ष्ये दुर्दर्शनीये । 'न संदृशे तिष्ठति रूपमस्य' इति श्रुतेः । शत्रूणां कामक्रोधादिकानाम् ॥ १४ ॥

**प्राच्यां रक्षतु मामैन्द्री आग्नेय्यामग्निदेवता । दक्षिणे रक्ष वाराहि नैरृत्यां खड्गधारिणी ॥ १५ ॥**

(**गुप्तवती**) प्राच्यां रक्षतु मामैन्द्रीत्यादौ यत्र प्रथमान्तं देवीनाम लोटः प्रथमपुरुषश्च । दक्षिणे रक्ष वाराहीत्यादौ यत्र संबुद्ध्यन्तं नाम मध्यमपुरुषश्च । तत्र निर्विवाद एवाऽन्वयक्रमः । तत्तदुत्तरचरणे यथायोग्यं तत्तत्क्रियापदयोरेवानुवृत्तिश्च । यत्र तूर्ध्वं ब्रह्माणि मे रक्षेदित्यत्र संबुद्धिः प्रथमपुरुषश्च तत्र भवती इत्यस्याध्याहारः । तुल्यन्यायेन प्रथमान्तमध्यमपुरुषयोः सत्वेऽध्याहृतस्य त्वमित्यस्य विशेषणत्वेन प्रथमान्तपदं योजनीयम् ॥ १५ ॥

(**प्रदीपः**) प्राच्यामिति । प्राच्यां दिशि स्थिता ऐन्द्रीन्द्रशक्तिर्मां रक्षत्वित्यर्थः । प्राच्यां स्थितं मामिति वा । एवमुत्तरत्रापि शक्तिशक्तिमतोरभेदादग्निरूपा देवताग्निशक्तिरित्यर्थः । अत्र रक्षत्वित्यनुवृत्तिः । वाराही वराना हन्ति स वराहो यमः आर्षः प्रयोगः । तस्य शक्तिर्वाराही । अणन्तान् ङीप् । यमशक्तिरित्यर्थः । दशदिक्पालप्रकरणात् । सप्तमात्रन्तर्गता वा वाराही । हे वाराहि दक्षिणे देशे स्थिता त्वं मां रक्षेत्यर्थः । स्थितं मामिति वा । खड्गधारिणी निर्ऋतिशक्तिरित्यर्थः । रक्षत्वित्यस्य मध्ये विच्छेदादध्याहारः ॥ १५ ॥

**प्रतीच्यां वारुणी रक्षेद्वायव्यां मृगवाहिनी । रक्षेदुदीच्यां कौमारी ईशान्यां शूलधारिणी ॥१६॥**

(**गुप्तवती**) ॥ १६ ॥ (**प्रदीपः**) मृगवाहिनी । वायुदेवताया मृगवाहनत्वाद्वायुशक्तिरित्यर्थः । रक्षेदित्यनुवृत्तिः । कौमारी । कुत्सितो मारो मदो यस्य स कुमारः कुबेरस्तस्येयं शक्तिः कौमारी दिक्पालप्रकरणात् । कौबेर्या रक्षणस्थानमग्रे वक्ष्यमाणमस्ति तथाप्येकस्या एव स्थानद्वयरक्षकत्वे बाधकाभावः । सप्तमात्रन्तर्गता वा कौमारी शूलधारिणी । ईशानशक्तिरित्यर्थः ॥ १६ ॥

**ऊर्ध्वं ब्रह्माणि मे रक्षेदधस्ताद्वैष्णवी तथा । एवं दशदिशो रक्षेच्चामुण्डा शववाहना ॥ १७ ॥**

(**गुप्तवती**) ॥ १७ ॥ (**प्रदीपः**) ब्रह्माणीति । ब्रह्माणमानयति जीवयतीति कर्मण्यऽण् । हे ब्रह्माणि ऊर्ध्वे स्थिता भवती मे मां रक्षेदित्यर्थः । मे ऊर्ध्वं भागमिति वा । एवमिति दशदिक्पालदेवतावदेव । मे इति शेषः । मे मत्संबन्धिनीर्दशदिशश्चामुण्डा रक्षेदित्यर्थः । दशदिक्षुस्थिता चामुण्डा मां रक्षेदिति पर्यवसितोऽर्थः । अन्यथा केवलदिशां रक्षणे प्रयोजनाभावः १७

**जया मे चाग्रतः स्थातु विजया स्थातु पृष्ठतः । अजिता वामपार्श्वे तु दक्षिणे चापराजिता॥१८॥**

(**गुप्तवती**) स्थातु तिष्ठतु ॥ १८ ॥

(**प्रदीपः**) जया शक्तिः स्थातु तिष्ठतु आर्षः प्रयोगः । मत्संरक्षणार्थम् ॥ १८ ॥

**शिखामुद्योतिनी रक्षेदुमा मूर्ध्नि व्यवस्थिता । मालाधरी ललाटे च भ्रुवौ रक्षेद्यशस्विनी ॥ १९॥**

(**गुप्तवती**) शिखामिति । उद्योतिनीनामिका देवी मम शिखायां स्थिता सती मच्छिखां रक्षेदिति रीत्या प्रत्यवयवं योजनीयम् । एवमुभयविधस्य मध्ये यदेव यत्र नोच्यते तदन्यतरत्तत्राध्याहार्यम् । यथाऽत्रैव प्रथमचरणेऽवस्थापनस्य द्वितीयचरणे रक्षणस्याध्याहारः । एवं सर्वत्र ॥ १९ ॥

(**प्रदीपः**) शिखामिति । उद्योतिनीनामिका देवी मम शिखायां स्थिता सती मच्छिखां रक्षेदिति प्रत्यवयवं सर्वत्र योजनीयम् । उमा मूर्ध्नि व्यवस्थिता सती मूर्धानं रक्षेदित्यर्थः । एवं सर्वत्र यथायोग्यमध्याहार्यम् ॥ १९ ॥

**त्रिनेत्रा च भ्रुवोर्मध्ये यमघण्टा च नासिके । शङ्खिनी चक्षुषोर्मध्ये श्रोत्रयोर्द्वारवासिनी ॥ २० ॥**
**कपोलौ कालिका रक्षेत्कर्णमूले तु शंकरी । नासिकायां सुगन्धा च उत्तरोष्ठे च चर्चिका॥२१॥**
**अधरे चाऽमृतकला जिह्वायां तु सरस्वती । दन्तान्रक्षतु कौमारी कण्ठमध्ये तु चण्डिका ॥२२॥**
**घण्टिकां चित्रघण्टा च महामाया च तालुके । कामाक्षी चिबुकं रक्षेद्वाचं मे सर्वमङ्गला ॥ २३ ॥**

(**गुप्तवती**) ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ (**प्रदीपः**) नासिके नासिकापुटे इत्यर्थः । उत्तरत्र नासिकाशब्देन नासिकादण्ड इति ॥ २० ॥ २१ ॥ 'अधरे' अधरोष्ठ इत्यर्थः ॥ २२ ॥ २३ ॥

**ग्रीवायां भद्रकाली च पृष्ठवंशे धनुर्धरी । नीलग्रीवा बहिःकण्ठे नलिकां नलकूबरी ॥ २४ ॥**
**खड्गधारिण्युभौ स्कन्धौ बाहू मे वज्रधारिणी । हस्तयोर्दण्डिनी रक्षेदम्बिका चाङ्गुलीषु च ॥२५॥**

(**गुप्तवती**) नलिकां कण्ठनालम् ॥ २४ ॥ २५ ॥ (**प्रदीपः**) कण्ठस्य बहिर्भागो बहिःकण्ठः । नलिकां कण्ठनालम् ॥ २४ ॥ स्कन्धमारभ्य कूर्परपर्यन्तो भागो बाहुस्तदारभ्याङ्गुलिपर्यन्तो हस्तः ॥ २५ ॥

**नखाञ्छूलेश्वरी रक्षेत्कुक्षौ रक्षेन्नलेश्वरी । स्तनौ रक्षेन्महादेवी मनःशोकविनाशिनी ॥ २६ ॥**
**हृदयं ललिता देवी ह्युदरे शूलधारिणी । नाभिं च कामिनी रक्षेद् गुह्यं गुह्येश्वरी तथा ॥ २७ ॥**
**भूतनाथा च मेढ्रं च गुदं महिषवाहिनी । कट्यां भगवती रक्षेज्जानुनी विन्ध्यवासिनी ॥ २८ ॥**
**जङ्घे महाबला प्रोक्ता जानुमध्ये विनायकी । गुल्फयोर्नारसिंही च पादपृष्ठेऽमितौजसी ॥ २९ ॥**
**पादाङ्गुलीः श्रीधरी च पादाधस्तलवासिनी । नखान्दंष्ट्राःकराली च केशांश्चैवोर्ध्वकेशिनी ॥ ३० ॥**
**रोमकूपाणि कौबेरी त्वचं वागीश्वरी तथा । रक्तमज्जावसामांसान्यस्थिमेदांसि पार्वती ॥ ३१ ॥**

(**गुप्तवती**) ॥ २६ ॥ २७ ॥ २८ ॥ जङ्घे इति । प्रोक्ता आगमादिषु प्रसिद्धेत्यादिदेव्या विशेषणं महाबलायाः ॥२९॥ पादाध इति भिन्नं पदम् । तलवासिनी पातालवासिनी ॥ ३० ॥ ३१ ॥

(**प्रदीपः**) कुक्षाविति सप्तम्यन्तपाठः प्राचीनसंमतः ॥ २६ ॥ २७ ॥ जानुनी विंध्यवासिनीति पाठः ॥ २८ ॥ प्रोक्तागमादिशास्त्रेषु या महाबला सेत्यर्थः ॥ २९ ॥ पादाध इति भिन्नं पदम् । तलवासिनी पातालतलवासिनीत्यर्थः । यद्यपि नखाञ्छूलेश्वरी रक्षेदित्यत्र नखरक्षणमुक्तं तथापि यथैकस्या अपि देवतायाः स्थानद्वयरक्षकत्वं न विरुध्यते तथैव देवताद्वयस्यैकस्थाननिरूपितरक्षकत्वे बाधकाभाव इत्यभिप्रायेण नखान्दंष्ट्राःकराली चेत्युक्तम् ॥ ३० ॥ ३१ ॥

**आन्त्राणि कालरात्रिश्च पित्तं च मुकुटेश्वरी । पद्मावती पद्मकोशे कफे चूडामणिस्तथा ॥ ३२ ॥**

(**गुप्तवती**) पद्मं हृदयादिरूपमेव कोशो निवासस्थानं यस्य श्वासस्य तस्मिन्वाते स्थिता सती वातं रक्षत्विति यावत् ॥ ३२ ॥

(**प्रदीपः**) आन्त्राणीति 'अमूधातोस्त्रेऽनुनासिकस्य कीति दीर्घः' 'पद्मकोशे' पद्मं हृदयादिरूपमेव कोशो वासस्थानं यस्य श्वासस्य तस्मिन्वाते स्थिता सती तं रक्षत्विति यावदिति केचित् । अग्रे प्राणानां रक्षणकथनात्'पद्मकोशप्रतीकाशं हृदयं चाप्यधोमुखम्'इति श्रुत्युक्तं हृदयमेव पद्मकोशशब्देन ग्राह्यमित्यपरे । चूडामणिनाम्नी देवता रक्तासुरवधे प्रसिद्धा ॥ ३२ ॥

**ज्वालामुखी नखज्वालामभेद्या सर्वसंधिषु । शुक्रं ब्रह्माणि मे रक्षेच्छायां छत्रेश्वरी तथा ॥३३॥**
**अहंकारं मनो बुद्धिं रक्ष मे धर्मचारिणि । प्राणापानौ तथा व्यानसमानोदानमेव च ॥ ३४ ॥**
**यशः कीर्तिं च लक्ष्मीं च सदा रक्षतु चक्रिणी । गोत्रमिन्द्राणि मे रक्षेत्पशून्मे रक्ष चण्डिके ॥३५॥**

(**गुप्तवती**) ॥ ३३ ॥ अहंकारमिति । अत्र मनःशब्दश्चित्तपरः । अन्तःकरणस्य मनसा सह चतुर्विधत्वात्तेन मनःशोक-

विनाशिनीत्यनेन न गतार्थता । अथवा मनसः शोकं विनाशयतीति व्युत्पत्त्या । स्तनौ रक्षेन्महादेवीत्यस्य तदेव विशेषणत्वेन योज्यम् । व्यानसमानोदानमिति समाहारे द्वितीयान्तम् ॥ ३४ ॥ ३५ ॥

(**प्रदीपः**) नखज्वालां नखनिष्ठं तेजः । अभेद्यानाम्नी देवता सर्वसंधिषु स्थिता सती सर्वसंधीन्रक्षेदित्यर्थः । हे ब्रह्माणि भवती मे शुक्रं रक्षेदित्यर्थः ॥ ३३ ॥ हे धर्मचारिणि । अत्र त्वमित्यध्याहारः । रक्षेति मध्यमपुरुषात् ॥ ३४ ॥ हे इन्द्राणि भवतीत्यध्याहारः ॥ ३५ ॥

**पुत्रान्रक्षेन्महालक्ष्मीर्भार्यां रक्षतु भैरवी । मार्गं क्षेमकरी रक्षेद्विजया सर्वतः स्थिता ॥ ३६ ॥**
**रक्षाहीनं तु यत्स्थानं वर्जितं कवचेन तु । तत्सर्वं रक्ष मे देवी जयन्ती पापनाशिनी ॥ ३७ ॥**
**पदमेकं न गच्छेत्तु यदीच्छेच्छुभमात्मनः । कवचेनावृतो नित्यं यत्र यत्र हि गच्छति ॥ ३८ ॥**
**तत्र तत्रार्थलाभश्च विजयः सार्वकामिकः । यं यं चिन्तयते कामं तं तं प्राप्नोति निश्चितम् ॥३९॥**
**परमैश्वर्यमतुलं प्राप्स्यते भूतले पुमान् । निर्भयो जायते मर्त्यः संग्रामेष्वपराजितः ॥ ४० ॥**
**त्रैलोक्ये तु भवेत्पूज्यः कवचेनावृतः पुमान् । इदं तु देव्याः कवचं देवानामपि दुर्लभम् ॥ ४१ ॥**

(**गुप्तवती**) ॥ ३६ ॥ ३७ ॥ कवचधारणस्य फलमाह । पदमेकमित्यादिना अधृतकवच इति शेषः॥३८॥३९॥४०॥४१॥

(**प्रदीपः**) ॥ ३६ ॥ रक्षाहीनमिति । यत्स्थानं रक्षया हीनं भवति कुत इति चेत्कवचेन तु वर्जितं कवचे तस्य स्थानस्योहो न कृतोऽतः तत्सर्वं रक्ष मे देवि यतस्त्वं जयन्ती सर्वोत्कृष्टा पापनाशिनी भवसि ॥ ३७ ॥ अथ पितामहः फलस्तुतिं वक्तुमधिकारिणं प्रथममुपदिशति । पदमेकमिति । यदि शुभमात्मन इच्छेत्तर्हि स पुरुषः कवचेन रहितमेकं पदमपि न गच्छेदिति । क्षणमात्रमपि देवीस्मरणं विना न क्षपणीयमिति तात्पर्यम् । तदुक्तं पुराणेषु । 'स्वपंस्तिष्ठन्व्रजन्मार्गे प्रलपन्भोजने रतः । कीर्तयेत्सततं देवीं स वै मुच्येत बन्धनात्' इति । इत्युपदिश्य फलं कथयति कवचेनेति ॥३८॥३९॥४०॥४१॥

**यः पठेत्प्रयतो नित्यं त्रिसंध्यं श्रद्धयान्वितः । दैवी कला भवेत्तस्य त्रैलोक्ये चापराजितः ॥४२॥**
**जीवेद्वर्षशतं साग्रमपमृत्युविवर्जितः । नश्यन्ति व्याधयः सर्वे लूताविस्फोटकादयः ॥ ४३ ॥**
**स्थावरं जंगमं चापि कृत्रिमं चापि यद्विषम् । अभिचाराणि सर्वाणि मन्त्रयन्त्राणि भूतले ॥४४ ॥**
**भूचराः खेचराश्चैव जलजाश्चौपदेशिकाः । सहजाः कुलजा माला डाकिनी शाकिनी तथा ॥४५॥**
**अन्तरिक्षचरा घोरा डाकिन्यश्च महाबलाः । ग्रहभूतपिशाचाश्च यक्षगन्धर्वराक्षसाः ॥ ४६ ॥**
**ब्रह्मराक्षसवेतालाः कूष्माण्डा भैरवादयः । नश्यन्ति दर्शनात्तस्य कवचे हृदि संस्थिते ॥ ४७ ॥**
**मानोन्नतिर्भवेद्राज्ञस्तेजोवृद्धिकरं परम् । यशसा वर्धते सोऽपि कीर्तिमण्डितभूतले ॥ ४८ ॥**

(**गुप्तवती**) ॥ ४२ ॥ ४३ ॥ स्थावरं वत्सनाभादि । जंगमं सर्पादि । कृत्रिमं परस्परयोगजन्यं । यथा तुल्यपरिमाणयोर्मधुसर्पिषोर्योगादिजम् ॥ ४४ ॥ कुलजादयो दुष्टदेवता जातिभेदाः ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥

(**प्रदीपः**) दैवीकला चित्कला ॥ ४२ ॥ ४३ ॥ अभिचाराणि परकृतानि ॥ ४४ ॥ कुलजादयो दुष्टदेवता जातिभेदाः । औपदेशिकाः उपदेशेन तन्मात्रेण ये सिध्यन्ति ते क्षुद्रदेवताभेदाः । राज्ञः सकाशादित्यर्थः ॥४५॥४६॥४७॥४८॥

**जपेत्सप्तशतीं चण्डीं कृत्वा तु कवचं पुरा । यावद्भूमण्डलं धत्ते सशैलवनकाननम् ॥ ४९ ॥**
**तावत्तिष्ठति मेदिन्यां संततिः पुत्रपौत्रिकी । देहान्ते परमं स्थानं यत्सुरैरपि दुर्लभम् ॥ ५० ॥**
**प्राप्नोति पुरुषो नित्यं महामायाप्रसादतः ॥ ५१ ॥ इति श्रीदेवीकवचं समाप्तम् ॥**

(**गुप्तवती**) जपेदिति । अत्र कवचं पुरा कृत्वा सप्तशतीं जपेदिति विधौ कृत्वेति सप्तशत्यङ्गत्वस्यानुवादः । कवचसमाख्यया वचनान्तरैश्च कवचस्य चण्डीपाठाङ्गत्वसिद्धेः । पूर्वं फलान्तरकथनं त्वेष्टिन्यायेन बहिःप्रयोगान्तरस्वीकारान्न दुष्यति । यावद्भूमण्डलमित्यादिस्तु पूर्णताफलश्रुतिवदर्थवादः । पुरेति पूर्वकालमात्रविधिः । ततश्चाव्यवधानांशस्यात्राकथनात् सूक्तपुटितत्वस्य तु रात्रिसूक्तं पठेदादावित्यनेन विवरणात् । आदिमध्यान्तपदैः क्रमपदेन च विवृतस्य श्रौतक्रमत्वेन तद्बाधायोगाद्रात्रिसूक्तात्पूर्वमेव नवार्णस्य निवेशः । एवमर्गलास्तुतेरपीदं स्तोत्रं पठित्वा तु महास्तोत्रं पठेन्नरः इत्यनेनाङ्गाङ्गिभावमात्रबोधनादद्य भुक्त्वा श्वो व्रजतीति क्त्वाप्रत्ययस्य व्यवधानेऽपि प्रयोगादुक्तश्रौतक्रमाविरोधेन व्यवधानेऽपि तदुपपत्तेः । कवचार्गलयोस्तु पाठादेव क्रमबोधनाद्दशहोतृव्याहृतिहिंकारसामिधेनीनां दशहोतारं वदेत्पुरस्तात्सामिधेनीनां सामिधेनीरनुवक्ष्यन्व्याहृतीः

पुरस्तान्निदधाति हिंकृत्य सामिधेनीरन्वाहेत्युक्तानामिव संकर्षणोक्तक्रमन्यायेन कवचार्गलानवार्णरात्रिसूक्तचण्डीस्तवानां क्रम उन्नेयः । स्तवजपसंख्यानन्तरमपि देवीसूक्तनवार्णरहस्यानां क्रम इति ज्ञेयम् ॥ ४९ ॥ ५० ॥ ५१ ॥ इति श्रीगुप्तवत्यां देवीकवचव्याख्या समाप्ता ॥

(**प्रदीपः**) अधुना सप्तशत्यङ्गत्वं कवचस्य विधत्ते । जपेदिति पुरा । प्रथमतः । धत्त इति अनन्तनागो यावद्भूमण्डलं धत्ते धारयति तावदित्यर्थः ॥ ४९ ॥ परमं स्थानं मोक्षरूपं ज्ञानद्वारा प्राप्नोति । नित्यं नियमेन । महामाया सर्वकारणमायाशबलब्रह्मरूपा तस्याः प्रसादतः । 'यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनुं स्वाम्' इति श्रुतेः । 'य एतां मायाशक्तिं वेद स मृत्युं जयति स पाप्मानं तरति सोऽमृतत्वं च गच्छति' इति श्रुतेः । 'अहमेव स्वयमिदं वदामि जुष्टं देवेभिरुतमानुषेभिः' इति श्रुतेश्च । 'पार्वती परमा विद्या ब्रह्मविद्याप्रदायिनी । विशेषेणैव जंतूनां नात्र संदेहकारणम्' इति सूतसंहितोक्तेश्च ॥ ५० ॥ ॥ ५१ ॥ कवचेऽस्मिन्सार्धपञ्चाशत्संख्याश्लोकसंग्रहः ॥ इति प्रदीपव्याख्याने कवचव्याख्या समाप्ता ॥

---

# अथार्गलास्तुतिः ।

## मार्कण्डेय उवाच ।

**जयन्ती मङ्गला काली भद्रकाली कपालिनी । दुर्गा क्षमा शिवा धात्री स्वाहा स्वधा नमोऽस्तु ते ॥ १ ॥**

(**गुप्तवती**) जयन्तीति । मङ्गलेति मत्वर्थीयोऽच् ॥ १ ॥

(**प्रदीपः**) अथार्गलाव्याख्यानम् । तत्र प्रथमतो देवताया उद्देश्याया गुणान्ध्यानोपयोगिन आह । जयन्तीति । जयन्ती सर्वोत्कृष्टेत्यर्थः । गुणत्रयसाम्यावस्थोपाधिकब्रह्मरूपिण्या भगवत्याः सर्वकारणत्वात् । मङ्गला मङ्गं जननमरणादिरूपं सर्पणं भक्तानां लाति गृह्णाति नाशयति सा मोक्षप्रदा मङ्गलेत्युच्यते । 'न तस्य प्राणा उत्क्रामन्ती' इति श्रुतेः । काली कलयति भक्षयति सर्वमेतत्प्रलयकाले इति काली । 'ब्रह्म च क्षत्रं चोभे भवत ओदनः मृत्युर्यस्योपसेचनम्' इति श्रुतेः । भद्रकाली भद्रं मङ्गलं सुखं कलयति स्वीकरोति भक्तेभ्यो दातुमिति भद्रकाली । भद्रकाली सुखप्रदेति रहस्यागमेऽर्थकथनात् । कपालिनी । 'कपालोऽस्त्री शिरोऽस्थि स्याद्घटादेः शकलेषु च' । इति मेदिनीकोशात् । ब्रह्मादीन्निहत्य तेषां कपालं गृहीत्वा प्रलयकाले अटतीति । प्रपञ्चरूपाम्बुजं हस्ते यस्या इति वा । कपालिनी मत्वर्थीय इनिः । प्रपञ्चाम्बुजहस्ता च कपालिन्युच्यते परेति रहस्यागमात् । दुर्गा । दुःखेनाष्टाङ्गयोगसर्वकर्मोपासनारूपेण क्लेशेन गम्यते प्राप्यते सा दुर्गा । 'तां दुर्गां दुर्गमां देवीमिति देव्यथर्वशिरसः' । क्षमा भक्तानामन्येषां वा सर्वानपराधान्क्षमते सहते जननीत्वात्सातिशयकारुण्यवती क्षमेत्युच्यते । शिवा । चिद्रूपिणीत्यर्थः । 'चिन्मात्राश्रयमायायाः शक्त्याकारे द्विजोत्तमा । अनुप्रविष्टा या संविन्निर्विकल्पा स्वयंप्रभा ॥ सदाकारा सदानन्दा संसारोच्छेदकारिणी । सा शिवा परमा देवी शिवाऽभिन्ना शिवंकरी ॥' इति सूतसंहितोक्तेः । धात्री सर्वप्रपञ्चधारणकर्त्री । 'अहं रुद्रेभिर्वसुभिश्चराम्यहमादित्यैरुत विश्वदेवैः । अहं मित्रावरुणोभा बिभर्म्यहमिन्द्राग्नी अहमश्विनोभेत्यादिश्रुतेः' । स्वाहा देवपोषिणी । स्वधा पितृपोषिणी । एतादृशपूर्वोक्तमहागुणवती या त्वमसि ततस्ते तुभ्यं नमो नमस्कार एवास्तु केवलं । न तु तादृश्याः परिचर्यायां सामर्थ्यमस्तीति भावः ॥ १ ॥

**मधुकैटभविद्रावि विधातृवरदे नमः । रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ २ ॥**
**महिषासुरनिर्नाशविधात्रि वरदे नमः । रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ ३ ॥**
**वन्दिताङ्घ्रियुगे देवि देवि सौभाग्यदायिनि । रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ ४ ॥**

(**गुप्तवती**) मधिवति । विद्राविणी च सा विधातृवरदा चेति विग्रहः । रूपं स्त्रीयानां मोहनं द्विषां भीषणं लावण्यं वा ॥ २ ॥ महिषेति । निर्नाशविधात्रीत्येकं पदम् ॥ ३ ॥ ४ ॥

(**प्रदीपः**) मधुकैटभयोर्विद्राविणी नाशिनी च सा विधातुर्वरदा चेत्यर्थः । मधुकैटभनाशार्थं ब्रह्मणा स्तुता सती तस्मै वरं ददाविति कथा देवीभागवते प्रथमस्कन्धे प्रसिद्धा । रूपं रूप्यते ज्ञायते इति रूपं परमात्मवस्तु । रूपं भवेद्विन्दुरमन्दकान्तिरित्यागमात्तद्देहि मह्यं मत्कृतनमस्कारेणैव प्रसन्ना सती तथा जयं जयत्यनेन परमात्मनः स्वरूपमिति जयो वेदस्मृतिराशिस्ततो जयमुदीरयेदित्यत्र प्रसिद्धस्तं देहि । यशो देहि । 'सहनौ यशः' इति श्रुतिप्रसिद्धं तत्त्वज्ञानसंपादनजन्यं यशस्तद्देहि । द्विषो जहि कामक्रोधादीन्शत्रूञ्जहि नाशय ॥ २ ॥ महिषासुरेति । महिषासुरस्य निर्नाशस्तस्य विधात्री कर्त्रीत्यर्थः । वरदे इति पृथक्पदम् ॥ ३ ॥ वन्दितेति । ब्रह्मविष्ण्वादिभिर्वन्दितमङ्घ्रियुगं यस्यास्तेषामेतदपेक्षया न्यूनोपाधिकत्वात् । भक्त्यतिशयेन देवीत्यस्य पुनरुक्तिः ॥ ४ ॥

**रक्तबीजवधे देवि चण्डमुण्डविनाशिनि । रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ ५ ॥**

**अचिन्त्यरूपचरिते सर्वशत्रुविनाशिनि । रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ ६ ॥**
**नतेभ्यः सर्वदा भक्त्या चण्डिके प्रणताय मे । रूपं देहि जयं देहि यशो देहि द्विषो जहि॥ ७ ॥**
**स्तुवद्भ्यो भक्तिपूर्वं त्वां चण्डिके व्याधिनाशिनि। रूपं देहि जयं देहि यशो देहि द्विषो जहि॥८॥**

(**गुप्तवती**) रक्तबीजस्य वधो यस्याः सकाशात्सेति विग्रहः ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥

(**प्रदीपः**) रक्तबीजेति । रक्तबीजस्य वधः कर्तव्यतयास्ति यस्याः सा । अर्शआद्यजन्तं । रक्तबीजवधकर्त्रीत्यर्थः । रक्तबीजस्य वधो यस्याः सकाशादिति वा । अत्र शुम्भासुरेति श्लोकपाठोपपाठः प्राचीनैरव्याख्यानात्प्राचीनपुस्तकेष्वपाठाच ॥ ५ ॥ अचिन्त्येति । 'यतो वाचो निवर्तन्ते' इति श्रुतेः । 'यो अस्याध्यक्षः परमे व्योमन् । सो अङ्ग वेद यदि वा न वेद' इति श्रुतेः ॥ ६ ॥ नतेभ्य इति । सदा सर्वदा भक्त्या नतेभ्यः प्रणतेभ्यो मे प्रणताय च रूपं देहीत्यन्वयः ॥ ७॥ एवं स्तुवद्भ्य इत्यत्रापि ॥ ८ ॥

**चण्डिके सततं ये त्वामर्चयन्तीह भक्तितः। रूपं देहि जयं देहि यशो देहि द्विषो जहि॥ ९ ॥**
**देहि सौभाग्यमारोग्यं देहि देवि परं सुखम् । रूपं देहि जयं देहि यशो देहि द्विषो जहि॥१०॥**
**विधेहि द्विषतां नाशं विधेहि बलमुच्चकैः । रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ ११ ॥**
**विधेहि देवि कल्याणं विधेहि विपुलां श्रियम् । रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥१२॥**
**विद्यावन्तं यशस्वन्तं लक्ष्मीवन्तं जनं कुरु । रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ १३ ॥**
**प्रचण्डदैत्यदर्पघ्ने चण्डिके प्रणताय मे । रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ १४ ॥**
**चतुर्भुजे चतुर्वक्त्रसंस्तुते परमेश्वरि । रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ १५ ॥**

(**गुप्तवती**) ये त्वामर्चयन्ति तेभ्य इति शेषः ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ जनं भक्तजनं माम् ॥१३॥१४॥१५॥

(**प्रदीपः**) चण्डिके सततमित्यत्रापि तथैव ये त्वामर्चयन्ति तेभ्य इति शेषः ॥ ९ ॥ देहि सौभाग्यमित्यर्थान्मह्यम् ॥ १० ॥ विधेहीति । उच्चकैरतिशयेनोच्चं बलं मम विधेहि ॥ ११ ॥ १२ ॥ विद्यावन्तमिति । ब्रह्मविद्यावन्तं जनं स्वभक्तजनं कुरु अथ च रूपं देहीत्यर्थः ॥ १३ ॥ १४ ॥ १५ ॥

**कृष्णेन संस्तुते देवि शश्वद्भक्त्या तथाऽम्बिके । रूपं देहि जयं देहि यशो देहि द्विषो जहि॥१६॥**
**हिमाचलसुतानाथपूजिते परमेश्वरि । रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ १७ ॥**
**सुरासुरशिरोरत्ननिघृष्टचरणेऽम्बिके । रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ १८ ॥**
**इन्द्राणीपतिसद्भावपूजिते परमेश्वरि । रूपं देहि जयं देहि यशो देहि द्विषो जहि॥ १९ ॥**

(**गुप्तवती**) ॥ १६ ॥ १७ ॥ १८ ॥ इन्द्राण्या पतिसद्भावस्य पतिसत्ताया ज्ञानार्थं पूजिते । इन्द्रेण कालविशेषे क्वचित्सरसि कमलबिसांतश्चिरं स्थितं तदा देव्याराधनेन पौलोम्या तत्स्थलं लब्धमिति पुराणेषु प्रसिद्धेः । इन्द्राणीपतिना सद्भावेन पूजिते इति वा ॥ १९ ॥

(**प्रदीपः**) कृष्णेन संस्तुते इति । इयं च कथा देवीभागवते प्रसिद्धा ॥ १६ ॥ हिमाचलसुतानाथः शिवस्तेन पूजिते ॥ १७ ॥ सुरासुरेति । अनेन च देवीस्वरूपदर्शनेन निर्वैरताऽद्वैतभावो भवतीति ध्वनितम् । सुरासुरयोः सामानाधिकरण्यकथनात् ॥ १८ ॥ इन्द्राणीति इन्द्राणीपतिनासद्भावेन पूजिते ॥ १९ ॥

**देवि प्रचण्डदोर्दण्डदैत्यदर्पविनाशिनि । रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ २० ॥**
**देवि भक्तजनोद्दामदत्तानन्दोदयेऽम्बिके । रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ २१ ॥**
**पत्नीं मनोरमां देहि मनोवृत्तानुसारिणीम् । तारिणीं दुर्गसंसारसागरस्य कुलोद्भवाम् ॥ २२ ॥**

(**गुप्तवती**) ॥ २० ॥ भक्तजनेषु ये उद्दामास्तेभ्यो दत्त आनन्दोदयो मोक्षो यया ॥ २१ ॥ तारिणी मार्कण्डेयपुराणप्रसिद्धया मदालसया वासिष्ठरामाणप्रसिद्धया चूडालया च तुल्याम् । आद्यया पुत्रस्तारितोऽन्यया पतिरेव तारित इति तत्राख्यानात् ॥ २२ ॥

(**प्रदीपः**) ॥ २० ॥ भक्तजनेषु य उद्दामास्तेभ्यो दत्त आनन्दोदयो मोक्षो यया ॥ २१ ॥ तारिणीमिति । मार्कण्डेयपुराणप्रसिद्धया मदालसया वासिष्ठरामायणप्रसिद्धया चूडालया च तुल्या आद्यया पुत्रस्तारितो द्वितीयया पतिरेव तारित इति तत्राख्यानात् ॥ २२ ॥

इदं स्तोत्रं पठित्वा तु महास्तोत्रं पठेन्नरः । स तु सप्तशतीसंख्यावरमाप्नोति संपदः ॥ २३ ॥

इति देव्या अर्गलास्तुतिः समाप्ता ।

(**गुप्तवती**) महास्तोत्रम् एतत्प्रधानभूतं सप्तशतीस्तोत्रं । सप्तशतीसंख्यावरं तज्जन्यपुण्यस्य यत्संख्या वरमानन्त्यरूपं तदेव संपदामप्याप्नोतीत्यर्थः ॥ २३ ॥ इति गुप्तवत्यामर्गलास्तोत्रव्याख्या संपूर्णा ॥

(**प्रदीपः**) महास्तोत्रं सप्तशत्याख्यं । अनेन चार्गलास्तुतेरपि सप्तशत्यङ्गत्वं बोधितं । य एवमर्गलास्तुतिं पठित्वा सप्तशतीस्तोत्रं जपति स तु स एव सप्तशत्याः संख्या जपसंख्या तया यज्जायमानं वरं फलं तत्प्राप्नोति नान्यः । संपदः संपदश्च प्राप्नोति । तस्मादवश्यमर्गलास्तोत्रं पठनीयमिति भावः । सिद्धिप्रतिबन्धकं पापमर्गलासदृशत्वादर्गला तन्नाशकस्तोत्रस्यापि लक्षणयार्गलेति संज्ञा ॥ २३ ॥ त्रयोविंशतिसंख्यानां श्लोकानामत्र संग्रहः । इति प्रदीपव्याख्याने अर्गलाविवरणम् ॥

---

## अथ देवीकीलकम् ।

ऋषिरुवाच ।

विशुद्धज्ञानदेहाय त्रिवेदीदिव्यचक्षुषे । श्रेयःप्राप्तिनिमित्ताय नमः सोमार्धधारिणे ॥ १ ॥

(**गुप्तवती**) विशुद्धेति । अयं च श्लोकस्तर्कचरणमीमांसावार्तिके प्रथमः । अत्रापि बहुभिः पठ्यते । शिवस्य सोमयागस्य चेह श्लेषः । विशुद्धं निर्विषयकमध्ययनसिद्धं च । ज्ञानं चैतन्यं वेदार्थस्य च । त्रिवेदी वेदत्रयमैष्टिकपाशुकसौमिकवेदिकात्रयं च । श्रेयो मोक्षः स्वर्गश्च । सोमार्धः चन्द्रोऽभिषुतसोमरसश्च ॥ १ ॥

(**प्रदीपः**) अथ कीलकविवरणम् । तत्र मार्कण्डेयऋषिः शिष्यानुपदिदेश । स संवादस्तन्त्रेषु कथित इति तन्त्रस्थमेवैतत् । ऋषिरुवाच । मार्कण्डेयऋषिः स्वशिष्यान्प्रतीत्यर्थात् । कीलकं वक्तुं मङ्गलमाचरति मार्कण्डेयः । विशुद्धेति । निर्मलज्ञानरूपायेत्यर्थः । त्रिवेदी वेदत्रयरूपं दिव्यं चक्षुर्यस्य तस्मै श्रेयःप्राप्तेः कल्याणप्राप्तेर्निमित्ताय कारणाय सोमार्धधारिणे नमः अस्त्वित्यर्थः । अत्र केचिदयं श्लोकस्तर्कचरणमीमांसावार्तिके प्रथमोऽत्रापि बहुभिः पठ्यते परंत्वनार्ष इत्याहुः । वयं तु ब्रूमोऽत्रत्य एव स श्लोको मङ्गलार्थं वार्तिककारैर्गृहीत इति कुतो न स्यात् । न हि कुत्रचित्स्थितः श्लोको मङ्गलार्थमन्यत्र न गृहीतव्य इति राजाज्ञास्ति । तस्मात्सर्वपुस्तकेषूपलम्भादार्ष एव श्लोक इति ॥ १ ॥

सर्वमेतद्विजानीयान्मन्त्राणामभिकीलकम् । सोऽपि क्षेममवाप्नोति सततं जाप्यतत्परः ॥ २ ॥

(**गुप्तवती**) सर्वमेतत् कर्मकाण्डो ब्रह्मकाण्डस्तन्त्राणि वैद्यकादीनि कलाश्च कीलकं दानप्रतिग्रहाख्यकर्मविशेषादिरूपं च विना । जाप्ये चण्डीस्तवमात्रजपे तत्परः । क्षेमं नानाविधप्रत्यवायानां रोगाणां च परिहारम् ऐहिकामुष्मिकफलसमूहं च । एतदेव विवृणोति । सिध्यन्तीति । एतेन चण्डीस्तवेन । नित्यमित्यादिभिन्नं वाक्यं । परब्रह्मापि स्तोत्रमात्रेणैव सिध्यतीत्यर्थः ॥ २ ॥

(**प्रदीपः**) किमुवाच । सर्वमेतदिति । मन्त्राणां सर्वेषां अभिकीलकं वक्ष्यमाणरीत्या सर्वमन्त्रसिद्धिप्रतिबन्धकशापरूपकीलकनाशकत्वाल्लक्षणया सप्तशतीस्तोत्रमभिकीलकं तत् सर्वं विजानीयात् उपासीतेत्यर्थः । नन्वन्यमन्त्रोपासनाभिः किं क्षेमं न भवति यतोऽत्रैवाग्रहः क्रियत इति चेद्भवत्येवेत्याह । सोऽपीति । तत्सप्तशतीस्तोत्रं विना सततं जाप्यतत्परः नानामन्त्राणां जपरूपे कर्मणि निरन्तरं निष्ठा यस्य स तत्परो यस्तु पुरुषः सोऽपि क्षेमं सर्वं क्षेमं कल्याणं प्राप्नोतीत्यर्थः॥२॥

सिध्यन्त्युच्चाटनादीनि वस्तूनि सकलान्यपि । एतेन स्तुवतां देवी स्तोत्रमात्रेण सिद्ध्यति॥ ३ ॥

(**गुप्तवती**) ॥ ३ ॥ (**प्रदीपः**) सिध्यन्त्युच्चाटनादीनीति । एवं जपतत्परस्य पुरुषस्योच्चाटनादीन्यपि कर्माणि सिध्यन्ति तथा सकलानि वस्तून्यलभ्यानि सिध्यन्तीति । एवं सप्तशतीपाठरहितानामपि पुरुषाणां केवलमन्त्रजपेन सिद्धिमुक्त्वा मन्त्रजपरहितानामपि पुरुषाणां केवलसप्तशतीपाठेनापि सर्वा सिद्धिमुपदिशति । एतेनेति । एतेन प्रकृतेन स्तोत्रमात्रेण सप्तशत्याख्यस्तोत्रपाठमात्रेण स्तुवतां स्तोतॄणां देवी भगवती सच्चिदानन्दरूपिणी सिद्ध्यति प्रसीदति ॥ ३ ॥

न मन्त्रो नौषधं तत्र न किंचिदपि विद्यते। विना जाप्येन सिद्ध्येत सर्वमुच्चाटनादिकम् ॥ ४ ॥

(**गुप्तवती**) तस्माल्लघूपायात्मकचण्डीस्तवातिरिक्तानां प्रयाससाध्यानां सर्वविद्यानां वैयर्थ्यं प्रसक्तमित्याह । न मन्त्र इति । विद्यते लोकैस्तासामनादरेणोच्छिन्नत्वादिति भावः । विनेति मन्त्राद्यन्वयि ॥ ४ ॥

(**प्रदीपः**) तस्य पुरुषस्य नान्यमन्त्राद्युपयोग इत्याह । न मन्त्रो नौषधमिति । तत्र तस्य पुरुषस्य कार्यसिद्धौ न मन्त्र

उपयुक्तो भवति तथा नौषधं तथा न किञ्चिदन्यदपि योगसिद्ध्यादिरूपं साधनं विद्यते उपयोगाय । किं तु जाप्येन विना तत्तन्मन्त्रजपरूपकर्माभावेऽपि सर्वमुच्चाटनादिकमाभिचारिकं कर्म तथा समग्राण्यप्यभिलषणीयानि कार्याणि सिध्यन्ति केवलस्तोत्रमात्रेणेति । एतावत्पर्यन्तं सप्तशत्युपासनया केवलया सर्वं कल्याणं भवति । तथा सप्तशत्यन्यमन्त्रोपासनयापि सर्वं कल्याणं भवतीति पक्षद्वयमुपपादितम् ॥ ४ ॥

**समग्राण्यपि सेत्स्यन्ति लोकशङ्कामिमां हरः । कृत्वा निमन्त्रयामास सर्वमेवमिदं शुभम् ॥ ५ ॥**

**( गुप्तवती )** विद्यमानविद्याजातवैयर्थ्यशङ्कां निमन्त्रयामास विचारयामास । विचारमभिनीय दर्शयति । सर्वमिति । एवं कीलकनिर्माणे कृते सति सर्वमिदं विद्याजातं शुभं सार्थकं स्यादिति चण्डीस्तवमात्रपाठेन कृतार्थाः सन्तो लोकाः सर्वाणि धर्मार्थकाममोक्षशास्त्राण्यत्यजन् । अतः कीलननिर्माणेन स्तवमात्रजन्यानां सिद्धीनां प्रतिबन्धः शिवेनेतरविद्यासार्थक्यार्थं कृत इति श्लोकचतुष्काशयः ॥ ५ ॥

**( प्रदीपः )** इत्थं पक्षद्वयमपीदमस्तीति या पक्षद्वयविषयिणी लोकानां शङ्का तां प्रथमतो हरः कृत्वा तच्छङ्कानिरासार्थं निमन्त्रयामास निमन्त्रितवानर्थाल्लोकान् । तानागतानाह । किमिति एवं वक्ष्यमाणप्रकारेणेदं सप्तशत्याख्यमेव शुभमिति अत्र तानाहेति शेषः ॥ ५ ॥

**स्तोत्रं वै चण्डिकायास्तु तच्च गुह्यं चकार सः । समाप्तिर्न च पुण्यस्य तां यथावन्नियन्त्रणाम् ॥ ६ ॥**

**( गुप्तवती )** स्तोत्रमिति । चण्डिकायाः स्तोत्रं गुह्यमप्रचरदवस्थं चकार । क्वचित्प्रचारमात्रेण यत्नात्तल्लाभेऽपि तस्य पुण्यस्य तज्जन्यफलातिशयस्य या नसमाप्तिरनन्तता तामपि नियन्त्रणां नियन्त्रितां निगूढोपायां चकार ॥ ६ ॥

**( प्रदीपः )** अनन्तरं च चण्डिकायास्तु चण्डिकाया एव स्तोत्रं सप्तशत्याख्यं तच्च गुह्यमतिरहस्यं चकार । पूर्वोक्तमन्त्रजपरूपपक्षापेक्षया द्वितीयं पक्षमेव सारभूतं चकारेत्यर्थः । इति मार्कण्डेयेन तन्त्रोक्तं पूर्ववृत्तं कथितं पुनः शिष्यान् सप्तशतीमाहात्म्यं कथयंश्छिवाभिप्रायं कथयति । यस्मादेतत्स्तोत्रपाठजन्यफलस्य न समाप्तिः कदापि भवति । तत्तन्मन्त्रजपजन्यपुण्यस्य तु समाप्तिरस्ति । तस्मात्तां पूर्वोक्तां शिवेन कृतां नियन्त्रणां प्रथमपक्षस्य सङ्कोचरूपां यथावद् यथार्थमेव जानीध्वमिति शेषः॥६॥

**सोऽपि क्षेममवाप्नोति सर्वमेव न संशयः । कृष्णायां वा चतुर्दश्यामष्टम्यां वा समाहितः ॥७॥**

**( गुप्तवती )** न ह्येतावता सर्वथा स्तोत्रात् सिद्धिहानिर्मन्तव्या । गुरुमुखात्तादृशोत्कीलनोपायज्ञानशीलस्य तथानुष्ठितवतो यथा पूर्वमितरविद्यानैरपेक्ष्येणैव सिद्धिसम्भवादित्याह । सोऽपीति । तमुपायमेव प्रदर्शयति । कृष्णायामिति । यस्मिन्मासि नूतनार्जनं तस्मिन्मास इति शेषः ॥ ७ ॥

**( प्रदीपः )** सोऽपि क्षेममिति । सोऽपि तत्तन्मन्त्रजपकर्तापि एतत्स्तोत्रजपसहितश्चेदेव सर्वं क्षेममवाप्नोति तस्मात्तं प्रथमपक्षं विहाय सप्तशतीपाठे एव सर्वैरादरः कर्तव्य इत्यर्थः । एतेनान्ये मन्त्रा अपि सप्तशतीपाठं कृत्वैव जपनीयाः अन्यथा तत्तन्मन्त्रफलप्राप्तिर्न स्यादिति बोधितं । यत एतत्सर्वमन्त्रसिद्धिप्रतिबन्धकनाशकं भवति तस्मादेव मन्त्राणामभिकीलकमेतदिति पूर्वमुक्तमिति बोध्यम् । अभिकीलकं सिद्धिप्रतिष्टम्भकरं दोषरूपं । तन्नाशकत्वादस्यापि लक्षणयाभिकीलकत्वम् । नन्वत्रापि नवार्णमन्त्रजपापेक्षास्त्येवेति चेत्सा शीघ्रफलार्थमिति ब्रूमो न तु तद्विना फलमेतस्य नास्तीति एतद्विना तु तत्तन्मन्त्राणां फलमेव न भवतीति विशेषः ॥ ७ ॥

**ददाति प्रतिगृह्णाति नान्यथैषा प्रसीदति । इत्थंरूपेण कीलेन महादेवेन कीलितम् ॥ ८ ॥**

**( गुप्तवती )** ददातीति । धातुद्वयेन मिलित्वा दानप्रतिग्रहनामकस्यैव कर्मणो विधिः । तत्स्वरूपं च गुरुकीलके व्यक्तीभविष्यति ॥ ८ ॥

**( प्रदीपः )** परन्तु हे शिष्यास्तत्स्तोत्रं सर्वेषामप्यचिन्त्यफलप्रदं जातमिति सर्वेऽपि सर्वेश्वरा भविष्यन्तीति ज्ञात्वा महादेवेन कीलितमस्तीत्याह । कृष्णायामिति । कृष्णचतुर्दश्याम् अष्टम्यां वा कृष्णायां समाहित एकाग्रः सन् य उपासको निजं सर्वं धनं न्यायेनार्जितं देव्यै ददाति समर्पयति । हे देवि इत आरभ्येदं सर्वं धनं मदीयं तुभ्यं मया दत्तमस्ति इति समर्पयति पश्चात् संसारयात्रानिर्वाहार्थं गृहाणेदं द्रव्यं मत्प्रसादभूतमिति देव्या अनुज्ञां मनसा गृहीत्वा तद्द्रव्यं प्रसादबुद्ध्या प्रतिगृह्णाति । गृहीत्वा च धर्मशास्त्रोक्तमार्गेण तस्य व्ययं कुर्वन्निरन्तरं देव्यधीनो भवति तस्यैषा सप्तशती प्रसन्ना भवति नान्यथा । इत्थंरूपेण कीलेन सिद्धिप्रतिष्टम्भकरेण महादेवेन कीलितमस्ति । अयंच कीलकस्यार्थो रहस्यागमे गुरुकीलकपटले प्रदर्शितः अग्रे स्पष्टीकरिष्यामः ॥ ८ ॥

योनिःकीलां विधायैनां नित्यं जपति संस्फुटम् । स सिद्धः सगणः सोऽपि गन्धर्वो जायतेऽवने ॥९॥
न चैवाप्यटतस्तस्य भयं क्वापीह जायते । नाऽपमृत्युवशं याति मृतो मोक्षमवाप्नुयात् ॥ १० ॥
ज्ञात्वा प्रारभ्य कुर्वीत ह्यकुर्वाणो विनश्यति । ततो ज्ञात्वैव सम्पन्नमिदं प्रारभ्यते बुधैः ॥ ११ ॥
सौभाग्यादि च यत्किंचिद्दृश्यते ललनाजने । तत्सर्वं तत्प्रसादेन तेन जाप्यमिदं शुभम् ॥१२॥

(**गुप्तवती**) ॥ ९ ॥ १० ॥ ज्ञानारम्भात्यागरूपं कर्मीह । ज्ञात्वेति । कुर्वीत न त्यजेत् । अकुर्वाणः त्यजन्विनश्यति सिद्धिहीनो भवति ॥ ११ ॥ १२ ॥

(**प्रदीपः**) तर्हि किं कर्तव्यमित्याह । यो निःकीलामिति यस्मादेवं तस्माद्यो हि पुरुष एनां सप्तशतीं पूर्वोक्तदानप्रतिग्रहकरणेन निष्कीलां विधाय स्फुटं यथा स्यात्तथा संजपति स एव सिद्धो भवति । स एव देव्या गणो भवति । सोऽपि स एवाऽवने सर्वजगद्रक्षणे गन्धर्वो बृहदारण्यके 'तस्यासीत् दुहिता गन्धर्वगृहीता'इति श्रुत्युक्तदेवताविशेषो गन्धर्वो जायते । स हि समर्थः सर्वजगद्रक्षणे इति ॥ ९ ॥ दृष्टफलान्याह । न चैवाप्यटत इति । स्पष्टार्थमेवैतत् ॥ १० ॥ एतादृशकीलकमज्ञात्वा पाठकर्तुर्दोषमाह । ज्ञात्वेति । पूर्वोक्तं कीलकं ज्ञात्वा तत्परिहारं प्रारभ्य पाठं कुर्वीत । तत्परिहारमकुर्वाणो विनश्यति । यस्मादेवं तस्मात्कीलकं ज्ञात्वैव सम्पन्नं निर्दुष्टमिदं स्तोत्रं बुधैः प्रारभ्यते । अत्र विनाशकथनं कीलकज्ञानस्यावश्यकत्वार्थमेव । यथाकथंचित्पाठस्यापि वचनान्तरैरनुज्ञानात् । तेन जाप्यमिति तेन हेतुनेत्यर्थः ॥ ११ ॥ १२ ॥

शनैस्तु जप्यमानेऽस्मिंस्तोत्रे सम्पत्तिरुच्चकैः । भवत्येव समग्रापि ततः प्रारभ्यमेव तत् ॥ १३ ॥
ऐश्वर्यं यत्प्रसादेन सौभाग्यारोग्यसम्पदः । शत्रुहानिः परो मोक्षः स्तूयते सा न किं जनैः ॥१४॥

इति लक्ष्मीकीलकस्तोत्रं संपूर्णम् ।

(**गुप्तवती**) शनैरिति । अत्वरयेत्यर्थः । न तूपांशुस्वरेण मनसा वा वाचिकस्पष्टजपस्यैवावश्यकत्वोक्तेः ॥ १३ ॥ १४ ॥ इति श्रीगुप्तवत्यां लक्ष्मीकीलकव्याख्या समाप्ता ॥

(**प्रदीपः**) शनैस्त्विति । शनैः स्वकर्णगोचरं यथा स्यात्तथा पाठे यत्किंचित्सम्पत्तिरेव भवति । उच्चकैरुच्चैः पाठे तु समग्रापि भवत्येव । तत उच्चकैरेवैतत्प्रारभ्यमित्यर्थः ॥ १३ ॥ इत्थं मुनिः कीलकविधिं समाप्य जनानाक्रोशति । ऐश्वर्यमिति । परो मोक्षः कैवल्यमोक्षः । अहो मन्दभाग्या एते दृष्टिगोचरं चिन्तामणिं कामदुघां भगवतीं विहाय स्वकल्याणार्थं वराटिकामन्यदेवतोपासनारूपां किमर्थं गृह्णन्तीति ॥ १४ ॥ श्लोकाश्चतुर्दशैवात्र कीलके सम्प्रतिष्ठिताः । इति प्रदीपव्याख्यायां लक्ष्मीकीलकटीका समाप्ता ॥

---

## रहस्यतन्त्रस्थो गुरुकीलकपटलः ।

### शिव उवाच ।

पुरा सनत्कुमाराय दत्तमेतन्मयानघ । संवर्ताय ददौ तच्च स चान्यस्मै ददौ च तत् ॥ १ ॥
सर्वत्र चण्डीस्तोत्रस्य प्राचुर्येण महीतले । ब्रह्मकाण्डः कर्मकाण्डस्तन्त्रकाण्डश्च सर्वथा ॥ २ ॥
अभूत्प्रतिहतोऽनेन शीघ्रसिद्धिप्रदायिना । तदा तेषां च सार्थक्यं कर्तुकामेन भूतले ॥ ३ ॥
दानप्रतिग्रहाख्येन मन्त्रोऽयं कीलितो मया । दानप्रतिग्रहाख्यं यत्तत्कीलकमुदाहृतम् ॥ ४ ॥
तदारभ्य च मन्त्रोऽयं कीलकेनास कीलितः । न सर्वेषां भवेत्सिध्यै ये कीलकपराङ्मुखाः॥५॥
ये नराः कीलकेनेमं जपन्ति परया मुदा । तेषां देवी प्रसन्ना स्यात्ततः सर्वाः समृद्धयः ॥ ६ ॥
त्वत्प्रसूतस्त्वदाज्ञप्तस्त्वद्दासस्त्वत्परायणः । त्वन्नामचिन्तनपरस्त्वदर्थेऽहं नियोजितः ॥ ७ ॥
मयार्जितमिदं सर्वं तव स्वं परमेश्वरि । राष्ट्रं बलं कोशगृहं सैन्यमन्यच्च साधनम् ॥ ८ ॥
त्वदधीनं करिष्यामि यत्रार्थे त्वं नियोक्ष्यसि । तत्र देवि सदा वर्ते तवाज्ञामेव पालयन् ॥ ९ ॥
इति संचिन्त्य मनसा स्वार्जितानि धनानि च । कृष्णायां वा चतुर्दश्यामष्टम्यां वा समाहितः ॥१०॥
समर्पयेन्महादेव्यै स्वार्जितं सकलं धनम् । राष्ट्रं बलं कोशगृहं नवं यद्यदुपार्जितम् ॥ ११ ॥

अस्मिन्मासि मया देवि तुभ्यमेतत्समर्पितम्। इति ध्यात्वा ततो देव्याः प्रसादात्प्रतिगृह्य च ॥१२॥
विभज्य पञ्चधा सर्वं त्र्यंशान्स्वार्थं प्रकल्पयेत्। देवपित्रतिथीनां च क्रियार्थं त्वेकमादिशेत् ॥१३॥
एकांशं गुरवे दद्यात्तेन देवी प्रसीदति। तस्य राज्यं बलं सैन्यं कोशः साधु विवर्धते ॥ १४ ॥
नानारत्नाकरः श्रीमान्यथा पर्वणि वारिधिः। ज्ञात्वा नवाक्षरं मन्त्रं जीवब्रह्मसमाश्रयम् ॥१५॥
तत्त्वमस्यादिवाक्यानां सारं संसारभेषजम्। सप्तशत्याख्यमन्त्रस्य यावज्जीवमहं जपम् ॥ १६ ॥
कुर्वंस्ततो न प्रमादं प्राप्नुयामिति निश्चयम्। कृत्वा प्रारभ्य कुर्वीत ह्यकुर्वाणो विनश्यति ॥१७॥
नाहं ब्रह्म निराकुर्यां मामा ब्रह्म निराकरोत्। अनिराकरणं मेऽस्तु अनिराकरणं मम ॥ १८ ॥
इति वेदान्तमूर्धन्ये छान्दोग्येऽस्य प्रपञ्चनात्। प्रारभ्य तत्परित्यागो न तस्य श्रेयसे मतः ॥१९॥
नाब्रह्मवित्कुले तस्य जायते च कदाचन। न दारिद्र्यं कुले तस्य यावत्स्थास्यति मेदिनी ॥२०॥
प्रतिसंवत्सरं कुर्याच्छारदं वार्षिकं तथा। तेन सर्वमवाप्नोति सुरासुरसुदुर्लभम् ॥ २१ ॥
अन्यच्च यद्यत्कल्याणं जायते तत्क्षणे क्षणे। सत्यं सत्यमिदं सत्यं गोपनीयं प्रयत्नतः ॥ २२ ॥
पुत्राय ब्रह्मनिष्ठाय पित्रा देयं महात्मना। अन्यथा देवता तस्मै शापं दद्यान्न संशयः ॥ २३ ॥

अत्रायं भावः। पित्रर्जितं विना स्वेनैव मन्त्रप्राप्त्युत्तरं यद्यन्नूतनमर्जितं तदर्जनं माससम्बन्धिकृष्णचतुर्दश्यष्टम्यन्यतरदिवसे देवीनिकटे स्थित्वा देशकालौ संकीर्त्य दानप्रतिग्रहाख्येन कर्मणा देवीं प्रीणयिष्य इति सङ्कल्प्य त्वत्प्रसूत इत्यादिश्लोकत्रयमर्थानुसन्धानपूर्वकं पठित्वा राष्ट्रं बलं कोशगृहमिति श्लोकमन्त्रेण देवीचरणयोर्दत्तमिवानुसन्धाय प्रसन्नया देव्याज्ञप्त इव पुनः प्रतिग्रहं विभाव्य तन्मध्ये पञ्चमं भागं गुरवे तत्पुत्रादिभ्यो वा दत्त्वावशिष्टं चतुर्थांशं स्वेन क्रियमाणपञ्चयज्ञादिधर्मव्ययार्थं निष्कास्येतरत्स्वार्थं यथेच्छं विनियोजयेत्। अत्रामान्तश्चान्द्रमासो ग्राह्यः। अमायामर्जितस्य तूत्तरमासे दानम्। मन्त्रे पूर्वे मासीत्यूहो यथान्यायं मन्त्रेण दानादावप्यूह्यः। इति दानप्रतिग्रह एकः। सर्वमन्त्रसाधारण्येन मन्त्रस्वीकारादि यावदायुषो भागत्रये प्रथमाद्येकैकभागेष्वेवोत्पन्नभक्त्यतिशया उपासकास्त्रिविधा अधममध्यमोत्तमत्वेन तन्त्रेषु गणिताः तद्विदां स्पष्टाः। प्रकृते तदपवादमाह। ज्ञात्वेति। नवार्णमन्त्रं स्वीकृत्य महावाक्यसंवादिनं तदर्थं च गुरोर्बुद्ध्वाधिकृतः सन्नयावधि यावज्जीवं सप्तशतीस्तवपाठं प्रमादेन सकृदपि न त्यक्ष्य इति दृढं सङ्कल्प्य तथैवानुतिष्ठेत्। अयं ज्ञानारम्भात्यागो द्वितीयः। तत्र छान्दोग्यवाक्यं प्रमाणयति। नाहमित्यादिना। आश्विनशुद्धप्रतिपदि चैत्रशुद्धप्रतिपदि च संकल्प्य नवम्यन्तं तत्कल्पोक्तविधिना पूजामहोत्सवो यथाशक्ति वा कर्तव्य इति च द्वयम्। एवं चत्वारि कार्याण्यप्रमादेन कुर्वतश्चण्डिकोपासकस्यैव सर्वाः सिद्धयः अन्यत्रेषदप्यन्यथात्वे हानिरेवेति ॥ ७ इति श्रीगुप्तवत्यां रहस्यतन्त्रस्थकीलकविवरणपटलः ॥

---

## सप्तशतीमन्त्रविभागः।

अथायं शप्तशतीमन्त्रः श्लोकसंख्याभेदेन त्रिविधोऽपि व्यवस्थयैव त्रिभिस्तन्त्रैरवलम्बितोऽपि न भिद्यते। शाखान्तराधिकरणन्यायेन कर्मण इव सर्ववेदान्तप्रत्ययन्यायेन विद्याया इवास्य मन्त्रस्याप्यैक्यात्। ईषद्वैलक्षण्यस्याप्रयोजकत्वात्। मनुचन्द्रादिश्रीविद्याभेदानां तन्त्रभेदेन विलक्षणतयोद्धृतानामर्थैक्यस्य मन्त्रविदां संमतताया सेतुबन्धेऽस्माभिर्वर्णनाच्च। अनुष्ठाने परमैच्छिको विकल्पः प्रामाण्याविशेषात्। तथापि यामलादितन्त्रावलम्बितपाठयोर्मध्ये सप्तशतसंख्यापूर्त्यर्थमेकत्र द्वात्रिंशद्वारं नवार्णः शरणीक्रियते। अन्यत्र श्वेताननेत्यादिनामषोडशकं द्विः शरणीक्रियत इति तयोः सकारादिर्नुकारान्तः सप्तशतभेदो मनुरिति गौण्या स्रष्टिन्यायेन व्यपदेशो दुर्वारः। कात्यायनीतन्त्रोक्तपाठावलम्बे तु मुख्य एव। एतदनन्तर्गतमन्त्रामेलनादित्यादिविशेषमध्यवस्य बहुभिः शिष्टैरयमेव पक्ष आदृतः। सकारादिरिति तु मार्कण्डेयपदादिसकारोपलक्षणम्। प्रधानमन्त्राभिप्रायेण वा। उवाचपदाङ्कितमन्त्राणां तृतीयपटले पाञ्चमिकविभागसंख्यापिण्डकथनावसरेऽङ्कमन्त्राश्च ते नवेति व्यवहारदर्शनात्। मकारादिरित्येव वा तत्र मुख्यः पाठः। परन्तु तन्त्रोदितमन्त्रविभागाशयं न्यायगर्भितमजानानैः कैश्चित्क्वचित्क्वचिदन्यथापि विभागो वर्णित इति तदपनोदाय तन्त्रार्थनिष्कर्षेण मन्त्रविभागं संग्रहपूर्वकं व्याख्यास्यामः। तत्र कात्यायनीतन्त्रेऽस्मिन्विषये विंशतितमाद्याश्चत्वारः पटलाः षष्टिश्लोकास्तेष्वाद्ये प्रथमाध्यायस्थमन्त्रविभजनपरे पटले त्रयोदशश्लोकाः। ईश्वर उवाच। मार्कण्डेय उवाचाद्यो मन्त्रः श्लोकात्मकास्ततः। व्योमादिवर्णमारभ्य द्वितीयस्वरसंयुतम्। नृपमित्यन्तिमा मन्त्रा भवन्त्यष्टादश प्रिये। व्योम हकारः तस्यादिवर्णः सकारः तं द्वितीयेन आकारस्वरेण संयुतं सावर्णिपदस्थमारभ्य प्रश्रयावनतो नृपमित्यन्तिमो येषां ते मन्त्रा अष्टादश भवन्ति। प्रिये इति शिवकृतं देवीसम्बो-

धनम् । यद्यपि ते सार्धा एव सप्तदशश्लोका भवन्ति न पूर्णा अष्टादश तथापि तेष्वेकोऽर्धश्लोकात्मको मन्त्रोऽस्तीति ध्वननेन मन्त्रसंख्याया अविरोधः । मध्येऽर्धश्लोकमन्त्रास्तु चतुर्विंशतिरीरिता इति पटलान्ते निर्देशाच्च । इह श्लोकात्मका अष्टादशेत्युक्तिस्तु सप्तदशस्रष्टीरुपदधातीतिवदूह्ना नेया । श्लोकशब्दस्तु चरणचतुष्टयघटित एव पद्ये रूढत्वात् । द्विचरणादेर्गाथाव्यवहारस्य मुख्यत्वेऽपि श्लोकव्यवहारस्य तावतैव परस्परान्वितैकार्थप्रतिपादकत्वनिबन्धनस्य तादृशस्थले सतोऽपि गौणत्वात् । अत एव ब्रह्मोत्तरखण्डे प्रयोगः । 'बहुनात्र किमुक्तेन श्लोकार्धेन वदाम्यहम् । ब्रह्महत्याशतं वापि शिवपूजा विनाशयेत्' इति । देवीभागवतेऽपि । 'वटपत्रशयानाय विष्णवे बालरूपिणे । श्लोकार्धेन तदा प्रोक्तं भगवत्याखिलार्थदम्' इति उपक्रम्य । 'सर्वं खल्विदमेवाहं नान्यदस्ति सनातनम्' इति संक्षिप्तभागवतस्योक्तिः । अतएव तत्पुराणादिमपद्ये त्रिचरणात्मके 'सर्वचैतन्यरूपां तामाद्यां विद्यां च धीमहि । बुद्धिं या नः प्रचोदयात्' इत्याकारकेऽपि गाथात्मकः श्लोक इति व्यवहारोऽपि गौण एव । अतएव मात्स्यादावस्य श्लोकस्य 'गायत्र्या च समारम्भस्तद्वै भागवतं विदुः । यत्राधिकृत्य गायत्रीं वर्ण्यते धर्मविस्तरः' इत्यादिरेव व्यवहारो न श्लोकत्वेन । श्लोकत्वापायेऽपि चतुर्विंशत्यक्षरात्मतया गायत्रीत्वानपायात् । तस्माच्चतुरूनाधिकचरणासु गाथासु श्लोकत्वाभावादष्टादशश्लोका इति प्रकृतव्यवहारः स्रष्टिन्यायेनैव निर्वाह्यः । इदं तु विचार्यम् । तेषु कतमो मन्त्रोऽर्धश्लोकात्मक इति । तत्र कश्चिदाह सावर्ण्याद्याः सप्तदशश्लोकमन्त्राः तदन्ते विद्यमानः 'प्रत्युवाच स तं वैश्यः प्रश्रयावनतो नृपम्' इत्यर्धश्लोकात्मको मन्त्र इति । स प्रष्टव्यः सर्वादौ विद्यमानः 'सावर्णिः सूर्यतनयो यो मनुः कथ्यतेऽष्टमः' इत्यर्धश्लोक एव कुतो न मन्त्र इति । पारिशेष्यन्यायादन्त्य एवेति चेत् प्रथमोपस्थितन्यायसूचीकटाहन्यायाभ्यामाद्य एवास्तु । ननु यो मनुरिति यच्छब्दस्य तदुत्पत्तिमिति तच्छब्दसापेक्षत्वेन तदुभयघटितश्लोक एकं वाक्यम् । मन्त्रत्वस्य परिपूर्णवाक्यत्वव्याप्यतया सावर्णिरित्यर्धस्य साकाङ्क्षत्वेन निराकाङ्क्षत्वरूपपूर्णत्वाभावान्न मन्त्रत्वम् । अतएव यजुःषु निरवसानेष्वनियतावसानेषु चैकैकमन्त्रत्वनिर्णयः 'अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात्' इति जैमिन्युक्तलक्षणानुसारेणेष्टः । एकमुख्यविशेष्यकबोधजनकत्वे सति विभागे साकाङ्क्षत्वमिति तदर्थः । ततश्च यो मनुः तदुत्पत्तिमित्यनयोर्विभजने परस्पराकाङ्क्षानपायादुभयघटितमेकं वाक्यमेवैको मन्त्र आस्थेय इति चेत् तर्हि 'यैर्निरस्तो भवाँल्लुब्धैः पुत्रदारादिभिर्धनैः । तेषु किं भवतः स्नेहमनुबध्नाति मानसम्' इति श्लोकस्यार्धमन्त्रद्वयात्मतानापत्तिः । किंच त्वन्मते 'मम वैरिवशं यातः' इति मन्त्रोत्तरार्धस्य 'ये ममानुगता नित्यं प्रसादधनभोजनैः' इत्यस्य 'अनुवृत्तिं ध्रुवं तेऽद्य कुर्वन्त्यन्यमहीभृताम्' इत्युत्तरमन्त्रपूर्वार्धेन साकाङ्क्षतया तयोरर्धयोरेकमन्त्रत्वापत्तिः । अथ कारकाणां स्वाभाविकपरस्पराकाङ्क्षया यत्रैकक्रियान्वयेन परिपूर्णता तदवान्तरमेकं वाक्यम् । तादृशवाक्ययोरपि पुनराकाङ्क्षान्तरेणोत्थापितेनैकवाक्यतान्तरं यत्र कल्प्यते तन्महावाक्यम् । एवं महावाक्यादीन्युन्नेयानि । एकमन्त्रत्वं तूभयसाधारणैकवाक्यत्वमात्रव्याप्तम् । 'भगो वां विभजतु पूषा वां विभजतु' इत्यादीनामवान्तरवाक्यानां भिन्नमन्त्रत्वस्य 'ममाग्ने वर्चो विहवेष्वस्तु वयन्त्वेन्धानास्तनुवं पुषेम । मह्यं नमन्तां प्रदिशश्चतस्रस्त्वयाध्यक्षेण पृतना जयेम' इत्यवान्तरवाक्यचतुष्टयात्मकैः प्रत्येकं परिपूर्णैश्चतुर्भिः पादैरेकमन्त्रत्वस्य च दर्शनात् । प्रकृते यत्तच्छब्दयोः परिपूर्णस्यापि वाक्यस्य वाक्यान्तरैकवाक्यतानियामकाकाङ्क्षान्तरोद्दीपकत्वेन तदाकाङ्क्षापरिपूर्त्यभावेऽपि नावान्तरवाक्यत्वहानिः । यत्तच्छब्दमात्रनिरासे नैराकाङ्क्ष्यानुभावात् । अतएव 'तस्मिन्सीदामृते प्रतितिष्ठ व्रीहीणां मेध सुमनस्यमानः' इति तच्छब्दघटितस्याप्यर्धस्य स्योनं ते सदनं करोमीति पूर्ववाक्येनैकवाक्यताया अनावश्यकत्वान्मन्त्रभेदः स्वीकृतो मीमांसकैः । अतएव च 'महामायानुभावेन यथा मन्वन्तराधिपः' इति द्वितीयश्लोकस्य यथेति यच्छब्दघटितस्य तथेत्यध्याहारेण निशामयेति पूर्वश्लोकेनैवैकवाक्यत्वेऽपि तस्याप्रयोजकत्वात् श्लोकाधिकस्य मन्त्रस्य कल्पने तन्त्रविरोधाच्च तावत एव भिन्नमन्त्रतास्वीकारः । तेन न्यायेन यैर्निरस्त इत्यर्धयोरपि भिन्नमन्त्रत्वं युज्यते । अतएव यैः संमिति तत् श्लोकादिमान्तिमाक्षररूपप्रतीकद्वयग्रहणेन द्वौ मन्त्राविति कण्ठरवेण तन्त्रोक्तिरुपपद्यत इति चेत् तर्हि सावर्णिरित्यत्रापि यच्छब्दापनये नैराकाङ्क्षानुभवेनोक्तापत्तिरनिवार्या । न च विनिगमनाविरहः न्यायद्वयस्य नियामकत्वोक्तेः । न चायमस्ति नियमः पूर्णानां निवेशोत्तरमेवार्धस्य निवेश इति । षष्टिश्चार्धर्चश्चेति सार्धषष्टिसौरर्चगणने यत्राचकुरित्यर्धर्चस्य 'ऋचामशीतिः पादश्च' इति यावदृग्वेदमन्त्रपारायणलक्षणे भद्रं न इति पादस्य च मध्य एव निवेशस्येष्टत्वात् । अथैवं सति त्वत्पक्षे निशामयेत्यारभ्य सप्तदशश्लोकानां सप्तदशमन्त्रत्वमनिर्वार्य पुनरर्धान्तरस्य मन्त्रत्वकल्पनं तन्त्रोक्तसंख्याविरोधापत्तेः । ततश्च निशामयेत्यर्धयोः स बभूवेत्यर्धयोश्च यथाकथंचिदेकवाक्यताकल्पनेन श्लोकमन्त्रत्वसम्भवेऽपि सुरथोनाम राजाऽभूदिति श्लोकोत्तरार्धस्थस्य तस्य पालयत इति षष्ठ्यन्तस्य यस्य तत्रानन्वितस्य तदुत्तरश्लोकस्थशत्रुपदेनैवान्विततयाऽवान्तरवाक्यत्वस्यैव भङ्गेन कथमेकत्र मन्त्रत्वम् । एवं बभूवुरित्यादिश्लोकत्रयस्य कथञ्चित् सम्भवेऽपि कोशो बलं चेति श्लोकस्थस्य मृगयाव्याजेनेत्यस्य तदुत्तरश्लोकस्थेन जगामेत्यनेनैवान्वययोग्यत्वात् तत्रापि मन्त्रत्वभङ्गः । तस्मात् तदनुरोधाय ममाग्ने वर्च इत्यत्रैव प्रथमश्लोक एव महावाक्यात्मकैकमन्त्रत्वस्वीकारो युक्त इति चेत् अये किमेतावत्येव दूरे तव दृष्टिर्धावति । त्वत्पक्षे ततोऽपि परतरेषु मद्भृत्यैस्तैरसद्वृत्तैरित्यादिषु बहुषु श्लोकेषु कथं मन्त्रत्वभङ्गः । अथ तस्यानन्यगतिकत्वेन तत्तदुचितपदान्तराध्याहारानुषङ्गा-

दिना वाक्यपरिपूर्तिराश्रयणीया । इत्येतेत्यादौ छिन्धीत्यस्याध्याहारेणावान्तरवाक्यत्वस्वीकारदर्शनात् । अतएव द्वादशेऽध्याये पशुपुष्पार्घधूपैश्चेति श्लोकद्वयस्यारण्ये प्रान्तरेवापीति श्लोकचतुष्टयस्याप्येकान्वयित्वेनावान्तरवाक्यात्मकमन्त्रद्वयाद्यात्मकत्वे युक्तेऽपि प्रतिश्लोकं भिन्नमन्त्रता त्वया स्वीक्रियमाणाऽनयैव रीत्या निर्वाह्या गत्यन्तराभावादिति चेत्सत्यम् । किं सुरथो नाम कोशो बलं चेति श्लोकयोरध्याहारादिकल्पना मद्भूत्यैस्तैरित्यादिश्लोकेषु वेति विनिगमनाविरहः । अथ सप्तदशश्लोक्या आदावन्ते वार्धश्लोकाङ्गीकार इति पक्षद्वयेऽपि क्वचिन्मन्त्रभङ्गस्यापततोऽध्याहारादिना निरासस्यावश्यकत्वेन युक्तितौल्याद्विकल्प इति चेत् भ्रान्तोऽसि । अनध्यवसायप्रयुक्तविकल्पोक्तेर्न्यायानभिज्ञतापिशुनत्वात् । ननु तस्य तैरभवद्युद्धमित्यादीनां बहूनामर्धानां स्वस्वघटकपदैरेव निराकाङ्क्षाणामवान्तरवाक्यत्वात्तेष्वन्यतमस्य मन्त्रत्वकल्पनेऽपि विनिगमनाविरहो दुर्वार इति चेत् कस्यायं भारः । तेषु तादृशमेवार्धमन्वेष्टव्यं यत्र मन्त्रत्वपर्याप्तिस्वीकारे सति न कस्यापि मन्त्रत्वं भज्येत प्रत्युत चरमार्धस्य । तथात्वे तु द्वयोरेवाध्याहारकल्पनादिस्वीकार इत्यस्यैव नियामकं । अणुरपि विशेषोऽध्यवसायकर इति न्यायात् । न हि प्रतीकविशेषमुपादायाऽर्धमन्त्रस्तन्त्रे निर्दिष्टः येन किं हि वचनं न कुर्यादिति न्यायेन बहुष्वेव कुसृष्टिरङ्गीकार्या नाल्पयोरिति स्यात् । तद्भावे त्वेतदेव नियामकमापद्यत इति । अथ कोऽयं मन्त्रोऽर्धश्लोकमन्त्र इति सुहृद्भूत्वा पृच्छामीति चेत् हंहो । सोऽचिन्तयत्तदा तत्र ममत्वाकृष्टमानस इत्यवेहि । अतएव पटलान्ते मध्ये चतुर्विंशतिरित्युक्तौ मध्यपदस्वारस्यमुपपद्यते । अस्यैव मन्त्रत्वपर्याप्त्यधिकरणताङ्गीकारे एतत् पूर्वापरश्लोकानां सर्वेषां पूर्णता भवति । अथ तन्त्रे प्रतीकग्रहणेन निर्देशाभावे पारिशेष्यक्रमप्राप्तमपि परित्यज्य स्वेच्छया कस्याप्यर्धमन्त्रत्वस्वीकारे कथमाश्वास इति चेत् न । ईदृशसङ्कटस्थले न्यायानामेव निर्णायकत्वात् तेषां च जैमिनिप्रभृतिभिः परिशोधनेन विवेचितत्वात् । ईदृशीमास्तिकतां स्वस्मिन् प्रकटयता त्वयापि त्रयोदशाध्याये सप्तानामेवार्धानां तन्त्रे कथनेऽपि समुदितसंख्याविरोधादिन्यायमनुसन्धायैव नवानामर्धानामङ्गीकारात्, तत्रैवैकादशानामर्धानामन्यैरप्यङ्गीकाराच्च । वस्तुतस्तत्र यथा तन्त्रं सप्तैवार्धश्लोका इति वक्ष्यतेऽस्माभिः । तस्मान्न्यायैः निर्णीतार्थेनाश्वासे सति लोके निर्णयकथैवोच्छिद्येतेति बहुव्याकुली स्यात् । ननु सर्वमिदं मन्त्रलक्षणे एकवाक्यत्वनिवेशसत्त्व एवोपपद्यते तत्रैव च मानं न पश्यामः । तच्चोदकेषु मन्त्राख्येति सूत्रे मन्त्रप्रसिद्धिविषयत्वस्यैव मन्त्रलक्षणस्य जैमिनिना कथनात् । नापि मन्त्रत्ववाक्यत्वयोर्व्याप्यव्यापकभावः ब्राह्मणादिवाक्येषु मन्त्रत्वाभावात् । हुंफडादिपदमन्त्रेषु वाक्यत्वाभावाच्चेति चेत्सत्यं । मन्त्रत्ववाक्यत्वयोरुत्सर्गतः सिद्धस्य सामानाधिकरण्यस्य साकाङ्क्षपदमात्रे मन्त्रत्वपर्याप्त्यधिकरणतावेदकप्रमाणमन्तरेण बाधकायोगात् । तादृशापवादकप्रमाणाभावसहकृतमन्त्रत्वस्य वाक्यत्वव्याप्यतानपायात् । अन्यथा मन्त्रान्तर्गतपदेषु लक्षणाङ्गीकारो न स्यात् । मन्त्रैरेव मन्त्रार्थः स्मर्तव्य इति नियमस्य पदवाच्यार्थस्मरणमात्रेण जपमन्त्रादाविव सर्वत्रोपपत्तेः । सति तु तात्पर्यविषयीभूतवाक्यार्थपरत्वे तदन्यथानुपपत्तिप्रसूतिलक्षणावसरात् । नन्वग्नये जुष्टं निर्वपामीत्यंशस्येव मार्कण्डेय उवाच स्वाहेति मन्त्रे स्वाहापदस्यानुष्ठेयार्थप्रकाशत्वेन 'सवितुः प्रसव' इत्याद्यंशस्येव मार्कण्डेयादिपदानामदृष्टार्थत्वेन तेषां परस्परान्वितैकार्थपरत्वाभावेऽपि न मन्त्रत्वस्य न वा तु दृष्टार्थत्वस्य भङ्ग इति चेत् न । सवित्रादिपदार्थप्रकाशनस्यादृष्टार्थत्वेऽपि सवितुरित्यादेर्निर्वपतिना सहैकवाक्यतयैव कर्माङ्गताया वाक्यप्रमाणादवगतत्वेन तदंशे दृष्टार्थताऽनपायात् । अन्यथाग्निरिदं हविरजुषतेत्यादाविदं हविरित्याद्यंशस्यापि देवतायाः हविःस्वीकाराभावेनादृष्टमात्रार्थे तत्प्रकाशकत्वेनानेकदेवत्वविकृतौ मारुतसप्तकपालादौ वचनोहानापत्तेः । तस्मान्मार्कण्डेयो यस्य माहात्म्यमुवाच तस्यैव हविरिदं दत्तमितिरीत्याभासमानवाक्यार्थानुगुण्येनैव तत्तदुचितसम्बन्धबोधकपदाध्याहारेण प्रकृतकर्मान्वयस्य सर्वत्र निर्वाहो युक्तो न पुनर्भासमानैकवाक्यत्वस्यापवादकबलवत् प्रमाणमन्तरेण स्वेच्छयैव भङ्गेन मन्त्रत्वकल्पनं सुधियामुचितमित्यलं विस्तरेण ॥ वैश्यवाक्यं ततः श्लोका व्योमाद्यात् पञ्चमन्त्रकाः । नृपस्योक्तिर्मान्तवर्णाद्द्वादशस्वरसंयुतात् । सकारो विन्दुयुक्तोऽन्ते मन्त्रौ द्वावीदृशौ मतौ ॥ व्योम हकारः तदाद्यात् सकारमारभ्य । ते च श्लोकाश्चत्वार एव पञ्चीकार्याः । अर्धश्लोकात्मकौ द्वौ मन्त्रौ श्लोकास्त्रय इत्यर्थः । यद्यपि वैश्योक्तिमेलनेनेयं संख्येति सुवचं तथापि पूर्वं मार्कण्डेयोक्तिमन्तरेणैव संख्याकथनप्रायपाठात् पटलान्तेऽर्धश्लोकसंख्यावचनस्य तात्पर्यग्राहकत्वाच्चैवमेव व्याख्येयं । तौ च किं तु तेषामिति चतुर्थश्लोकस्य पूर्वोत्तरार्धरूपावेव न तु चतुःश्लोक्या आद्यन्तार्धरूपौ परेणोक्तौ पुत्रदारैर्निरस्तश्चेति चकारस्वारस्येन पूर्वार्धस्थोत्पन्नपदेनैवान्वयमानात् उत्तरार्धेनान्वये दारैः पुत्रैरित्यनेन पौनरुक्त्यापत्तेश्च । नृपस्योक्तिः राजोवाचेति मन्त्रः मान्तो यकारो द्वादशेनैकारस्वरेण संयुतस्तस्मात्तमारभ्य सं इति सविन्दुकमक्षरं यावत् । द्वौ मन्त्रौ अर्धश्लोकात्मकाविति यावत् ॥ ततो वैश्य उवाचेति स्वरैकादश आदितः । वह्निबीजं बिन्दुयुक्तमन्ते स्यान्मनुपञ्चकम् ॥ स्वरेष्वेकादश एकारः सन्धिरेकादशो भद्रा पद्मनाभः कुलाचल इति नन्दनकोशाच्च, वह्निबीजं रेफः । अत्रापि चतुर्षु श्लोकेष्वन्त्यौ द्वावर्धश्लोकमन्त्रौ नाद्यान्त्यौ यैः संत्यज्येत्यस्य पूर्वेण सहान्वयायोगात् उत्तरार्धस्थतच्छब्दस्य हार्दं चेति कर्मणश्चानेनैवान्वेतुं योग्यत्वाच्च । एवमुत्तरश्लोकेष्वप्येतद्यत्पदयोर्द्रष्टव्यम् ॥ मार्कण्डेय उवाचकैः ततो मन्त्रत्रयं भवेत् । तादिवर्णं च भुवनस्वरयुग्वारुणान्तिमम् ॥ भुवनानि चतुर्दश । वारुणं वकारः । अत्राद्यावेव द्वावर्धश्लोकौ । उत्तरश्लोके कृत्वेत्यस्य समानकर्तृकोत्तरकालिकक्रियान्तराकाङ्क्षत्वेन तस्योपविष्टाविति पदेनोत्तरार्ध एव समर्पणात् तेनान्त्यार्धस्य मन्त्रान्तरत्वं नादर्तव्यम् ॥ राजोवाचेति षण्मन्त्रा भादि-

तान्ताः शुभानने । अथोवाच ऋषिर्ज्ञानमस्तीत्यारभ्य पार्वति । सर्वेश्वरेश्वरीत्यन्ता मन्त्रा द्वादश कीर्तिताः ॥ भगवंस्त्वामिति पञ्चश्लोक्यामाद्यन्तयोरर्धयोः प्रत्येकं परिपूर्णत्वेऽप्ययं च निकृत इत्यादीनामुत्तरोत्तरार्धेनैव साकाङ्क्षत्वात्तदभङ्गायाद्यश्लोक एव द्वावर्धात्मकौ मन्त्रौ तयोर्यत्तच्छब्दकृतसाकाङ्क्षताया अवान्तरवाक्यत्वाविरोधित्वात् । ज्ञानमस्तीत्येकादशश्लोक्यां तु चरमश्लोकार्धमेव मन्त्रद्वयं न तु प्रथमश्लोकार्धे । ज्ञानेऽपि सतीत्यादेरुत्तरार्धस्थकणमोक्षादिनैवान्वयात् अन्यत्रापि तथैव स्वारस्याच्च । उपान्त्यश्लोकस्य मन्त्रद्वयात्मत्वसम्भवेऽप्युवाचसामीप्येनैवार्धश्लोकद्वयस्यान्यत्र दृष्टस्यार्थिकस्याप्यत्र सम्भवतस्त्यागे मानाभावाच्च सवनीयपश्वालम्भस्थलनिष्ठस्य दैक्षानुबन्ध्यसामीप्यस्य प्रकृतावार्थिकस्यापि साद्यस्के तदादरेण निर्णायकत्वदर्शनात् ॥ राजोवाचाथ भगवन्नादावन्ते विदांवर । मन्त्रत्रयमिदं ख्यातं पश्चादृषिरुवाच ह । नित्यैव सा जगच्चादौ प्रभुरन्तेऽष्टमन्त्रकः ॥ भगवन्निति श्लोकद्वये चरमावेवार्धश्लोकौ मन्त्रौ नत्वाद्यार्धं भवानित्यस्य ब्रवीतीत्यनेनैवान्वयात् । नित्यैव सेति सप्तश्लोक्यां तु प्रथमश्लोकपूर्वोत्तरार्धयोरेव पार्थक्यं न चरमश्लोकोत्तरार्धस्य योगनिद्रामित्यस्याभजदिति परेणैवान्वयात् । स नाभिकमल इत्यस्य त्वर्धत्रयात्मकैकमन्त्रसम्भवादेव दृष्ट्वेत्यस्य स्थित इत्यनेनैवान्वयः यत्नान्तरशून्यः सन्निति यावत् । अत्र स्तौमि निद्रां भगवतीं विष्णोरतुलतेजस इत्यर्धपाठः क्वचिदृश्यते । स तु तन्त्रान्तरस्यानुगुण एव विश्वेश्वर्यादिकं सूक्तं दृष्टं तद्ब्रह्मणा पुरेति वचनात् ज्ञापकात् विश्वेश्वरीतः प्रागेव ब्रह्मोवाचेत्यस्य पाठाच्च । तथाप्येतत् तन्त्रानुसारिणा स नादर्तव्यः । अपितु निद्रां भगवतीं विष्णोरतुलां तेजसः प्रभुरित्येवेति प्रभुरन्त इत्यनेन ध्वनितं । प्रभुपदेन तेजसः प्रभुरित्यस्यैव परामर्शो न भगवान् प्रभुरित्यस्य । तदन्ते ब्रह्मवाक्याभावात् तावदष्टसंख्याया असम्भवाच्च ॥ अथ ब्रह्मोवाच ततस्त्वं स्वाहा त्वं स्वधादिमाः । महासुरान्तिमामन्त्रा मताः पञ्चदश प्रिये ॥ त्वं स्वाहेत्यादिचतुर्दशश्लोक्यामन्त्यावेवार्धश्लोकौ मन्त्रौ नाद्यौ । तेन सह स्तुतिरूपेषु श्लोकेषु सर्वेषामर्धानां प्रत्येकं पूर्णत्वसम्भवेऽपि यच्च किञ्चित् क्वचिदित्यादिश्लोकेषु स्वस्वोत्तरार्धैरेवान्वयस्वारस्यात् अव्यवस्थितस्य शास्त्रार्थत्वायोगाच्च उवाचात्मकमन्त्रयोर्मध्यवर्तिनोऽर्धश्लोकात्मकमन्त्रद्वयस्यास्मिन्नध्याये क्वापि व्यवधानादर्शनाच्च तादृशस्थले आद्यन्तयोरेव व्यवहिताऽव्यवहितसाधारण्येन मन्त्रत्वमिति नियमस्य काण्वेनावलम्बितस्य निर्मूलत्वाच्च प्रथमश्लोकोत्तरार्धेऽपि पूर्वार्धावृत्तस्य त्वंकारस्यानुवृत्तिदर्शनमात्रेण पूर्वार्धान्वयित्वस्वीकारात् । तेन प्रथमश्लोक एव वान्यत्रैव वा यच्चेत्यादिश्लोकाविरोधेनैवार्धद्वयकल्पनाचोद्यानां नावकाशः । अणोरपि विशेषस्याध्यवसाये निमित्तत्वात् । यैर्निरस्त इत्यस्य भवेतामथेत्यस्य चोवाचद्वयमध्यवर्तित्वेन तत्रादिमान्तिमयोरर्धयोरेव मन्त्रत्वस्य क्लृप्ततयैकत्र निर्णीतशास्त्रार्थो सति बाधकेऽन्यत्रापीति न्याय एव मूलमिति चेन्न । तत्रान्त्योपान्त्ययोराद्योपाद्ययोरव्यवधानेन मन्त्रद्वयत्वक्लृप्तेरपि सुवचत्वेनान्यत्र व्यवधानापादकस्यादिमान्तिमोभयत्वस्य क्लृप्ततावच्छेदकतानङ्गीकारात् ॥ ऋषिरेव स्तुतेत्याद्याः सप्त स्युः केशवान्तिमाः । ततो भगवदुक्तिः स्याद्भवेतामित्युभौ मनू । अर्थार्षिर्वञ्चिताभ्यामित्येतन्मन्त्रद्वयं शिवे । ऋष्युक्तिश्च तथेत्युक्तेत्यादिमन्त्रद्वयं भवेत् ॥ एवं स्तुतेति श्लोकषट्के चरमश्लोक एवार्धात्मकमन्त्रौ तत्र तावपीति प्रथमार्धे जाताविव्यस्याध्याहारेण पूर्णत्वसम्भवात् । एवं स्तुतेत्यस्यार्धस्य मन्त्रत्वे उत्तरार्धस्थितस्य निहन्तुमित्यस्य पूर्वेणैव अन्वययोग्यत्वात् तदुत्तरान्वयायोग्यत्वाच्च मन्त्रत्वभङ्गापत्तिः । एवं निर्गम्येत्यादेरपि ज्ञेयम् । वञ्चिताभ्यामिति श्लोकोत्तरं प्रीतौ स्वस्तव युद्धेन श्लाघ्यस्त्वं मृत्युरावयोरित्यर्धमधिकं क्वचिद् दृश्यते तदधिकमेव । वक्ष्यमाणायाः अध्यायश्लोकानामर्धश्लोकमन्त्राणां च समुदितसंख्याया विरोधापत्तेर्ज्ञापकात् । अत आवां जहीत्यर्धश्लोक एव मन्त्रः सार्धास्त्रयः सार्धाश्चत्वार इत्यादौ त्रिचतुराणां पूर्णानां परत एवार्धनिवेशस्य लोकसिद्धत्वात्, अपवादकाभावे उत्सर्गसिद्धस्य त्यागायोगात्, विलोक्येत्यर्धस्य पूर्वार्धोक्तकर्मणैव साकाङ्क्षत्वाच्च । काण्वस्तु उवाचद्वयमध्यवर्तिष्वेकस्यैवार्धश्लोकस्य सत्वेऽन्त्य एव ग्राह्य इति नियमं लोकतः सिद्धं स्वेन पूर्वमवलम्बितमपीह विस्मृत्य वञ्चिताभ्यामित्यर्धस्यैव मन्त्रत्वमुक्तवान् । अतएव काण्वानां बुद्धिरापातग्राहिणीति निजप्रथां नाकृथा वितथामन्ववर्तथाः कथमन्यथा अत्यल्पमिदमुच्यते । निर्मूलस्य नियमस्यावलम्बनेन सतोप्युत्सर्गस्य विनापवादं स्वेच्छयैव त्यागेन च मन्त्रविभाजकन्यायगन्धस्याप्यनाघ्राणेन च स्वेच्छयैव विभागविषयेऽपशब्दप्रचुराः कारिका निर्मितवति त्वयि विश्वासेनाद्य यावदनुतिष्ठतामास्तिकानामहो धर्मविप्लवः कियान्वर्णनीय इत्यहो गुरुदेवताभक्तिवैधुर्यमात्मनोऽनुमापयसीति दिक् ॥ सर्वे श्लोका इहाध्याये त्वष्ट्युक् सप्ततिर्मताः । मध्येऽर्धश्लोकमन्त्रास्तु चतुर्विंशतिरीरिताः । उवाचान्तास्तत्र बोध्या मन्त्रा भुवनसंख्यकाः । संहत्याहृतयो ज्ञेयाश्चतुर्भिरधिकं शतम् ॥ अष्टसप्ततावर्धश्लोकद्वयात्मकद्वादशश्लोक्यपनये षट्षष्टिरेव श्लोकमन्त्राः ब्रह्मा भगवानेकैको वैश्यमार्कण्डेयौ द्वौ द्वौ राजत्रयमृषिपञ्चकं चेति चतुर्दशसंख्या उवाचान्तमन्त्रा इत्यर्थः । इति गुप्तवत्यां कात्यायनीतन्त्रे विंशस्य पटलस्य व्याख्या समाप्ता ॥

---

## मन्त्रविभागकारिकाः ।

अथैतत्संग्रहश्लोका एकोनविंशतिः । ऋणमिष्टमदत्वैव त्वन्नाम जपतो मम । शिवे कथमपर्णेति रूढिर्भारायते न ते ॥ १ ॥ श्रीचण्डीस्तवमन्त्राणां विभागः सप्तभिः शतैः । कात्यायन्यादितन्त्रेषु त्रिषु त्रेधा प्रकीर्तितः ॥ २ ॥ गुप्तवत्यां प्रकारास्ते न्यायैः संशोध्य दर्शिताः । तत्रयं भास्करेणेह शतश्लोक्या निबध्यते ॥ ३ ॥ मार्कण्डेय उवाचेति मन्त्रः प्राथमिको मतः । सावर्ण्याद्या

मुनिवराश्रमान्ताः श्लोकका दश ॥ ४ ॥ सोऽचिन्तयत्तदा तत्रेत्यर्धश्लोकात्मको मनुः । मत्पूर्वैरित्युपक्रम्य सप्तश्लोका नृपान्तिमाः ॥ ५ ॥ अथ वैश्यः समाध्याद्याः संस्थितान्तास्ततस्त्रयः । किं नु तेषां कथं ते किमित्यर्धश्लोककौ मनू ॥ ६ ॥ राजोवाच ततो यैस्तेष्वित्यर्धश्लोकमन्त्रकौ । वैश्योक्तिरेव मित्याद्या बन्धुष्वन्तास्ततस्त्रयः ॥ ७ ॥ तेषां कृते करोमीति द्वावर्धश्लोकमन्त्रकौ । मार्कण्डेयस्ततस्तौ समाधिः श्लोकार्धमन्त्रकौ ॥ ८ ॥ कृत्वा तु ताविति श्लोको राजोक्तिर्भगवन्निति । दुःखायेति च मन्त्रौ द्वावर्धश्लोकात्मकौ मतौ ॥ ९ ॥ ममत्वाद्या मूढतान्ताश्चत्वारोऽथ ऋषेर्वचः । ज्ञानमस्तीत्युपक्रम्य मुक्तये तास्ततो दश ॥ १० ॥ सा विद्येति च संसारेत्यप्यर्धश्लोककौ मनू । राजोक्तिर्भगवन् केति श्लोको यत्तदिति द्वयम् ॥ ११ ॥ अर्धश्लोकात्मकमृषिर्नित्यैवेति तथापि तत् ॥ द्वावर्धश्लोकमन्त्रौ स्तो देवानां कार्यमादितः ॥ १२ ॥ तेजसः प्रभुरित्यन्ताः श्लोकाः षट् ब्रह्मणोऽथ वाक् । त्वं स्वाहा त्वं स्वधेत्याद्याः श्लोकमन्त्रास्त्रयोदश ॥ १३ ॥ प्रबोधं चेति बोधश्चेत्यर्धश्लोकात्मकौ मनू । ऋषिरेवं स्तुतेत्यादिविभ्वन्तं श्लोकपञ्चकम् ॥ १४ ॥ तावपीत्युक्तवन्तावित्यर्धश्लोकमनुद्वयम् । भगवांश्च भवेतां किमन्येनेत्यर्धयुग्मकम् ॥ १५ ॥ ऋषिवाक्यं वञ्चिताभ्यामित्येकः श्लोकमन्त्रकः । आवां जहीत्यर्धमृषिस्तथेति श्लोकयोर्युगम् ॥ १६ ॥ इत्यष्टसंप्ततिश्लोकैरध्यायः प्रथमात्मनः । प्रथमस्य चरित्रस्य सर्वे मन्त्राश्चतुःशतम् ॥ १७ ॥ तेषूवाचाङ्किता मन्त्रा ह्येकह्येकत्रिपञ्चभिः । मृकण्डुपुत्र-भगवद्-वैश्य-ब्रह्म-नृपर्षिभिः ॥ १८ ॥ चतुर्दशास्युः श्लोकार्धाश्चतुर्विंशतिरीरिताः । अवशिष्टास्तु षट्षष्टिः श्लोकमन्त्रा इति स्थितिः ॥ १९ ॥

अथ मन्त्राणां तत्र तत्रापेक्षितांशमात्रव्याख्या सापि कात्यायनीतन्त्रसम्मतानामेव श्लोकानां प्रदर्श्यते । ये तु तत्र तत्राधिका अपि श्लोकाः क्वचित् क्वचिदुपलब्धा इहास्माभिः कतिपये प्रदर्शयिष्यन्ते ते प्रकृततन्त्रानुसारिभिर्नोपादेयाः । इति गुप्तवत्यां पूर्वपीठिकादिनिर्णयः ॥

---

## नागोजीभट्टीस्थः प्रयोगविधिः ।

श्रीगणेशाय नमः । मार्कण्डेयेन क्रोष्टुकिं भागुरिं प्रति उक्तं स्तोत्रं जैमिनिं प्रति पक्षिरूपैर्मुनिपुत्रैरुक्तं मार्कण्डेयपुराणे तद्यथामति व्याचक्ष्महे । तत्रादौ व्याख्यास्यमानस्तोत्रे स्तूयमानदेवतास्वरूपं प्राधानिकरहस्याख्ये ग्रन्थविशेषे उक्तं विविच्य दर्श्यते । तत्रादौ राज्ञः प्रश्नः । 'भगवन्नवतारा मे चण्डिकायास्त्वयोदिताः । एतेषां प्रकृतिं ब्रह्मन्प्रधानं वक्तुमर्हसि' इति । अत्रैतेषामिति निर्धारणे षष्ठी । प्रकृतिं मूलकारणम् । तत्रोत्तरं तत्र लक्ष्यस्वरूपमाह । 'मातुलिङ्गं गदां खेटं पानपात्रं च बिभ्रती । नागं लिङ्गं च योनिं च । बिभ्रती नृपमूर्धनि । तप्तकाञ्चनवर्णाभा तप्तकाञ्चनभूषणा' इति । अलक्ष्यस्वरूपमाह । 'शून्यं तदखिलं स्वेन पूरयामास तेजसा' इति । 'लिङ्गं योनिं च बिभ्रती' इत्यनेनास्याः पुंरूपत्वं स्त्रीरूपत्वं च ध्वनितम् । एतदेव रूपं शैवाः सदाशिव इत्याहुः । वैष्णवाः वासुदेव इति शाक्ताः महालक्ष्मीरिति । इयं महालक्ष्मीः कूटस्था प्रथममध्यमोत्तरचरितत्रयदेवतासमष्टिरूपा सकलदेवीमाहात्म्ये देवतेति बोध्यम् । एषा शैवी वैष्णवी च । 'सदाशिवाङ्कमारूढा शक्तिरिच्छाह्वया शिवा । महालक्ष्मीरिति ख्याता देवी सर्वगुणान्विता' इति शिवपुराणात् । लक्ष्मीतन्त्रे विष्णुशक्तिरूपया लक्ष्म्या शक्रं प्रति काल्यादीनां स्वावतारभेदत्वोक्तेश्च । एतच्च सार्वात्म्ये पर्यवस्यति । मायाविशिष्टं शुद्धं ब्रह्मेदं प्रधानतत्त्वस्थम् । ततो गुणत्रयविभागेनाह । 'शून्यं तदखिलं लोकं विलोक्य परमेश्वरी । बभार रूपमपरं तमसा केवलेन हि' । अत्र तमसः प्राधान्यमाश्रित्य केवलेनेत्युक्तिः । तद्रूपमाह । 'सा भिन्नाञ्जनसंकाशा दंष्ट्राङ्कितवरानना । विशाललोचना नारी बभूव तनुमध्यमा । खड्गपात्रशिरःखेटैरलंकृतचतुर्भुजा । कबन्धहारमुरसा बिभ्राणाहिशिरःस्रजम्' । अस्याः रूपेण तामसत्वमुक्त्वा तदेव मोहजनकत्वोपपत्तये ज्ञानकल्पाल्पत्वप्रदर्शनेनैव द्रढयति । 'सा प्रोवाच महालक्ष्मीं तामसी प्रमदोत्तमा । नाम कर्म च मे मातर्देहि तुभ्यं नमोनमः' इति । अतएव महालक्ष्मीरपरं रूपं बभारेत्यनेनाविरोधः । अनेन हि मूलशक्तेरस्याश्च भेदो ध्वन्यते । ततो महालक्ष्मीराह । 'महामाया महाकाली महामारी क्षुधा तृषा । निद्रा तृष्णा चैकवीरा कालरात्रिर्दुरत्यया । इमानि तव नामानि प्रतिपाद्यानि कर्मभिः' इति । इमां रुद्र इत्यन्ये व्यवहरन्ति । ततः 'तामित्युक्त्वा महालक्ष्मीः स्वरूपमपरं नृप । सत्वाख्येनातिशुद्धेन गुणेनेन्दुप्रभं दधौ । अक्षमालाङ्कुशधरा वीणापुस्तकधारिणी । सा बभूव वरा नारी नामान्यस्यैव सा ददौ' । अस्याः सत्वप्रधानत्वं दर्शयितुं ज्ञानकलातिरोभावाभावो नामादिप्रश्नाभावेन दर्शितः । 'महामाया महावाणी भारती वाक् सरस्वती । आर्या ब्राह्मी कामधेनुर्वेदगर्भा च धीश्वरी' इति इमां विष्णुरित्यन्ये । श्वेतरूपधरत्वेनापि विष्णोः स्मरणात् । अत्र तमःसत्वयोः प्रविभागोत्तया महालक्ष्मीरेव स्वयं रजःप्राधान्येन स्थितेत्युक्तं भवति । इमां ब्रह्मेत्यन्ये । अलक्ष्यरूपं च सर्वमूलं चतुर्थं वेदितव्यम् । आसां च मूलशक्त्या अभेद उक्त एव । परस्परमपि तदभिन्नाभिन्नस्य तदभिन्नत्वमिति न्यायेन बोध्यम् । स्वस्वरूपांशेनावृतज्ञानत्वादासां तदभेदज्ञानमपि । एतास्तिस्रोपि कन्या एव । तत्समानकक्षपुरुषान्तरानुक्तेः । सर्वासां पुंस्त्रीउभयरूपता च । 'अथोवाच महालक्ष्मीर्महाकालीं सरस्वतीम् । युवां जनयतां देव्यौ मिथुने स्वानुरूपतः' इमा । आज्ञादानं संमतिरूपं बोद्धव्यम् । 'इत्युक्त्वा ते महालक्ष्मीः ससर्ज मिथुनं स्वयम् । हिरण्यगर्भौ रुचिरौ स्त्रीपुंसौ कमलासनौ ।

ब्रह्मन्विधे विरिञ्चेति धातरित्याह तं नरम् । श्रीः पद्मे कमले लक्ष्मीत्याह माता च तां स्त्रियम्' । अत्र मातृत्वं ततः प्रादुर्भावमात्रेण । 'महाकाली भारती च मिथुने सृजतः सह । नीलकण्ठं रक्तबाहुं श्वेताङ्गं चन्द्रशेखरम् । जनयामास नामानि तयोरपि वदामि ते । विष्णुः कृष्णो हृषीकेशो वासुदेवो जनार्दनः । उमा गौरी सती चण्डी सुन्दरी सुभगा शुभा । एवं युवतयः सद्यः पुरुषत्वं प्रपेदिरे' । पुरुषत्वमपीत्यर्थः । एताश्च न सर्ववेद्याः । तत्क्रिया च न सर्ववेद्येत्याह । 'चक्षुष्मन्तो हि पश्यन्ति पश्यन्ति ज्ञानचक्षुषः' इति । तत्र 'ब्रह्मणे प्रददौ पत्नीं महालक्ष्मीर्नृप त्रयीम् । रुद्राय गौरीं वरदां वासुदेवाय च श्रियम्' । तत्र स्वस्वपत्न्या सहितास्ते क्रमेण ब्रह्मा सृष्ट्यधिकारं विष्णुः पालनाधिकारं रुद्रः संहाराधिकारं कृतवानित्यग्रे उक्तम् । इयं त्रयी महाकालीजन्यत्वात् कर्मतः तमोमयी । सितां स्त्रियमित्युक्ते रूपतः सत्वमयी । एवं च तमःसत्वयोस्तस्यां साम्यम् । ब्रह्मा च महालक्ष्मीजन्यत्वात् हिरण्यगर्भ इत्युक्तेः स्वरूपतः कर्मतश्च रजोमय इति । तत्र रजोद्वैगुण्यम् । विष्णुः सरस्वतीजन्यत्वात्सात्विकः । कर्मतः कृष्णं च पुरुषमित्युक्तेः रूपतस्तमोमय इति । तत्र सत्वतमसोः समता । लक्ष्मीस्तु ब्रह्मवत्द्विगुणरजोगुणा । रुद्रो महाकालीजन्यत्वात्कर्मतस्तमोमयः श्वेताङ्गमित्युक्ते रूपतः सत्वमय इति । तत्र सत्वतमसोः साम्यम् । गौरी तु सरस्वतीजन्यत्वात् गौरीमित्युक्तेश्च कर्मतो रूपतश्च सत्वमयीति सत्वद्वैगुण्यम् । अतएव तत्तद्गुणानुरूपसृष्ट्यादिकर्म तेषां । एवं च ब्रह्मविष्ण्वोः स्त्रीपुंमिथुनं मिलित्वा गुणत्रयमपि । शिवमिथुने तु सत्वं त्रिगुणं एकगुणं तमः रजसः सर्वथाभाव इति तत्वम् । एते प्रथमा ब्रह्मादयः । तदग्रे एव ब्रह्मणो विष्णुरिति विष्णुधारा । रुद्राद्रुद्रस्तस्मात्पुना रुद्र इति रुद्रधारा । काल्याः सरस्वती सरस्वत्याश्च कालीति कालीधारा । सरस्वत्याः काली कालीतः सरस्वतीति सरस्वतीधारा । लक्ष्म्या लक्ष्मीः ततो लक्ष्मीरिति लक्ष्मीधारा । सर्वत्रापि गौरीकेशवौ लक्ष्मीब्रह्माणौ सरस्वतीशंकरौ चेति सहजौ । सर्वत्र ब्रह्मणः सरस्वती विष्णोर्लक्ष्मीः शिवस्य गौरी पत्नीत्यौत्सर्गिकी रीतिः । सर्वेषां रूपकर्माणि मूलवदेव । कदाचित्कल्पभेदेन स्थानभेदेन वा लक्ष्मीतः कालीसरस्वत्यौ सरस्वत्याः सकाशादितरे काल्याः सकाशादितरे । विष्णोर्ब्रह्मरुद्रौ ब्रह्मणो रुद्रविष्णू रुद्रात् ब्रह्मविष्णू इत्यपि स्वेच्छादिवशात् । इति नानाप्रकारपुराणादिस्थसृष्टिक्रमे कश्चिन्न विरोध इति । एते सर्वेपि सर्वज्ञत्वादिसकलशक्तिमन्तः । तत्तदधिकारनैयत्यात्तु किंचिज्ज्ञत्वादिव्यवहारोपि स्वस्वोर्ध्वब्रह्मादिनियमता च । एवं ये जीवाः उपासनादिकर्मणा तत्तल्लोके सारूप्यं प्राप्तास्ते तत्तल्लोकीयब्रह्मवासुदेवादिभिः समानाकारत्वात् ब्रह्मादिसंज्ञाभाजो जीवा एव । एषामपि कर्मानुरूपं तत्तदधिकारभाक्त्वम् । एषां सर्वेषां मूलाभेदेन तदभेदस्य सत्वे स्वात्मांशे आवरणहीनतया तैर्ज्ञानं । नच सार्वात्म्येन स्तुतिर्न विरुद्धा । एवं वा अण्डादिकादिब्रह्मादीनां स्वप्रादुर्भूतब्रह्माभेदज्ञापनायैव प्राधानिकरहस्ये मुख्यलक्ष्म्यादिजन्यब्रह्मादीनामेव अण्डस्रष्टृत्व-तद्भेदकत्व-तत्पालकत्व-तत्संहारकत्वादीन्यग्रे उक्तानीति बोध्यम् । 'स्वरया सह संभूय विरिञ्चोऽण्डमजीजनत् । बिभेद भगवान् रुद्रस्तद्गौर्या सह वीर्यवान्' इत्यादिना । एवं च पृथिवीतलाधिष्ठातृभूतहरेर्योगनिद्रासंपादिकायास्तादृश्या अपि महाकाल्या मूलशक्त्यभेदादेव 'तया विसृज्यते सर्वं' 'सा विद्या परमामुक्तेः' इत्यादिना क्रियमाणा सार्वात्म्येन स्तुतिर्न विरुद्धा । एवं जडात्मिकायाः प्रकृतेश्चेतनरूपायाश्चिच्छक्तेश्चाधिष्ठात्र्यधिष्ठेययोरभेदं मत्वा 'योगनिद्रा जगत्पतेः । सैषा प्रसन्ना वरदा' इत्यादिना तत्र जडचेतनयोः सामानाधिकरण्यं । अत्र मूलभूतजडशक्तेर्महामायाकुण्डलिनीत्यादिशब्दैर्व्यवह्रियमाणा या अधिष्ठात्री चिच्छक्तिरपि तदभेदान्महामायादिसंज्ञाभाक् । एवं तमोमयी कालीसंज्ञाशक्तिरपि निद्रा मोहादिभिः पुरुषज्ञानावरकत्वान्महामाया इत्युच्यते । मूलशक्त्यभेदाच्च । सा चेयं शक्तिः मनोधिष्ठिता एव उपास्या । तत्र शक्तस्य शक्तिं प्रत्याश्रयत्वेपि कार्योत्पत्तौ शक्तेरेव प्राधान्यं । अतः शक्तिरुपास्येति व्यवहारस्य नानुपपत्तिः । एवं मुक्तिदातृत्वं सर्वाश्रयत्वादिव्यवहारोपि समंजसः । उपास्यत्वं च महाकाल्यादिद्वारा मूलशक्तेरेवेति सर्वं समंजसम् । अन्यच्च तत्रतत्र वक्ष्यामः । अस्याः शापोद्धारोत्कीलने कात्यायनीतन्त्रोक्ते त्रयोदशाध्यायं पठित्वा प्रथमं पठेत् । ततो द्वादशद्वितीयौ तत एकादशतृतीयाविति क्रमेण पठेत् । सप्तमं द्विरिति शापोद्धारः । प्रथमं मध्यमचरित्रं पठित्वा ततः प्रथमतृतीयौ पठेदित्युत्कीलनं इति केरलाः ॥

अथ प्रसंगात्स्तोत्रविधिः । तत्र वाराहीतन्त्रे । 'आधारे स्थापयित्वा तु पुस्तकं वाचयेत्ततः । हस्तसंस्थापनाद्देवि भवेदर्धफलं यतः । यावन्न पूर्यतेऽध्यायस्तावन्न विरमेत्पठेत् । यदि प्रमादादध्याये विरामो भवति प्रिये । पुनरध्यायमारभ्य पठेत्सर्वं मुहुर्मुहुः । अनुक्रमात्पठेद्देवि शिरःकम्पादिकं त्यजेत्' । तथान्यत्र । 'प्रणवं पूर्वमुच्चार्य स्तोत्रं वा संहितां पठेत् । अन्ते च प्रणवं दद्यादित्युवाचादिपूरुषः । नमोन्तं च पठेत्स्तोत्रं वाचकं तु प्रशस्यते' । यत्तु कीलके 'शनैस्तु जाप्यमानेस्मिंस्तोत्रे संपत्तिरुच्चकैः' इति तदत्युच्चैः पाठनिषेधकं त्वरानिषेधकं च । 'पुस्तके वाचनं शस्तं सहस्रादधिकं यदि । ततो न्यूनस्य तु भवेद्वाचनं पुस्तकं विना' । विनापीत्यर्थः । 'ऋषिं छन्दोङ्गं विन्यस्य पठेत्स्तोत्रं समाहितः । स्तोत्रे न दृश्यते यत्र प्रणवं न्यासमाचरेत् । भीष्मपर्वणि या गीता सा प्रशस्ता कलौ युगे । विष्णोः सहस्रनामाख्यं स्तोत्रं पापप्रणाशनम् । गजेन्द्रमोक्षणं चैव तथा कारुण्यकस्तवः । नारसिंहं तथा स्तोत्रं स्तोत्रं श्रीरामसंज्ञकम् । देव्याः सप्तशतीस्तोत्रं तथा नामसहस्रकम् । श्लोकाष्टकं नैलकण्ठं शैवं नाम सहस्रकम् । त्रिपुरायाः प्रसादाख्यं सूर्यस्य स्तवराजकम् । पैत्रोरुचिस्तवो यश्च इन्द्राक्षीस्तोत्रमेव च । वैष्णवं च महालक्ष्म्याः स्तोत्रमिन्द्रेण भाषितम् । भार्गवाख्येन रामेण शस्तान्यन्यानि कारणात् । शुद्धेनाचलचित्तेन पठितव्यं प्रयत्नतः । न

स्वयं लिखितं स्तोत्रं नाब्राह्मणलिपिं पठेत् । नच स्वयं कृतं स्तोत्रं तथान्येव च यत्कृतम् । यतः कलौ प्रशंसन्ति ऋषिभिर्भाषितं तु यत्' । क्वचित्तु 'अष्टम्यां वा चतुर्दश्यां कृष्णायां तु समाहितः । ददाति प्रतिगृह्णाति नान्यथैषा प्रसीदति' इति कीलकग्रन्थे । सप्तशतीग्रन्थे शिवशापतदुद्धारावुक्तौ । तथा वैकृतिकरहस्ये । 'ततः कृताञ्जलिर्भूत्वा स्तुवीत चरितैरिमैः । एकेन वा मध्यमेन नैकेनेतरयोरिह । चरितार्धं तु न जपेज्जपंश्छिद्रमवाप्नुयात्' इति । 'अर्गलां कीलकं चादौ जपित्वा कवचं पठेत् । जपेत्सप्तशतीं पश्चात्क्रम एष ऋचोदितः । इति(केरल)स्तोत्रपठनविधिः ॥

॥ श्रीर्जयति । सामविधिब्राह्मणेऽथ यः कामयते पुनर्न प्रत्याजायेयमित्यपुनर्भवमधिकृत्य तदनुसंधेयोस्याः मन्त्र उक्तः । 'रात्रिं प्रपद्ये पुनर्भूं मयोभूं कन्यां शिखण्डिनीं पाशहस्तां युवतीं कुमारिणीमादित्यः श्री चक्षुषेवान्तः प्राणाय सोमो गन्धायापः स्नेहाय मनोनुज्ञाय पृथिव्यै शरीरमिति' । अस्य रात्रौ जपमात्रात्सिद्धिः । अस्य फलं मरणकालज्ञानं परमफलं तु मोक्ष इति तत्रैवोक्तम् । अयं च देवीविषयो मन्त्रः । कन्यां कुमारिणीमित्यत्र प्रत्यभिज्ञानात् । रात्रिं तद्रूपाम् । 'अस्यास्तनुस्तमोद्वारा निशादिवसनाशिनी' इति देवीमुपक्रम्य हरिवंशोक्तेः । पुनर्भूः असुरवधार्थं नानावतारग्रहणात् । अतएव मयोभूः प्राणिनां सुखदात्री । कन्या अजातपुंस्पर्शरतिरधृष्या चातिसुन्दरीति शिवोक्तेः । शिखण्डिनी मयूरपिच्छभूषणा मयूरकलापध्वजा च 'भूषणैस्तु मयूराणामङ्गदाद्यैश्च भास्वरा । ध्वजेन शिखिवर्हाणामुच्छ्रितेन समावृता' इति हरिवंशोक्तेः । पाशहस्ता असुरबन्धनार्थं । तथा युवतिः नित्यं बाल्यवार्धकावस्थारहिता । कंसमोहनावतारे क्षणं शैशवाभिनयेपि तदानीमेव यौवनाविष्करणोक्तेः । एवंभूताया रात्र्यभिमानिदेवतायाः प्रभावादादित्यश्चक्षुषे चक्षू रक्षितुं भवतु यत्नवान् भवत्विति क्रमेणार्थः । मनस्तदधिष्ठात्री देवता अनुज्ञाय अनुज्ञामानं रक्षितुं भवतु । पृथिव्यै शरीरमित्यस्य विभक्तिविपरिणामेन पृथिवीशरीरायेत्यर्थः ॥

अथास्य सप्तशतीत्वव्यवहारप्रयोजकसप्तशतहोममन्त्रविभागो दर्शितः कात्यायनीतन्त्रे । 'मार्कण्डेयऋषिः प्रोक्तो प्रथमश्लोकतः प्रिये । व्योमादिवर्णसंभूतो द्वितीयः स्वरसंयुतः । व्योम दकारस्तस्यादिः सकारः द्वितीयः स्वर आकार इत्यर्थः । 'नृपान्तं प्रवदेन्मन्त्राः सर्वे चाष्टादश प्रिये । वैश्योवाच ततः श्लोका व्योमाद्याः पञ्च मन्त्रकाः । व्योमाद्य आद्यो येषामिति मृगनयनावत्समासः । नृपस्योक्तिर्मान्तवर्णो द्वादशस्वरसंयुतः । मान्तवर्णो यः सच द्वादशस्वरेण एकारेण युक्त आदिभूत इत्यर्थः । 'सकारो विन्दुसंयुक्तश्चान्ते स्तो मनुरीदृशौ' २६ मनुर्मनू इत्यर्थः । वैश्योवाच पुनर्देवि स्वरैकादशआदितः । स्वरैकादशः एकारः । वह्निबीजं बिन्दुयुक्तमन्ते स्यान्मनुपंचकम् । वह्निबीजं रमिति २० 'मार्कण्डेयऋषिप्रोक्तं मन्त्रत्रयमुदाहृतम् । तादिवर्णं च भुवनस्वरयुग्वारुणं परम्' भुवनस्वर औं तद्युक्तं वारुणं वौइति । 'राजोवाचेतिषण्मन्त्रा भादितान्ताः शुभानने । अथोवाच ऋषिं ज्ञानमस्तीत्यादि सुरेश्वरि । सर्वेश्वरेश्वरी चान्ते मन्त्रा वै द्वादश स्फुटाः । राजोवाचेति भगवानादिरन्ते विदांवर । मन्त्रत्रयमिदं ख्यातं ततो ऋषिरुवाचह । नित्यैव सा यदा चादौ प्रभुरन्तेऽष्टमन्त्रकः । ब्रह्मोवाच ततश्चोक्त्वा त्वं स्वाहादिमहासुरैः । अन्ते पञ्चदशैते स्युर्मन्त्राश्च परमेश्वरि' । एवं स्तुत्यादिऋष्युक्तिर्वान्त मन्त्राश्च सप्त वै । ततो भगवदुक्तिस्तु भवेदादिमनुद्वयम् । वक्षितेति च ऋष्युक्तिर्मन्त्रौ द्वौ परमेश्वरि । ऋष्युक्तिश्च तथेत्यादिमन्त्रद्वयमुदाहृतम् । सर्वे श्लोकास्त्विहाध्यायेऽष्टयुक्सप्तति च क्रमात् । मध्ये चतुर्विंशतिका अर्धमन्त्राः प्रकीर्तिताः । सर्वाश्चाहुतयो ज्ञेयाश्चतुरुत्तरकं शतम् । उवाचान्तास्त्वत्र बोध्या मन्त्रा भुवनसंख्यकाः १४ ॥ इति प्रथमचरितनिर्णयोनाम विंशतिमं पटलम् २० ॥ १ ॥

ईश्वर उवाच । द्वितीये ऋष्युवाचेति नवषष्ट्याहुतिः क्रमात् ॥ २ ॥ ततस्तृतीयेऽध्याये तु ऋषिरुवाचदेशिके । पञ्चत्रिंशच्च वै मन्त्राः श्लोका ज्ञेया वरानने । देव्युवाचेति मन्त्रान्ते मन्त्रश्लोको मतः प्रिये । ऋषिरुक्तिः पुनः श्लोकाः पञ्च मन्त्राः सनातनाः । एवमाहुतयस्तत्र चत्वारिंशच्चतुर्युताः ॥ ३ ॥ चतुर्थे क्रमतो देवि ऋष्युक्तिः षट्च विंशतिः । पुनस्तथैव ऋष्युक्तिः श्लोकौ द्वौ मन्त्ररूपिणौ । एवं स्तुतेति मन्त्रोयमतिगुह्यं सुपाचनम् । देव्युवाचेति व्रियतां मन्त्रोयं षोडशाक्षरः । देवा ऊचुस्ततश्चोक्त्वा भगवत्या कृतं वदेत् । मन्त्रोयं शतवर्णाद्यो द्वादशोत्तरयुक् पुनः । ततो ऋषिरुवाचेति इतिप्रसादितेतिवै । चतुःसंख्यास्तु ते श्लोका मंत्रास्तावंत एवहि । श्लोकाश्चतुर्थेऽध्याये तु षट्त्रिंशत्परमेश्वरि । अर्धमन्त्रद्वयेनैव चत्वारिंशद्वियुक्पुनः । एवं मध्यचरित्रस्य पंचाशच्च शतोत्तरम् । तथा पंचायुतं मन्त्रा महालक्ष्म्या विभेदतः । इति मध्यमचरित्रमन्त्रनिर्णय एकविंशतितमं पटलम् २१ ॥ ४ ॥

ऋषिरुवाचेति पुरा विष्णुमायां प्रतुष्टुवुः । षण्मन्त्राः श्लोकरूपास्ते देवा ऊचुस्ततः परम् । नमोदेव्यादितः श्लोकास्त्रिशद्विनम्रमूर्तिभिः । विष्णुमायादितो भ्रान्तिरूपांते त्रीणि षष्टियुक् । अवतारे पृथङ्मन्त्रास्तेषां त्रिषष्टिराहुतिः । चितिरूपेण मन्त्रेण आहुतित्रयमुच्चरेत् । एवं मन्त्रा अशीतिस्ते ऋषिरुवाच इत्यथ । एवं स्तवादियुक्तानां त्वया कस्मान्न गृह्यते । मन्त्राः सप्तदशैते तु ऋष्युक्तिश्च निशम्येतिवै । इत्यादित्रितयैर्मन्त्रैः शुद्धभेदाः प्रकीर्तिताः । अथ दूतउवाचेति देविदैत्येश्वरः परम् । इत्यादिनवमन्त्राश्च पुना ऋषिरुवाचह । इत्युक्तेत्यादिमन्त्रेणैकेन च सरस्वति । देव्युवाचेतिश्लोकास्तु चत्वारो मन्त्रभेदतः । दूतोवाक्येति पुनरप्यवलिप्तासि इत्यथ । मन्त्राश्चत्वारि विज्ञेया देव्युवाच ततः परम् । एवमेतद्बली शुंभो सच युक्तं करो तु यत् । इति मन्त्रद्वयं श्लोकांवङ्मन्त्राश्च ते नव । एकोनत्रिंशच्च शतादधिका मन्त्ररूपकाः । इति पञ्चमोध्यायः ॥ ५ ॥ ऋषि-

रुवाचेत्याकर्ण्य श्लोकाश्चत्वार ईरिताः । पुना ऋषिरुवाचेति तेनाशस्तस्ततः परम् । मन्त्रत्रयमिदं प्रोक्तं देव्युवाचेति वै तदा । दैत्येश्वरेण प्रहितो एकमन्त्रः प्रकीर्तितः । ततश्च ऋषिरुवाच इत्युक्तः सोऽभ्यधावत । इत्यादि द्वादशश्लोकभेदास्ता देवताहुतयः क्रमात् इति षष्ठोऽध्यायः ॥ ६ ॥ ऋष्युक्तिराज्ञ इत्यादित्रयोविंशतिमातरः । ऋषिरुवाच तावानीतौ मातृभेदद्वयं क्रमात् । सप्तविंशत्यत्र देवि भवन्त्याहुतयः क्रमात् । अत्राध्यायद्वये देवी धूम्राक्षी तु प्रकीर्तिता । इति सप्तमोऽध्यायः॥७॥ ऋषिश्चण्डे च निहत इत्यध्यायावसानकम् । त्रिषष्ट्याहुतयः प्रोक्ता एका अर्धाहुतिः क्रमात् । रक्ताक्षीदेवता अष्टौ महाशक्तयः प्रकीर्तिताः । इत्यष्टमोध्यायः ॥ ८ ॥ राजाविचित्रमित्यादिश्लोकद्वयमुदाहृतम् । ऋषिश्चकार कोपं हि इत्यादिश्लोकरूपतः । एकचत्वारिंशदिति आहुतिर्नवमे शुभे । इति नवमोध्यायः ॥ ९ ॥ ऋषिर्निशुम्भं निहतमित्यादिद्वयमत्रकम् । ततो देवीतिमन्त्रौ द्वौ एकैवाहंमनूत्तमौ । पुनर्देव्येकमन्त्रेण व्यक्तमन्त्रा उदीरिताः । ऋषिस्ततः प्रववृते सार्धद्वाविंशतित्रयम् । द्वात्रिंशन्मनवस्तत्र एको ह्यर्धमनुर्मतः । दशमे सिंहमासीना शूलपाशविधारिणी । मुख्या चतुर्भुजा बाणचापहस्ता शुभेक्षणा । इति द्वाविंशतितमं पटलम् ॥ २२ ॥ इति दशमोऽध्यायः ॥ १० ॥

अथैकादशोध्यायः । ऋषिः सुमेधा विख्यातः प्रोक्तो देव्या हते शुभे । चतुस्त्रिंशत्तथा श्लोका मन्त्रास्तत्संख्यकाश्च ते । ततो देव्येकमन्त्रेण वरदाहं सुरेश्वरि । देवा ऊचुस्तथा सर्वबाधाप्रशमनं तथा । श्लोकैनैकेन देवेशि देव्युवाच ततः परं । वैवस्वतेन्तरे प्राप्तेत्यादिश्लोकाश्चतुर्दश । सार्धा सर्वाहुतिर्देवि पञ्चाशत्पञ्चसंयुता । वैष्णवी देवतात्यत्र महागरुडवाहिनी । इत्येकादशोध्यायः ॥ ११ ॥ देव्युवाचेति च तत एभिः स्तवैश्च मां तथा । दूरेत्यर्धेन सहिता अष्टाविंशतिरूपकाः । ततश्च ऋषिरुवाच इत्युक्त्वा श्लोकमादितः । अर्धयुङ्नवभिः श्लोकैर्मन्त्रास्तत्संख्यका मताः । एवं तु द्वादशेध्याये एकचत्वारिंशदाहुतयः इति द्वादशोऽध्यायः ॥ १२ ॥ ततस्त्रयोदशेध्याये ऋषिरुवाच इत्यथ । एतत्ते कथितं भूपेत्यादि सार्धत्रयं मनुः । मनुचतुष्टयमित्यर्थः । मार्कण्डेय उवाचेति इति तस्य वचोदितः । श्लोकषट्कं ततो देवी उवाच परमेश्वरी । यत्प्रार्थ्यते त्वया भूप श्लोकैनैकेन तोषकृत् । मार्कण्डेय उवाचेति ततो वक्ष्ये मनुत्रयम् । देव्युवाच पुनश्चैव स्वल्पश्लोकत्रयेण वै । अर्धानामेव मन्त्रत्वाद्भवत्यत्र षडाहुतिः । षट्संख्याहुतिरित्यर्थः । ततो मार्कण्डेय इति इति दत्वा तयोरिति । द्वौ मन्त्रौ पुनरुच्चार्य सावर्णिर्भविता मनुः । एकोनत्रिंशत्संख्याकाहुतिरत्र विधीयते । एवं त्रयोदशेऽध्याये होमतर्पणकर्मणि । शतानि सप्तसंख्यानि तव प्रोक्तानि शैलजे । सकारादिनकारान्तो मनुः परमदुर्लभः । स संप्रदायविधिना ज्ञातव्यो मम वल्लभे । अन्यथा विकलो मन्त्रः सत्यं सत्यं मयोदितम्' तत्र मन्त्रे स्वाहान्ता एते मन्त्रा नमोन्ताः तर्पणे तर्पयाम्यन्ताः इति त्रयोविंशतितमं पटलम् ॥ २३ ॥

केचित्तु मन्त्रं पठित्वा ततत्तदध्यायदेवतायै नम इति पूजनमित्याहुः । एवं होमाशक्तौ जयन्तीमन्त्रेणैव होम उक्तोऽन्यत्र पूजा चेति दिक् । कात्यायनीतन्त्रोक्तमन्त्रविभाग एवाभियुक्तैः सप्टीकृत्य दर्शितस्तथा हि । 'अष्टसप्तत्युत्तराणां श्लोकानां शतपञ्चकम् । प्रोक्तं सप्तशतीस्तोत्रं तत्सप्तशतसंख्यया ॥१॥ विभज्य जुहुयान्मन्त्रमिति कात्यायनीमतम् । मार्कण्डेय उवाचैकः सावर्णाद्यास्ततः परम् ॥२॥ श्लोकमन्त्राः सप्तदश अर्धश्लोकात्मकस्ततः । एकोनविंशदेवं स्युर्वैश्योक्तिर्विंशतिस्तथा ॥३॥ पुनरर्धं पुनः श्लोकत्रयमर्धं पुनर्भवेत् । पञ्चविंशतिरेवं स्याद्राजा षड्विंशतिस्ततः ॥४॥ अर्धश्लोकात्मकौ मन्त्रौ मन्त्रसंख्या प्रकीर्तिता ॥५॥ पुनरर्धं पुनः श्लोकत्रयमर्धं पुनर्भवेत् । मार्कण्डेयः पुनश्चार्धश्लोकः श्लोकात्मकः पुनः ॥६॥ अर्धश्लोकात्मको मन्त्रो राजार्धश्लोकमन्त्रकः । मन्त्राश्चत्वारिंशदेवं श्लोकमन्त्रचतुष्टयम् ॥७॥ पुनरर्धमृषिश्चार्धश्लोकमन्त्राः पुनर्दश । पुनरर्धः पुना राजा एकोना षष्टिरुच्यते ॥८॥ पुनरर्धं पुनः श्लोकः पुनरर्धं पुनर्ऋषिः । पुनरर्धं पुनः श्लोकाः षण्मन्त्राः पुनरर्धकम् ॥९॥ निद्रां भगवतीं विष्णोरतुलां तेजसः प्रभुः । इत्येव पाठो मन्त्राणामेकसप्ततिरुच्यते ॥ १० ॥ ब्रह्मार्धश्लोकमन्त्रोथ श्लोकमन्त्रास्त्रयोदश । अर्धश्लोक ऋषिश्चार्धश्लोकः श्लोकास्तु पञ्च वै ॥११॥ पुनरर्धं तु मन्त्राणां सपञ्चनवतिः स्मृता । भगवानर्धमन्त्रेर्धे ऋषिश्लोकार्धकं पुनः ॥१२॥ श्लोकः पुनर्ऋषिश्लोकद्वयमन्त्रद्वयं भवेत् । श्लोकानामष्टसप्तत्या चतुर्भिरधिकं शतम् ॥१३॥ अध्यायादावेव ऋषिरुवाचेति सकृन्मनुः । अष्टषष्टिमिताः श्लोकास्तावन्तो मनवः स्मृताः ॥१४॥ एकोनसप्ततिः सर्वेऽध्याये मन्त्रा द्वितीयके । आदावृषिरुवाचैकः पञ्चविंशत्ततः परम् ॥१५॥ निहन्यमानाद्याः श्लोका मुखरागाकुलाक्षरम् । इत्यन्ता देव्युवाचैको गर्जगर्जेति चापरः ॥१६॥ श्लोका ऋषिरुवाचेति पुनश्च श्लोकपञ्चकम् । चतुश्चत्वारिंशदेवं सर्वे मन्त्रास्तृतीयके ॥१७॥ भगवत्या कृतं सर्वमित्यर्धश्लोकमन्त्रकः । यदयं निहतश्लोकद्वये देवी ततः परम् ॥१८॥ ऋषिश्लोकास्तु चत्वारो मनवः परिकीर्तिताः । षट्त्रिंशच्छ्लोककेऽध्याये चत्वारिंशद्द्वयाधिकम् ॥१९॥ षट्सप्ततिश्लोकयुक्तेऽध्याये मन्त्रास्तु पञ्चमे । एकोनत्रिंशदधिकं शतं कात्यायनीमतम् ॥२०॥ एको ऋषिरुवाचेति पुरा शुंभादयश्च षट् । श्लोकमन्त्रास्ततो देवा ऊचुश्चैवाष्टमो मनुः ॥२१॥ नमो देव्यादिकाः श्लोकाः पञ्चमन्त्राः प्रकीर्तिताः । त्रयोदशैवं मन्त्रास्तु या देवीत्यादयोपि च ॥२२॥ एकविंशतिकाः श्लोका भ्रान्त्यन्तास्तेषु मन्त्रकाः । प्रतिश्लोकं त्रयो मन्त्रा ज्ञेयाः सर्वे त्रिषष्टिकाः ॥२३॥ पुनः श्लोकात्मको मन्त्रस्त्रिमन्त्रः श्लोककः पुनः । त्रयोविंशच्छ्लोककेषु मन्त्रा वै सप्तषष्टिकाः ॥२४॥ या देवी सर्वभूतेषु विष्णुमायेति शब्दिता । नमस्तस्यै इति प्रोक्तो विंशत्यक्षरको मनुः ॥२५॥ नमस्तस्यै इति प्रोक्तो द्वितीयश्चतुरक्षरः । अष्टाक्षरस्तृतीयोपि नमस्तस्यै नमोनमः ॥२६॥ एवं द्वात्रिंशतिश्लोकैर्ज्ञेयं मन्त्रत्रयं बुधैः । पूर्वैस्त्रयोदशैर्मन्त्रैः सहाशीतिरुदाहृता

॥२७॥ स्तुता सुरेति च श्लोकद्वयं चैव पुनर्ऋषिः। पुनः सप्तदशश्लोका ऋषिः श्लोकत्रयं ततः ॥२८॥ दूतश्चैव नवश्लोका ऋषिरेकोम्बिका ततः। एक इत्यस्यैकश्लोक इत्यर्थः। चतुःश्लोकी पुनर्दूतश्चतुःश्लोकी पुनः शिवा ॥२९॥ श्लोकद्वयं मिलित्वा तु चत्वारिंशन्नवाधिकम्। अशीत्यापि च संयोगे एकोनत्रिंशताधिकम् ॥३०॥ शतमेवं तु विज्ञेयमाहुतीनां च पञ्चमे। विंशतिः श्लोकसंयुक्ते षष्ठेऽध्याये प्रकीर्तिताः ॥३१॥ सर्वे श्लोका मन्त्ररूपा देव्यैकाथ ऋषित्रयम्। चतुर्विंशतिमन्त्राणामित्येवं परिकीर्तिताः ॥३२॥पञ्चविंशति श्लोकयुक्तेऽध्याये मन्त्रास्तु सप्तमे। सर्वे मन्त्राः श्लोकरूपा ऋष्युवाच द्वयं ततः॥३३॥सप्तविंशतिरेवं तु मन्त्रसंख्या प्रकीर्तिता। सार्धैकषष्टिश्लोकाढ्येष्टमेध्याये प्रकीर्तिता ॥३४॥ एकषष्टिश्लोकमन्त्रा अन्तेर्धश्लोकमन्त्रकः। आदावेको ऋषिश्चैव त्रिषष्टिर्मन्त्रसन्ततिः॥३५॥ एकोनचत्वारिंशद्भिः श्लोकैर्युक्ते समीरिताः। अध्याये नवमे मन्त्रास्तावन्तोथ मनुद्वयम् ॥३६॥ राजा ऋषिश्चेति चैकचत्वारिंशन्मनुस्त्वयम्। सार्धसप्तान्वितैर्विंशश्लोकैस्तु दशमेन्विते ॥३७॥ सप्तविंशतिमन्त्रास्तु श्लोकरूपास्ततोन्तिमः। अर्धश्लोकात्मको मन्त्रो ऋष्युवाचद्वयं तथा ॥३८॥ देव्युवाचद्वयं चैव द्वात्रिंशन्मन्त्रसंग्रहः। श्लोकानां सार्धपञ्चाशज्ज्ञेयमेकादशे स्फुटम्॥३९॥पञ्चाशच्छ्लोकमन्त्रास्तु अन्तेर्धश्लोकमन्त्रकः। शाकम्भरीति विख्यातिं तदा यास्याम्यहं भुवि ॥४०॥ एषोर्धमन्त्र इत्याहुः केचिदत्र विचक्षणाः। देवीद्वयमृषिश्चैको देवा एकमितीरितम्॥४१॥पञ्चाधिकास्तु पञ्चाशन्मन्त्रा ज्ञेयाः परिस्फुटम्। अष्टत्रिंशच्छ्लोकयुक्तेप्यध्याये द्वादशात्मके॥४२॥चत्वारिंशच्च एकश्च मन्त्रास्तत्राहुतिद्वयम्। अर्धश्लोकात्मकश्लोकाः सप्तत्रिंशन्मिता ऋषिः ॥४३॥ देव्युवाचेति चैकैकमेवं संख्या स्फुटोदिता। त्रयोदशे सार्धसप्तदशश्लोकाः प्रकीर्तिताः॥४४॥ऋषिरुवाचेत्यारभ्य भोगस्वर्गापवर्गदा। इत्यन्ताः पञ्चमन्त्रास्ते मार्कण्डेयस्ततः परम्॥४५॥इति तस्य वचः श्रुत्वेत्यर्धमन्त्रस्तथा स्मृतः। श्लोकमन्त्रास्ततो ज्ञेयाः पञ्चैवाप्यर्धपद्यकम्॥४६॥देव्युवाचेति मन्त्रोयं ततः श्लोकस्तु मन्त्रकः। मार्कण्डेयस्ततो मन्त्रः श्लोकौ मन्त्रद्वयं ततः ॥४७॥ ततो देवी षडर्धानि सप्त मन्त्राः प्रकीर्तिताः। मार्कण्डेयस्ततो मन्त्रद्वयं मन्त्रत्रयं स्मृतम्॥४८॥आवृत्त्या त्वधिको मन्त्रः सावर्णिर्भविता मनुः। एकोनत्रिंशत्संख्याका मन्त्रा अत्र स्मृता बुधैः॥४९॥' केचित्तु 'एकादशार्धाहुतयो द्वादश श्लोकमन्त्रकाः। उवाचवचनैः षड्भिर्मन्त्रास्ते उक्तसंख्यकाः' इत्याहुः ॥५०॥ तत्र कात्यायनीतन्त्रविरोधः स्पष्ट एवेति दिक् ॥

अथ वाराहीतन्त्रे। 'चण्डीपाठफलं देवि शृणुष्व गदतो मम। एकावृत्त्यादिपाठानां प्रत्यहं पठतां नृणाम्॥१॥संकल्प्य पूज्यां संपूज्य न्यस्याङ्गेषु मनून्सकृत्। पश्चाद्बलिप्रदानेन फलमाप्नोति मानवः ॥२॥ न्यासप्रकारश्च नवार्णविधाने उक्तः। 'उपसर्गोपशान्त्यर्थं त्रिरावृत्तं पठेन्नरः। ग्रहदोषोपशान्त्यर्थं पञ्चावृत्तं वरानने ॥३॥ महाभये समुत्पन्ने सप्तावृत्तमुदीरयेत्। नवावृत्त्या भवेच्छान्तिर्वाजपेयफलं लभेत्॥४॥' मुच्येत्प्राणातिजाड्यादितिवा। राजवश्याय भूत्यै च रुद्रावृत्तमुदीरयेत्। अर्कावृत्त्या कामसिद्धिर्वैरिनाशश्च जायते॥५॥मन्वावृत्त्या रिपुर्वश्यस्तथा स्त्री वश्यतामियात्। सौख्यं पञ्चदशावृत्त्या श्रियमाप्नोति मानवः ॥६॥ कलावृत्त्या पुत्रपौत्रधनधान्यागमं विदुः। राजभीतिविनाशाय वैरस्योच्चाटनाय च॥७॥कुर्यात्सप्तदशावृत्तं तथाष्टादशकं प्रिये। महारणविमोक्षाय विंशावृत्तं पठेन्नरः॥८॥ पञ्चविंशावर्तनाच्च भवेद्बन्धविमोक्षणम्। संकटे समनुप्राप्ते दुश्चिकित्स्यभये सदा ॥९॥ जातिध्वंसे कुलोच्छेदे आयुषो नाश आगते। वैरिवृद्धौ व्याधिवृद्धौ धननाशे तथा क्षये ॥१०॥ तथैव त्रिविधोत्पाते तथा चैवातिपातके। कुर्याद्यत्नाच्छतं वृत्तं ततः संपद्यते शुभम्॥११॥ विपदस्तस्य नश्यन्ति ततो याति परां गतिम्। श्रियो वृद्धिः शतावृत्त्या राजवृद्धिस्तथा परा ॥१२॥ मनसा चिन्तितं देवि सिध्येदष्टोत्तराच्छतात्। शताश्वमेधयज्ञानां फलमाप्नोति सुव्रते ॥१३॥ सहस्रावर्तनाल्लक्ष्मीरावृणोति स्वयं स्थिरा। प्राप्तो मनोरथान्कामान्नरो मोक्षमवाप्नुयात्॥१४॥यथाश्वमेधः क्रतुषु देवानां च यथा हरिः। स्तवानामपि सर्वेषां तथा सप्तशतीस्तवः॥१५॥'उत्पत्तिचरितस्तोत्ररूपत्रितयात्मकत्वात्। 'अथवा बहुनोक्तेन किमन्येन वरानने। चण्ड्याः शतावृत्तपाठात्सर्वाः सिध्यन्ति सिद्धयः॥१६॥'एतास्वेव कामनासु तत्तत्संख्याकस्तोत्रपाठे विशेष उक्तो मरीचिकल्पे। 'रात्रिसूक्तं जपेदादौ मध्ये सप्तशतीस्तवम् ॥१७॥ प्रान्ते तु जपनीयं वै देवीसूक्तमिति क्रमः। एवं संपुटितं स्तोत्रं पूर्वोक्तफलदायकम्॥१८॥'अत्र रात्रिसूक्तं देवीसूक्तं च वैदिके इति केचित्। रात्रिसूक्तं प्रथमाध्यायस्थं विश्वेश्वरीसूक्तं। देवीसूक्तं नमो देव्या इत्यादि पञ्चमाध्यायस्थमित्यपरे। अन्योपि प्रकारस्तत्रोक्तः। 'कृष्णाष्टमीं समारभ्य यावत्कृष्णचतुर्दशी। वृध्यैकोत्तरया जाप्यं पूर्वसंपुटितं तु तत्। एवं देवि मया प्रोक्तः पौरश्चरणिकः क्रमः। तदन्ते हवनं कुर्यात्प्रतिश्लोकेन पायसा'। प्रतिश्लोकेनेति कात्यायनीतन्त्रोक्तमन्त्रोपलक्षणम्। 'रात्रिसूक्तं प्रतिऋचं तथा देव्याश्च सूक्तकं' इति। पक्षान्तरे। ऋचमित्युक्तमन्त्रोपलक्षणम्। 'हुत्वान्ते प्रजपेत्स्तोत्रमादौ पूजादिकं मुने' इति।

अपरश्च। 'अथातः संप्रवक्ष्यामि नवरात्रविधानकम्। जपेदेकोत्तरां वृद्धिं दिनानि नव संख्यया। नवाक्षरीविधानेन संपूज्याथ विचक्षणः। सहस्रं प्रजपेन्मन्त्रं प्रत्येकं च यथाविधि। मध्ये चैकोत्तरां वृद्धिं जपेद्देव्याः स्तवं मनुम्। हुत्वा दशांशतो होमं तत्र सिद्धिं समाप्नुयात्'। अपरश्च 'जपेद्बिल्वं समाश्रित्य मासमेकं तु यो नरः। हुत्वा बिल्वदलैर्मासं मधुरत्रययोगतः। हुत्वा दशांशतो वापि कमलैः क्षीरसंयुतैः। धनदेन समां लक्ष्मीं प्राप्नुयादुत्तमां ध्रुवम्। हरगौरीतन्त्रे 'श्रीकामः पुष्टिकामो वा सृष्टिमार्गक्रमेण तु। जपेच्छक्रादिमारभ्य शुम्भदैत्यवधावधि। आदिमारभ्य प्रजपेत्पश्चाच्छेषं समाचरेत्। शान्त्यादिकामः

सर्वत्र स्थितिमार्गक्रमेण तु । सावर्णिः सूर्यतनयः सावर्णिर्भविता मनुः । संकटे चान्त्यमारभ्य पश्चादादिं समापयेत्' । ब्राह्मणद्वारा करणेतु विशेष उक्तस्तत्रैव । 'पञ्च स्वर्णाः शतावृत्ते लक्षावृत्ते तु तत्त्रयम् । पञ्चावृत्ते स्वर्णमेकं त्रिरावृत्ते तदर्धकम् । एकावृत्ते पादमेकं दद्याद्वा शक्तितो बुधः' इति ॥

अथ ऋष्यादि ॥ प्रथमचरित्रस्य ब्रह्मा ऋषिः । गायत्रीच्छन्दः । महाकाली देवता । नन्दा शक्तिः । रक्तदन्तिका बीजम् । अग्निस्तत्त्वम् । महाकालीप्रीत्यर्थे जपे विनियोगः । मध्यमचरित्रस्य विष्णुर्ऋषिः । उष्णिक्छन्दः । महालक्ष्मीर्देवता । शाकम्भरी शक्तिः । दुर्गा बीजम् । वायुस्तत्त्वम् । महालक्ष्मीप्रीत्यर्थे जपे विनियोगः । अन्त्यचरित्रस्य शंकर ऋषिः । अनुष्टुप् छन्दः । महासरस्वती देवता । भीमा शक्तिः । भ्रामरी बीजम् । रविस्तत्त्वम् । सरस्वतीप्रीत्यर्थे जपे विनियोगः । शतावृत्तादौ कामनाभेदेन होमभेद उक्तः वाराहीतन्त्रे । 'हुनेत्प्रदीपिते वह्नौ तिलधानादितण्डुलान् । धर्मार्थकामसंवृद्धौ मोक्षार्थी पायसं हुनेत् । मारणे मोहने चैव तथोच्चाटनकर्मणि । हुनेन्मांसं त्रिमध्वाक्तं मोहने मधुपायसम् । स्तम्भने मातुलफलं वश्ये तु सितसर्षपान् । धर्मार्थकाममोक्षार्थं पूर्वाशाभिमुखो हुनेत् । मोहने मारणे चैव हुनेद्वै दक्षिणामुखः । उच्चाटने उत्तरास्य इत्याह भगवान्भवः' । क्रोडतन्त्रे । 'प्रत्येकावर्तनं देवि हयमेधेन संमितम् । त्रिरावृत्त्या लभेत्कामान्पञ्चावृत्त्या रिपूञ्जयेत्' इति सर्वेष्टसिद्धिः । कात्यायनाय विद्महे कन्यकुमारिधीमहि । तन्नो दुर्गिः प्रचोदयात् । इत्येतद्गायत्री यजुर्वेदे ॥

अथ गायत्रीप्रयोगान्तरं कात्यायनीतन्त्रे । पूर्वाह्णे षोडशाङ्गुलमितं चतुरोन्नतं स्थण्डिलं कृत्वा तत्र शुद्धगोघृतेनैकस्मिन्पात्रे रुद्रवर्तिषु त्रयोदश दीपान्प्रज्वाल्य तेषु प्रथमदीपे प्रथमाध्यायदेवतामावाह्य आसनपाद्यादिगन्धदानान्तां पूजां कृत्वा पुष्पसमर्पणसमये वक्ष्यमाणैर्नवभिः श्लोकैः प्रतिश्लोकं पुष्पाणि समर्पयेत् । ततः प्रथमाध्यायसमाप्तौ वक्ष्यमाणश्लोकैः पुष्पाणि समर्प्य धूपदीपौ दत्वा पायसनैवेद्यं दत्वा ताम्बूलं दक्षिणां च दत्वा नीराज्य एकं ब्राह्मणं कुमारीं सुवासिनीं च भोजयेत् । संकल्पयेद्वा । एवं तत्तदध्यायदेवतावाहनादिब्राह्मणभोजनान्तं प्रत्यध्यायं कुर्यात् । अन्ते प्रभूतनैवेद्यादिभिर्महापूजा । अनुग्रहे पूर्वाह्णे समाप्तिः निग्रहे पराह्णे । श्लोकास्तु विश्वेश्वरीं जगद्धात्रीं० स्तुतासुरैः पूर्वमभीष्टसंश्रयात्' 'करोतु सा नः शुभहेतु० २ या सांप्रतं चोद्धतदैत्यतापितैः०' ३ या च स्मृता तत्क्षणमेव हन्ति नः करो तु सा नः शुभहेतुरी० ४ सर्वबाधाप्रशमनं० ५ अत्र वैरिनाशनमित्यत्र रोगनाशनमित्यादूहः । एवं दैत्यतापितैरित्यपि सर्वमङ्गलमाङ्गल्ये० ६ सृष्टिस्थितिविनाशानां० ७ शरणागतदीनार्त० ८ सर्वस्वरूपे सर्वेशे० ९ एतेनुग्रहे नवश्लोकाः । वश्ये तु विशेषः ॐह्रीं रक्तचामुण्डे तूर्णं अमुकं मे वशमानय स्वाहा । अनेन प्रत्यध्यायमाद्यन्तयोः पूजा सर्वान्ते अयुतमन्त्रश्च दशसाहस्रम् । होमयेत्कटुतैलेन रक्तचन्दनराजिकाः। सहस्राहुतिमात्रेण राजानं वशमानयेत् । मधुना चाशोकपुष्पं रात्रौ हुत्वा तु पूर्ववत् । चक्रवर्ती भवेद्द्रव्यश्चण्डीमन्त्रप्रभावतः। अन्ते शतं ब्राह्मणाः कुमार्यश्च भोजनीयाः । धर्मार्थं बिल्वपत्रैः पूजा वश्यार्थं करवीरैर्जपाकुसुमैर्वा पुत्रार्थं तुलसीदलैः पुष्ट्यर्थं पङ्कजैः महाप्रयोगे तु षोडशमाषैः स्वर्णमूर्तिं कृत्वा कलशस्थापनं कृत्वा तदग्रे घटेर्गलयन्त्रे वा दीपं स्थापयेत् । यन्त्रमन्त्यं सर्वसाधारणं स्थापनं महति कार्ये ऊनपञ्चाशद्दिनानि मध्ये चतुर्विंशतिः तदर्धमल्पे ब्राह्मणास्त्रयो महत्कार्ये प्रयोगकर्तारः अल्पे एकः । निग्रहे तु सर्वबाधाप्रशमनमित्यस्याग्रे एवमुक्त्वा समुत्पत्स्येति पठेत् ॥

अत्र प्रयोगे क्वचित्तर्पणमप्युक्तम् । त्रयोदशपात्राणि दुग्धेनापूर्याद्यन्तयोः पुष्पाञ्जलिं दत्वा प्रतिश्लोकं प्रथमाध्यायदेवतां तर्पयामीति प्रयोगेण तर्पयेत् । ततस्त्रयोदशस्वग्निषु क्रमात्तत्तदध्यायदेवता आवाह्य संपूज्य प्रतिश्लोकमोंप्रथमाध्यायदेवतायै नमः स्वाहेति मन्त्रेण पायसेन जुहुयात् । प्रत्यहं यावत्प्रयोगसमाप्ति त्रयोदशब्राह्मणाः सुवासिन्यः कुमार्यः एकोनुपनीतोऽष्टवर्ष एक उपनीतश्च भोजनीयाः । परार्थे प्रयोगे तु सत्याः संतु यजमानस्य कामा इति प्रतिश्लोकं प्रत्यध्यायं वा पठेत् । इदं सर्वत्र परार्थे प्रयोगे तु बोध्यम् । अत्र त्रयोदशपात्रेषु त्रयोदशदीपा इत्युत्तमः पक्षः । एकपात्रे त्रयोदश दीपा इति मध्यमः । एकस्मिन्नेव पात्रे त्रयोदश दीपा इति देवता चेत्यधमः पक्षः । यथोक्तविधदीपेषु अक्षतपुञ्जेषु जलपात्रेषु अग्निषु कुमारीषु वा कार्यः इत्युपदेशः ॥

अथ प्रयोगान्तराणि कात्यायनीतन्त्रोक्तानि ॥ प्रतिश्लोकमाद्यन्तयोः मन्त्रं जपेन्मन्त्रसिद्धिः । सप्रणवमनुलोमव्याहृतित्रयमादौ अन्ते तु विलोमं तदित्येवं प्रतिश्लोकं कृत्वा शतावृत्तपाठे तु शीघ्रसिद्धिः । प्रतिश्लोकमादौ जातवेदस इति ऋचं पठेत् । अपमृत्युनिवारणायाद्यावन्ते शतं त्र्यम्बकमन्त्रं जपेत् प्रतिश्लोकं तन्मन्त्रजप इति वा । प्रतिश्लोकं शरणागतदीनार्तश्लोकं पठेत्सर्वकार्यसिद्धिः । प्रतिश्लोकं करोतु सा नः शुभेत्यर्धं पठेत् सर्वकामाप्तिः । स्वाभीष्टवरप्राप्त्यै एवं देव्या वरं लब्ध्वेतिश्लोकं प्रतिश्लोकं पठेत् । सर्वापन्निवारणार्थं प्रतिश्लोकं दुर्गेति पठेत् । अस्य केवलस्यापि श्लोकस्य कार्यानुसारेण लक्षमयुतं सहस्रं शतं वा जपः । सर्वाबाधेत्यस्य लक्षजपे श्लोकोक्तं फलम् । इत्थं यदा यदेति श्लोकस्य जपे महामारीशान्तिः । ततो वव्रे नृपो राज्यमिति मन्त्रस्य लक्षजपे पुनः राज्यलाभः । हिनस्ति दैत्यतेजांसीत्यनेन सदीपबलिदाने घण्टाबन्धने च बालग्रहशान्तिः । आद्यावृत्तिमनुलोमेन त्रयोदशाध्यायं पठित्वा ततो विपरीतक्रमेण द्वितीयां कृत्वा पुनरनुलोमेनेत्येव दशाध्यायं पठित्वा ततो विपरीतमावृत्तित्रये उक्तेषु प्रकारेषु शीघ्रं कार्यसिद्धिः । सर्वापत्तिनिवारणाय दुर्गेस्मृतेत्यन्तेर्धे ततो वदन्ति

यच्च दूरके इत्यृचं तदन्ते दारिद्र्यदुःखेत्यर्धमेवं कार्यानुसारेण लक्षमयुतं सहस्रं शतं वा जपः । कांसोस्मीत्यृचं प्रतिश्लोकं पठेल्लक्ष्मीप्राप्तिः । मारणार्थमेवमुक्त्वा समुत्पत्येतिश्लोकं पठेत् मारणोक्तावृत्तिभिः फलसिद्धिः । ज्ञानिनामपि चेतांसीति श्लोकस्तस्य जपमात्रेण सद्योमोहनमित्यनुभवसिद्धम् । प्रतिश्लोकं तच्छ्लोकपाठे त्ववश्यम् । रोगानशेषानिति श्लोकस्य प्रतिश्लोकस्य प्रतिश्लोकं पाठे पृथक् जपे वापि विद्याप्राप्तिः । भगवत्या कृतं सर्वमित्यादिद्वादशोत्तरशताक्षरो मन्त्रः सर्वकामदः सर्वापन्निवारणश्च । देवि प्रपन्नार्तिहर इति श्लोकस्य यथाकार्यं लक्षायुतसहस्रशतान्यतमे प्रतिश्लोकं पाठे सर्वापन्निवृत्तिः सर्वकामाप्तिश्च । एषु प्रयोगेषु प्रतिश्लोकं दीपाग्रे केवलमेव वा नमस्कारकरणे शीघ्रं सिद्धिः । प्रतिश्लोकं कामबीजसंपुटितस्यैकचत्वारिंशद्दिनेषु त्रिरावृत्तौ सर्वकार्यसिद्धिः । एकविंशतिपर्यन्तमुक्तरीत्या प्रत्यहं त्रयोदशावृत्तौ वशीकरणम् । मायाबीजपुटितस्य फट्बीजस्य पल्लवसहितस्य सप्तदिनपर्यन्तं त्रयोदशावृत्तौ उच्चाटने सिद्धिः । तादृशस्यैव दिनचतुष्टयमेकादशावृत्तौ सर्वोपद्रवनाशः । एकोनपञ्चाशद्दिनपर्यन्तं प्रतिश्लोकं बीजसंपुटितस्य पञ्चदशावृत्तौ लक्ष्मीप्राप्तिः । प्रतिश्लोकमैंबीजसंपुटितस्य शतावृत्त्या विद्याप्राप्तिः । ॐ ह्रौं नम इत्येतत्संपुटितप्रथमचरित्रस्य प्रतिश्लोकं पाठ आदावन्ते क्रमेण श्लोकान्ते विपरीतक्रमेणेत्यर्थः । एवमग्रेऽपि ह्रींनम इत्येतत्संपुटितो मध्यमचरित्रस्य श्लोकं प्रति वा पाठः । ॐ क्लीं नम इत्येतत्संपुटितोन्त्यचरित्रस्य पाठे शीघ्रं कार्यसिद्धिः । तत्र प्रथमचरिते सौः बीजेन षडङ्गन्यासः । त्रिगुणा तामसीत्यादिषड्भिः रहस्योक्तं ध्यानम् । तत्र प्रथमचरितस्य मार्कण्डेयऋषिः । अनुष्टुप्छन्दः । महाकाली देवता । नन्दाशक्तिः । सौ बीजम् । अग्निस्तत्त्वम् । इष्टसि० । मध्यमचरित्रस्य सुमेधा ऋषिः । अनुष्टुप्छन्दः । महालक्ष्मीर्देवता । शाकम्भरी शक्तिः । ह्रीं बीजम् । वायुस्तत्त्वम् । इष्टसिद्ध्यर्थे० । ह्रींबीजेन षडङ्गं सर्वदेवशरीरे इत्यादिसप्तभिः रहस्योक्तं ध्यानम् । उत्तमचरित्रस्य शिवऋषिः । अनुष्टुप्जगती । महासरस्वती देवता । भीमा शक्तिः । क्लीं बीजम् । सूर्यस्तत्त्वम् । काम्यसि० । क्लीमिति षडङ्गं गौरीदेहात्समुद्भूता इत्यादिरहस्योक्तं ध्यानम् । ऐमिति बीजमाद्यचरितस्येत्यन्यत्र । ह्रीमिति आद्ये श्रीमिति मध्यमे क्लीमित्यन्ते । एतान्येव क्रमेण तत्तद्देवतापूजने इत्यन्यत्र ॥

अत्र सर्वकामनाभेदेन ध्यानभेद उक्तः । वश्ये रक्ततरं ध्यानं पौष्टिके कर्बुरं उच्चाटने धूम्रं मारणे कृष्णं संतानेच्छायां नीलोत्पलदलश्यामं रत्नाकारं ध्यानं सर्वकामदं युद्धकल्पान्ताग्निसमतया ध्यानं जलभयेऽपि ऋष्युक्तं ध्यानं विषादि भये पीयूषवृष्टिपूतपूर्णचन्द्रसदृशं० । एकदिने संपूर्णपाठाशक्तौ पाठोयं विप्रकारकः । एवं क्रमेण सप्तभिर्दिनैरेकावृत्तिः । एकैकं चरित्रमेकस्मिन्दिने इति त्रिभिर्वा केरलाः । एतेषां मूलानि कात्यानीतन्त्रे द्रष्टव्यानि ॥

तन्त्रान्तरे । अस्य सप्तशतीमालामन्त्रस्य । नारायण ऋषिः । गायत्रीछन्दः । शुम्भमर्दिनीरूपा दक्षिणामूर्तिर्देवता । क्लीं बीजम् । सोहं शक्तिः । दुर्गाप्रीत्यर्थे जपेवि० । ॐ यन्मोहो ज्ञानिनोरपि अङ्गुष्ठाभ्यां० हृदये । निद्रां भगवतीं विष्णोस्तर्जनीभ्यां स्वाहा । ॐ जयेति देवाश्च मुदा मध्यमाभ्यां वषट् । ॐ आजघान भुजे सव्ये अनामिकाभ्यां हुं । ॐ हते तस्मिन्महावीर्ये कनिष्ठिकाभ्यां वौषट् । ॐ नीता दिवं रिपुगणा भयमप्यपास्तं करतलकरपृष्ठाभ्यां फडित्युक्तं । संपूर्णसप्तशतीस्तोत्रस्य समार्कण्डेयो ब्रह्मविष्णुशिवात्मा सुमेधाऋषिः । अनुष्टुप्जगत्यौ छन्दसी । चण्डिकामहाकालीमहालक्ष्मीमहासरस्वतीरूपादेवताः । नन्दाशाकम्भरीभीमाः शक्तयः । रक्ताक्षीदुर्गाभ्रामर्यो बीजानि । अग्निवाय्वर्कास्तत्त्वानि । इष्टार्थे विनियोगः । इति ब्रह्मोत्तरखण्डनाम्नि क्वचिल्लिखितम् । अस्य स्तोत्रस्य श्लोकादिडामरतन्त्रेप्युक्तम् । अधुना देवि वक्ष्यामि मालामन्त्रं नवार्णजम् । यस्य स्मरणमात्रेण भुक्तिं मुक्तिं लभेन्नरः ॥१॥ ब्रह्मणा लेकवारेण श्लोकाः प्रोक्ताश्चतुर्दश । समाधिनाम्ना प्रोक्तास्तु श्लोकाश्चाष्टौ द्विवारतः ॥२॥ तथा वार्धेन सहिता भगवानेकमेकधा । त्रिधा प्रोक्ताश्च विबुधैः सार्धं षट्त्रिंशदेव हि । सार्धं न्यूना । षट्त्रिंशदित्यर्थः । देव्या द्वादशधा सार्धैकोनषष्टिः प्रकीर्तिताः । ऋषिणा सप्तविंशत्या चत्वारि च शतानि वै । सार्धाष्टोत्तरकाण्यत्र दूतेनोक्ता द्विधा प्रिये । श्लोकास्त्रयोदशैवात्र प्रोक्ताः प्राणप्रिये मम । एवं सप्तशतीसंख्या श्लोका अष्टौ च सप्ततिः । शतानि पञ्च देवेशि तेषां सप्तशताहुतिः । विष्णुमायादितो भ्रान्तिरूपान्ते आहुतित्रयम् । चितिरूपेण देयं तु आहुतीनां त्रयं प्रिये इति । एवं होमाशक्तौ जयन्तीमन्त्रेणैव होम उक्तोन्यत्र पूजा इति दिक् ॥

अथैतत्स्तोत्रस्य पाठे डामरकल्पोक्तो नवार्णसंपुटीकरणप्रयोगविधिः । तत्रादौ तदुद्धारः । ऐंबीजमादीन्दुसमानदीप्तिं ह्रींसूर्यतेजोद्युतिमद्द्वितीयम् । क्लींमूर्तवैश्वानरतुल्यरूपं तृतीयमानन्त्यसुखाय चिन्त्यम् ॥ १ ॥ चांशुद्धजाम्बूनदकान्तितुर्यं मुंपञ्चमं रक्ततरं प्रकल्प्यम् । डाषष्ठमुग्रार्तिहरं सलीलं यैसप्तमं कृष्णतरं रिपुघ्नम् ॥ २ ॥ विपाण्डुरं लष्टममासि सिद्धं चेधूम्रवर्णं नवमं विशालम् । ऐंह्रींक्लींचामुण्डायैविच्चे इति नवाक्षरो मन्त्रः । नाभिमात्रे जले सहस्रजपात्कविताशक्तिः । अयुतजपात् राजबन्धनसंकटादिभ्यो मोक्षः । अस्मिन्नवाक्षरे मन्त्रे महालक्ष्मीर्व्यवस्थिता । तस्मात्सुसिद्धिः सर्वेषां सर्वदिक्षु प्रदीपकः । अतोत्र सिद्धादिविचारो नास्तीति ज्ञापितम् । नवाक्षरस्य ऋषयो ब्रह्मविष्णुमहेश्वराः । छन्दांस्युक्तानि मुनिभिर्गायत्र्युष्णिगनुष्टुभः । देव्यः प्रोक्ता महापूर्वाः काली लक्ष्मीः सरस्वती । नन्दाशाकम्भरीभीमाः शक्तयश्च मुनिस्मृताः । स्याद्रक्तदन्तिका दुर्गाभ्रामर्यो बीजसंचयः । अग्निवायुभगस्तत्त्वं फलं वेदत्रयोद्भवम् । भगः सूर्यः । सर्वाभीष्टसिद्ध्यर्थं च विनियोग उदाहृतः ।

ऋषिच्छन्दोदैवतानि शिरोमुखहृदि न्यसेत् । शक्तिबीजानि स्तनयोस्तत्वानि हृदये पुनः । मन्त्राणां पल्लवो वासो मन्त्राणां प्रणवः शिरः । शिरःपल्लवसंयुक्तो मन्त्रः कामदुघो भवेत् । नमोन्तः शान्तिके पुष्टौ प्रणिपाते च कीर्तितः । वत्साकर्षण-होमेषु स्वाहान्तः सिद्धिदायकः । यन्त्रभञ्जनकार्येषु सुघोरभयनाशने । वषडन्तः प्रकल्प्यस्तु ग्रहबाधाविनाशकः । उच्चाटने तु संप्राप्ते मन्त्रः फट्पल्लवान्वितः । एते पल्लववासस्तत्तत्कर्मणि चण्डीपाठेपि श्लोकान्तादौ योज्याः । तथा न्यासहीनो भवे-न्मूको मृतः स्याच्छिरसा विना । अपल्लवस्तु नग्नः स्यात्सुप्तः स्यादासनं विना । गुरुं विना वृथा मन्त्रः श्रव्यजापस्तु शून्यकः । निर्वम्यो दुष्टदत्तः स्यादन्यबीजस्तु कीलितः । दुष्टदत्तः दुष्टाय दत्त इत्यर्थः । देवछन्दर्षिहीनो यः स तु प्रोक्तो भुजंगमः । मूकादयो मन्त्रा वर्ज्याः । वैदिके मन्त्रे न पल्लवादिविचारः । ह्रीं चण्डिकायै इत्यनेनास्य मन्त्रस्य च षडङ्गन्यासो न वा बी-जात्मकसमस्तमन्त्रेण च षडङ्गम् । हृदयं नमः शिरसेस्वाहा शिखायैवषट् कवचाय हुम् नेत्रत्रयाय वौषट् अस्त्राय फडिति क्रमः । अस्त्रं सर्वदिक्षु बोध्यम् । नवबीजमन्त्रान्ते चण्डिकातृप्यतामितिमन्त्रेण तर्पणम् । एवं होमादिष्वप्यूह्यम् । लिखेदष्टदलं पद्मं कुङ्कुमागरुचन्दनैः । पद्ममध्ये लिखेच्चक्रं षट्कोणं चण्डिकामयम् । षट्कोणचक्रमध्यस्थमाद्यं बीजत्रयं न्यसेत् । तत्र मध्यबीजे महालक्ष्मीः तद्दक्षिणे महाकाली वामे सरस्वती पूर्वादिषट्कोणेषु बीजान्यन्यानि विन्यसेत् । इदं पूजायन्त्रं पद्मासनाद्यन्यतमं आसनम् । तथा सप्तशतीश्लोकैर्न्यासः । खड्गिनी शूलिनीत्यादिपठित्वा श्लोकपञ्चकम् । आद्यं कृष्णतरं बीजं ध्यात्वा सर्वाङ्के न्यसेत् । आद्यमैमिति । शूलेन पाहिनो देवीत्यादिश्लोकचतुष्टयम् । पठित्वा सूर्यसदृशं द्वितीयं सर्वतो न्यसेत् । द्वितीयं ह्रीमिति । सर्वस्वरूप इत्यादिश्लोकानां पञ्चकं पुनः । पठित्वा स्फटिकाभासं तृतीयं स्वतनौ न्यसेत् । तृतीयं क्लीमिति । उक्तै-रेव श्लोकैरावृत्तिद्वयेन षडङ्गन्यासोपि क्वचिदुक्तः । ततः षडङ्गं कुर्वीत विभक्तैर्मूलवर्णकैः । एकेनैकेन वर्णेन चतुर्भिर्युगुलेन च । समस्तेन च मन्त्रेण कुर्यादङ्गानि षट्सुधीः । ततः क्वचित् । एवं न्यासविधिं कृत्वा स्रष्टिमुद्रां विलोकयेत् । अर्घ्यपात्रं प्रतिष्ठाप्य पूरयेच्छुभवारिणा । गन्धपुष्पाक्षतांस्तत्र विन्यस्य नृपनन्दन । ध्यात्वा मनसि सर्वार्थान्हस्तौ दत्वाभिमन्त्रयेत् । रक्षार्थं तस्य कर्तव्या चक्रमुद्रास्त्रसंयुता । अर्घोदकेन संस्कारं पूजाद्रव्यस्य पूर्ववत् ॥

अथ महाकाल्यादिदेवतात्रयध्यानम् । खड्गं चक्रगदेषुचापपरिघान् शूलं भुशुण्डीं शिरः पाशान् संदधतीं करैस्त्रिनयनां सर्वाङ्गभूषावृताम् । नीलाश्मद्युतिमास्यपाददशकां सेवे महाकालिकां यामस्तौच्छयिते हरौ कमलजो हन्तुं मधुं कैटभम् ॥ १॥ अक्षस्रक्परशू गदेषुकुलिशं पद्मं धनुः कुण्डिकां दण्डं शक्तिमसिं च चर्म जलजं घण्टां सुराभाजनम् । शूलं पाशसुदर्शने च दधतीं हस्तैः प्रवालप्रभां सेवे सैरिभमर्दिनीमिह महालक्ष्मीं सरोजस्थिताम् ॥२॥ घण्टाशूलहलानि शङ्खमुसले चक्रं धनुः सा-यकं हस्ताब्जैर्दधतीं घनान्तविलसच्छीतांशुतुल्यप्रभाम् । गौरीदेहसमुद्भवां त्रिजगतामाधारभूतां महापूर्वामत्र सरस्वतीमनु भजेच्छुम्भादिदैत्यार्दिनीम् ॥ ३ ॥ ततः उक्तयन्त्रे पञ्चोपचारैः पूज्याः । एवं कृत्वा जपेल्लक्षचतुष्कं तद्दशांशतः । पायसान्नेन जुहुयात्पूजिते हेमरेतसि । एतदेवास्य पुरश्चरणम् । मार्कण्डेयपुराणोक्तं नित्यं चण्डीस्तवं पठेत् । पुटितं मूलमन्त्रस्य जपेदा-प्नोति वाञ्छितम् । शतमादौ शतं चान्ते जपेन्मन्त्रं नवार्णकम् । चण्डीसप्तशतीमध्ये संपुटोयमुदाहृतः । सकामैः संपुटो जाप्यो निष्कामैः संपुटं क्वचित् । सप्तशत्याश्चरित्रे तु प्रथमे पद्मभूर्मुनिः । छन्दो गायत्रमुदितं महाकाली तु देवता । वाग्बी-जं पावकस्तत्त्वं धमार्थे विनियोजनम् । मध्यमे तु चरित्रेऽत्र मुनिर्विष्णुरुदाहृतः । उष्णिक् छन्दो महालक्ष्मीर्देवता बीजम-द्रिजा । वायुस्तत्वं धनप्राप्त्यै विनियोग उदाहृतः । उत्तरस्य चरित्रस्य ऋषिः शंकर ईरितः । त्रिष्टुप्छन्दो देवतास्य महा-पूर्वा सरस्वती । कामो बीजं रविस्तत्त्वं कामाप्त्यै विनियोजनम् । क्वचित्तु संपूर्णस्तोत्रस्य मार्कण्डेय ऋषिः । ब्रह्मविष्णुरुद्रा ऋषयः । महाकाल्यादयस्तिस्रो देवताः । गायत्र्युष्णिगनुष्टुप्छन्दांसि । ऐंह्रींक्लीं बीजानि । चामुण्डा शक्तिः । अग्निवायु-सूर्यास्तत्त्वानि । सर्वेष्टसिद्ध्यर्थे जपे विनियोग इत्युक्तम् । एवं संस्मृत्य ऋष्यादीन् ध्यात्वा शर्वोक्तमार्गतः । सार्धं स्मृत्वा पठेच्चण्डीस्तवं सष्टपदाक्षरम् । समाप्तौ तु महालक्ष्मीं देवीं ध्यात्वा षडङ्गकम् । जपेदष्टशतं मूलं देवतायै निवेदयेत् । आदा-वन्ते अष्टशतं जपः । आश्विनस्य सिते पक्षे आरभ्याग्नितिथिं सुधीः । अष्टम्यन्तं जपेल्लक्षं दशांशं होममाचरेदिति ॥

अथ शतचण्डीविधिः । शंकरस्य भवान्या वा प्रासादनिकटे शुभम् । मण्डपं द्वारवेद्याढ्यं कुर्यात्सध्वजतोरणम् । तत्र कुण्डं प्रकुर्वीत प्रतीच्यां मध्यतोपि वा । स्नात्वा नित्यक्रियां कृत्वा वृणुयाद्दश वाडवान् । जितेन्द्रियान्सदाचारान् सुशीला-न्सत्यवादिनः । वाडवा ब्राह्मणाः । पञ्चभिः सप्तभिर्वापि नवैकादशभिस्तथा । अदीर्घदिवसैः क्षिप्रं विदध्याच्चण्डिकामखम् । अयुग्मब्राह्मणैः कार्यं शतावृत्तं सुसिद्धये । त्रिपञ्चसप्तनवभिर्दिनैः पक्षेण वा पुनः । देवीमाहात्म्यपाठं तु युग्मैर्विप्रैः कृतं तु यत् । निष्फलं च भवेत्सर्वभूतिनाशमवाप्नुयात् । इति वचनत्रयं क्रोडतन्त्रनाम्ना पठ्यते तत्तु निर्मूलम् । अष्टमीनवमीचतुर्द-शीपूर्णिमासु यथा शतावृत्तिसमाप्तिर्भवति तथा आरम्भः कर्तव्य इति सांप्रदायिकाः । व्युत्पन्नांश्चण्डिकापाठरतांल्लजाद-यावतः । मधुपर्कविधानेन स्वर्णवस्त्रदानतः । जपार्थमासनं मालां दद्यात्तेभ्योऽपि भोजनम् । ते हविष्यान्नमश्नन्तो मन्त्रार्थगतमानसाः । भूमौ शयानाः प्रत्येकं जपेयुश्चण्डिकास्तवम् । मार्कण्डेयपुराणोक्तं दशकृत्वः सचेतसः । नवार्णं चण्डि-कामन्त्रं जपेयुश्चायुतं पृथक् । संपुटीकरणजपादिति शेषः । प्रत्येकं ब्राह्मणैः अयुतजपः कार्यः । जपमानः पूजयेच्च कन्या-

नां दशकं शुभम् । द्विवर्षाद्या दशाब्दान्ताः कुमारीः परिपूजयेत् । एकाब्दायाः प्रीत्यभावो रुद्राब्दा तु विवर्जिता । तासां क्रमेण नामानि कुमारी १ त्रिमूर्तिः २ कल्याणी ३ रोहिणी ४ कालिका ५ चण्डिका ६ शाम्भवी ७ दुर्गा ८ सुभद्रा ९ एतैरेव नाममन्त्रैस्तासां पूजा । तत्र हीनाधिकाङ्गी व्रणयुक्ता अन्धका काणा कुरूपा केकरा रोमयुग्देहा दासिजारोगिण्यः इत्येवमाद्या वर्ज्याः । विप्रां सर्वेष्टसंसिद्ध्यै यशसे क्षत्रियोद्भवाम् । वैश्यजां धनलाभाय पुत्राप्त्यै शूद्रजां यजेदिति । गन्धपुष्पधूपदीपभक्ष्यभोज्यैर्यथाशक्ति वस्त्राभरणैश्च पूजिता । वेद्यां विरचिते रम्ये सर्वतोभद्रमण्डले । घटं संस्थाप्य विधिवत्तत्रावाह्यार्चयेच्छिवाम् । तदग्रे कन्यकाश्चापि पूजयेद्ब्राह्मणानपि । उपचारैस्तु विविधैर्नवार्णावरणैरपि । ततः । ॐकारः प्रथमं पीठं पूर्णपीठमतः परम् । तृतीयं कामपीठं च पूजयेत्संप्रदायतः । आग्नेय्यादिचतुर्दिक्षु पूज्यं देवीचतुष्टयम् । जया च विजया चैव जयन्ती चापराजिता । पूर्वोक्तयन्त्रे पूर्वकोणे सरस्वती ब्रह्मा श्रीसहितो विष्णुर्नैरृत्ये उमया शिवो वायव्ये षट्कोणचक्रमध्यस्थमध्यबीजे महालक्ष्मीः महाकाली महासरस्वती तद्दक्षिणवामयोः उदक्सिंहो दक्षिणे महिषः षट्कोणेषु नन्दजारक्तदन्तिका शाकम्भरीदुर्गाभीमाभ्रामर्यः सबिन्दुनामाद्यवर्णाद्यास्ताराद्याश्चासां नाममन्त्रः पूजादौ । तारः प्रणवः । अष्टपत्रेषु ब्रह्माणीमाहेश्वरीवैष्णवीवाराहीनारसिंहीऐन्द्रीचामुण्डा उक्तरीत्या नाममन्त्रैः पूज्याः । ततो विष्णुमायादिचित्यन्तास्त्रयोविंशतिदेवताः । प्रागादिक्रमेण केसरेषु पूज्याः ततो विष्णुमायाद्याः । क्वचित्तु एवम् विष्णुमाया १ चेतना २ बुद्धिः ३ निद्रा ४ क्षुधा ५ छाया ६ शक्तिः ७ तृष्णा ८ क्षान्तिः ९ जातिः १० लज्जा ११ शान्तिः १२ श्रद्धा १३ कान्तिः १४ लक्ष्मीः १५ धृतिः १६ वृत्तिः १७ स्मृतिः १८ दया १९ तुष्टिः २० पुष्टिः २१ माता २२ भ्रांतिः २३ तद्रूपास्त्रयोविंशोक्ताः । तालमूले च संपूज्यमाधारादिचतुष्टयम् । आधारः कर्मशेषौच चतुर्थी पृथिवी नृप । गृहकोणेषु । गणेशः क्षेत्रपालो बटुको योगिन्यः इन्द्राद्याश्चेति । एवं चतुर्दिनं कृत्वा पञ्चमे होममाचरेत् । तत्र प्रथमेऽह्नि एकावृत्तिः द्वितीये द्वे तृतीये तिस्रः चतुर्थे चतुरः । प्रतिब्राह्मणं होमद्रव्याणि । पायसान्नैस्त्रिमधक्तैर्द्राक्षारम्भाफलादिभिः । मातुलिङ्गैरिक्षुखण्डैर्नारिकेलैः पुरः स्थितैः । जातीफलैराम्रफलैरन्यैर्मधुरवस्तुभिरिति । सप्तशत्या दशावृत्त्या प्रतिमन्त्रं हुतं चरेत् । अयुतं च नवार्णेन स्थापितेऽग्नौ विधानतः । कृत्वावरणं देवानां होमं तन्नाममन्त्रतः । कृत्वा पूर्णाहुतिं सम्यक् देवताग्नी विसृज्य च । अभिषिञ्चेच्च यष्टारं विप्रौघः कलशोदकैः । निष्कं सुवर्णमथवा प्रत्येकं दक्षिणां दिशेत् । भोजयेच्च शतं विप्रा भक्ष्यभोज्यैः पृथग्विधैः । तेभ्योपि दक्षिणां दत्त्वा गृह्णीयादाशिषस्ततः । एवं कृते जगद्वश्यं सर्वे नश्यन्त्युपद्रवा इति । कुर्यादेवं विशुद्धात्मा चण्डीसाहस्रके विधिम् । विद्यावतः सदाचारान्ब्राह्मणान्वृणुयाच्छतम् । प्रत्येकं चण्डिकापाठान्विदध्युस्ते दिशामतात् । अयुतं प्रजपेयुस्ते प्रत्येकं नववर्णकम् । पूर्वोक्ताः कन्यकाः पूज्याः पूर्वमन्त्रैः शतं शुभाः । वेदाहमेवं संपाद्य होमं कुर्युः प्रयत्नतः । सप्तशत्याः शतावृत्त्या प्रतिमन्त्रं विधानतः । लक्षसंख्यं नवार्णेन पूर्वोक्तैर्द्रव्यसंचयैः । होतृभ्यो दक्षिणां दत्त्वा पूर्वोक्तान्भोजयेद्द्विजान् । सहस्रसंमितान्साधून्देव्याराधनतत्परान् । एवं सहस्रसंख्याके कृते चण्डीविधौ नृणाम् । सिद्ध्यत्यभीप्सितं सर्वं दुःखौघश्च विनश्यति । मारीदुर्भिक्षरोगाद्या नश्यन्ति व्यसनोच्चयाः । एतद्दशगुणो विधिरयुतं प्रजपेयुस्ते इति । यस्याः प्रभावमतुलं श्लोकमुक्त्वा कृताञ्जलिः । दद्याद्गोमिथुनान्यष्टावाचार्याय सुभक्तिमान् । चतुर्विंशतिसंख्याकैर्हेमगद्याणकैः सह । एकैकं दशविप्रेभ्यो दद्याद्गोमिथुनं समम् । निष्कत्रयसमायुक्तं वस्त्रालंकारभूषितमिति । यद्यत्कार्यं समुद्दिश्य क्रियते शतचण्डिका । तत्तत्तस्य महालक्ष्मीः सत्यमाशु प्रयच्छति । क्वचिद्रुद्रयामले इत्युक्त्वा द्रव्यान्तराण्यपि होमे उक्तानि । तत्र प्रधानहोमः स्यात्त्रिमधूद्रुत उत्तमः । प्रधानद्रव्यमुद्दिष्टं पायसान्नं तिलास्तथा । यवैर्वा श्रीफलैर्दिव्यैर्नानाविधफलैस्तथा । किंशुकैः सर्षपत्वग्भिर्दर्भैर्दूर्वाङ्कुरैस्तथा । करवीरै रक्तपुष्पै रक्तोत्पलसितैरपि । रक्तचन्दनखण्डैश्च गुग्गुलैश्च मनोहरैरिति । अथ ब्रह्माण्डपुराणनाम्ना प्रत्यध्यायं श्लोकसंख्या क्वचिदुक्ता । तत्राद्यचरिताध्याये श्लोकैकाशीतिरुत्तमा । अथ मध्यचरित्रे तु अष्टसेकसुसंख्यकाः । मध्यमायाश्चतुःसप्तचतुर्वेदखवेदकाः । अथोत्तमचरित्रे तु षडग्निश्लोकभागितेति । अग्नीषोमाध्यायवती गीता सप्तशती स्मृता । तथा कवचार्गलाकीलकानामपि श्लोकसंख्या उक्ताः । श्रीवज्रकवचस्यापि त्रिपञ्चाशच्छ्लोकशालिता । अर्गला कीलके श्लोका द्व्यष्टाविंशतिसंख्यकाः । अथो रहस्यत्रयस्य त्रयोध्यायामनुष्टुवा इति च । तत्र कवचस्य चामुण्डा देवता । ब्रह्मा ऋषिः । अनुष्टुप्छन्दः । अङ्गन्यस्ता देव्यः सायुधा मातरो बीजम् । दिग्बन्धदेवतास्तत्वम् । अर्गलायाः विष्णुरनुष्टुप्छन्दः । नवार्णो मन्त्रः शक्तिः । मन्त्रोदिता देव्यो बीजम् । सप्तशतीमन्त्रस्तत्वम् । कवचस्य शिव ऋषिः इतरदर्गलावत् । तथा प्रथमचरित्रस्य ब्रह्मा ऋषिः । अनुष्टुप्छन्दः । महाकाली देवता । नन्दजा शक्तिः । रक्तदन्तिका बीजम् । अग्निस्तत्त्वम् । पौष्टिके विनियोगः । मध्यमचरित्रस्य विष्णुर्ऋषिः । महालक्ष्मीर्देवता । शाकम्भरी शक्तिः । दुर्गा बीजम् । उष्णिक्छन्दः । वायुस्तत्त्वम् । ईप्सितप्राप्त्यर्थे जपे विनियोगः । उत्तरचरित्रस्य शिव ऋषिः । महासरस्वती देवता । छन्दावनुष्टुप्जगत्यौ । भीमाशक्तिः । भ्रामरी बीजम् । सूर्यस्तत्त्वम् । उच्चाटनादौ विशेषतो विनियोग इति । तत्तु कात्यायनीतन्त्रोक्तमन्त्रविभागेन विरोधात् निर्मूलमिति ध्येयम् । इति श्रीमदुपाध्यायोपनामकशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते मार्कण्डेयपुराणान्तर्गतसप्तशत्याख्यचण्डीस्तोत्रस्य व्याख्याने चण्डीस्तोत्रप्रयोगविधिः समाप्तः ॥

**इत्येवमादयः प्रयोगविधयः समाप्ताः ॥**

---

# सप्तशती ।

## प्रथमोऽध्यायः १

### ॐ नमश्चण्डिकायै । मार्कण्डेय उवाच ।

**( १ गुप्तवती. )** अथादौ चण्डीशब्दस्य विवरणम् । तत्र चण्डीनाम परब्रह्मणः पट्टमहिषीदेवता । चण्डभानुश्चण्डवाद इत्यादावियत्तानवच्छिन्नाऽसाधारणगुणशालिपरत्वेन चण्डपदस्य प्रयोगदर्शनात् । इयत्तायाश्च देशकालवस्तुकृतत्रैविध्येन तादृशपरिच्छेदत्रितयराहित्यस्य परब्रह्मैकलिङ्गत्वात् । यद्यपि चडि कोप इति धातोर्निष्पत्तिस्तदापि 'कस्य बिभ्यति देवाश्च जातरोषस्य संयुगे' इत्यादिना । 'प्रसादो निष्फलो यस्य कोपोऽपि च निरर्थकः । न तं भर्तारमिच्छन्ति षण्ढं पतिमिव स्त्रियः' इत्यादिना च महाभयजनकत्वेनैव कोपस्य साफल्योक्तेस्तादृश एव कोपे चडिधातोर्मुख्यवृत्त्या प्रवृत्तेस्तद्वशादेव 'नमस्ते रुद्रमन्यवे' इत्यादिना प्रथमं मन्यव एव नमस्कारदर्शनात् 'भीषास्माद्वातः पवते भीषोदेति सूर्यः । भीषास्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः' इत्यादिश्रुत्या वाय्वादिभयजनककोपस्यापि परब्रह्मलिङ्गत्वमक्षतमेव । अतएव महद्भयं वज्रमुद्यतमिति श्रुतौ वज्रपदेन ब्रह्मैव उच्यते नायुधविशेषो भयजनकत्वलिङ्गादित्युक्तमुत्तरमीमांसायां कम्पनादित्यधिकरणे। तस्माच्छब्दात् पुंयोगलक्षणे ङीषि चण्डीति पदनिष्पत्तिः । तत्स्वरूपं चोक्तं रत्नत्रयपरीक्षायां दीक्षितैः । 'नित्यं निर्दोषगन्धं निरतिशयसुखं ब्रह्मचैतन्यमेकं धर्मो धर्मीति भेदद्वितयमिति पृथग्भूय मायावशेन । धर्मस्तत्रानुभूतिः सकलविषयिणी सर्वकार्यानुकूला शक्तिश्चेच्छादिरूपा भवति गुणगणस्याश्रयस्त्वेक एव ॥ कर्तृत्वं तत्र धर्मी कलयति जगतां पञ्चसृष्ट्यादिकृत्ये धर्मः पुंरूपमाप्त्वा सकलजगदुपादानभावं बिभर्ति । स्त्रीरूपं प्राप्य दिव्या भवति च महिषी स्वाश्रयस्यादिकर्तुः प्रोक्ते धर्मप्रभेदावपि निगमविदां धर्मिवत् ब्रह्मकोटी' इति । एकमेव ब्रह्मानादिसिद्धया मायया धर्मी धर्मश्चेति द्विविधमभूत् । सृष्ट्यारम्भे यत् प्राथमिकमीक्षणं 'तदैक्षत बहुस्यां प्रजायेय' इति 'सोऽकामयत' 'तत्तपोऽकुरुत' इत्यादित्रिविधश्रुतिसिद्धं ज्ञानेच्छाक्रियासमष्ट्यात्मकत्वं स एव ब्रह्मधर्मः स च धर्माभिन्न एव । 'स्वाभाविकी ज्ञानबलक्रिया च' इति श्रुतेः । तस्यैव धर्मत्वाच्छक्तिरिति संज्ञा । अतएव 'अथातो धर्मजिज्ञासा' इति कौलोपनिषत्प्रथमसूत्रे जैमिनितन्त्रस्थप्रथमसूत्र इव न धर्मशब्दश्चोदनालक्षणार्थजडवस्तुपरः । अपितु ब्रह्मधर्मरूपचिच्छक्तिपर एव । तेन तत्र धर्मपदमपनीय ब्रह्मपदप्रक्षेपस्त्वविदुषामेवेति समर्थितं तद्भाष्येस्माभिः । अस्यैव धर्मस्यान्या अपि संज्ञाः कथयता नागानन्दसूत्रेण धर्मस्वरूपमेव विशिष्य विवृतं । 'एष एव विमर्शश्चितिश्चैतन्यमात्मास्वरसोदिता परावाक् स्वातन्त्र्यं परमात्मौन्मुख्यमैश्वर्यं सत्तत्वं सत्ता स्फुरता सारो मातृका मालिनी हृदयमूर्तिः स्वसंवित् सन्द इत्यादिशब्दैरागमैरुद्घोष्यते' इति तत्तत्प्रवृत्तिनिमित्तानि तद्भाष्ये एव विवृतानि । स एव धर्मो महाविष्णुभवानीभेदेन द्विविधो भूत्वा जगतः सृष्टिस्थितिलयतिरोधानानुग्रहात्मककृत्यपञ्चककर्ताऽभूत् । जपाकुसुमस्यैव रञ्जनकर्तृत्वेऽपि रागाश्रयत्वेन मात्रा स्फटिकस्यैव शुद्धस्यापि धर्मिणः सान्निध्यमात्रेण कर्तृत्वव्यवहारः । तद्वतो धर्मोऽपि न जडो न जीवः अपि तु 'चितिः स्वतन्त्रा विश्वसिद्धिहेतुः' इत्यादिशक्तिसूत्रोक्तस्वरूपं ब्रह्मैवेत्युपनिषत्सिद्धान्त इति श्लोकद्वयस्य पिण्डितो निश्चयोतितोऽर्थः । अस्मदादीनां हि स्रष्टव्यपदार्थालोचनात्मिका ज्ञानेच्छाकृतिरूपा वृत्तिर्घटमहं जानामीत्यादिः । भाविघटविषयकज्ञानाद्याकारभेदेन परस्परविलक्षणा त्रिविधा स्वयं जडा घना । जडस्य घनस्यान्तःकरणस्य परिणामः । घनानामेव जडानां विषयीकाररूपसम्बन्धेनापि घनेनैव विशिष्टा । स्वयमपि परिच्छिन्ना परिचारैरपि परिच्छिन्नैरेव युक्ता । परिच्छिन्नजडघनाहङ्कारसम्बन्धेनाध्याससहिता च । शुद्धब्रह्मणः प्राथमिकी वीक्षा तु सर्वांशे कोमलत्वात् । वृत्तिरूपाऽप्यास्माकीनवृत्तिधर्मराहित्यादत्यन्तविलक्षणा सती ब्रह्मकोटावेव निविशते इति भावः ॥ तदेतदुक्तं बृहद्वासिष्ठे उत्पत्तिप्रकरणे द्वादशे सर्गे सृष्ट्यारम्भकालिकं ब्रह्मसत्तामात्रं प्रक्रम्य । 'तदात्मनि स्वयं किञ्चिच्चेत्यतामधिगच्छति । अगृहीतात्मकं संविदहंमर्शनपूर्वकम् । भाविनामार्थकलनैः किञ्चिदूहितरूपकं । आकाशादणु शुद्धं च सर्वस्मिन् भाति बोधनम् । ततः सा परमा सत्ता सचेतश्चेतनोन्मुखी । चिन्नामयोग्या भवति किञ्चिल्लभ्यतया तदा । घनसंवेदना पश्चाद्भावि जीवादिनामिका । सम्भवत्याप्तकलना यदोवति परं पदम्' इत्यादि । तट्टीकायामपि । सन्मात्रस्य ब्रह्मणः 'स ईक्षत लोकान्नुसृजा' इति श्रुतिसिद्धमीक्षणभावं दर्शयति । तदिति त्रिभिः । अगृहीतात्मकं अहङ्काराध्यासरहितं अतएव संविन्मात्रेणाहंताविमर्शः सर्वस्मिन्नपि सृज्यविषयीभाविनामरूपानुसन्धानांशेऽपि किञ्चिदेव संपृक्तमिव । अतएव आकाशादण्वेवच न तु घनं अतएव शुद्धमेव घनमालिन्याभावाद्ब्रह्मैव चेत्यतां गच्छतीव सती सचेतश्चेतना ईक्षणावृत्त्यभिव्यक्तचैतन्यं तदुन्मुखी तत्प्रधाना सती किञ्चिल्लभ्य-

तया वाक्प्रवृत्तिविषयधर्मलाभेन तदा चिन्नामयोग्या भवतीत्यर्थः । पश्चात्तु सैव वृत्तिश्चिरावृत्त्या घनीभूता सम्यगेव आत्तकलना सूक्ष्मप्रपञ्चात्मभावलक्षणपरिच्छेदग्राहिणी सती परं पदमपरिच्छिन्नभूमानन्दात्मभावं यदा विस्मरति तदा भाविहिरण्यगर्भाख्यसमष्टिजीवादिनामिका भवतीत्याह । घनेति । ईदृशेक्षणाद्यात्मकचण्डी चिदादिनामकसमष्टिवृत्तिरूपधर्मात्मकशुद्धब्रह्माभिन्नानां ज्ञानेच्छाक्रियाणां तिसृणां व्यष्टीनां महासरस्वती महाकाली महालक्ष्मीरिति प्रवृत्तिनिमित्तवैलक्षण्येन नामरूपान्तराणि । तादृशनामरूपविशिष्टदेवतात्रयसमष्टित्वं प्रवृत्तिनिमित्तीकृत्य धर्मे चण्डिकेति व्यवहारः । एवं व्यष्टीनां वामा ज्येष्ठाऽतिरौद्रीति । पश्यन्ती मध्यमा वैखरीति । ब्रह्मा विष्णू रुद्र इति रूपभेदेन । समष्टेरपि अम्बिका शान्ता परेत्यादि संज्ञा अनन्तास्तन्त्रान्तरादवगन्तव्याः । त्रितयसमष्टित्वादेवैषा तुरीयेति शक्तिरहस्यादौ निर्दिश्यते । आचार्यभगवत्पादैरप्युक्तम् । 'गिरामाहुर्देवीं द्रुहिणगृहिणीमागमविदो हरेः पत्नीं पद्मां हरसहचरीमद्रितनयां । तुरीया कापि त्वं दुरधिगमनिःसीममहिमा महामाये विश्वं भ्रमयसि परब्रह्ममहिषी' इति । मार्कण्डेय इति । भागुरिं प्रतीतिशेष इति केचित् । क्वचित्पुस्तकेषु तु । तपस्यन्तं महात्मानं मार्कण्डेयं महामुनिम् । व्यासशिष्यो महातेजा जैमिनिः पर्यपृच्छत । मार्कण्डेय महाप्राज्ञ सर्वशास्त्रविशारद । श्रोतुमिच्छाम्यशेषेण देवीमाहात्म्यमुत्तमम्' इत्याद्या पूर्वपीठिका दृश्यते ॥

**( २ चतुर्धरी )** ॥श्रीगणेशाय नमः ॥ एकमूर्तिरपि भिन्नरूपिणी या जगज्जननपालनक्षये । काच्युतेश्वरतया विवर्तते ब्रह्मशक्तिमहमातनोस्मि तां ॥ १ ॥ श्रीचतुर्भुजधरामृतान्धसा चण्डिकासुचरितं विविच्यते । धीरसार्थ इह तुष्यतां यतः कीरगीरपि सतां विनोदिनी ॥ २ ॥ प्राक्किल भगवद्बादरायणान्तेवासी जैमिनिर्महाभारतविषयेषु चित्पदार्थेषु सन्दिहानो मार्कण्डेयमहर्षिमुपगम्य प्राचक्षत । अथ नायमस्माकं कथाक्षण इति सर्वार्थाऽभिज्ञान्विन्ध्याचलनिवासिनश्चतुरः पक्षिणः पृच्छ इति मुनिनोपदिष्टोऽसावपि तथैवाकार्षीत् । पुनश्च जैमिनिप्रश्नानुरोधात्सर्गादिपुराणाङ्गव्याख्यानावसरे तुरीयपुराणाङ्गव्याचिख्यासया मार्कण्डेयभागुरिसंवादात्मकमितिहासमनुवर्तयतोऽष्टमं मन्वन्तरमुपक्रममाणा धर्मपक्षिण ऊचुः । मार्कण्डेय उवाचेति । मृकण्डोरपत्यं पुमान्मार्कण्डेयः । (मृगवत्कण्डनेवात्मयोगात् मृकण्डुः । कण्डिके ? मृगय्वादयः । चिन्त्यः प्रत्ययः । मृगान्कण्डयति वा मृकण्डुः । मृगस्येवास्य कण्डुरिति वा मृकण्डुः । तस्यापत्यं मार्कण्डेयः) । मङ्गलार्थश्चायं चिरंजीविनो ग्रन्थादावुपन्यासः॥१॥

**(३ शान्तनवी )**॥ श्रीगणेशाय नमः ॥ ब्रह्मा यस्यै हरिर्यस्यै रुद्रो यस्यै व्यधान्नमः । नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥१॥ अव्युत्पन्नसुखान्धकूपपतिता गावो मुनेः खिन्दते ताः प्रोद्धर्तुमहो यतध्वमभितः स्वस्वार्थवत्सोत्सुकाः । सूत्रैः पाणिनिसंभृतैरतितरामाकृष्यमाणाः पुनः स्त्रावः कामदुघा भवन्त्यपि तमस्तोमद्विषः सत्त्विषः ॥ २ ॥ ऐंन्ह्रींश्रीं पदभावितं जगददः स्रष्टुं स्वयं रक्षितुं संहर्तुं समये क्षमामयमयीं ब्राह्मीं श्रियं चण्डिकाम् । आराध्यादिमशक्तिमार्तिदविनीं श्रीतोमरः शन्तनुर्मार्कण्डेयपुराणसिद्धमहिमा व्याख्याति विख्यायते ॥ ३ ॥ मार्कण्डेयपुराणोक्तं देवीमाहात्म्यमद्भुतम् । अल्पाक्षरमनल्पार्थमपपाठपराङ्मुखम् ॥ ४ ॥ शुभंयुः शंतनुः शंयुः सत्कीर्तिस्तोमरान्वयः । व्याकरोति पराकृत्य कुव्याख्यानपरंपराम् ॥ ५ ॥ ॐन्नमश्चण्डिकायै । अवत्यस्मादुपासकं । अवति ब्रह्म चेति विग्रह्य अव रक्षणादौ । 'अवतेष्टिलोपश्च' इति मन्प्रत्ययः । तस्य प्रत्ययस्यैव टिलोपः न प्रकृतेः ।अन्यथाहि मडित्येव विदध्यात् । ज्वरत्वरेत्यादिना वकारस्योपधायाश्च ऊठौ द्वयोरूठोःसवर्णदीर्घत्वे 'सार्वधातुकार्धधातुकयोः' इति गुणः । 'कृन्मेजन्तः' इत्यव्ययमोम् । ॐ मित्यनुमतौ प्रोक्तं प्रथमे चाप्युपक्रमे । ॐमित्येकाक्षरं ब्रह्म सर्वमन्त्राधिदैवतम् । गुर्वादिभजने दाने नमः स्यात्काप्यनादरे । चतुर्थी स्यान्नमोयोगान्नमस्स्वस्त्यादिसूत्रतः । चण्डिकायै । चण्डते कुप्यते चण्डा चण्डी च। चण्डैव चण्डिका कोपना । 'बह्वादिभ्यश्च' इति वा ङीप् । 'केणः' इति ह्स्वः । कुत्सिता शत्रुभिर्निन्दितेति संज्ञायां कन् । अथवा ह्स्वा दीर्घविलक्षणाकारा सूक्ष्मरूपतया दुरधिगमत्वात् । संज्ञायां कन् । अथवा चण्ड उग्रः तस्य स्त्री चण्डी । पूर्ववत्संज्ञायां कन् । अथवा चण्डते चण्डिका । संज्ञायां ण्वुल् । 'युवोरनाकौ' 'प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुपः' इति इत्वम् । मार्कण्डेय उवाच । कडि मदे । मृगवत् कण्डते योगान्माद्यति मृकण्डुः । 'मृकण्ड्वादयश्च' इत्युः । मृगान् कण्डयति मर्दयति वा मृकण्डुः । मृगस्येवास्य कण्डुरिति वा । पृषोदरादित्वात्साधुः । 'वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ । धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम्' मृकण्डोरपत्यं पुमान् मार्कण्डेयः । शुभ्रादिभ्यश्चेत्यपत्ये ढक् प्रत्ययः । कितिचेत्यादिवृद्धिः । 'ढेलोपो कद्वाः' इत्युकारलोपः । ढस्य एयादेशः । उवाच ऊचिवान् । स्वशिष्यायाष्टमसमनूत्पत्तिहेतुमुक्तवानितियावत् । इह खलु ब्रह्मकल्पे चतुर्दश मनवः क्रमशः क्रमन्ते । तद्यथा । 'स्वायंभुवो मनुः पूर्वं ततः स्वारोचिषो मनुः । औत्तमस्तामसश्चैव रैवतश्चाक्षुषस्तथा । षडेते मनवोऽतीता अथ वैवस्वतो मनुः । सावर्णीः पञ्चरौच्यश्च भौत्यश्चागामिनस्त्वमी' । तत्र सवर्णायाः संबन्धिनः सुताः पञ्चापि सावर्णाः सावर्णयो मनवः कथ्यन्ते । ततश्च स्वायंभुवाद्याः षट् सप्तमो वैवस्वतः अष्टमः सावर्णिः नवमो दशमः एकादशो द्वादशश्च सावर्णय एव । त्रयोदशो मनुरौच्यः । चतुर्दशस्तु मनुर्भौत्यः। इति चतुर्दश मनवः। तत्राष्टमस्य मनोः सावर्णेरुत्पत्तिं स्वशिष्याय वेदयितुं प्रस्तौति मार्कण्डेयो भगवान् ॥

**( ४ नागोजीभट्टी )** ॥ १ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** ॥ श्रीगणेशाय नमः ॥ श्रीहेरम्बं नमस्कृत्य गुरून्नीलं सरस्वतीम् । प्रकाश्यते सप्तशती

मन्त्रहोमविभाजनम् ॥ १ ॥ कूर्माचलाब्धिराजेन्द्रज्ञानचन्द्रनृपात्मजः । श्रीकुमारो जगच्चन्द्रस्तत्सेव्यस्ति भगीरथः ॥ २ ॥ पुरोहितकुलोत्पन्नो हर्षदेवसुतो बुधः । तेनेयं क्रियते टीका श्रीजगच्चन्द्रचन्द्रिका ॥ ३ ॥ गोविन्दकारिकाणामावसथ्याग्निसुसेविना । यत्नाच्च क्रियते ग्रन्थश्चिरायुर्भवतात्प्रभुः ॥ ४ ॥ अनिर्वाच्यजगज्जन्मलयस्थेमभ्रमाश्रयम् । सत्वाद्युपहितात्मानमाश्रये तमुमाश्रयम् ॥ ५ ॥ अनिर्वाच्यं वक्तुमशक्यमीदृशं यज्जगद् भूर्भुवःस्वराख्यं तस्य ये जन्मलयस्थेमानः सृष्टिनाशस्थितयस्तेषां भ्रमो भ्रान्तिस्तदाश्रयं तदाधारं यद्वा । अनिर्वाच्या ये जन्मलयस्थेमानस्तेषां भ्रमस्तदाश्रयं । यद्वा अनिर्वाच्यो यो जगज्जन्मयलस्थेमभ्रमस्तदाश्रयं । प्रियस्थिरेत्यादिना इमानिचि स्थादेशः । सत्वादिभिः सत्वरजस्तमोभिरुपहित उपाधिविशिष्ट आत्मा यस्य तं । यद्वा सत्वाद्युपहितश्चासौ आत्मा चेति । सगुणं निर्गुणं चेति भावः । उपपूर्वाद्धधातेर्हिरिति हिरादेशः । उमाया गौर्या आश्रय आधारभूतस्तम् । तस्यार्धाङ्गे स्थितत्वात् । ईदृशं तं शिवं आश्रये त्वत्स्वरूपेणोपतिष्ठामि । श्रिञ् सेवायां ॥ विघ्ननिर्विघ्नकर्तारं दुरितघ्नस्मृतिस्तवं । वन्दे विघ्नहरं देवं प्रसन्नं करुणार्णवम्' इति ॥ ६ ॥ विघ्नानामायत्तानां निर्विघ्नस्य विघ्नाभावस्य कर्तारं विहितारं विधातारं वा । 'अधीनो निघ्न आयत्तः' इत्यमरः । दुरितघ्नौ पापघ्नौ स्मृतिस्तवौ स्मरणस्तवौ यस्य स तम् । पापनामनि 'अंहोदुरितदुष्कृतम्' इत्यमरः । 'अमनुष्यकर्तृके च' इति ठक् । प्रसन्नं संतुष्टम् । विघ्नं हरतीति विघ्नहरस्तम् । 'विघ्नोऽन्तरायः प्रत्यूहः' इत्यमरः । करुणायाः दयाया अर्णवः समुद्रस्तं ईदृशं । दीव्यतीति देवस्तम् । गणेशमित्यर्थः । पचाद्यच् । वन्दे नमस्करोमि । वदि अभिवादनस्तुत्योः लट् चतुर्दशजनान्तःस्था या चतुर्दशरूपिणी । चतुर्दशोहिता मायाद्वाचतुर्दशनाच्छभा ॥ ७ ॥ चतस्रो दशा बाल्यकौमारयौवनवृद्धत्वाख्या अवस्था एषां ते चतुर्दशास्ते च ते जनाः प्रजाश्च तेषामन्तः अऽन्तःकरणे तिष्ठतीति चतुर्दशजनान्तःस्था । चतस्रो दशा येषां ते चतुर्दशा जना इत्यर्थः । चतुर्दशभुवनानि वा । षोडशत्वपक्षे चतुर्दशतत्वानि वा । तद्रूपमस्या अस्तीति चतुर्दशरूपिणी तत्स्वरूपयुक्ता । 'अत इनिठनौ' इति इनिः । यद्वा तद्रूपमती तच्छीला ताच्छीलिको णिनिः । रूपयतीति रूपिणी । तेषां रूपिणी वा । गृह्यादित्वादिनिः । नान्तत्वान्ङीप् । चतस्रश्च ता दशा अवस्थाश्च ताभिरूहिता परित्यक्ता । सदैवैकरूपेण स्थितेत्यर्थः । अद्धा तत्वतः । 'तत्वे त्वद्धांजसा द्वयम्' इत्यमरः । चत्वारो दशना दन्ता यस्य स चतुर्दशनः तत्र अच्छा निर्मला भा कान्तिर्यस्याः सा चतुर्दशनाच्छभा । यद्वा चतुर्दशनश्च अच्छः स्फटिकश्च चतुर्दशनाच्छौ तद्वद् भा यस्याः सा । 'अच्छः स्फटिकभल्लुकः' इति वैजयन्ती । यद्वा चतुर्दशनवत् अच्छा भा यस्याः सा ईदृशी या माया अस्तीति शेषः । 'सुपि स्थः' इति कः । 'दशावस्थानेकविधा' इत्यमरः ॥ ग्रन्थादौ ग्रन्थमध्ये ग्रन्थान्ते मङ्गलाचरणं कर्तव्यमिति भाष्यात् ग्रन्थकर्त्री ग्रन्थादौ वस्तुनिर्देशात्मकं नमस्काररूपात्मकं च मङ्गलं कृतं 'आशीर्नमस्क्रियावस्तुनिर्देशो वापि तन्मुखम्' इति स्मरणात् । सत्वाद्युपहितात्मानमाश्रये तमुमाश्रयमिति । चतुर्दशोहिता मायाद्वा चतुर्दशनाच्छभेत्यत्र च वस्तुनिर्देशः । कमिति । वन्दे विघ्नहरं देवमित्यत्र नमस्काररूपात्मकं चेति । ननु देवस्मरणादिना मङ्गलं भवत्येवेति लेखनं किमर्थमितिचेत् शिष्यशिक्षार्थमिति । यथा गुरुभिर्ग्रन्थादौ लेखनं कृतं तथास्माभिरपि कर्तव्यमित्येतदर्थम् । उमाश्रयं आश्रये इति उभाभ्यां सायुज्यं सूच्यते । यथा वामाङ्गे उमास्ति तथा दक्षिणाङ्गेऽहं स्यामिति भावः । 'अष्टसप्तत्युत्तराणां श्लोकानां शतपञ्चकम् । प्रोक्तं सप्तशतीस्तोत्रे तत्सप्तशतिसंख्यया । विभज्य जुहुयान्मन्त्रैरिति कात्यायनीमतम्'इति कात्यायनीतन्त्रस्य मतमित्यर्थः । तत्सप्तशतिसंख्ययेत्यत्र ह्रस्वेकारपाठश्चिन्त्यः । लोकप्रमादाद्वा कल्पनीयः । वयंतु सप्तगुणिता शतसंख्याऽनयेत्यर्थ इति ब्रूमः । ननु सप्तशतानां समाहारः सप्तशती इति न संभवति । श्लोकगणनया अष्टसप्तत्युत्तरशततमे पञ्चकमेव स्यात् । यद्वा सप्तसत्यो ब्राह्मी माहेश्वरी कौमारी वैष्णवी वाराही माहेन्द्री चामुण्डा वियन्तेस्यामिति सप्तसतीत्युक्तेदमित्यादिप्रसङ्गात् । 'तालव्या अपि दन्त्याश्च शम्बशूकरपांसवः' इतिवत्तालव्या अपि दन्त्याः स्युरित्यपि वक्तुमशक्यत्वाच्च । कुत्रापि पतिव्रतावाचकस्य सतीशब्दस्य कोशेषु तालव्यादेरदृष्टत्वात् । तद्व्याख्यातृभिरपि दन्त्याः स्युरित्यपि वक्तुमशक्यत्वाच्च । कवचार्गलाकीलकादिविशिष्टस्य सप्तशतीमन्त्रस्य सप्तशताहुतयो भवन्तीत्यपि केचिदिति चेन्न । तेनापि न्यूनाधिकसंख्यासंभवात् दोषश्रवणाच्च । उक्तं च । 'यो मूर्खः कवचं हुत्वा प्रतिवाचं नरेश्वरः । स्वदेहपतनं तस्य नरकं च प्रपद्यते । अन्धकश्च महादैत्यो दुर्गाहोमपरायणः । कवचाहुतिप्रभावेण महेशेन निपातितः' इति । अतः सप्तशतीमन्त्रहोमः कथं कर्तव्य इत्याशङ्क्याह । मार्कण्डेय उवाचेत्येक इति । मार्कण्डेय उवाच इत्येको मन्त्रः । 'बलिदाने नमोन्तश्च होमे वह्निप्रिया तथा'इत्यागमात् । मार्कण्डेय उवाच स्वाहा इत्येको मन्त्रः ॥

[illegible]शोद्धारः) ॥ श्रीगणेशाय नमः ॥ मदोन्माद्यदुद्दामदिग्दन्तिगण्डोन्मदोन्माद्यदिन्दीवरालीविराजन् । अनायाससमायासम[illegible]पन्नः स पायादपायादुमायास्तनूजः ॥ १ ॥ विद्वत्कुलशिरोरत्नं नत्वा तातं समासतः । दंशोद्धारं सप्तशत्यास्तनोमि विदुषां मु[illegible] ॥ २ ॥ इह खलु तत्रभवान् कृष्णद्वैपायनशिष्यो जैमिनिर्व्याससुखादखिलं धर्मजातं श्रुत्वाप्यवशिष्टान् कांश्चित्प्रश्नान्प्रष्टुकामो भगवन्तं मार्कण्डेयं पृष्टवानपि मार्कण्डेयेन श्रीभगवद्ध्यानप्रवणचित्ततयाऽवसराभावाद्विन्ध्याचलनिवासिन-

तुःपक्षिद्वारा बोधितः। तैश्च पक्षिभिर्मार्कण्डेयभागुरिसंवादमुपक्रम्य मन्वन्तरकथाप्रसङ्गेन सप्त मन्वन्तराणि निर्वर्ण्याष्टममन्वन्तरचरितं प्रोच्यते मार्कण्डेय उवाचेत्यादिना। मृकण्डोरपत्यं मार्कण्डेयः। शुभ्रादित्वाड्ढक्। ढेलोप इत्युकारलोपः॥

**सावर्णिः सूर्यतनयो यो मनुः कथ्यतेऽष्टमः। निशामय तदुत्पत्तिं विस्तराद्गदतो मम॥ १॥**

(**१ गुप्तवती**) सावर्णिरिति। अष्टमः स्वायंभुवस्वारोचिषउत्तमतामसरैवतचाक्षुषवैवस्वतादिनाम्नां चतुर्दशानां मध्ये। विस्तरात् ग्रन्थबाहुल्येन॥ १॥

(**२ चतुर्धरी**) सवर्णा छाया तस्या अपत्यं सावर्णिः। बाह्वादित्वादिञ्। यद्वा अग्रजस्य वैवस्वतमनोः समानो वर्णो यस्य इति सावर्णिः। स्वार्थे तद्धिताभिधानात्। तथाच विष्णुपुराणे। 'छायासंज्ञासुतो योऽसौ द्वितीयः कथितो मनुः। पूर्वजस्य सवर्णोऽसौ सावर्णिस्तेन कथ्यते'। सूर्यतन्वः सूर्यतनय इति दक्षसावर्ण्यादीनां निरासार्थं। यः सावर्णिरष्टमो मनुः सुरथः कथ्यते तदुत्पत्तिं निशामय जानीहीत्यर्थः। निशामयेति 'शम लक्ष आलोचने' इत्यस्य चौरादिकस्य रूपं। 'शमोऽदर्शने' इति दर्शनेतरविषय एव सानुबन्धसंज्ञाविधानाद्ध्रस्वाभावः। तदुत्पत्तिमितिवाच्यवाचकभेदाभिप्रायेण। विस्तरात्प्रपञ्चतः गदतः कथयतः ममेत्यपवादविषये क्वचि(दस्या)दुत्सर्गस्यापि समावेशात्पञ्चम्यर्थे षष्ठी अव्ययं वा पञ्चम्यतं। यद्वा मम विस्तरान्ममशब्दप्रपञ्चात्। 'विस्तारो विग्रहो व्यासः स च शब्दस्य विस्तरः' इत्यभिधानात्। मम मुखाद्वा। अन्येतु ममगदतः ममवचनादित्याहुः। गद्यतेऽनेनेति गदो मुखं। गदनं गदो वचः। घञर्थे कः। तदन्तात् तस्॥ १॥

(**३ शान्तनवी**) वृणोति व्रियते वर्ण्यते च वर्णनं च वर्णः। 'वर्णो द्विजादौ शुक्लादौ स्तुतौ वर्णं तु चाक्षरे' वर्णेन स्तुत्या सहवर्तमाना सवर्णा। अथवा आत्मभर्त्रा सवित्रा समानो वर्णो यस्याः सा सवर्णा। सवर्णायाः अपत्यं पुमान् सावर्णिः। 'स्त्रीभ्यो ढक्' इति ढकं बाधित्वा 'बाह्वादिभ्यश्च' इति इञ् प्रत्ययः। सावर्णाः पञ्चेतितु प्रयोगः। संबन्धविवक्षया दाशरथो राम इति वदन्दतो ज्ञेयः। सूर्यस्य तनयः सूर्यतनयः। स कतमो मनुरित्यपेक्षायामाह। यो मनुः कथ्यतेऽष्टम इति। यच्छब्देनोच्यते योर्थस्तच्छब्दस्तस्य वाचकः। यः पुराणज्ञैर्वैवस्वतमनोः सप्तमादनन्तरं सूर्यतनयः सावर्णिर्नाम मनुः कथ्यते सोष्टमो मनुर्भविष्यतीत्यर्थः। अष्टमत्वं विधेयं। सावर्णिरष्टमो मनुरित्येवोक्ते सवर्णायाः प्रागुक्तसामान्यव्युत्पत्त्या तादृशः अन्यजोपि कश्चिन्मनुः स्यात्। अत उक्तं सूर्यतनय इति। सूर्यतनयोऽष्टमो मनुरित्येवोक्ते छायासुतोऽपि सूर्यतनयः शनैश्चरो मनुः स्यात्। अत उभयमुक्तं सावर्णिः सूर्यतनय इति। तस्य सावर्णेरष्टममनोरुत्पत्तिं विस्तरात् शब्दप्रपञ्चाद्गदतो मम मुखं वा संमुखं निशामय। हे शिष्य दत्तावधानः सन् पश्येत्यर्थः। निशामय शृण्विति तु कुव्याख्यानं। तथाहि शमु उपशमे दिवादिः। शमलक्ष आलोचने चुरादिः। आभ्यां यथायोगं णिचि 'अत उपधायाः' इति वृद्धौ। शमोदर्शने शमोर्णौ दर्शनादन्यत्रार्थे मित्संज्ञो भवति। अमन्तत्वादेव मित्वसिद्धौ नियमार्थोयं योगः। मितां ह्रस्वः। शमयति व्याधिं निवर्तयति निशामयति श्लोकान् शृणोति। दर्शनेतु मित्वाभावात् ह्रस्वत्वाभावादत उपधायावृद्धिरेव। निशामयेति रूपं पश्यति निशामयति। चक्षुषा रूपं पश्यतीत्यर्थः। 'निःशर्करमिदं तीर्थं भारद्वाज निशामय'। चक्षुषा पश्येत्यर्थः। तथाच दुर्घटः। निशामयतदुत्पत्तिमित्यत्र निशामनं चक्षुःसाधनं ज्ञानमिति व्याख्यत्॥ १॥

(**४ नागोजीभट्टी**) सावर्णिरिति। सवर्णायाश्छायाया अपत्यं सावर्णिः। बाह्वादित्वादिञ्। विस्तराद्गदतो ममेति अपादानशेषत्वविवक्षायां षष्ठी। निशामय जानीहि। चुरादे रूपं। तस्य 'नान्येमितोहेतो' इति मित्वनिषेधः। सूर्यस्य तनय इति दक्षसावर्ण्यादिनिरासार्थं। यद्वा यः यकारादष्टमो मनुर्हकारस्तस्य विशेषणं सूर्यतनय इति। सत्त्वाग्निस्तेजस्वित्वेन तन्त्रेदिष्टत्वात्तेन तद्बीजं रेफो लभ्यते। तद्वत्त्वं च हकारस्य लक्षणयोच्यते। तस्यैव विशेषणान्तरात्सावर्णिरिति। सवर्णा लोहितशुक्लकृष्णवर्णसहिता प्रकृतिः तस्या अपत्यवत्संबन्धि तद्वाचक इकारः। तद्वत्त्वं लक्षणया अन्तिमो बिन्दुस्तु श्लोके स्वरूपत एव निवेशित इति। ह्रींइतिबीजं लब्धं। तदुत्पत्तिं तन्मन्त्रं प्रतिपाद्यदेवताया उत्पत्तिं निशामयेति संबन्धः। यद्यपि एतदुपक्रमप्रश्ने 'अस्मिन् कल्पे सप्त येन्ये भविष्यन्ति महामुने। मनवस्तान् समाचक्ष्व तेषु देवादयश्च ये' इत्येवोक्तं तथापि सावर्णिकाख्यानकथनोत्तरं मार्कण्डेयपुराणे 'सावर्णिकमिदं सम्यक् प्रोक्तं मन्वन्तरं तव। तथैव देवीमाहात्म्यं पृष्टमेतत्तवोदितम्' इत्युपसंहारेण तद्विषये क्रोष्टुकिं प्रश्नस्यानयनात् उपक्रमप्रश्ननिबन्धरूपलक्षणमिति बोध्यम्॥ १॥

(**५ जगच्चन्द्रचन्द्रिका**) एवं प्रतिमन्त्रं स्वाहापदं देयमिति निष्पन्नं। सावर्ण्याद्यास्ततः परं श्लोकमन्त्राः सप्तदश इति। ततः परं मार्कण्डेय उवाचेतिमन्त्रात्परं सावर्णिरित्ययं श्लोक आद्यो एषां ते सावर्ण्याद्याः। सावर्णिः सूर्यतनय इति प्रथमश्लोकः। मन्त्रस्तु द्वितीयो जात इत्यर्थः। श्लोकरूपमन्त्राः सप्तभिरधिका दश सप्तदश। तत्संख्याका वर्तन्त इति शेषः। तथाहि सावर्णिरिति २॥ १॥

(**६ दंशोद्धारः**) सवर्णा छाया तस्या अपत्यं सावर्णिः। बाह्वादेराकृतिगणत्वादिञ्। निशामय जानीहि इत्यर्थः। शमोदर्शने। मित्वविधानादालोचनार्थस्य चौरादिकस्य रूपं। मम गदतः गदनं गदः। घञऽर्थे कविधानमिति कः। तस्माज्जानीहीत्यन्वयः। यद्वा गदतोमम। पञ्चम्यर्थे षष्ठी। ममेत्यर्थे विभक्तिप्रतिरूपकमव्ययं वा। ममत्वमिति त्वप्रत्ययप्रकृतिवत्। यद्वा गदतो मम विस्तरात् शब्दप्रपञ्चात्। 'विस्तारो विग्रहो व्यासः सतु शब्दस्य विस्तरः' इत्यभिधानात्॥ १॥

**महामायानुभावेन यथा मन्वन्तराधिपः । स बभूव महाभागः सावर्णिस्तनयो रवेः ॥ २ ॥**

**( १ गुप्तवती ) ॥ २ ॥**

**( २ चतुर्धरी )** महामायेति । विसदृशप्रतीतिसाधनं मया । तस्याश्च महत्वं सर्वविषयत्वमिति महामायेश्वरशक्तिः । सैवहि प्राणिनो मोहयति । तस्या अनुभावेनेदमस्य भूयादित्यनुकूलेच्छया यथा येन प्रकारेण मन्वन्तरं किंचिदधिकैकसप्तति चतुर्युगात्मकः कालः । तस्याधिपो राजा बभूवेति भाविनि भूतवदुपचारः । तथा तं प्रकारं निशामयेत्यनुषङ्गः । यत्तदो(साहचर्यनियमात्)र्नित्यसंबन्धात् । महानसाधारणो भागो भगसमुदायो यस्य स च । 'ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा'इति विष्णुपुराणोक्तेः । रवेस्तनयः सावर्णिरिति संभ्रमेण पुनरुक्तिः ॥ २ ॥

**( ३ शान्तनवी )** स प्रसिद्धः सावर्णिः रवेस्तनयः महाभागः महामायानुभावेन यथा मन्वन्तराधिपो बभूव तथा विस्तरतो गदीष्यामीत्यन्वयः । मात्यस्यां विश्वं माया । माकाभ्यामयच् । अथवा मान पूजायां चुरादिः । मानयितुमर्हा माया । पृषोदरादित्वान्नलोपः । अथवा मा लक्ष्मीः माइति अयः शुभावहो विधिर्यस्याः सा माया महती चासौ माया च महामाया तस्याः परमशक्तेः अनुभावः प्रभावः तेन । अथवा महती चाद्या माया यस्याः सा महामाया तस्यामनुभावः मतिनिश्चयः अबाध्याध्यवसायः महामायानुभावः तेन । अथवा अः विष्णुः तस्य माया अमाया महती चासावमाया च महामाया तस्याः अनुभावः महामायानुभावः तेन । 'अनुभावः प्रभावे च सतां च मतिनिश्चये' । अथवा अय गतौ अययति अर्पयतीति णिजन्तात्पचाद्यचि स्त्रियां टापि अया आसमन्तादभिव्याप्ता मा लक्ष्मीः आमा आमाया अयाः आमाया । महैरुत्सवैरभिव्याप्तां मां लक्ष्मीं उपासकाय अययति अर्पयति वा शक्तिर्भवति सा महामाया तस्या अनु पश्चात् अबाध्याध्यवसायादनन्तरं भावः परमात्मतयानुसाधनं अनुभावः 'तं भावं भावयेद्योगी' इति स्मरणात् । 'भावः सत्ता स्वभावाभिप्रायचेष्टात्मजन्मसु' ॥ तेन । 'पश्चात्सादृश्ययोरनु' । मन्वन्तराधिपः । इह प्रकरणतः सप्तममनुजीवितकालात्परभूतो नवममनूदयात्पूर्वो यः कालः स मन्वन्तरशब्देन विवक्षितः । ततश्चान्तरशब्दो मध्ये वर्तते । मन्वोः सप्तमनवमयोरन्तरे मध्यकाले ब्रह्मणाधिकृतः रक्षकः प्रजानां पतिरधिपो मन्वन्तराधिपः । 'अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये । छिद्रात्मीयविनाबहिरवसरमध्येन्तरात्मनि च' । महाभागः । भज सेवायां भावे घञ् 'चजोः कुघिण्यतोः' महान्भागो भक्तिर्यस्य स महाभागः । अथवा भासृ दीप्तौ कर्तरि क्विप् । भासते भाः । भासं धर्मं वा गच्छति प्राप्नोतीति भागः । 'गमेर्डोऽन्यत्रापि दृश्यते' इति कर्तरि डः । महांश्चासौ भागश्चेति महाभागः । अथवा भासं परदेवतां गायतीति भागो मन्त्रः । 'आतोऽनुपसर्गे कः' । महान्भागो मन्त्रो यस्य स महाभागः । अथवा भगस्यैश्वर्यादेरिदं भागं भवितव्यतालक्षणं हेतु वस्तु । महत् भाग्यं यस्य स महाभागः । 'ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः । वैराग्यस्याथ मोक्षस्य षण्णां भग इतीरणा' 'भग श्रीकाममाहात्म्यवीर्यरत्नार्ककीर्तिषु' । तनोति कुलं तनयः । रूयते स्तूयते रविः तस्य ॥ २ ॥

**( ४ नागोजीभट्टी )** महामायेति । विसदृशप्रतीतिसाधनं माया । तस्या महत्वं च सर्वविषयत्वमिति महामाया ईश्वरशक्तिः तस्या अनुभावः इदमित्थं भवत्विती च्छा । मन्वन्तरं किंचिदधिकैकसप्ततियुगात्मकः कालः । तथेत्यनेन तथा तं प्रकारं निशामयेत्यनुषङ्गो दर्शितः । भागं भगसमूहः । 'ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा'इति विष्णुपुराणात् । बभूवेति भूतवदुपचारः । तद्भवनस्यावश्यकत्वद्योतनाय सावर्णिस्तनयो रवेरिति संभ्रमे पुनरुक्तिः॥२॥

**( ५ जगच्चन्द्रचन्द्रिका )** महामायेति ३ ॥ २ ॥

**( ६ दंशोद्धारः )** महामायेति । बभूवेतिभूतनिर्देशस्तूपचारात् । यद्वा कल्पान्तराभिप्रायेणैतत् । एवमग्रेप्यूह्यम् ॥२॥

**स्वारोचिषेऽन्तरे पूर्वं चैत्रवंशसमुद्भवः । सुरथो नाम राजाऽभूत्समस्ते क्षितिमण्डले ॥ ३ ॥**

**( १ गुप्तवती ) ॥ ३ ॥**

**( २ चतुर्धरी )** अत्रेतिहासमवतारयति । स्वारोचिषेन्तर इति । स्वरोचिषोऽपत्यं स्वारोचिष इति । स्वारोचिषो नाम द्वितीयो मनुः तदधिकारोपलक्षिते स्वारोचिषे अन्तरे समये । द्वितीयमन्वन्तरे इतियावत् । 'मन्वन्तरं मनोः कालः' इति विष्णुपुराणदर्शनात् । पूर्वं कथाकालापेक्षया चैत्रोनाम स्वारोचिषस्य मनोः सूनुः तस्य वंशे संततौ समुद्भवो जन्म यस्य । नामेति प्रसिद्धौ । सुरथसंज्ञया प्रसिद्ध इत्यर्थः ॥ ३ ॥

**( ३ शान्तनवी )** अष्टमो मनुः कथ्यत इति प्राग्यः प्रस्तुतस्तस्य सावर्णेः प्राग्जननिदानतामहिमचरित्राणि वर्णयति मार्कण्डेयोऽनेन श्लोकेन । पूर्वं प्रथमं स्वायम्भुवमन्वन्तरमपेक्ष्य द्वितीयमन्वन्तरलक्षणे स्वारोचिषेऽन्तरे स्वारोचिषमन्वन्तर-

कल्पे पुराकल्पे चैत्रवंशसमुद्भवः सुरथो नामा प्रसिद्धः । समस्ते क्षितिमण्डले राजाभूत् अजनिष्ट । अवर्तत अवितेत्यर्थः । स्वस्येव आत्मन इव ब्रह्मण इव रोचिः प्रभा यस्य सः स्वरोचिर्मनुः । अथवा अः विष्णुः सुष्ठु अस्येव विष्णोरिव रोचिच्छविर्यस्य सः स्वरोचिः मनुः । स्वरोचिष इदं स्वारोचिषं तस्मिन्स्वारोचिषे । आगमशासनस्यानित्यत्वादैजभावः।'रोचिः शोचिरुभे क्लीबे प्रकाशोद्द्योत आतपः' । अन्तमवसानं राति गृह्णात्यन्तरं तस्मिन्कालविशेषे पूर्वकालं अपेक्षणक्रियापेक्षा द्वितीया । चिती संज्ञाने । सर्वधातुभ्यष्ट्रन् । चेतति जानाति धर्माधर्मप्रवृत्त्यप्रवृत्तीकर्तुमिति चित्रः कश्चिद्राजा तस्यापत्यं पुमान् चैत्रः । शिवादिभ्योऽण् । तस्य वंशः संतानः । तस्मात्समुद्भवतीति चैत्रवंशसमुद्भवः । अथवा चिञ् चयने । अमिचिमिदिशसिभ्यः क्तः । चीयते चित्रमद्भुतं कर्म तस्यायं चैत्रः तस्य राज्ञो वंशः तस्मात्समुद्भवः विद्यया जन्मना वा प्राणिनामेकलक्षणः संतानो वंश इत्युच्यते । रमन्तेस्मिन् रथः । शोभनो रथो यस्य सः सुरथः । 'नामप्राकाश्यसंभाव्यक्रोधोपगमकुत्सने' । राजते इति राजा । अभूत् । भू सत्तायां लुङ् । क्षितेर्भूमेर्मण्डलं चक्रवालं तस्मिन् ॥ ३ ॥

(४ **नागोजीभट्टी**) स्वारोचिषे इति । स्वारोचिषाधिकारोपलक्षिते द्वितीयमन्वन्तरे पूर्वमिति कथाकालापेक्षया। चैत्रस्तस्यैव मनोः सुतः । नामेति प्रसिद्धौ ॥ ३ ॥

(५ **जगच्चन्द्रचन्द्रिका**) स्वारोचिष इति ४ ॥ ३ ॥

(६ **दंशोद्धारः**) स्वारोचिष इति । स्वारोचिषे द्वितीयमन्वन्तरे । चैत्रः स्वारोचिषस्य सुतः ॥३ ॥

**तस्य पालयतः सम्यक् प्रजाः पुत्रानिवौरसान्। बभूवुः शत्रवो भूपाः कोलाविध्वंसिनस्तथा॥४॥**

(१ **गुप्तवती**) कोलाविध्वंसिन इति । कोलेति क्षत्रियाणां कुलविशेष इति केचित् । कोलेति सुरथस्यैव राजधान्यन्तरमित्यन्ये ॥ ४ ॥

(२ **चतुर्धरी**) तस्येति । सम्यक् नीतिशास्त्रानुसारेण प्रजा लोकान् औरसान् धर्मपत्नीप्रभवान्पुत्रानिव पालयतस्तस्य शत्रवस्तथा तादृशा अत्युद्रिक्ता बभूवुः । के ते इत्यपेक्षायामाह । कोलाविध्वंसिन इति । कोलेति अन्येषामेव काचिद्राजधानी तां विध्वंसितुमध्यासितुं शीलं येषां । विशब्देन धातोरन्यार्थकरणात् । तेन कोलाविध्वंसिनः कोलानिवासिनो भूपास्तस्य शत्रवो विपक्षा बभूवुरित्यर्थः । तथा तादृशा उद्रिक्ता इति यावत् । तदेति वा पाठः । अथवा कोलेति सुरथस्यैव राजधान्यन्तरं तां ध्वंसितुमुपमर्दितुं शीलं येषां ते तस्य शत्रवो भूपास्तथा बभूवुः । यथा कोलाविध्वंसिन इत्यन्वयः । अथवा तदा तत्काले तस्य शत्रवः कोलाविध्वंसिनो बभूवुः कोलां विध्वंसितवन्त इत्यन्वयार्थः केचिदाहुः । यद्वा कोलाः सूकरास्तान्नविध्वंसन्ति न खादन्ति ते कोलाविध्वंसिनो यवनाः । व्रताभिक्ष्ण्ययोश्चेति णिनिः । कोलानाम शस्त्रविशेषः तया विध्वंसितुं शीलं येषां ते । 'कोला शस्त्रप्रभेदे स्यात्' इत्यमरः ॥ ४ ॥

(३ **शान्तनवी**) तदा तस्मिन्स्वारोचिषमन्वन्तरे काले औरसानुरसोत्पादितान् । उरसा निर्मितान् । 'उरसो यञ्च' पुत्रानिव सम्यक् अनवद्यं यथा स्यात्तथा प्रजा लोकान्पालयतः दुःखेभ्यो रक्षतस्तस्य सुरथस्य राज्ञः कोलाविध्वंसिनो भूपाः शत्रवः शातयितारे बभूवुरित्यन्वयः । को ब्रह्मा । अः विष्णुः । उः महेश्वरः । तान् ब्रह्मविष्णुमहेश्वरान् काः लान्ति अर्चयितुं गृह्णन्ति इति कोला ब्राह्मणादयः तान् आसमन्ताद्विध्वंसयन्तीति कोलाविध्वंसिनः रक्षोयोनयः । अथवा कोलाः सूकराः तान्नविध्वंसयन्ति इति कोलाविध्वंसिनो यवनाः । अथवा कोलान्सूकरान्विध्यन्ति ताडयन्तीति कोलाविधः । 'नहिवृतिवृषिव्यधि' इति दीर्घः । कोलाविधः क्षत्रियादयः तान् ध्वंसयन्ति इति कोलाविध्वंसिनो यवनाः । ननुच कोलान्सूकरान् अवन्ति रक्षन्तीति कोलाविनो यवनाः तान् ध्वंसयति इति कोलाविध्वंसी तस्य कोलाविध्वंसिनः । सुरथस्यापि विशेषणमेतत्स्यात् । अस्तु यदीत्थं व्युत्पाद्येत । उत्तरश्लोके तु कोलाविध्वंसिभिरित्येतद्यवनविशेषणतया व्युत्पादयिष्यामः । उरसा निर्मितः । 'उरसो यञ्च' 'औरसो धर्मपत्नीजः' इति स्मृतिः । पुत् अव्ययं नरकवाचि । पितरं पुन् नरकात्त्रायते पुत्रः । अथवा पूञ् पवने । पुनाति पुत्रः । पुवो ह्रस्वश्चेति क्तन् । 'पुत्रः स्यादात्मसंभवः । पुन्नाम्नो नरकाद्यस्मात्पितरं त्रायते सुतः । ततः पुत्र इति प्रोक्तः स्वयमेव स्वयंभुवा' इति स्मृतिः ॥ ४ ॥

(४ **नागोजीभट्टी**) तस्येति । सम्यक् नीतिशास्त्रानुसारेण । कोला सुरथस्यैव राजधान्यन्तरम् । तथा अतिशयेन कोलाविध्वंसिन इत्यर्थः ॥ ४ ॥

(५ **जगच्चन्द्रचन्द्रिका**) तस्य पालयत इति ॥ ५ ॥ ४ ॥

(६ **दंशोद्धारः**) तस्येति । कोलान्सूकरान्नविध्वंसन्ति ते कोलाविध्वंसिनो यवनाः । यद्वा कोलान्विध्यन्ति ते कोलाविधः 'नहिवृतिवृषि–' इति दीर्घः । क्षत्रियादयस्तान् ध्वंसयन्तीत्यर्थः । को ब्रह्मा अः विष्णुः उर्महेशः तान् लान्ति पूजार्थं गृह्णन्ति ते कोलाः ब्राह्मणास्तानासमन्तात् विध्वंसयन्तीति वा । यद्वा कोला शस्त्रविशेषस्तेन विध्वंसिनः । यद्वा कोला सुरथराजधानी तद्विध्वंसिनः । यद्वा कोला येषामेव राजधानी तस्यां विध्वंसिनो निवासिनः । उपसर्गेण धात्वर्थस्यान्यथात्वकरणात् ॥ ४ ॥

**तस्य तैरभवद्युद्धमतिप्रबलदण्डिनः । न्यूनैरपि स तैर्युद्धे कोलाविध्वंसिभिर्जितः ॥ ५ ॥**

**( १ गुप्तवती ) ॥ ५ ॥**

**( २ चतुर्धरी )** तस्य तैरित्यादि । युद्धं संप्रहारः । दण्डो हस्त्यश्वादिसमूहः अत्यतिशयेन प्रबलोः दण्डो विद्यते यस्य स तस्य । अथवा धर्मशास्त्रानुसारी दण्डः प्रजासु विद्यते यस्य तस्य सुरथस्य राज्ञस्तैः कोलाविध्वंसिभिः सह युद्धं संहारोऽभवत् । अथवा अत्युचितदण्डकारिणः न्यूनैरल्पसाधनैरपि तैः सुरथो जितः भंगेनयोजितः । जयभङ्गयोर्दैवाधीनत्वात् ॥५॥

**( ३ शान्तनवी )** तस्य अतितरां प्रकृष्टं बलं हस्त्यश्वरथपादातसन्नद्धं सैन्यं येषां शत्रूणां ते अतिप्रबलाः तान् दण्डयति इत्यतिप्रबलदण्डी तस्य सुरथस्य तैः कोलाविध्वंसिभिर्यवनैर्भूपैः सह युद्धमभवत् । तस्मिन्युद्धे सुरथो राजा न्यूनैरल्पबलैरपि तैः कोलाविध्वंसिभिर्यवनभूपैर्जितोऽभिभूत इत्यन्वयः । इह जित इति नायं जि जये इत्यस्य प्रयोगः । कस्य तर्हि जि अभिभवे इत्यस्य । तदुक्तम् । 'जयतिर्जयाभिभवयोराद्येऽर्थेऽसावकर्मकः । उत्कर्षप्राप्तिराद्योर्थो द्वितीयेऽर्थे सकर्मकः' इति । कोला नाम नगरी तां राजधानीं विध्वंसयन्तीति कोलाविध्वंसिनो यवनाः भूपास्तैः । अथवा कोलेति शस्त्रभेदः तया विध्वंसयन्तः कोलाविध्वंसिनः । सुरथो नाम राजाभूत् समस्ते क्षितिमण्डले इति सुरथस्य यत्सार्वभौमत्वमुक्तं प्राक् तदिदानीं नदैववशाच्छत्रुभिरल्पैरथाक्रान्तः सागरान्ताखिलावनिवलयत्वात्तस्येति भावः ॥ ५ ॥

**( ४ नागोजीभट्टी )** तस्य तैरिति । अतिप्रबलदण्डकर्तुः । छान्दसत्वात्कर्मधारयादिभिः । इदं पराजयनिमित्तं । न्यूनैरल्पसाधनैः ॥ ५ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** तस्य तैरभवदिति ६ ॥ ५ ॥

**( ६ दंशोद्धारः )** तस्य तैरिति । अतिप्रबलो दण्डोऽपराधिषु चतुर्थोपायो यस्य । हस्तो वा दण्डः । कर्मधारयान्मत्वर्थीयस्य निषिद्धत्वेऽपि मतुबर्थिक इति भाष्येण लाघवादस्य सूचितत्वात् । किसलयच्छेदयाशेयवन्त इतिवत्कर्मधारयादपि मत्वर्थिय इति इनिः । अतितरां प्रकृष्टं बलं येषां शत्रूणां तान् दण्डयतीति वा । जितः अभिभूतः । जि अभिभवे नतु जि जये । तस्याकर्मकत्वात् । अति पिपर्ति इत्यतिप्रः । मूलविभुजादित्वात्कः । अतिविरुढः बलदण्डः सैन्यसन्निवेशो यस्येति वा ॥ ५ ॥

**ततः स्वपुरमायातो निजदेशाधिपोऽभवत् । आक्रान्तः स महाभागस्तैस्तदा प्रबलारिभिः ॥ ६ ॥**

**( १ गुप्तवती ) ॥ ६ ॥**

**( २ चतुर्धरी )** ततः स्वपुरमित्यादि । ततोऽनन्तरं स्वपुरमात्मराजधानीं वा निजदेशाधिपो मूलराष्ट्राध्यक्षः आक्रान्तोऽभिभूतः आच्छिन्नदेशो वा ततस्तैराक्रान्तः स्वपुरमायातो निजदेशाधिपोऽभवदित्यन्वयः । तदा प्रबलैस्तत्कालप्राप्तबलैः । अरिभिरित्यर्थः ॥ ६ ॥

**( ३ शान्तनवी )** ततएवाह । तदा तद्युद्धविधिसमये ततः अभिभवाजितस्तैः प्रबलारिभिराक्रान्तः व्याप्तः अधिक्षिप्तः स महाभागः सुरथः स्वपुरं आयातः सन् निजदेशाधिपोऽभवत् । स्वकीयपुरजनपदमात्राधिप एवासीत् नतु सार्वभौम इत्यन्वयः । स यद्यपि शत्रुभिराक्रान्तस्तथापि तदाक्रान्तिजनितोद्वेगोपगतवनवासिमुनिवरोपदिष्टमहामायैकसमाराधनलब्धवरावाप्तव्यसाम्राज्यसंप्राप्तव्याष्टमममनुत्वपदलक्षणभवितव्यतावाप्तिपात्रतया महाभाग इतिविशेषणमर्थवदेव । तदुक्तं । 'संभवे व्यभिचारे च स्याद्विशेषणमर्थवत्' इति । दिश्यते देशः स्थानमात्रम् । ननु च नीवृज्जनपदो देशस्तु विषयः स्थानमात्रं तत्कथं देशग्रहणेनेह जनपदो लभ्यते तदभ्यधादमरः । 'नीवृज्जनपदो देशविषयौ तूपवर्तनम्' इति । 'त्वंताथादि न पूर्वभाक्' इति च यत्पर्यभाषिष्ट । नैव दोषः । नीवृदादीन्पञ्चैकार्थानाहुरपरेत्वित्याश्रयणात् । आत्मात्मीयज्ञातिधनवाची स्वशब्दः ॥६॥

**( ४ नागोजीभट्टी )** तत इति । ततः भङ्गानन्तरम् । तैः प्रबलैः अरभिः शत्रुभिराक्रान्त आक्रमितः महाभागः स्वपुरं आयातः । निजदेशाधिप एवाभवत् न सार्वभौम इत्यर्थः । भावे तज्जन्मभवजन्मान्तरीणमहाराज्यमिति बुद्धौ स्वीकृत्य महाभाग इत्युक्तम् ॥ ६ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** ततः स्वपुरमिति ७ ॥ ६ ॥

**( ६ दंशोद्धारः )** तत इति । तदा युद्धसमये तत अभिभवावाप्तितः मुनिवरोपदिष्टदेव्याराधनालब्धमन्वन्तरत्वमात्रभावितया महाभाग इति ॥ ६ ॥

**अमात्यैर्बलिभिर्दुष्टैर्दुर्बलस्य दुरात्मभिः । कोशो बलं चापहृतं तत्रापि स्वपुरे सतः ॥ ७ ॥**

**( १ गुप्तवती ) ॥७॥**

**(२ चतुर्धरी)** अमात्यैरिति। ततस्तस्य । सार्वविभक्तिकस्तस् । तत्र स्वपुरे अप्यमात्यैः कोशोऽपहृतो बलं चापहृतमित्यन्वयः । बलिभिः संजातबलैः दुष्टैर्जातप्रकोपैः दुर्बलस्य शत्रुक्षयितबलस्य दुरात्मभिः लोभाद्युपहतान्तःकरणैः कोशोऽर्थसंचयः बलं सैन्यं ॥ ७ ॥

**(३ शान्तनवी)** तत्रापि तन्मात्रे सपत्नाहृतभूचक्रे गर्हिते स्वपुरे सतो निवसतो दुर्बलस्य शत्रुभिर्गृहीतभूचक्रस्य प्रभुमन्त्रोत्साहशक्तिशून्यस्य सुरथस्य कोशो बलं च बलिभिर्बलवद्भिर्दुष्टैरुल्लङ्घितमर्यादैर्दुरात्मभिर्दुराशयैः राज्यं गृहीतुं कृतनिश्चयैरमात्यैर्मन्त्रिभिः आपहृतं आत्मसात्कृतमित्यन्वयः । अमा सह समीपे वा भवा अमात्याः 'स्थौल्यसार्थ्यसैन्येषु बलं ना काकसीरिणोः । कोशः स्वर्णादिलोहाष्टकसंग्रहः । 'सुवर्णं रजतं ताम्रं रितिः कांस्यं तथा त्रपु । सीसं कालायसं चैव ह्यष्ट लोहानि चक्षते' । आपहृतः कोशः अपहृतं च बलमिति विगृह्य नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम् ' इति नपुंसकशेषः । एकवद्भावश्च । अपिशब्दो गर्हायां । दुरीषदर्थकुत्सनवैवर्ण्यासंभवलाभेषु । दुष्टैरिति । दुष वैकृत्ये । क्तः कर्तरि । वैकृत्यं रूपभङ्गः ॥ ७ ॥

**(४ नागोजीभट्टी)** अमात्यैरिति । ततः तस्य । सार्वविभक्तिकस्तसिः । तत्र स्वपुरेऽतिकोशोऽर्थसंचयः बलं सैन्यं चापहृतं आत्मसात्कृतं । दुष्टत्वं राजविषयद्वेषवत्वं दुरात्मत्वं राज्यलोभाक्रान्तत्वं दुर्बलत्वं क्षीणबलत्वं रिपुकृताभिभवात् ॥ ७॥

**(५ जगच्चन्द्रचन्द्रिका)** अमात्यैरिति ८ ॥ ७ ॥

**(६ दंशोद्धारः)** अमात्यैरिति । दुष्टैः कामक्रोधादिदोषयुक्तैर्दुरात्मभिः स्वामिद्रोहेण निन्दितान्तःकरणैरित्यपौनरुक्त्यं । अपहृतमिति । नपुंसकमनपुंसकेन' इति नपुंसकशेषः । ततस्तस्य । सार्वविभक्तिकस्तसिः । सत इति वा पाठः । पञ्चम्यन्तं वा॥७॥

**ततो मृगयाव्याजेन हृतस्वाम्यः स भूपतिः । एकाकी हयमारुह्य जगाम गहनं वनम् ॥ ८ ॥**

**( १ गुप्तवती ) ॥ ८ ॥**

**(२ चतुर्धरी)** ततो मृगयेत्यादि । मृगयाव्याजेन मृगवधच्छलेन हृतं स्वाम्यमाधिपत्यं च यस्य सः । एकाक्यद्वितीयः । गहनं दुर्गमं वनन् ॥ ८ ॥

**(३ शान्तनवी)** ततः अमात्यैरपहृतकोशबलत्वात् हृतस्वाम्यः अपहृतस्वामित्वः स सुरथो भूपतिः एकाकी असहायः केवलं मृगयाव्याजेन हयमारुह्य गहनं निरन्तरव्याप्तलतादिपिहितोदरं काननं जगाम गतवानित्यन्वयः । मृग्यन्तेऽन्वेष्यन्ते प्राणिनो मृगादयोऽस्यां मृगया पापर्द्धिः तस्या व्याजः तेन आखेटकव्याजेन मुनिवनोपगमनमेवात्र मुख्यं कार्यं नतु मृगयाचरणम् । मुख्यकार्यस्वरूपाच्छादनं व्याजः । स्वामिन ईश्वरस्य भावः स्वाम्यं । हृतं स्वाम्यं यस्मात् स हृतस्वाम्यः । एक एव एकाकी । 'एकादाकिनिचासहाये' । 'एकाकी लेक एककः' । 'कलिलं गहनं समे' ॥ ८ ॥

**(४ नागोजीभट्टी)** तत इति । हृतस्वाम्यः हृताधिपत्यः । एकाकी असहायः ॥ ८ ॥

**(५ जगच्चन्द्रचन्द्रिका)** ततो मृगयेति ९ ॥ ८ ॥

**(६ दंशोद्धारः)** तत इति । ततोऽनन्तरमित्यर्थः । एकाकी असहायः । यद्वा न कमकं दुःखं एकं च तदकं चैकाकं तदस्यास्तीत्येकाकी । 'एके मुख्यान्यकेवलाः' । कर्मधारयान्मत्वर्थीयस्तु प्राग्वत् । सुखार्थस्य कशब्दस्य नाक इत्यादावमान्तस्यापि दर्शनान्मान्तस्यैव सुखार्थकत्वं नाशङ्कनीयम् ॥ ८ ॥

**स तत्राश्रममद्राक्षीद्द्विजवर्यस्य मेधसः । प्रशान्तश्वापदाकीर्णं मुनिशिष्योपशोभितम् ॥ ९ ॥**

**(१ गुप्तवती)** मेधस इति सुमेधोनामकमुनिविशेषस्य । लक्ष्मीतन्त्रे तु 'जन्मानि चरितैः सार्धं स्तोत्रैर्वै वेदवादिना । कथितानि पुरा शक्र वसिष्ठेन महात्मना । स्वारोचिषेऽन्तरे राज्ञे सुरथाय महात्मने । समाधये च वैश्याय प्रणतायावसीदते' इत्युक्तं । अनयोरेकमन्यस्य विशेषणं वा द्वयोरपि नामत्वे कल्पभेदेन वा समाधानम् ॥ ९ ॥

**(२ चतुर्धरी)** स तत्रेति । आश्रमं मुनिवासोचितं स्थानं द्विजवर्यस्य ब्राह्मणश्रेष्ठस्य मेधसो मेधोभिधानस्य। प्रशान्तैः परहिंसाविरहितैः श्वापदैर्हिंस्रपशुभिः आकीर्णमभिव्याप्तं। मुनेर्मेधसः शिष्या मुनिशिष्याः मुनयो मननशीलाश्च ते शिष्याश्चेति वा मुनयश्च शिष्याश्चेति वा तैरुपशोभितमलंकृतम् ॥ ९ ॥

**( ३ शान्तनवी )** द्विजेति संबुध्यन्तम् । वर्य इति तु राजविशेषणम् । मार्कण्डेयः स्वशिष्यं संबोधयति । हे द्विज इतः सुरथचरित्रकथाश्रवणप्रवणो भवेति । स वर्यः वर्योऽर्हः सुरथः तत्र तस्मिन्वने सुमेधसो नाम मुनेः शिष्योपशोभितं प्रशान्तश्वापदाकीर्णं आश्रममद्राक्षीद्ददर्शेत्यन्वयः । मुनेरिति सुमेधसो विशेषणं विधेयत्वेन । आश्रम्यन्ति तपस्यन्त्यत्रेत्याश्रमः । द्वाभ्यां मातृमौञ्जीभ्यां जायते द्विजः । हे द्विज । सुष्ठु शोभना मेधा यस्य स सुमेधाः । 'नित्यमसिच्प्रजामेधयोः' इत्यसिच्प्रत्ययः । तस्य मुनेः तपःसामर्थ्यात्प्रशान्ताः संत्यक्तहिंस्रता ये श्वापदा व्याघ्रादयस्तैराकीर्णं व्याप्तं । शुन इव पदानि येषां ते श्वापदाः । 'शुनो दन्तदंष्ट्राकर्णकक्रुदवराहलाङ्गूलपदपुच्छेषु' इति दीर्घत्वं । वरं पुना राज्यावाप्त्यष्टममनुत्वावाप्तिलक्षणमर्हतीति वर्यः सुरथः । 'दण्डादिभ्यो यः' । अथवा 'छन्दसि च' इति यत् । छन्दोवत्पुराणानि भवन्ति । 'तपोभिरिष्यते यस्तु देवेभ्यः स वरो मतः' । 'देवाद्वृते वरः श्रेष्ठे त्रिषु क्लीबं मनाक्प्रिये' । शिष्यैर्वेदानधीयद्भिरुपशोभितं शोभान्वितं संजातशोभम् ॥ ९ ॥

**( ४ नागोजीभट्टी )** स तत्रेति । मेधा इति ऋषिनाम । वस्तुतो वसिष्ठस्य नामान्तरमिदम् । 'अमुष्याः सावताराया महालक्ष्म्या अमानुषं । जन्मानि चरितैः सार्धं स्तोत्रैर्वा वेदवादिनां । कथितानि पुरा शक्र वसिष्ठेन महात्मना । स्वारोचिषेऽन्तरे राज्ञे सुरथाय महात्मने । समाधये च वैश्याय प्रणताय च सीदते' इति लक्ष्मीतन्त्रोक्तेः । 'श्रीशस्तु रूपमास्थाय पुरा विप्रस्य मेधसः । स्वमायां ज्ञापयामास सुरथाय समाधये' इत्यन्यत्र । प्रशान्तत्वं परहिंसाविरहत्वं । मुनिभिस्तच्छिष्यैश्च शोभितमित्यर्थः ॥ ९ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** स तत्राश्रममिति १० ॥ ९ ॥

**( ६ दंशोद्धारः )** स तत्रेति । मेधसः मेधोऽभिधानस्य । प्रशान्तैः परस्परत्यक्तवैरैः परहिंसारहितैर्वा श्वापदैर्व्याघ्रादिभिराकीर्णं । मुनेर्मेधसः शिष्यैः मुनिभिर्मननशीलैर्वा शिष्यैरुपशोभितम् ॥ ९ ॥

## तस्थौ कंचित्स कालं च मुनिना तेन सत्कृतः । इतश्चेतश्च विचरंस्तस्मिन्मुनिवराश्रमे ॥ १० ॥

**( १ गुप्तवती )** ॥ १० ॥

**( २ चतुर्धरी )** कंचित्कालमित्यत्यन्तसंयोगे द्वितीया । सचेत्यन्वयः । तेन मुनिना मेधसा सत्कृतः । पूजितः सन्नितश्चेतश्चानियतदिग्देशं । मुनिवरेति भागुरेः संबोधनं मेधसो विशेषणं वा ॥ १० ॥

**( ३ शान्तनवी )** तेन सुमेधसा मुनिना सत्कृतः आदृतः पूजितः स सुरथस्तस्मिन्मुनिवराश्रमे इतश्चेतश्च विचरन् परिभ्रमन् कंचित्कालं तस्थौ स्थितवांश्चेत्यन्वयः । कालमिति कालाध्वनोरत्यन्तसंयोगे द्वितीया । मुनिषु वरः श्रेष्ठः सुमेधा मुनिस्तस्याश्रमे । अथवा स सुरथस्तस्मिन्मुनिवराश्रमे तेन मुनिना इतः प्राप्तः अभ्यागतः सत्कृतश्च सन् कंचित्कालं चेतश्च स्वान्तं च विचरन् तपःक्षमं स्यान्न वेति विचिन्तयन् तस्थावित्यपरोऽन्वयः ॥ १० ॥

**( ४ नागोजीभट्टी )** तस्थाविति । कंचित्कालमिति कालाध्वनोरिति द्वितीया । इतश्चेतः अनियतदिग्देशम् । मुनिवरेति भागुरिसंबोधनम् आश्रमविशेषणं वा ॥ १० ॥

**( ५ जगच्चन्द्रचन्द्रिका )** तस्थौ कंचिदिति ११ ॥ १० ॥

**( ६ दंशोद्धारः )** तस्थाविति । चकारो भिन्नक्रमः । स चेत्यन्वयः । इतः प्राप्तः तेन मुनिना इतः अभिगत असन्नित्यन्वयः । मुनिवरस्याश्रमे । मुनिवरेति संबोधनं वा ॥ १० ॥

## सोऽचिन्तयत्तदा तत्र ममत्वाकृष्टचेतनः । मत्पूर्वैः पालितं पूर्वं मया हीनं पुरं हि तत् ॥ ११ ॥

**( १ गुप्तवती )** ॥ ११ ॥

**( २ चतुर्धरी )** सोऽचिन्तयदित्यादि । ममेति षष्ठ्यन्तप्रतिरूपकमव्ययम् । तस्य भावो ममत्वं ममेदमित्यभिमानः तेनाकृष्टा वशीकृता चेतना बुद्धिर्यस्य । मत्पूर्वैर्मदीयप्राचीनपुरुषैः । पूर्वं प्राक्काले । पूर्ववद्द्वितीया ॥ ११ ॥

**( ३ शान्तनवी )** तदा मुनिसंदर्शनकाले तत्राश्रमे ममत्वाकृष्टमानसः सुरथः स्वचेतसाऽचिन्तयत् कुटुम्बं स्मृतवानित्यन्वयः । ममेति विभक्तिप्रतिरूपकमव्ययं । ममेति भावो ममत्वं ममता । ममेदमिति मदीयताबुद्धिः तया आकृष्टं वशीकृतं मानसं स्वान्तं चेतो यस्य स तथोक्तः । किमचिन्तयदित्यपेक्षायामाह । पूर्वं मत्पूर्वैर्मत्पित्रादिभिः धर्मतः पालितं मत्कुलागतं पुरं संप्रति विधिवशेन मया हीनं त्यक्तं तत् हि निश्चयेन ॥ ११ ॥

**( ४ नागोजीभट्टी )** सोऽचिन्तयदिति । ममेति षष्ठ्यन्तप्रतिरूपकमव्ययम् । तस्य भावो ममत्वं ममेदमित्यभिमानः ते-

नाकृष्टा निवृत्तिमार्गादपकृष्टा चेतना बुद्धिर्यस्य सः । मत्पूर्वैः पूर्वजैरित्यर्थः । हिः पादपूरणे । उत्तरश्लोकेनान्वयः । मानस इति पाठेपि आकृष्टं मानसं यस्य ॥ ११ ॥

(५ **जगच्चन्द्रचन्द्रिका**) सोऽचिन्तयदिति १२ ॥ ११ ॥

(६ **दंशोद्धारः**) सोऽचिन्तयदिति । ममेति षष्ठ्यन्तप्रतिरूपकाद्भावे त्वप्रत्ययः ॥ ११ ॥

**मद्भृत्यैस्तैरसद्वृत्तैर्धर्मतः पाल्यते न वा । न जाने स प्रधानो मे शूरहस्ती सदामदः ॥ १२ ॥**

**(१ गुप्तवती)** ॥ १२ ॥

(२ **चतुर्धरी**) मद्भृत्यैरिति । असद्वृत्तैरिति हेतुगर्भं विशेषणं । अतएव धर्मतः पाल्यते नवेति विकल्पः । धर्मतः उचितनीत्या । प्रसिद्धः प्रधानो मुख्यः । उक्तलिङ्गं त्यजन्त्यपीति न्यायात्पुंस्त्वं । तथा च रामायणे लङ्काकाण्डे 'ये प्रधानाः प्लवङ्गमाः' इति । यद्वा प्रधानानि महामात्रास्तैः सहितः । यद्वा सप्रधानो महामात्रसहितः ॥ १२ ॥

(३ **शान्तनवी**) मद्भृत्यैरिति । असद्वृत्तैरसच्चरितैस्तैर्मद्भृत्यैर्मदमात्यप्रभृतिभिः पुंभिर्धर्मतः धर्ममाश्रित्य दुःखेभ्यः पाल्यते किं नवेति सोऽचिन्तयत्सुरथ इत्यन्वयः । 'स्वान्ववायागतं वस्तु धर्माद्यर्थोपसाधनं । स्वान्ववायोद्भवैः सम्यक् पालनीयं हि धर्मतः' इति यमगीतातो युक्तैषा राज्ञः स्वपुरानुस्मृतिः । मत्पूर्वैः मत्पूर्वे मम वा पूर्वा मत्पूर्वास्तैः । पूर्वकालं भरणीयाः भृत्याः । भृञो संज्ञायां क्यप् । 'हिहेतावधारणे । वृत्तं पद्ये चरित्रे त्रिष्वतीते दृढनिस्तले । धर्माः पुण्ययमन्यायस्वभावाचारसोमपाः । उपमायां विकल्पे वा' । स प्रधानः शूरः सदामदः मम वैरिवशं यातः गतः मद्वैरिगृहीतः मे हस्ती सांप्रतं कान् भोगान् लप्स्यते । किंतु भविष्यतीति तन्न जाने इति सोचिन्तयदित्यन्वयः । सुखेन अकृच्छ्रेण प्रकर्षेण धीयते धार्यते पोष्यते च सप्रधानः । 'आतो युक्' इति ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषूपपदेषु दधातेर्युक् 'युवोरनाकौ' । स प्रधान इत्यपपाठः । स इति छेदेपि प्रधान इति न स्यात् । प्रदधाति प्रधानमिति नपुंसकत्वात् । यदभ्यधुः । परमात्मविप्रकृतिमहामात्रमुख्येषु प्रधानमजहल्लिङ्गमद्वयोरिति । प्रधानेनामात्येन सह वर्तते सप्रधान इति चेत्तन्न । मम वैरिवशं यात इत्यनेन पौनरुक्त्यप्रसङ्गात् । प्रसह्याक्रान्तराज्यत्वादमात्या एव हि वैरिण इत्यलं विस्तरेण । सदा सर्वदा मदो यस्येति सदामदः । यद्वा । स इति छेदः । सपदात् सः प्रसिद्धो मे हस्तीति संबन्धनीयं । दामानि द्यति खण्डयति इति दामदः । 'आतोऽनुपसर्गे कः' 'नपुंसि दाम संदानं' ॥ १२ ॥

(४ **नागोजीभट्टी**) मद्भृत्यैरिति । तथा पालने हेतुरसद्वृत्तैरिति । प्रधानैर्महामात्रैः सहितः सप्रधानः शूरहस्तीति कर्मधारयः । किमवस्थ इति न जाने इत्यन्वयः ॥ १२ ॥

(५ **जगच्चन्द्रचन्द्रिका**) मद्भृत्यैरिति १३ ॥ १२ ॥

(६ **दंशोद्धारः**) मद्भृत्यैरिति । स प्रसिद्धः प्रधानो मुख्यः । पुंस्त्वमार्षं । यद्वा प्रधानेन महामात्रेण सहितः सप्रधान इत्येकं पदं । स प्रधान इति पाठे सुप्रधानाख्यः स प्रसिद्धः । दामबन्धनं द्यति खण्डयति इतिदामदः । मदोन्मत्त इत्यर्थः । 'आतोनुपसर्गेकः । दाम्ना सह सदामा स्तंभस्तं द्यतीति समस्तं वा १२ ॥

**मम वैरिवशं यातः कान् भोगानुपलप्स्यते । ये ममानुगता नित्यं प्रसादधनभोजनैः ॥ १३ ॥**

**(१ गुप्तवती)** ॥ १३ ॥

(२ **चतुर्धरी**) ममेति । वैरिवशं विपक्षपारतन्त्र्यं यातः प्राप्तः । कान् कियतः कीदृशान्वा (भोगान्) उपलप्स्यते उपलभ्यत इति न जाने । साध्याहारोऽन्वयः । अनुगताः सेवकाः । प्रसादस्तुष्टिदानं । धनं वर्षदेयं दानं । भोजनं प्रतिदिनं देयं । यद्वा प्रसादोऽनुग्रहः धनं प्रीतिदानं भोजनं चेतनं च तैर्हेतुभूतैरिति काकाक्षिवदुभयत्र संबध्यते ॥ १३ ॥

(३ **शान्तनवी**) भुज्यन्त इति भोगाः । 'पालनेऽभ्यवहारे च निर्वेशे च पणे स्त्रियां । भोगः सुखे भुजंगानां शरीरफणयोरपि' । जाने इति । ज्ञाजनोर्जा शिति । अनुपसर्गाज्ज्ञ इत्यात्मनेपदम् । ये नित्यं संततमनवरतं शश्वत्प्रसादधनभोजनैः प्रसादैरुचितदानैर्धनैर्वेतनरूपैर्भोजनैः मम अनुगता अनुजीविनः ॥ १३ ॥

(४ **नागोजीभट्टी**) ममेति । वशं पारतन्त्र्यं । कान् कियन्तः कीदृशान्वा न जाने इत्यस्यानुषङ्गः । अनुगताः सेवकाः । सेवकत्वे हेतुः प्रसादेत्यादि । प्रसादस्तुष्टिदानम् । धनं मासिकादिवेतनम् । भोजनं प्रतिदिनं दीयमानं तैः ॥ १३ ॥

(५ **जगच्चन्द्रचन्द्रिका**) मम वैरिवशमिति १४ ॥ १३ ॥

(६ दंशोद्धारः) ममेति । प्रसादोऽनुग्रहः । धनं प्रीतिदानं । भोजनं भृतिः । यद्वा प्रसादः प्रीतिदेयं। धनं भृतिः । भोजनं प्रत्यहं देयं तैः। ममानुगताः तएवान्येषामनुवृत्तिं कुर्वन्तीति काकाक्षिवदुभयत्रापि संबन्धः ॥ १३ ॥

**अनुवृत्तिं ध्रुवं तेऽद्य कुर्वन्त्यन्यमहीभृताम् । असम्यग्व्ययशीलैस्तैः कुर्वद्भिः सततं व्ययम्॥१४॥**

(१ गुप्तवती) कुर्वन्त्यन्यमहीभृतामित्यनन्तरं कचिदेकः श्लोकोऽधिकः पठ्यते 'मम भार्या वरारोहा पुत्रश्चातीव शोभनः । सद्मानि स्वर्गसदृशान्यप्सरःप्रतिमाः स्त्रियः।' इति ॥ १४ ॥

(२ चतुर्धरी) अनुवृत्तिमिति । अनुवृत्तिं सेवां । ध्रुवमिति वितर्के । असम्यगिति । आयात्तुरीयांशो व्ययः सम्यग्व्ययः । ततोऽन्यथा असम्यग्व्ययः । तच्छीलैस्तत्कारिभिः । अथवा असम्यग्व्ययशीलैस्तैः । दुर्व्यसनविषमव्ययशालिभिः ॥ १४ ॥

(३ शान्तनवी) अद्य इदानीं मद्विहीना अनाथाः सन्तः अन्यमहीभृतां मदितरमहीभृतां राज्ञां अनुवृत्तिं सेवां ध्रुवं निश्चितं कुर्वन्ति निश्चितमनुवृत्तिं विदधति इति सोऽचिन्तयदित्यन्वयः । 'ध्रुवो भभेदे क्लीबं तु निश्चिते शाश्वते त्रिषु' । अतिदुःखेन मत्पूर्वैर्मया च संचित उपार्जितः स सुवर्णादिद्रव्याणां कोशः राशिः । असम्यग्व्ययशीलैः । असम्यङ् विफलः व्ययः द्रव्योत्सर्गः शीलं स्वभावो येषां ते तथोक्तास्तैः । सततं व्ययं वित्तोत्सर्गं कुर्वद्भिः तैरमात्यप्रभृतिभिः करणैः क्षयं नाशं गमिष्यति प्राप्स्यति इति सोऽचिन्तयदित्यन्वयः । आहुश्च 'आगमे च व्ययाभावे व्यये चानागमे क्रमात् । कोशस्य वृद्धिनाशौ स्तः तत्साम्ये पूर्वरूपता' इति । सततं संततं 'लुंपेदवश्यमः कृत्ये तुं काममनसोरपि । समो वा हिततयोर्मांसस्य पचि युङ्घञोः' । अत्यर्थं दुखं यस्मिंस्तत् अतिदुःखं तेन कर्मणा । 'शीलं स्वभावे सद्वृत्ते' । व्यय वित्तसमुत्सर्गे । चुरादावदन्तः । व्ययनं व्ययः । यदभ्यधुः । 'वित्तत्यागे व्ययतिर्व्ययने गतौ' इति ॥ १४ ॥

(४ नागोजीभट्टी) अनुवृत्तावपि एते एव हेतवः । ध्रुवमिति वितर्के । हा मां धिगित्यध्याहारः । असम्यगिति । तुरीयांशाधिको व्ययः सम्यग्व्ययः । सततमिति समस्तम् ॥ १४ ॥

(५ जगच्चन्द्रचन्द्रिका) अनुवृत्तिमिति १५ ॥ १४ ॥

(६ दंशोद्धारः) असम्यगिति पृथक् पदं । एतदसम्यगित्यर्थः । यद्वा आयात् तृतीयांशव्ययः सम्यग्व्ययः । तद्रहितोऽसम्यग्व्ययः विटवेश्यादिषु वा तच्छीलैः ॥ १४ ॥

**संचितः सोऽतिदुःखेन क्षयं कोशो गमिष्यति । एतच्चान्यच्च सततं चिन्तयामास पार्थिवः॥१५॥**

(१ गुप्तवती) ॥ १५ ॥

(२ चतुर्धरी) दुःखेनेति । दुर्गतं खमिन्द्रियं यस्मिन्निति दुःखं। दुःखवशात् अदाक्षिण्यात् (?) खात्यद्रादिति णत्वप्रतिषेधः । 'सुखदुःखतत्क्रियायां' इति धातुपाठात्केचित् दुःखेनेत्याहुः । संचित इति ॥ १५ ॥

(३ शान्तनवी) सः पार्थिवः सुरथः । एतच्च पूर्वोक्तं अतोन्यच्च सततं विस्तारितमन्तःपुरगतं पुरान्तरगतं देशान्तरगतं च स्वकीयं वस्तु सर्वं चिन्तयामासेत्यन्वयः । सततमित्यत्र स इति छेदः । ततं विस्तारितमित्यर्थः । एकपदत्वे तु सततं संततमितिहि व्याख्यानं स्यात् । ततश्च सुरथश्चिन्तासंततिकाक्रान्तस्वान्ततया वक्ष्यमाणप्राप्तव्याष्टममनुत्वपदाव्याप्त्यै चिन्तानुकूलतया समाधानविधानविधुरः प्रसज्येत । 'वीध्रं तु विमलार्थकं' 'विधुरं तु प्रविश्लेषे' 'विधुरो दुःखिते हीनाङ्गे च प्रकीर्तितः' । ननुच सोऽचिन्तयदिति क्रियापदे कृते पुनश्चिन्तयामासेति वाचोयुक्तिर्न युक्तिमतीति चेत् तन्न । उक्तं चानुक्तं च ममताक्रुष्टमानसतया पुनः पुनश्चिन्तितमेवाचिन्तितमिवाचिन्तयद्राजेतियुक्तिमत्येव तद्वाचोयुक्तिरिति । पृथिव्या ईश्वरः पृथिव्यां विदितः ज्ञातश्च पार्थिवः । 'तस्येश्वरः' 'तत्र विदितः' इतिचेत्यञ् ॥ १५ ॥

(४ नागोजीभट्टी) दुःखेनेति निर्विसर्गं पठन्ति । विसर्गलः । कोशो मूलधनं । अन्यदनुक्तमपि ॥ १५ ॥

(५ जगच्चन्द्रचन्द्रिका) संचित इति १६ ॥ १५ ॥

(६ दंशोद्धारः) संचित इति । एतच्च अन्यच्च राज्यभ्रष्टस्य मम पुनः कथं राज्यप्राप्तिरिति ततं विस्तीर्णं पुरान्तरगतं च चिन्तयामास । सततमित्येकपदत्वे तु नैरन्तर्यार्थत्वेन निरन्तरचिन्तासंतानाक्रान्तत्वेन भाव्युदयोपयोगित्वतदधिकारित्वस्य वक्ष्यमाणस्याऽसङ्गत्यापत्तेः इहापि विप्रस्याश्रमः विप्रेति संबोधनं वा ॥ १५ ॥

**तत्र विप्राश्रमाभ्याशे वैश्यमेकं ददर्श सः । स पृष्टस्तेन कस्त्वं भो हेतुश्चागमनेऽत्र कः ॥ १६ ॥**

(१ गुप्तवती) ॥ १६ ॥

(२ चतुर्धरी) विप्रेति भागुरेः संबोदनं मेधसो विशेषणं वा । अभ्याशे निकटे स राजा एकं अद्वितीयं वैश्यं ददर्श । स वैश्यः तेन राज्ञा । भो इत्यामन्त्रणे । अत्र आश्रमे ॥ १६ ॥

(**३ शान्तनवी**) स सुरथः तत्र तपोवने तथातथा तत्र स्वकीयं वस्तु विचिन्तयन् सन् विप्राश्रमाभ्याशे विप्रस्य सुमेधसो मुनेः आश्रमस्याभ्याशे निकटे देशे एकं कंचित् वैश्यं तृतीयं द्वितीयं द्विजं च ददर्श दृष्टवानित्यन्वयः। तृतीयं आत्ममुन्यपेक्षया। द्वितीयमात्मापेक्षयेत्यर्थः। विशोऽपत्यं जातिर्वैश्यः। गर्गादित्वाद्यञ्। ददर्शहेति क्वचित्पाठः। स इति तु प्रकरणतो लभ्यते। 'तुहिचस्महवै पादपूरणे'। अशू व्याप्तौ। तालव्यान्तः। कर्मणि घञ्। अभ्यश्यते व्याप्यते अभ्याशः। एकं केवलमेकाकिनं। तेन सुरथेन स वैश्यः पृष्टः। किंपृष्ट इत्याह। भो अहो त्वं कः कोऽसि जातितः। किंच। अत्र मुन्याश्रमे तवागमने को हेतुः किं कारणमित्यन्वयः। अव्ययमेषभोशब्द इति भाष्यं। अथवैतद्भवच्छब्दस्य संबुद्धौ रूपं। 'रुलोलयत्वलोपेषु.........। सामान्योल्लेखतो ज्ञातमपि वस्तु विशेषतः। जिज्ञासमानो जिज्ञास्यं पृच्छन्नेवान्यदीप्सितं'। राजा वैश्यं पुनः पृच्छति ॥ १६ ॥

(**४ नागोजीभट्टी**) तत्रेति। विप्रेति भागुरिसंबोधनं मेधार्थकतयाऽश्रमविशेषणं वा। अभ्याशे निकटे। स वैश्यः। भो इत्यामन्त्रणे। अत्र आश्रमे ॥ १६ ॥

(**५ जगच्चन्द्रचन्द्रिका**) तत्र विप्राश्रमेति १७ ॥ १६ ॥

(**६ दंशोद्धारः**) स पृष्ट इति ॥ १६ ॥

## सशोक इव कस्मात्त्वं दुर्मना इव लक्ष्यसे। इत्याकर्ण्य वचस्तस्य भूपतेः प्रणयोदितम् ॥ १७ ॥

(**१ गुप्तवती**) ॥ १७ ॥

(**२ चतुर्धरी**) इष्टवियोगानुचिन्तनं शोकः। दुःखनिबन्धनश्चित्तावसादो दौर्मनस्यं। सशोकइव उपहतशरीरत्वात्। दुर्मनाइव क्रियास्वस्थिरत्वात्। इतीदृशमाकर्ण्य श्रुत्वा। प्रणयोदितं विश्रम्भेणोदीरितं ॥ १७ ॥

(**३ शान्तनवी**) भोः अहो त्वं कस्माद्धेतोः सशोक इव लक्ष्यसे संदृश्यसे सखेद इव प्रतीयसे। कस्माच्च हेतोः त्वं दुर्मना इव लक्ष्यसे विमनस्कइव लक्ष्यसे वीक्ष्यसे इत्यन्वयः। 'मन्युशोकौ तु शुक् स्त्रियां'। 'मन्युर्दैन्ये क्रतौ क्रुधि'। शोकेन सहवर्तमानः सशोकः। 'दुर्मना विमना अन्तर्मनाः स्यात्' इति कोशः। दुष्टं मनो यस्य स दुर्मनाः। इवेति साम्ये। शारदाभ्रमिव पेलवमायुरिति वत्। इतीत्थं प्रणयोदितं प्रणयेन प्रेम्णा उदितं कथितं तस्य भूपतेः सुरथस्य वचः आकर्ण्य श्रुत्वा ॥ १७ ॥

(**४ नागोजीभट्टी**) सशोक इति। इष्टवियोगानुचिन्तनं शोकः। दुःखनिबन्धनश्चित्तावसादो दुर्मनादौर्मनस्यं। सशोक इव उपहतशरीरत्वात्। दुर्मनाइव क्रियास्वस्थैर्यात्। इत्याकर्ण्येति। श्लोकः स्पष्टार्थः। प्रणयो विश्रम्भः ॥ १७ ॥

(**५ जगच्चन्द्रचन्द्रिका**) सशोक इति १८ ॥ १७ ॥ मिलित्वा मन्त्रास्तु अष्टादश जाता इत्यर्थः ॥ १७ ॥

(**६ दंशोद्धारः**) शोकः स्वजनवियोगचिन्तनं। दुःखकृतचित्तावसादो दौर्मनस्यं ॥ १७ ॥

## प्रत्युवाच स तं वैश्यः प्रश्रयावनतो नृपम्।
## वैश्य उवाच। समाधिर्नाम वैश्योऽहमुत्पन्नो धनिनां कुले ॥ १८ ॥

(**१ गुप्तवती**) ॥ १८ ॥

(**२ चतुर्धरी**) प्रत्युवाच प्रतिवचनं दत्तवान्। प्रश्रयावनतो विनयान्नम्रः ॥ १८ ॥

(**३ शान्तनवी**) स वैश्यः तं नृपं सुरथमुद्दिश्य प्रश्रयावनतः प्रश्रयेण विनयेनावनतो नम्रः सन् प्रत्युवाचेत्यन्वयः। सुरथकृतप्रश्नानां प्रत्युत्तरं वक्तुं वाक्यमग्रहीदिति भावः। 'विश्रम्भयाच्ञाप्रेमाणः प्रणयेन समार्थकाः'। धनिनां कुले उत्पन्नोऽहं समाधिर्नाम विख्यातः जात्या वैश्योऽस्मीत्यन्वयः। अनेन कस्त्वं भो इति प्रश्नस्योत्तरमुक्तं। 'इभ्य आढ्यो धनी' 'कुलं गृहेऽपि वंशेऽपि' ॥ १८ ॥

(**४ नागोजीभट्टी**) प्रश्रयो विनयः। मार्कण्डेयेन सुरथं प्रति ऋष्युक्तावनुदितायां भागुरेः किं वैश्य उवाचेति जिज्ञासामालक्ष्य मार्कण्डेय आह। वैश्य उवाच। समाधिरिति ॥ १८ ॥

(**५ जगच्चन्द्रचन्द्रिका**) अर्धश्लोकात्मकतः एकोनविंशतिरेवं स्युरिति। ततो अष्टादशमन्त्रानन्तरं अर्धश्लोकरूपो मन्त्रः। श्लोकपादद्वयात्मक इत्यर्थः। एवंप्रकारेण एकोनविंश एकेन ऊनो विंशो मिलित्वा एकाधिका दश मन्त्रा जाता इत्यर्थः। तथाहि प्रत्युवाच स तं वैश्यः प्रश्रयावनतो नृपं स्वाहा १९। वैश्योक्तिर्विंशतिस्तथेति। तथा तेनैव गणनाप्रकारेण वैश्योक्तिवैश्य उवाचेति कथनं विंशतिर्विंशतिसंख्याको मन्त्रः। वैश्य उवाच स्वाहा २०। पुनरर्धं इति। पुनः अर्धो अर्धात्मको मन्त्रः। श्लोकपादद्वयात्मको मन्त्र इत्यर्थः। तद्यथा। समाधिर्नाम वैश्योऽहमुत्पन्नो धनिनां कुले स्वाहा २१ ॥ १८ ॥

(**६ दंशोद्धारः**) ॥ १८ ॥

**पुत्रदारैर्निरस्तश्च धनलोभादसाधुभिः । विहीनः स्वजनैर्दारैः पुत्रैरादाय मे धनम् ॥ १९ ॥**

**( १ गुप्तवती )** ॥ १९ ॥

**( २ चतुर्धरी )** पुत्रदारैरिति । पुत्रैश्च दारैश्च । चकारात्स्वजनैश्च निरस्तोऽधिक्षिप्तः । भर्त्सित इति यावत् । असाधुभिरिति हेतुगर्भं विशेषणम् । विहीनश्चेति । न केवलमधिक्षिप्तः । किंतु धनमादाय निरस्तो निःसारितः । एवमहं धनैर्दारैः पुत्रैराप्तबन्धुभिश्च विहीनो वनमभ्यागत इत्यन्वयः । केचित्तु धनैरिति पुत्रदारैरित्यस्य विशेषणं । ते हि मम धनानि तैरेव धनमादायाहं विहीन इत्याहुः । आप्ताः सुहृदः। बान्धवो ज्ञातयः । पादानुवृत्तिर्नामालंकारोऽयम् ॥ १९ ॥

**( ३ शान्तनवी )** धनेषु लोभात् गार्ध्यात् असाधुभिः असज्जनैः पुत्रैश्च दारैश्च पुत्राणां दारैश्च निरस्तश्च निराकृतोऽसीत्यन्वयः । एतेन सशोक इव कस्मात्त्वं इति प्रश्नस्योत्तरमुक्तं । स्वजनैर्बान्धवैश्च विहीनः रहितोऽस्मि । इत्यपि सशोकोऽस्मीत्यन्वयः । दारैः पुत्रैः आदायि मे धनं मदीयैर्दारैः पुत्रैश्च मे धनं आदायि गृहीतमित्यन्वयः । अनेन दुर्मना इव लक्ष्यसे कस्मादिति प्रश्नस्योत्तरमुक्तम् ॥ १९ ॥

**( ४ नागोजीभट्टी )** असाधुभिः पुत्रदारैर्धनलोभान्निरस्तः अधिक्षिप्तः । भर्त्सित इति यावत् । चादन्यैरपीत्यर्थः । विहीनश्चेति । दारैः पुत्रैर्मे धनमादाय गृहित्वा धनैर्विहीनश्च । अंशस्याप्यदानात्तद्रहितः कृतोहम् ॥ १९ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** पुनः श्लोकत्रयमिति । पुनः श्लोकत्रयं श्लोकत्रयात्मकाः प्रत्येकं त्रयो मन्त्राः इति । तथाहि पुत्रदारैरिति २२ ॥ १९ ॥

**( ६ दंशोद्धारः )** विहीन इति मे धनमादाय निरस्त इत्यन्वयः । अतएव धनादिभिर्विहीनः । आदायीति वा पाठः । आदायि गृहीतमित्यर्थः ॥ १९ ॥

**वनमभ्यागतो दुःखी निरस्तश्चाप्तबन्धुभिः । सोऽहं न वेद्मि पुत्राणां कुशलाकुशलात्मिकाम् ॥ २० ॥**

**( १ गुप्तवती )** ॥ २० ॥

**( २ चतुर्धरी )** स तथाविधोऽहं कुशलाकुशलात्मिकां शुभामशुभां वा प्रवृत्तिं वार्तां ॥ २० ॥

**( ३ शान्तनवी )** मदीयैराप्तैर्बन्धुभिः पुत्रमित्रकलत्रादिभिरपहृतधनो निरस्तश्चाहं दुःखी उद्विग्नमनाः सन् वनमभ्यागतोऽस्मीत्यन्वयः । अनेन हेतुश्चागमनेऽत्र क इति प्रश्नस्योत्तरमुक्तं । तथाविधः सोहं अत्र वने संस्थितः सन् पुत्राणां च दाराणां स्वजनानां च कुशलाकुशलात्मिकां कुशलरूपां अकुशलरूपां च द्विविधरूपां ॥ २० ॥

**( ४ नागोजीभट्टी )** धनहीनत्वादेवाप्तैः सुहृद्भिः बन्धुभिश्च निरस्तस्त्यक्तोऽहं वनमभ्यागत इत्यन्वयः । सोऽहमिति ॥ २० ॥

**( ५ जगच्चन्द्रचन्द्रिका )** वनमभ्यागत इति २३ ॥ २० ॥

**( ६ दंशोद्धारः )** ॥ २० ॥

**प्रवृत्तिं स्वजनानां च दाराणां चात्र संस्थितः । किंनु तेषां गृहे क्षेममक्षेमं किं नु सांप्रतम् ॥ २१ ॥**

**( १ गुप्तवती )** प्रवृत्तिं वृत्तान्तम् ॥ २१ ॥

**( २ चतुर्धरी )** तामेव विविच्य दर्शयति । किंन्विति । किमिति संदेहे । न्विति विकल्पे । तेषां पुत्रदारस्वजनानां गृहे कलत्रापत्यादौ क्षेमं कल्याणं अक्षेममकल्याणं सांप्रतमिदानीं कथं किंविधं । वृत्तं शीलं । सुता इत्युपलक्षणं । दाराः स्वजनाश्चेत्यपि बोद्धव्यम् ॥ २१ ॥

**( ३ शान्तनवी )** प्रवृत्तिं वार्तां न वेद्मि न जानामीत्यन्वयः । संगतोऽत्रत्यैः । स्थितः संस्थितः । 'संस्थाधारे स्थितौ मृतौ' इति वा । दारशब्दः पुंस्येव भूम्न्येव कलत्रवाची । कुशलं चाकुशलं चात्मा स्वभावो यस्याः सा तथोक्ता । 'शेषाद्विभाषा' इति कप् समासान्तः इत्वं च । किं नु इति छेदः । 'किं पृच्छायां जुगुप्सने' 'नुपृच्छायां विकल्पने च' । तत्र किमित्यनव्ययं च । संप्रत्येव सांप्रतं । 'प्रज्ञादिभ्यश्च'इत्यण् । इह क्षेमलाभयो विकल्पः नुशब्देन सूच्यते । सांप्रतमिदानीं तेषां पुत्रादीनां गृहे किमपि क्षेमं नु वर्तते । अथवा सांप्रतमिदानीं तेषां पुत्रादीनां गृहे किं क्षेममक्षेममपि नु वर्तते इति तदुभयं न वेद्मीत्यन्वयः । क्षेमं वाऽक्षेमं वा न वेद्मीत्यर्थः । 'कुशलं क्षेममस्त्रियां' । क्षिणोति हिनस्ति क्लेशान् क्षेमं ॥ २१ ॥

---

१ 'आदायि' इति शान्तनवीस्थः पाठः ।

(४ नागोजीभट्टी) प्रवृत्तिर्वार्ता । ता एव विवृणोति । किन्विति । किं नु इति द्वयं विकल्पे । तेषां पुत्रदारस्वजनानां गृहे दारापत्यादौ ॥ २१ ॥

(५ जगच्चन्द्रचन्द्रिका) प्रवृत्तिमिति २४ ॥ २१ ॥

(६ दंशोद्धारः) ॥ २१ ॥

**कथं ते किंनु सद्वृत्ता दुर्वृत्ताः किंनु मे सुताः । राजोवाच ।**
**यैर्निरस्तो भवाँल्लुब्धैः पुत्रदारादिभिर्धनैः । तेषु किं भवतः स्नेहमनुबध्नाति मानसम् ॥ २२ ॥**

(१ गुप्तवती) ॥ २२ ॥

(२ चतुर्धरी) यैर्निरस्त इति । धनैर्हेतुभूतैः । किमिति प्रश्ने । भवतः मानसं मनः स्नेहमनुबध्नाति आसंजयति॥२२॥

(३ शान्तनवी) ते सुताः सांप्रतं किं सद्वृत्ताः नु । अथवा ते सुताः सांप्रतं किं दुर्वृत्ताः नु इति तदुभयं कथं मे ज्ञयं स्यादित्यन्वयः । ते सुताः सांप्रतं सद्वृत्ता वा दुर्वृत्ता वा कथं मया ज्ञेया इति भावः । सत् साधु वृत्तं चरितं एषां ते सद्वृत्ताः । अथवा सतामिव वृत्तं चरितं येषां ते सद्वृत्ताः । दुष्टमसाधु वृत्तं चरितं येषां ते दुर्वृत्ताः । अथवा दुष्टानामसज्जनानामिव वृत्तं चरितं येषां ते दुर्वृत्ताः । 'इति दुर्दैवतो वैश्याद्बुद्ध्यत्पुत्रादिवन्धुतः । दुःखतः कथितं वाक्यमाकर्ण्योचे पुनर्नृपः' । हे समाधे हे वैश्य भवान् धनैः कारणैः लुब्धैर्गृध्नुभिः । यैः पुत्रदारादिभिर्दुर्वृत्तैर्बन्धुभिर्निरस्तोऽभूत् तेषु भवतः मानसं । कर्तृ । स्नेहं किमनुबध्नाति किमर्थं करोतीत्यन्वयः । तादृशेषु स्नेहनिबन्धनं जुगुप्सितं गर्हितं त्यजनीयं भवतेति भावः । यदाहुः 'भावतः स्निह्यति स्नेह्ये द्रुह्ये च द्रुह्यते पुनः । सौजन्यं सुजने कुर्याद्दौर्जन्यमपि दुर्जने' इति । भवाँल्लुब्धैरित्यत्र 'तोर्लि' इति नकारस्य परसवर्णोऽनुनासिको लकारः ॥ २२ ॥

(४ नागोजीभट्टी) कथं ते किंविधास्ते । वृत्तं व्यवहारः । सुता इत्युपलक्षणं । राजोवाच । यैरिति । धनैरिति भर्त्सनरूपे निरासे हेतुः । किमिति प्रश्ने ॥ २२ ॥

(५ जगच्चन्द्रचन्द्रिका) अर्धं पुनर्भवेदिति । पुनर्भूयोपि अर्धोऽर्धश्लोकात्मको मन्त्रो भवेत् । एवंप्रकारेण पञ्चविंशति संख्या स्यादित्यर्थः । तथाहि । कथं ते किंनु सद्वृत्ता दुर्वृत्ताः किंनु मे सुताः स्वाहा २५ । राजा षड्विंशतिस्तत इति । ततः पञ्चविंशतिमन्त्रानन्तरं राजा राजोवाचेति मन्त्रः । षडधिका विंशतिः पञ्चविंशतिः । अधिकैक इत्यर्थः । तथाहि राजोवाच स्वाहा २६ । अर्धश्लोकात्मकं मन्त्रद्वयमिति श्लोकस्य यैर्निरस्त इत्यादेः पूर्वार्धापरार्धमन्त्रद्वयं द्वौ मन्त्रौ भवतः । तथाहि यैर्निरस्तो भवाँल्लुब्धैः पुत्रदारादिभिर्धनैः स्वाहा २७ । तेषु किं भवतः स्नेहमनुबध्नाति मानसं स्वाहा २८ ॥ २२ ॥

(६ दंशोद्धारः) ॥ २२ ॥

**वैश्य उवाच ।**

**एवमेतद्यथा प्राह भवान[1]स्मद्गतं वचः । किं करोमि न बध्नाति मम निष्ठुरतां मनः ॥ २३ ॥**

(१ गुप्तवती) ॥ २३ ॥

(२ चतुर्धरी) एवमिति अस्मद्गतमस्मद्विषयं । मम मनो निष्ठुरतां पारुष्यं न बध्नाति न भजत इत्यन्वयः ॥ २३ ॥

(३ शान्तनवी) वैश्य उवाच । यन्मद्गतमित्यपि क्वचित्पाठः सभ्यः । ममेत्येकवचनपाठौचित्यादस्मद्गतमिति पाठे राजाग्रे वैश्यस्य प्रश्रयावनतस्य सतः प्रागल्भ्यानौचित्यप्रसङ्गाच्च । हे नृप भवान् यन्मद्गतं वचः यथा प्राह प्रब्रवीति एतद्वचः एवमिदमित्थमेव । अथाप्यहं किं करोमि मम मनः । कर्तृ । निष्ठुरतां परुषतां न बध्नाति नाचरति नाश्रयति इत्यन्वयः । 'इवेत्थमर्थयोरेवं' अस्मान् गतं अस्मद्गतं अस्मत्पृथक् । मद्गतं मां गतं मद्गतं मत्पृथक् । अथवा अस्माभिर्गतं ज्ञातं अस्मद्गतं । मया गतं ज्ञातं अस्मद्गतं । गत्यर्था धातवो ज्ञानार्था अपि भवन्ति ॥ २३ ॥

(४ नागोजीभट्टी) वैश्य उवाच । एवमिति । अस्मद्गतमस्मदीयविषयकम् ॥ २३ ॥

(५ जगच्चन्द्रचन्द्रिका) वैश्यः पुनर्भवेदिति । पुनः वैश्य उवाच इति मन्त्रो भवेत् । तथाहि । वैश्य उवाच स्वाहा २९ । एकोनत्रिंशदेव तु मन्त्रसंख्या प्रकीर्तिता इति । तु पुनः एवं गणनप्रकारेण एकेन ऊना त्रिंशत् एकोनत्रिंशत् । अष्टाविंशात्मकाधिकैक इत्यर्थः । संख्यायते गण्यतेऽनया संख्या मन्त्राणां संख्या मन्त्रसंख्या । प्रकीर्तिता कथिता । पुनरर्धमिति । पुनरर्धश्लोकात्मको मन्त्रो भवेत् । तद्यथा । एवमेतद्यथा प्राह भवानस्मद्गतं वचः स्वाहा ३० । पुनः श्लोकत्रयमिति । पुनः श्लोकात्मकाः प्रत्येकं मन्त्राः । तथाहि । किंकरोमीति ३१ ॥ २३ ॥

---

१ 'भवान्यन्मद्गतं वचः' इति शान्तनवीसंमतः पाठः ।

(६ दंशोद्धारः) एवमिति । यस्माद्गतमित्यपि पाठः । मागतं मया गतं ज्ञातं वा । असद्गतमितिपाठे तु प्रागल्भ्येन प्रश्रयभावः स्यादिति कश्चित् । वस्तुतस्तु 'अस्मदोद्वयोश्च' इति एकत्वेपि बहुलं युक्तमेव ॥ २३ ॥

**यैः संत्यज्य पितृस्नेहं धनलुब्धैर्निराकृतः । पतिस्वजनहार्दं च हार्दि तेष्वेव मे मनः ॥ २४ ॥**

**(१ गुप्तवती)** ॥ २४ ॥

**(२ चतुर्धरी)** यैरिति । यैः पुत्रैर्दारैः स्वजनैश्च पितृस्नेहं पतिहार्दं स्वजनहार्दं च संत्यज्येत्यन्वयः । निराकृतस्त्यक्तोऽस्मि । तेषु तथाविधेष्वपि मे मम मनो हार्दि सस्नेहं । धनलुब्धैर्निराकृतोपि सस्नेह एवेत्येवकारोऽतिभिन्नक्रमे हार्दीत्यस्यानन्तरं द्रष्टव्यः ॥ २४ ॥

**(३ शान्तनवी)** हे राजन् पितृस्नेहं संत्यज्य धनलुब्धैर्यैर्मत्पुत्रैर्निराकृतोऽस्मि तेष्वेव पुनर्मे मनः हार्दि वर्तते । किंच । पतिस्वजनहार्दं भर्तृलक्षणं बन्धुस्नेहं संत्यज्य धनलुब्धैर्यैर्मद्दारैर्निराकृतोऽस्मि तेष्वेव पुनर्मे मनः हार्दि वर्तते । किं करोमीत्यन्वयः । हृदयस्य स्वान्तस्य कर्म हार्दं । प्रेमस्नेह इति यावत् । युवादित्वादण् । 'हृदयस्य हृल्लेखयदण्लासेषु' इति हृद्भावः । हार्दमस्त्यस्य तत् हार्दि मनः हृदयनिविष्टस्नेहोपेतं । स्नेहनिबद्धमिति यावत् । पतिरेव भर्तैव स्वजनो बन्धुः तस्मिन् हार्दं स्नेहः पतिस्वजनहार्दं तत् । 'लुब्धोऽभिलाषुकस्तृष्णक्' ॥ २४ ॥

**(४ नागोजीभट्टी)** यैरिति । यैः पुत्रदारैः स्वजनैश्च पतिहार्दं स्वजनहार्दं च । हार्दं स्नेहः । तेष्वपि तथाविधेष्वपि मे मनः हार्द्येवेत्यन्वयः ॥ २४ ॥

**(५ जगच्चन्द्रचन्द्रिका)** पतिस्वजनेति ३२ ॥ २४ ॥

**(६ दंशोद्धारः)** यैः संत्यज्येति । यैः पुत्रदारस्वजनैश्च पितृस्नेहं पतिहार्दं भर्तृस्नेहं स्वजनस्नेहं च संत्यज्येत्यन्वयः । तेषु मे मनो हार्दि स्नेहयुक्तमेव । एवकारो भिन्नक्रमः । प्रीतिमिति क्वचित्पाठः ॥ २४ ॥

**किमेतन्नाभिजानामि जानन्नपि महामते । यत्प्रेमप्रवणं चित्तं विगुणेष्वपि बन्धुषु ॥ २५ ॥**

**(१ गुप्तवती)** ॥ २५ ॥

**(२ चतुर्धरी)** किमेतदिति । जानन् ज्ञानवानपि विगुणेष्वपि विरुद्धगुणेष्वपि यत् चित्तं प्रेमप्रवणं स्नेहानुबन्धि एतत् किमिति नाभिजानामीत्यन्वयः ॥ २५ ॥

**(३ शान्तनवी)** हे महामते राजन् विगुणेष्वपि बन्धुषु प्रेमप्रवणं मे चित्तमिति जानन्नपि यन्नाभिजानामि किमेतदित्यन्वयः । अथवा हे महामते राजन् । यद्यस्मात्कारणात् बन्धुषु विगुणेषु असत्स्वपि मे चित्तं प्रेमप्रवणं इति जानन्नपि एतद्वारयितुं नाभिजानामि करोमि किमित्यन्वयः । अथवा हे महामते राजन् बन्धुषु विगुणेषु सत्स्वपि यत् चित्तं प्रेमप्रवणं स्यात् । तत्किंनाम कुत्सितं गर्हितं इति जानन्नपि नाभिजानामीत्यन्वयः । महती मतिर्यस्य स महामतिः । हे महामते प्रेम्णा प्रवणं प्रह्वं नम्रं अनुकूलं । 'प्रवणं क्रमनिम्नोर्व्यां प्रह्वे ना तु चतुष्पथे' अगुणेषु अस्नेहेषु । विगुणेषु विस्नेहेषु ॥ २५ ॥

**(४ नागोजीभट्टी)** किमेतदिति । तेषां दोषं जानन्नपि यत् विगुणेष्वपि बन्धुषु प्रेमप्रवणं चित्तं करोमि तत्किमिति कस्माद्धेतोरेतन्न जानामि इत्यन्वयः ॥ २५ ॥

**(५ जगच्चन्द्रचन्द्रिका)** यत्प्रेमप्रवणमिति ३३ ॥ २५ ॥

**(६ दंशोद्धारः)** किमेतदिति । जानन्नपि न जानामि । किमेतदिति प्रश्नः । यद्वा जानन्नपि विगुणेष्वपि बन्धुषु यत्प्रेमप्रवणं चित्तं करोमि तत्किमिति कस्माद्धेतोर्न जानामि इत्यन्वयः ॥ २५ ॥

**तेषां कृते मे निःश्वासो दौर्मनस्यं च जायते । करोमि किं यन्न मनस्तेष्वप्रीतिषु निष्ठुरम्[१] ॥ २६ ॥**

**(१ गुप्तवती)** ॥ २६ ॥

**(२ चतुर्धरी)** तेषामिति । कृते हेतोः निःश्वासः दौर्मनस्यं च जायत इति यथावचनमन्वयः । अप्रीतिषु प्रीतिशून्येषु यन्मनो न निष्ठुरं । अप्रीतिसुनिष्ठुरमिति पाठे अप्रीत्या सुनिष्ठुरं अतिनिष्ठुरं न जायत इत्यनुषज्यते । तत्किं करोमीत्यन्वयः ॥ २६ ॥

**(३ शान्तनवी)** करणं कृतिः कृतं । नपुंसके भावे क्तः । अथवा करणं कृतिः कृत् तस्यै । संपदादित्वाद्भावे स्त्रियां क्विप् । निर्गच्छति श्वासो यस्मात्स निःश्वासः शोकः । दुःस्थं मनो यस्य स दुर्मनाः तद्भावो दौर्मनस्यं प्रतिपक्षिणी नास्ति प्रीतिर्येषां ते अप्रीतयः । निष्ठुरं कठोरं । तेषां पुत्रादीनां कृते क्षेमलाभयोः संसिद्धिविषये संसिद्धिप्रयुक्त्यैव मे निःश्वासः शोका-

---

१ 'अप्रीतिसुनिष्ठुरं' इति चतुर्धरीगृहीतः पाठः ।

दैन्यं दौर्मनस्यं दुस्थितमनस्कत्वं च जायते । यद्यस्मात्कारणात् मयि अप्रीतिष्वपि तेषु पुत्रादिषु मे मनः निष्ठुरं क्रूरं न जायते । अतः करोमि किमित्यन्वयः । तदित्थं संप्रति सांसारिकचिन्तातः कान्दिशीकोऽस्मीति भावः । 'कान्दिशीको भयद्रुतः' कां दिशं व्रजामि इति व्याकुलोऽस्मीति भावः ॥ २६ ॥

**( ४ नागोजीभट्टी )** तेषामिति । तन्निमित्तं यन्मे निःश्वासादिकं जायते अप्रीतिषु प्रीतिरहितेषु अपि तेषु यन्मे मनो निष्ठुरं न तत्किं करोमीत्यन्वयः ॥ २६ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** अर्धपुनर्भवेदिति । अर्ध अर्धश्लोकात्मको मन्त्रो भवेत् । तथाहि किं करोमि किं यन्न मनस्तेष्वप्रीतिषु निष्ठुरं स्वाहा ३४ ॥ २६ ॥

**( ६ दंशोद्धारः )** ॥ २६ ॥

## मार्कण्डेय उवाच ।

**ततस्तौ सहितौ विप्र तं मुनिं समुपस्थितौ । समाधिर्नाम वैश्योऽसौ स च पार्थिवसत्तमः ॥२७॥**

**( १ गुप्तवती )** ॥ २७ ॥

**( २ चतुर्धरी )** तत इत्यादि । हे विप्र तं मेधसं समुपस्थितौ उपसन्नौ । पार्थिवेषु राजसु सत्तमः साधुतमः ॥ २७ ॥

**( ३ शान्तनवी )** हे विप्र हे शिष्य समाधिर्नाम असौ वैश्यश्च पार्थिवसत्तमः स सुरथश्च तौ द्वौ सहितौ मिलितौ हितसंयुक्तौ वा संतौ तं प्रसिद्धं सुमेधसं नाम मुनिं समुपस्थितौ सम्यक् उपजग्मतुरित्यन्वयः । तिष्ठतिरुपपूर्वो गत्यर्थोऽपि । पार्थिवेषु सन् अतिशयेन पार्थिवसत्तमः ॥ २७ ॥

**( ४ नागोजीभट्टी )** मार्कण्डेय उवाच । तत इति । सहितौ मित्रत्वेन संगतौ समुपस्थितौ समुपसन्नौ ॥ २७ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** मार्कण्डेय इति । तथाहि मार्कण्डेय उवाच स्वाहा इत्येको मन्त्रः ३५ । पुनश्चार्द्धश्लोक इति पुनरर्धश्लोकात्मको मन्त्रश्च भवेत् । तथाहि ततस्तौ सहितौ विप्र तं मुनिं समुपस्थितौ स्वाहा ३६ । श्लोकात्मकः पुनरिति । पुनः श्लोकात्मकः श्लोकरूपो मन्त्रो भवेत् । तद्यथा । समाधिर्नामेति ३७ ॥ २७ ॥

**( ६ दंशोद्धारः )** ॥ २७ ॥

**कृत्वा तु तौ यथान्यायं यथार्हं तेन संविदम् । उपविष्टौ कथाः काश्चिच्चक्रतुर्वैश्यपार्थिवौ ॥ २८ ॥**

**( १ गुप्तवती )** ॥ २८ ॥

**( २ चतुर्धरी )** कृत्वेति । यथान्यायं यथागमं यथार्हं यथाचारं तेन मुनिना सह संविदं संभाषां 'संवित्स्त्रियां प्रतिज्ञायामाकारे ज्ञानसंकरे । संभाषायां क्रियाकाले संकेते नाम्नि भाषणे' इत्यभिधानात् ॥ २८ ॥

**( ३ शान्तनवी )** अल्पाच्तरत्वाद्वैश्यस्य पूर्वनिपातः । अभ्यर्हितस्तु पार्थिवः क्षत्रियत्वात् । यथान्यायं तु शश्वद्वर्णोक्तविधिमनतिक्रम्यैव यथार्हं अर्हं पूज्यं वृद्धं अनतिक्रम्यैव यथाश्रमं तस्मै सुमेधसे मुनये संविदं संभाषणाद्याचारं कृत्वा तेनापि पूजितौ तदनुमत्या उपविष्टौ संतौ तौ वैश्यपार्थिवौ काश्चित्स्वार्थपराः उचिताः कथाः उक्तीः चक्रतुः विदधतुरित्यन्वयः । 'तु स्याद्भेदेऽवधारणे' । 'श्रीसंविज्ज्ञानसंभाषाक्रियाकाराजिनामसु' । 'प्रतिज्ञातोषणाचारेष्वपि संवित्प्रयुज्यते' ॥ २८ ॥

**( ४ नागोजीभट्टी )** कृत्वेति । यथान्यायं यथाशास्त्रं यथार्हं यथायोग्यं संविदं संभाषां उपविष्टौ । अन्तर्भावितण्यर्थत्वेन । उपवेशितावित्यर्थः । तेनेति कर्तरि तृतीया । काश्चित्स्वपरविषयाः ॥ २८ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** अर्धश्लोकात्मको मन्त्र इति । अर्धश्लोकरूपो मन्त्रः । तद्यथा उपविष्टौ कथाः काश्चिच्चक्रतुर्वैश्यपार्थिवौ स्वाहा ३८ ॥ २८ ॥

**( ६ दंशोद्धारः )** कृत्वेति । यथान्यायं यथाशास्त्रं यथार्हं यथा महत्सु योग्यं संविदं भाषणं । काश्चित्स्वपरविषयाः॥२८॥

## राजोवाच ।

**भगवंस्त्वामहं प्रष्टुमिच्छाम्येकं वदस्व तत् । दुःखाय यन्मे मनसः स्वचित्तायत्ततां विना ॥ २९ ॥**

**( १ गुप्तवती )** दुःखायेति । स्वचित्तजयाभावसहकारिकं मनसि दुःखापादकं वस्तु किमित्यर्थः ॥ २९ ॥

**( २ चतुर्धरी )** भगवन्निति । एकं वस्तु यन्मनसः स्वचित्ते हृदि आयत्ततां निरोधं विना मे मम मनसो दुःखाय दुःखकारणं तद्वदस्वेत्यर्थः । वदस्वेति 'सर्वे विधयः छन्दसि विकल्पन्ते' । इत्यात्मनेपदं । पुराणमपि ऋषिप्रणीतत्वाच्छान्दसमेव ।

यद्वा यन्मे वदस्वेति । अत्रार्थे आत्मनेपदं । मनोजयो हि न किमपि नरं दुःखाकरोति संकल्पविकल्पात्मकं चित्तम् । 'अधीनो निघ्न आयत्तः' इत्यमरः ॥ २९ ॥

**( ३ शान्तनवी )** हे भगवन् हे सर्वैश्वर्यसंपन्न हे मुने त्वां अहं एकं रहस्यं प्रष्टुमिच्छामि तत् वदस्व रहसि उपदिश । 'भासनोपसंभाषा'सूत्रेणोपमन्त्रणे रहस्युपच्छन्दने आत्मनेपदम् । यद्यस्मात्कारणात्स्वचित्तायत्ततां विनावस्थानं मे मनसः दुःखाय भवतीत्यन्वयः । यदहं एकं रहस्यं त्वां प्रष्टुमिच्छामि तन्मयावश्यमाकर्णनीयं । अन्यथा तदाकर्णनाभावे स्वचित्तायत्तत्वं न स्यात् । तदभावस्तु मे मनसः दुखाय स्यात् संशयापन्नत्वात् । तस्मात्तद्रहस्यं मया श्रोतव्यमेवेति भावः । 'ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः । वैराग्यस्याथ मोक्षस्य षण्णां भग इतीरणा' ॥ २९ ॥

**( ४ नागोजीभट्टी )** राजोवाच । भगवन्निति । वदस्वेति यत्नार्थे आत्मनेपदम् । यत्नेन वदेत्यर्थः । एकं रहस्यं वदस्व । तदाह । मे मनसः संकल्पात्मकस्यान्तःकरणस्य स्वचित्ते निश्चयात्मके स्वस्वरूपे आयत्ततां निरोधं विना दुःखाय यदित्यन्वयः । संकल्पविकल्पात्मकमेवमन्तःकरणं न निश्चयात्मकमतो न मे तन्निर्णयेऽधिकार इति भावः ॥ २९ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** राजेति । राजोवाचस्वाहेत्ययं मन्त्रः ३९ । अर्धश्लोकमन्त्रक इति अर्धश्लोकरूपो मन्त्रः । तद्यथा । भगवंस्त्वामहं प्रष्टुमिच्छाम्येकं वदस्व तत् स्वाहा ४० । मन्त्राश्चत्वारिंशदेवमिति । एवं प्रकारेण चत्वारिंशत् विंशतिद्वयं मन्त्राः स्युः । श्लोकमन्त्रचतुष्टयमिति श्लोकरूपा ये मन्त्रास्तेषां चतुष्टयं । श्लोकरूपाः प्रत्येकं चत्वारो मन्त्रा इत्यर्थः । तद्यथा दुःखायेति ४१ ॥ २९ ॥

**( ६ दंशोद्धारः )** भगवन्निति । वदस्वेति यत्ने । 'भासनोपसंभाषा' इत्यात्मनेपदं । यत्नेन वदेत्यर्थः ॥ २९ ॥

**ममत्वं गतराज्यस्य राज्याङ्गेष्वखिलेष्वपि । जानतोऽपि यथाज्ञस्य किमेतन्मुनिसत्तम ॥ ३० ॥**

**( १ गुप्तवती )** राज्याङ्गेषु स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलेषु सप्तसु ॥ ३० ॥

**( २ चतुर्धरी )** ममत्वमिति । राज्यस्येति । सुपां सुप् इति सप्तम्यर्थे षष्ठी । मम राज्यादौ यन्ममत्वमेतत्किंनिबन्धनमित्यर्थः । अन्यदाह । राज्यस्य राज्यक्रियाया इति राज्याङ्गेषु स्वाम्यादिषु । 'स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि च । राज्याङ्गानि प्रकृतयः पौराणां श्रेणयोऽपि च' इति नामलिङ्गानुशासनात् । अखिलेषु समस्तेषु ॥ ३० ॥

**( ३ शान्तनवी )** मुनिष्वतिशयेन सत् विपश्चित् मुनिसत्तमः । हे मुनिसत्तम । जानतोऽपि उत्पन्नज्ञानस्यापि गतराज्यस्य शत्रुहस्तगतसाम्राज्यस्य मे अखिलेष्वपि राज्याङ्गेषु यथाज्ञस्य जडस्येव ममत्वं ममता वर्तते किमेतत् इत्यन्वयः । विनिष्टराज्यस्य पुंसः राज्याङ्गेषु किं ममत्वेन कृतं स्यादिति भावः । 'स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि च' इति सप्त राज्याङ्गानि । 'ववायथातथैवैवं' ॥ ३० ॥

**( ४ नागोजीभट्टी )** दुःखहेतुत्वमाह । ममत्वमिति । राज्यस्येति सप्तम्यर्थस्य शेषत्वविवक्षायां षष्ठी । राज्ये इत्यर्थः । तेष्वमदीयत्वं जानतोऽपि मम यथा अज्ञस्य अज्ञस्येव राज्यादिषु ममत्वं एतत्किं । किंनिबन्धनमित्यर्थः । 'स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि च । राज्याङ्गानि प्रकृतयः पौराणां श्रेणयोऽपि च' एषु स्वाम्यं प्रधानम् ॥ ३० ॥

**( ५ जगच्चन्द्रचन्द्रिका )** जानतोऽपि ४२ ॥ ३० ॥

**( ६ दंशोद्धारः )** ॥ ३० ॥

**अयं च निकृतः पुत्रैर्दारैर्भृत्यैस्तथोज्झितः । स्वजनेन च संत्यक्तस्तेषु हार्दी तथाप्यति ॥ ३१ ॥**

**( १ गुप्तवती )** निकृतः वञ्चितः । अतिहार्दी अतिशयस्नेहवान् ॥ ३१ ॥

**( २ चतुर्धरी )** अयमिति । अयं वैश्यः निकृतो दुःखीकृतः । उज्झितस्त्यक्तः । तथेति समुच्चये । अति अतिशयेन हार्दी स्नेहवान् ॥ ३१ ॥

**( ३ शान्तनवी )** अयं वैश्यश्च यद्यपि पुत्रैः निकृतः विप्रकृतः खिलीकृतः । तथा दारैः कलत्रैः भृत्यैरमात्यैश्च उज्झीतः उत्सृष्टः । स्वजनैर्भ्रात्रादिभिर्बन्धुभिरपि संत्यक्तः तथापि तेषु पुत्रादिषु ममत्वेन अतिहार्दी अतिस्नेहोपेतो वर्तत इत्यन्वयः । विस्नेहेषु पुत्रादिषु ममत्वेनातिस्नेहवानिति भावः । 'निकृतः स्याद्विप्रकृतः' निःक्रियते खिलीक्रियतेस्म निकृतः । अथवा 'निकृतस्त्वनृजुः शठः' निकृणोति हिनस्ति निकृतः हिंसकोऽयमनृजुः शठ इत्युज्झित इत्यर्थः । 'कुसृतिर्निकृतिः शाठ्यं' निष्कृत इत्यप्रस्तुतार्थकत्वादपपाठः । तथाहि निष्कृतिः प्रायश्चित्तिः । यदाहुः 'कामतो ब्राह्मणवधे जीवतो नास्ति

१ 'निष्कृतः' 'निःकृतः' इति पाठौ शान्तनवीटीकायां संगृहीतौ विवृतौ च ।

निष्कृतिः' इति । प्रायश्चित्तिर्नास्तीत्यर्थः । 'प्रायश्चित्तिस्तु निष्कृतिः' । अथवा निरर्थकः अतो निःकृतः । अथवा निष्कान्तः कृतात् करणात् राज्याद्वा निःकृतः ॥ ३१ ॥

**( ४ नागोजीभट्टी )** नाहमेव तथा अयमपीत्याह । अयं च निकृत इति । निकृतः तिरस्कृतः । उज्झितः त्यक्तः । नीत्युपसर्गपूर्वात्क्तः क्तः । तथेति समुच्चये ॥ ३१ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** स्वजनेन चेति । दृष्टदोषेऽपीति ४४ ॥ ३१ ॥

**( ६ दंशोद्धारः )** अयं चेति । अतिशयेन हार्दी स्नेहवान् ॥ ३१ ॥

**एवमेष तथाहं च द्वावप्यत्यन्तदुःखितौ । दृष्टदोषेऽपि विषये ममत्वाकृष्टमानसौ ॥ ३२ ॥**

**( १ गुप्तवती )** ॥ ३२ ॥

**( २ चतुर्धरी )** एवमिति । विषये (वस्तुनि) पुत्रदारादौ ॥ ३२ ॥

**( ३ शान्तनवी )** एषः वैश्यः एवं यथा उक्तः तथा अहंच दृष्टदोषेपि ज्ञातदोषेपि विषये ममत्वाकृष्टमानसौ आवां द्वावपि अत्यन्तदुःखितौ अत्यन्तं संजातदुःखौ वर्तामहे इत्यन्वयः । 'इवेत्थमर्थयोरेवं' । षिञ् बन्धने विषिणोति बध्नाति विषयः । शब्दस्पर्शरूपरसगन्धलक्षणः ग्रामसमूहादिलक्षणश्च विषयः । दृष्टदोषत्वमध्रुवत्वं अन्ततो दुखःहेतुत्वं च । ममेति भावो ममत्वं तेनाकृष्टं मानसं ययोस्तौ तथोक्तौ ॥ ३२ ॥

**( ४ नागोजीभट्टी )** एवमिति । विषये राज्यपुत्रादौ ममत्वेनाकृष्टं विषयाधीनं कृतं मानसमन्तःकरणं ययोस्तौ ॥ ३२ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** ॥ ३२ ॥

**( ६ दंशोद्धारः )** एवमिति । दृष्टदोषे अर्जने अर्जितस्य रक्षणे दैवान्नाशेऽपि दृष्टः दोषो दुःखजनकत्वमस्मिन् ॥ ३२ ॥

**तत्किमेतन्महाभाग यन्मोहो ज्ञानिनोरपि । ममास्य च भवत्येषा विवेकान्धस्य मूढता ॥ ३३ ॥**

**( १ गुप्तवती )** विवेकान्धस्य विवेकचक्षुषा हीनस्य वा । ज्ञानाज्ञानयोः सामानाधिकरण्यं कथमिति प्रश्नार्थः ॥ ३३ ॥

**( २ चतुर्धरी )** तत्केनेति । ममास्य च ज्ञानिनोरप्यावयोः यन्मोहोऽन्यथा प्रतिभानं भवति तत् एतत्केन कारणेनेत्यर्थः । नह्यस्मद्विधानां मोहो भवितुमर्हति इत्याह । एष इति । वस्तुतत्त्वपरिच्छेदो विवेकः । तत्रान्धस्य तद्विहीनस्येत्यर्थः । अथवा अविवेकेन अन्धस्य । अविवेकिन इति यावत् । एवंभूतस्यैवैतावतीदृशी मूढता भवति । ननु विवेकिनः तत्कथमावयोर्मोह इति भावः ॥ ३३ ॥

**( ३ शान्तनवी )** हे महाभाग हे सुमेधोमुने ज्ञानिनोरप्यावयोर्नृपवैश्ययोर्मोहो भवतीति यत् तदेतत् किमित्यन्वयः । भगस्यैश्वर्यादेरिदं भागं महत् भागं यस्य स महाभागः । कयोर्ज्ञानिनोः को नु मोह इत्यत आह । हे मुने मूढस्य विवेकान्धस्य इदं सुखाय इदं दुःखायेति हिताहितपार्थक्ये विषये अन्धस्य मम च अस्य च सुरथसमाधिसंज्ञयोर्नृपवैश्ययोः एषा मूढता विवेकविहीनता मोहापन्नता भवतीति किमेतदित्यन्वयः । 'अचक्षुषि तमस्यन्धं जले तिमिरकल्पपि' ॥ ३३ ॥

**( ४ नागोजीभट्टी )** तत्किमिति । ज्ञानिनोर्विषये दोषवत्त्वज्ञानवतोरपि । ममास्य चेति सर्वान्वयि । उभयनिष्ठमोहस्यायुक्तत्वमाह । यत् यतः एषा एतज्जातीया मूढता अविवेकान्धस्य अविवेकवतः भवति नतु दोषज्ञानरूपविवेकवत इति आवयोः सा युक्तेति भावः ॥ ३३ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** पुनरर्धमिति । पुनः अर्ध अर्धश्लोकात्मको मन्त्रः । तथाहि ममास्य च भवत्येषा विवेकान्धस्य मूढतास्वाहा ४५ ॥ ३३ ॥

**( ६ दंशोद्धारः )** तत्किमिति । भगस्यैश्वर्यादेरिदं भागं महद्भागमस्य तत्संबुद्धिः । विवेकेऽप्यन्धस्य ममास्य च । यद्वा विवेकान्धस्य जनस्य या मूढता सा ज्ञानिनोरप्यावयोः कथमिति प्रश्नः ॥ ३३ ॥

**ऋषिरुवाच ।**

**ज्ञानमस्ति समस्तस्य जन्तोर्विषयगोचरे । विषयश्च महाभाग याति चैवं पृथक्पृथक् ॥ ३४ ॥**

**( १ गुप्तवती )** तत्र ज्ञानमात्रमूढत्वाभावव्याप्यं ज्ञानविशेषो वा । नाद्य इत्याह । ज्ञानमस्तीति । विषयगोचर इति पद-

१ 'तत्केनैतत्' इति चतुर्धरीटीकास्थः पाठः । २ 'विषयाश्च' इति पाठः । ३ 'जातिश्चैवं' इतिचतुर्धरीटीकास्थः पाठः ।

द्वयस्य सप्तम्याश्चैक एवार्थः। तथापि शब्दस्पर्शादिरूपो विशेषस्तत्सामान्यं तन्निष्ठो विषयतासंबन्धश्चेति त्रयपरत्वान्न पौनरुक्त्यं। ज्ञानं शब्दादिविषयसबन्धी भवत्येवेत्यर्थः। विषयश्च याति ज्ञानेन संबन्धी भवत्येव ॥ ३४ ॥

**(२ चतुर्धरी)** अत्रोत्तरमभिधित्सुः ज्ञानित्वाभिमानमेव तावत्तमुन्मूलयिष्यन्नृषिरुवाच। ज्ञानमिति। ननु ज्ञानमात्रस्य मोहवैयधिकरण्यं भवतोऽभिप्रेतं ज्ञानविशेषस्य वा। आद्ये सर्वस्यैव निर्मोहत्वप्रसङ्ग इत्याह। ज्ञानमिति। समस्तस्य जन्तोः प्राणिमात्रस्यैव विषयगोचरे विषये घटपटादिविषये ज्ञानमन्तःकरणवृत्तिरस्ति। नच मोहाभाव इति वैषयिकज्ञानस्य न मोहवैयधिकरण्यमित्यर्थः। विपक्षे बाधकमाह। विषयश्च पृथग्भिन्नस्वभावः। एवं वक्ष्यमाणक्रमेण यथा गोब्राह्मणादिषु भेदेन याति पृथक् पृथक् भवति। एवं रूपरसादिर्विषयश्च पृथक् पृथक् अभ्युपतिष्ठते। न भिन्नविषयज्ञानस्य मोहवैयधिकरण्यमुपपद्यते। 'अत्र को मोहः कः शोक एकत्वमनुपश्यतः' इत्यभेदज्ञानस्यैव तथाभावश्रवणात्। जातिश्चैवमिति पाठे यथा रूपरसादिविषयश्च पृथक्पृथगेवं मनुष्यत्वादिजातिरित्यर्थः। गोत्वब्राह्मणत्वादिभेदेन जातिश्च पृथग्भवति। तत्र यद्यपि जातिरेका नित्या तथापि व्यक्तिभेदाद्भिद्यते ॥ ३४ ॥

**(३ शान्तनवी)** हे राजन् समस्तस्य सर्वस्य जन्तोश्चेतनस्य प्राणिनः विषयगोचरे ज्ञानं बुद्धिमात्रमस्ति इत्यन्वयः। नहि मोक्षे धीर्ज्ञानं विवक्षितं किंतु विषयगोचरे विषये शब्दादौ गोचरे इन्द्रियार्थस्य। तत्तदिन्द्रियजं ज्ञानं विद्यत एव तावन्मात्रमिति भावः। विषिणोति बध्नातीति विषयः शब्दादिः। गावः इन्द्रियाणि चरन्त्यस्मिन् गोचरः।'गोचरसंचर' इति साधुत्वं। यद्यपि 'रूपं शब्दो गन्धरसस्पर्शाश्च विषया अमी। गोचरा इन्द्रियार्थाश्च' इत्यभिधानात् य एव विषयः स एव गोचर इति पौनरुक्त्यं प्रतीयते तथापि इह दुःखितं सुरथं प्रति विषिणोति बध्नातीति विषयो दुःखहेतुरिन्द्रियं वशीकरोति गोचर इति प्रदर्शनपरत्वादपौनरुक्त्यं द्रष्टव्यं। भगस्यैश्वर्यादेरिदं भागं महद्भागं यस्यासौ महाभागः हे महाभाग राजन् एवं वक्ष्यमाणप्रकारेण विषयाश्च विषयवृत्तयश्च पृथक् विभिन्नाः यान्ति पार्थक्येन इन्द्रियगोचरतां व्रजन्ति। अथवा प्रसरन्ति संसरन्तीत्यन्वयः। 'विषयाश्च महाभाग जातिश्चैवं पृथक्पृथक्' इति पाठे जातिः सामान्यं रूपत्वगन्धत्वाद्यप्यनेकविधम् ॥३४॥

**(४ नागोजीभट्टी)** अत्रोत्तरमाह। ऋषिरुवाच। ज्ञानमिति। ननु ज्ञानमात्रस्य मोहवैयधिकरण्यं तवाभिमतं ज्ञानविशेषस्य वा। नाद्यः। सर्वस्यैव निर्मोहत्वप्रसङ्गादित्याह। ज्ञानमिति। अन्त्यस्तु तथापीत्यनेन खण्डयिष्यते। विषिणोति बध्नातीति विषयो बन्धकः। तद्रूपे गोचरे विषये ज्ञानं सर्वस्य जन्तोरस्ति। नच मोहाभाव इत्याह। विषयश्चेति। एवं वक्ष्यमाणप्रकारेण पृथक्पृथक् भिन्नप्रकारेण ज्ञानविषयत्वं यातीत्यर्थः ॥ ३४ ॥

**(५ जगच्चन्द्रचन्द्रिका)** ऋषिश्चेति। च पुनः ऋषिरुवाचस्वाहेत्ययं मन्त्रः ४६। अर्धमिति। अर्धश्लोकात्मको मन्त्रः। तथाहि ज्ञानमस्ति समस्तस्य जन्तोर्विषयगोचरे स्वाहा ४७। श्लोकात्मका मन्त्राः पुनर्दशेति। पुनः श्लोकरूपा मन्त्राः दश पङ्क्तिसंख्याकाः। तथाहि विषयश्चेति ४८ ॥ ३४ ॥

**(६ दंशोद्धारः)** ज्ञानमात्रसत्वे कथं मोहो मम इति राज्ञः प्रश्नमुचारयन् ज्ञानमात्रस्य मोहवैयधिकरण्यं नास्ति। तथासति प्राणिमात्रस्य विषयज्ञानसत्वेन निर्मोहत्वप्रसङ्गादित्याशयेन ऋषिरुवाच। ज्ञानमिति। नेह मोक्षे धीर्ज्ञानं किंतु विषयगोचरे। विषिणोति बध्नातीति विषयः तस्मिन् गोचरे इन्द्रियार्थे इत्यर्थः। अतो 'गोचरा इन्द्रियार्थाश्च' इत्यमरादिन्द्रियार्थवाचिगोचरशब्देन न पौनरुक्त्यं। आहारनिद्राभयमैथुनादिविषयज्ञानं प्राणिमात्रस्यास्ति। न तावता मोहनिवृत्तिः। तदपि ज्ञानं नैकविधं विषयभेदादित्याह। विषयश्चेति। विषयश्च रूपरसादिरेवं वक्ष्यमाणप्रकारेण याति उपतिष्ठते। चोप्यर्थे। यात्यपि गच्छति चेत्यर्थः। जातिश्चेति पाठे विषयवन्मनुष्यत्वादिजातिरपि पृथक्पृथगित्यर्थः ॥ ३४ ॥

## दिवान्धाः प्राणिनः केचिद्रात्रावन्धास्तथापरे। केचिद्दिवा तथा रात्रौ प्राणिनस्तुल्यदृष्टयः॥३५॥

**(१ गुप्तवती)** दिवान्धा इति। उलूकचटकविडालादयः क्रमात्। वेदान्तिनस्तु 'या निशा सर्वभूतानां तस्यां जागर्ति संयमी' इत्यादिगीतार्थपरत्वेन योजयन्ति ॥ ३५ ॥

**(२ चतुर्धरी)** भिन्नत्वमेव प्रकटयति। दिवेति। केचित्प्राणिनः उलूकादयो दिवा दिनविषये अन्धाः ऐन्द्रियकज्ञानहीनाः। अर्थाच्च रात्रावन्धाः अपरे वायसादयो रात्रावन्धाः केचित्। किंच उलूकादयः स्थावरादयश्च दिवा रात्रौ तुल्यदृष्टयोऽन्धा एव। तथा केचिद्राक्षसादयो दिवा रात्रौ तुल्यदृष्टयोऽनन्धा एवेत्यर्थः। एतेन ज्ञानमात्रस्य मोहवैयधिकरण्ये रात्र्यादौ उलूकादीनां मोहो न स्यात्। किंतूलूकादीनां सर्वथैव स्यादेवेति। स्वर्गाऽपवर्गपक्षव्याहतिरिति भावः ॥ ३५ ॥

**(३ शान्तनवी)** सत्यपि चक्षुर्गोलके केचिच्चेतनाः प्राणिनः दिवान्धाः उलूकादयः। तथा अपरे केचित्प्राणिनः काकादयः रात्रावन्धाः दृष्टिहीनाः इत्यन्वयः। केचिद्गवाश्वप्रभृतयः प्राणिनः यथा दिवा तथा रात्रौ च तुल्या दृष्टिर्येषां ते तुल्यदृष्टयो भवन्तीत्यन्वयः। पूर्वं राज्ञा सुरथेन यत्पृष्टं यन्मोहो ज्ञानिनोरपि तत्किमेतदिति तत्रोत्तरमर्धाङ्गीकरेण ॥ ३५ ॥

**( ४ नागोजीभट्टी )** तदेवाह । दिवान्धा इति । केषांचिदुलूकादीनां दिवा ज्ञानाभावः । केषांचित्काकादीनां रात्रौ । केषांचित्किचुलुकादीनां (उलूकादीनां) सर्वदा तथातथा तुल्यदृष्टयः । अन्धा अनन्धा इत्यर्थः । एवं च ज्ञानमात्रस्य मोहवैयधिकरण्ये दिनादौ उलूकादीनां मोहो न स्यादिति भावः । किंच राक्षसादीनां दिवा रात्रौ च विषयज्ञानवतां न कदाचिदपि मोहः स्यात् । किंचुलुका(उलूका)दीनां सर्वदैव मोहप्रसङ्ग इति । तेषामपि किंचिद्विषये मोहदर्शनात् । एवं च न ज्ञानमात्रस्य मोहवैयधिकरण्यम् । नापि ज्ञानाभावस्य मोहसामानाधिकरण्यमित्युक्तं भवति । अत्र तथेति रात्रिसमुच्चये ॥ ३५ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** केचिद्दिवेति ४९ ॥ ३५ ॥

**( ६ दंशोद्धारः )** उक्तं स्फुटयति । दिवान्धा इति । केचित्प्राणिन उलूकादयः । दिवान्धाः। अर्थाद्रात्रावनन्धाः । केचिच्च काकादयो रात्रावन्धाः । दिवा पश्यन्तीत्यर्थः । केचित्तु छुच्छुन्दर्यादयो रात्रौ दिवा चान्धा इत्याहुस्तत्र 'छुच्छुन्दरी गन्धमुखी दीर्घतुण्डी दिवान्धिका'इत्यमरेण दिवान्धत्वोक्तेस्तथैवोपलभ्यमानत्वाच्च । केचिद्वानरमार्जारादयो दिवा रात्रौ च तुल्यदृष्टयोऽनन्धा एव । दिवारात्राविति पदं देहलीदीपन्यायेनोभयत्र संबध्यते । अयं भावः । ज्ञानमात्रस्य मोहवैयधिकरण्यं दुरुपपाद्यं । तथा सत्युलूकादीनां रात्रौ ज्ञानसत्त्वेन काकादीनां च दिवा ज्ञानसत्त्वेन निर्मोहत्वापत्तेः । अतो न ज्ञानमात्रेण मोहनिवृत्तिः ॥ ३५ ॥

**ज्ञानिनो मनुजाः सत्यं किं नु ते नहि केवलम् । यतो हि ज्ञानिनः सर्वे पशुपक्षिमृगादयः ॥३६॥**

**( १ गुप्तवती )** मनुष्यज्ञानं मूढत्वाभावव्याप्यमिति चेत्तत्राह । ज्ञानिन इति । ते केवलं ज्ञानिनो नहि । अज्ञानसमानाधिकरणज्ञानवन्त एवेत्यर्थः । ज्ञानस्याव्याप्यवृत्तित्वेन स्वभावसामानाधिकरण्याभावस्यैवासिद्धेरिति तार्किकाः । वस्तुतस्तु 'तद्विमुक्तस्तु केवली' इति शिवसूत्रे योगिविशेषनिष्ठज्ञानविशेषस्य केवलमिति संज्ञया व्यवहारात्तस्य जानातिक्रियाविशेषणत्वात्तस्यैव च मूढत्वाभावव्याप्यत्वात्तादृशज्ञानिनो भवादृशाः सर्वेऽपि न भवन्तीत्यर्थः । पशवो गवादयः । मृगा हरिणादयः ॥ ३६ ॥

**( २ चतुर्धरी )** अथ नास्माभिः सर्वसत्त्वानां ज्ञानित्वमभिप्रेतं किंतु मनुष्याणामेवेत्याह । ज्ञानिन इति । ननु भवन्मते मनुष्यमात्रस्य ज्ञानित्वं मनुष्यविशेषस्य वा । तत्राद्यं खण्डयितुमुपक्रमते । ज्ञानिन इति । ते मतं सत्यं केवलं च । मनुजा ज्ञानिन एव नहि किंत्वज्ञानिनोऽपीत्यर्थः । एवंचाज्ञानसंवलितज्ञानेनापि ज्ञानित्ववैपरीत्यमेव न स्यात् । सर्वसत्त्वानां चाज्ञानित्वं तदवस्थमित्याह । यत इति । हिशब्दोऽवधारणे भिन्नक्रमः । यतः पश्वादयोपि ज्ञानिन एवेत्यन्वयः । तेष्वप्यज्ञानसंवलितस्य ज्ञानस्य संभवात् । पशवो ग्राम्या गवाद्याः । मृगा आरण्याः हरिणादयः । अथवा ते मनुजाः केवलं ज्ञानिनो नहि किंत्वन्ये ज्ञानिनः सन्तीत्याह । यत इति । पश्वादीनामपि विषयज्ञानसंभवात् । गौरविरजोऽश्वोऽश्वतरो गर्दभो मनुष्यश्चेति सप्त ग्राम्याः पशवः । महिषवानरराक्षससरीसृपरुरुपृषतमृगाश्चेति सप्तारण्याः पशवः ॥ ३६ ॥

**( ३ शान्तनवी )** मनुजाः ज्ञानिनः सन्ति सत्यं । किंतु ते एव केवलं ज्ञानिनः । नहि । यतो मनुजेभ्योऽन्येपि सर्वे पशुपक्षिमृगादयः ज्ञानिनः सन्त्येव हीत्यन्वयः । सर्वेऽपि मनुजादयः यथाविषयं यथोचितज्ञाना एवेति भावः । मनुजा मानवाः संति साधु सत्यं । 'नु स्यात् भेदेऽवधारणे' 'हि हेतावधारणे' 'अभावे नह्यनोनापि' । केवलं नियतमपरं क्रियाविशेषणम् । इदानीं ज्ञानित्वाविशेषात्प्राणिनां प्रतिनियतज्ञाननिबन्धनव्यवहारसिद्धिः कथं स्यादित्याशङ्क्य तानुपपादयितुमाह ॥ ३६ ॥

**( ४ नागोजीभट्टी )** ननु मनुष्या एव ज्ञानित्वेनाभिमता इति चेत्तत्राह । ज्ञानिन इति । मनुजा ज्ञानिन इति ते मतं सत्यं । पृच्छति । ते केवलं ज्ञानिनः ज्ञानिन एव किंतु स्वयमेव वितर्क्योत्तरयति । नहि । किंत्वज्ञानसंवलितज्ञानिन इत्यर्थः । एवं अज्ञानेन ज्ञानित्वाभिमानस्त्वयुक्तः । यतः सर्वे पश्वादयोपि एवं सति ज्ञानिन एव स्युः । हिरिवार्थे भिन्नक्रमश्च । पशुत्वेनैव सिद्धे मृगग्रहणं तद्विशेषप्रतिपत्त्यर्थमित्यर्थः ॥ ३६ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** यतो हि ज्ञानिन इति ५० ॥ ३६ ॥

**( ६ दंशोद्धारः )** ननु प्राणिमात्रस्य ज्ञानित्वं नास्माकमभिप्रेतं किंतु मनुष्याणामेवेति चेत्तत्र किं मनुष्या ज्ञानवन्त एवेति निर्धार्यते उत मनुष्या एव ज्ञानिन इति विकल्प्य पक्षद्वयं दूषयति । ज्ञानिन इति । सत्यं मनुजा ज्ञानिनः किंतु केवलं ज्ञानिनो नहि । अज्ञानमिश्रत्वात् । एवंच मनुष्या ज्ञानिन एवेति निरस्तं । एतेन पश्वादीनां ज्ञानित्वमेवेत्यपि न नियन्तुं शक्यत इति सूचितं । किंच यत इति । पश्वादयोपि ज्ञानिन इति । मनुष्या एव ज्ञानिन इत्यपि निरस्तं । पशवो ग्राम्याः । मृगा अरण्याः । यद्वा मनुजा एव केवलं ज्ञानिनो नहि किंतु पश्वादयोपीत्यर्थः । तेषामपि विषयज्ञानस्य सत्वात् । यद्वा मनुजाः

ज्ञानिनः शास्त्रीयज्ञानवन्तः सत्यं । परंतु केवलं विज्ञानरहितेन तेन किं । विज्ञानमनुभवः । तदुक्तं मोक्षधर्मे 'विज्ञानरहितं ज्ञानं नहि बन्धविमोचकं । नहि दीपस्य वार्ताभिस्तमो नश्यति तत्क्षणात्' ॥ ३६ ॥

**ज्ञानं च तन्मनुष्याणां यत्तेषां मृगपक्षिणाम् । मनुष्याणां च यत्तेषां तुल्यमन्यत्तथोभयोः॥३७॥**

**( १ गुप्तवती )** उभयोर्मनुष्यतिरश्चोरन्यदपि आहारनिद्राभयमैथुनादिकमपि तुल्यमेव ॥ ३७ ॥

**( २ चतुर्धरी )** ननु ज्ञानविशेषस्तु मनुष्यमात्रे वसतीत्याह । ज्ञानं चेति । यदीदृशं मृगपक्षिणां ज्ञानं तत्तादृशमेव तेषां तादृशां तद्विधानां मनुष्याणामपि । मनुष्याणां पशुमनुष्ययोस्तुल्यं साधारणं । तत् तदेव तेषां मृगपक्षिणामपीत्यन्वयः । अन्यदाहारादिकमप्युभयोः पश्वादिमनुष्ययोस्तुल्यं साधारणमित्यर्थः । 'आहारनिद्राभयमैथुनं च सामान्यमतेत्पशुभिर्नराणाम् । ज्ञानं नराणामधिकं विशेषो ज्ञानेन हीनाः पशुभिः समानाः' ॥ ३७ ॥

**( ३ शान्तनवी )** तेषां मृगपक्षिणां यत् ज्ञानं स्वभावजं स्वस्वजातिनियतं तत् मनुष्याणां मानुषत्वजातिनियतानां न । तेषां मनुष्याणां च यत् ज्ञानं स्वभावजं शास्त्रजमव्याहतज्ञानं च तत् मृगपक्षिणां न । तुल्यमन्यत्तथोभयोः । तथा तेन प्रकारेण प्रतिनियतं तत्तत्स्वजातिप्रयुक्तोपयुक्तविषयज्ञानादन्यत् यज्ज्ञानं शरीरमात्रोपयोगि तत् उभयोर्मृगादिमनुष्ययोराहारनिद्राविषयं तुल्यं समानमित्यन्वयः । उभयेषामपि तेषां मृगादिमनुष्याणां व्यवस्थिततत्तज्जातिविषयनिबन्धनव्यवहारपार्थक्यसंसिद्धेरसांकर्यमिति भावः । प्रागुक्तं राज्ञा यन्मोहो ज्ञानिनोरपि तत्किमेतदिति तत्र किमाश्चर्यमित्याह सदृष्टान्तम् ३७

**( ४ नागोजीभट्टी )** तमेवार्थं मनुष्याणां पश्वादिभिस्तुल्यत्वप्रतिपादनेन द्रढयति । ज्ञानं चेति । यत् यादृशं । तत् तादृशं मनुष्याणां च यत्तेषां मृगादीनामित्यर्थः । अन्यदाहारभयमैथुननिद्रारूपमिति उभयोस्तुल्यं साधारणमित्यर्थः ॥ ३७ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** मनुष्याणामिति ५१ ॥ ३७ ॥

**( ६ दंशोद्धारः )** ननु सर्वेषां ज्ञानवत्त्वेपि मनुष्याणां विशेषोऽस्तीत्यत आह । ज्ञानं चेति । यन्मृगपक्षिणां वैषयिकज्ञानं तदेव मनुष्याणां । चकारोऽवधारणार्थः । यद्यादृशं मनुष्याणां तेषां मृगपक्षिणामपि तत्तादृशमेव । तथान्यदाहारादिकं उभयोः पशुमनुष्ययोस्तुल्यं साधारणं । नतदिति पाठे यन्मृगपक्षिणां ज्ञानं स्वभावजं स्वस्वजातिनियतं तन्मनुष्याणां न । यन्मनुष्याणां शास्त्रीयं तन्मृगपक्षिणां न । शेषं यथोक्तमेव ॥ ३७ ॥

**ज्ञानेऽपि सति पश्यैतान्पतङ्गांश्छावचञ्चुषु । कणमोक्षादृतान्मोहात्पीड्यमानानपि क्षुधा ॥ ३८ ॥**

**( १ गुप्तवती )** ॥ ३८ ॥

**( २ चतुर्धरी )** मनुष्यमात्रस्य पश्वादिसाधारण्येऽर्थक्रियासाम्यमस्तीत्याह । ज्ञानेपीति । एतान् ब्रह्माण्डोदरचरान् पतङ्गान् पक्षिणः शावचञ्चुषु अपत्यत्रोटिषु कणमोक्षादृतान् आहारांशे निक्षेपयत्नान् । मोहान्ममत्वलक्षणाद्धेतोः क्षुधा बुभुक्षया पीड्यमानानपि पश्य । वैषयिकज्ञानमोक्षयोः सामानाधिकरण्यं साक्षात्कुर्वित्यर्थः । 'खगे विहंगविहगविहंगमविहायसः । शकुन्तपक्षिशकुनिशकुन्तशकुनद्विजाः । पतत्रिपत्रिपतगपतत्पत्ररथाण्डजाः' इत्यमरः । 'पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः' इत्यमरः । 'चञ्चुस्त्रोटिरुभे स्त्रियौ' इत्यमरः ॥ ३८ ॥

**( ३ शान्तनवी )** हे राजन् ज्ञाने सत्यपि मोहात् ममत्वात् शावचञ्चुषु शिशुत्रोटिषु कणमोक्षादृतान् आदृतकणमोक्षान् क्षुधा बुभुक्षया पीड्यमानानपि एतान् पतङ्गान् विहङ्गान् पश्येत्यन्वयः । ज्ञाने सत्यपीति । एते शावचञ्चुषु निक्षेप्तव्यकणास्ते यद्यस्माभिरेव भक्षयेरन् तर्हि नूनं वयं क्षुधा न पीड्यामहे इति स्वार्थं जानन्तोपि (स्वयं क्षुधा पीड्यमाना अपि) मोहात् ममत्वात् वात्सल्याद्वा शावचञ्चुष्वेव कणान् निक्षिपन्ति पक्षिण इति भावः । 'पतेरङ्गच् पक्षिणि' 'चञ्चुस्त्रोटिरुभेस्त्रियौ' । आदृताः कणमोक्षाः यैस्ते कणमोक्षादृताः । वाहिताग्न्यादिषु परनिपातः । कणमोक्षाहितानित्यपि क्वचित्पाठः ॥ ३८ ॥

**( ४ नागोजीभट्टी )** अर्थक्रियासाम्यमपि तयोरस्तीत्याह । ज्ञानेपीति । तद्भोजनेन नास्माकं तृप्तिरिति ज्ञाने सत्यपि । पतङ्गा इति निरनुस्वारम् ॥३८ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** कणमोक्षेति ५२ ॥ ३८ ॥

**( ६ दंशोद्धारः )** तदेव स्पष्टय[illegible] ज्ञानेसत्यपि क्षुधा पीड्यमानानप्येतान्पतङ्गान्पक्षिणः मोहाद्धेतोः शावशञ्चुषु कणमोक्षे भक्ष्यनिःक्षेपे आदृतान्पश्य । पतङ्[illegible] मोहसामानाधिकरण्यं दर्शितम् ॥ ३८ ॥

**मानुषा मनुजव्याघ्र साभिलाषाः सुतान्प्रति । लोभात्प्रत्युपकाराय नन्वेतान्किं न पश्यसि ॥ ३९ ॥**

**( १ गुप्तवती )** ॥ ३९ ॥

**( २ चतुर्धरी )** मनुष्याणामपि इयमेव [illegible]ित्याह । मानुषा इति । भो मनुजव्याघ्र मनुजश्रेष्ठ । व्याघ्रशब्दः श्रेष्ठ-

---

१ 'नन्वेते किं न' इति पाठः ।

वचनः । एते मनुष्याः सुतान्प्रति साभिलाषाः साकाङ्क्षा इति किं न पश्यसीति साध्याऽहारोऽन्वयः । प्रत्युपकाराय पोषणाद्युपकारार्थं लोभस्तस्मान्नु । एतेन ज्ञानविशेष एव मोहविरोधी । स च मनुष्यविशेषनिष्ठ एवेति भवतोर्मोह उत्पद्यत एवेति भावः ॥ ३९ ॥

**( ३ शान्तनवी )** हे मनुजव्याघ्र राजन् मानुषाः लोभात्प्रत्युपकाराय प्रत्युपकृतिलोभाद्धेतोः सुतान्प्रति सुतेषु विषयेषु कालान्तरे प्रत्युपकारमेतेऽस्मदर्थं करिष्यन्तीति साभिलाषाः सकामाः भवन्ति इति पादत्रयान्वयः । तत्र निदर्शनमाह। नन्वेतान् किं न पश्यसि । ननु भोराजन् त्वं एतान् लोके प्रसिद्धान् पक्षिमृगादीन् ममत्वात्सुतान्प्रति साभिलाषान् सादरान् किं न पश्यसि इति चतुर्थपादान्वयः । अहो राजन् एते पशुपक्षिमृगादयोपि किल प्रत्युपकारनिरपेक्षा अपि केवलं ममत्वादेव सुतान् प्रति साभिलाषाः सादरा दृश्यन्ते किमुत मानुषाः ममत्वाकृष्टमानसाः प्रत्युपकारगृध्नवः सुतान्प्रति साभिलाषाः स्युः । अतितरामेवेति भावः । मनुजोऽयं व्याघ्रइव शूरः श्रेष्ठः मनुजव्याघ्रः । 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' इति समासः । 'स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जराः । सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थगोचराः' । 'प्रश्नावधारणानुज्ञानुनयामन्त्रणे ननु' सुतान्प्रति इति प्रतियोगे द्वितीया सप्तम्यर्थे । अत्रापि उपकृतपुत्रकर्तव्यप्रत्युपकारलोभात् पितरो मनुष्याः पुत्रवात्सल्यं कुर्युर्ममत्वाच्च विशेषत इत्यलं विस्तरेण ॥ ३९ ॥

**( ४ नागोजीभट्टी )** स्वशरीरापेक्षया बहिरङ्गेष्वपि अतिप्रीतिरिति तेषु मोहज्ञानयोः सामानाधिकरण्यमुपपाद्य मनुष्येष्वप्याह । मानुषा इति । व्याघ्रशब्दः श्रेष्ठवाची । मानुषाः लोभात्प्रत्युपकारलोभात् सुतान्प्रति साभिलाषाः एते सुताश्च तु निश्चयेन प्रत्युपकाराय न भवन्ति । इदं किं न पश्यसीत्यर्थः । एवं पूर्वपूर्वव्यवहारं पश्यन्तोपि अग्रे अग्रे पुनः सुताभिलाषा इति मोहज्ञानयोः सामानाधिकरण्यं तेष्वपीति भावः ॥ ३९ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** लोभात्प्रत्युपकारायेति ५३ ॥ ३९ ॥

**( ६ दंशोद्धारः )** एवं मनुष्याणामपीत्याह । मानुषा इति । लोभात्सुतान्प्रति सुतविषये कालान्तरे प्रत्युपकारं एते करिष्यन्तीति प्रत्युपकाराय साभिलाषाः । निरभिलाषा अपि पश्वादयः केवलं ममत्वादेव साभिलाषा दृशन्ते किमुत मानुषाः प्रत्युपकारागृध्नव इति भावः । एतेन मोहविरोधि ज्ञानं वैषयिकज्ञानात्पृथक् तदभावाद्भवतोर्मोह इति ध्वनितम् ॥ ३९ ॥

**तथापि ममतावर्ते मोहगर्ते निपातिताः । महामायाप्रभावेण संसारस्थितिकारिणः ॥ ४० ॥**

**१ ( गुप्तवती )** न द्वितीयः । सर्वेषां तदभावादित्याह । तथापीति ॥ ४० ॥

**( २ चतुर्धरी )** ननैवमपि सर्वेषां ज्ञानविशेषाय प्रवृत्तिः सुलभेत्याह । तथापीति । तथा वैषयिकज्ञानमोहयोः सामानाधिकरण्यस्य साक्षात्कारे सति मोहगर्ते मोहस्याकारे । विषयज्ञाने इतियावत् । अस्वीये स्वीयज्ञानं ममता सैव आवर्तोऽम्भःसंभ्रम इव यस्मिन् । ममता हि विषयज्ञानं पुनः पुनरावर्तयति । महामायाप्रभावेण कर्त्रा निपातिताः निक्षिप्ताः । मानुषा इत्यनुषज्यते । तेषां विशेषणं संसारस्थितिकारिण इति । अपूर्वदेहेन्द्रियवासनासंबन्धः संसारस्तस्य स्थितये कर्तुं कर्माण्याचरितुं शीलं येषां प्रवृत्तिमार्गाणामित्यर्थः । संसारस्थितिकारिणो विष्णोर्महामायाप्रभावेनेति वा । 'स्यादावर्तोऽम्भसां भ्रमः' इत्यमरः ॥ ४० ॥

**( ३ शान्तनवी )** यद्यपि अमी मानुषा यथा प्रत्युपकारार्थं पुत्रान् पालयन्ति तद्वत् मोक्षार्थमपि यतन्त एव । तथापि संसारस्थितिकारिणा महामायाप्रभावेण ममतावर्ते मोहगर्ते निपातिताः इत्यन्वयः । ममता आवर्त इव ममतावर्तः । मोहः गर्त इव मोहगर्तः । तत्रतत्र च महत्याः मायायाः प्रभावः सामर्थ्यं सर्वाकलनशक्तिविजृम्भणं तेन । अथवा महामायां प्रति पूरयति महामायाप्रः । स चासौ भावश्चेति तेन । 'भावः सत्तास्वभावाभिप्रायचेष्टात्मजन्मसु' । संसारस्य स्थितिप्रवाहनित्यतयावस्थानं । न कदाचिदनीदृशं जगदिति भावाभावावपि जगद्रूपौ (बन्धमोक्षावपि जगद्रूपौ) संसाररूपावेव । संसारस्थितिं करोतीति तच्छीलः संसारस्थितिकारी तेन ॥ ४० ॥

**( ४ नागोजीभट्टी )** नन्वेवंविधव्यवहारदर्शिनां संसाराद्विरक्तिः कुतो नेत्यत आह । तथापीति । एवंविधलोकव्यवहारसाक्षात्कारो यद्यप्यस्ति तथापीत्यर्थः । महामायाप्रभावेन कर्त्रा । ममता ममेदमिति बुद्धिरेव भ्रामकत्वादावर्त इवावर्तः । संसारे पुनःपुनरावर्तकः यत्र तादृशे मोहगर्ते निपातिताः मानुषाः संसारस्थितिं तामेव कुर्वन्ति नतु ततो विरज्यन्त इत्यर्थः । 'स्यादावर्तोऽम्भसां भ्रमः' ॥ ४० ॥

**( ५ जगच्चन्द्रचन्द्रिका )** महामायेति ५५ ॥ ४० ॥

**( ६ दंशोद्धारः )** नन्वेवंसति सर्वेषां मोहनिवर्तकं ज्ञानं कुतो न भवतीत्याशङ्क्याह । तथापीति । यद्यपि स्नेहादिदुःखं जानन्ति तथापि महामायाप्रभावेण कर्त्रा मोहगर्ते निपातिताः सन्तः संसारस्थितेः कारिणः करणशीलाः । तथाच

महामायावृतानां तज्ज्ञानं दुरुदयमिति भावः । यद्वा संसारस्थितिकारिणः ईश्वरस्य महामायाप्रभावेणेति संबन्धः । तथा चेदृशी ईश्वरेच्छैव हेतुः । अन्यथा सर्वेषां पारमार्थिकज्ञानोदये सर्वेपि मुक्ताः स्युः । तथाच संसारस्थितिरेव भज्येतेति भावः॥४०॥

**तन्नात्र विस्मयः कार्यो योगनिद्रा जगत्पतेः । महामाया हरेश्चैतत्तया संमोह्यते जगत् ॥ ४१ ॥**

**( १ गुप्तवती )** ॥ ४१ ॥

**( २ चतुर्धरी )** उपसंहरति । तदिति । तत्तस्मादत्र भवन्मोहे विस्मयोऽसंभावना न कार्यो न करणीय इत्यर्थः । यस्मात्तया महामायया एतत् जगन्मोह्यते । ननु कासौ महामायेत्याह । योगेति । महामायानाम हरेरीश्वरस्य योगनिद्रा परमानन्दमयी शक्तिः । जगत्पतेरिति भगवतो मोह्यकोटिबहिर्भावसूचकं विशेषणं ॥ ४१ ॥

**( ३ शान्तनवी )** चशब्दो हेतौ । यतः महामायेति या अनादिः प्रसिद्धास्ति भगवती एषा जगत्पतेर्हरेर्विष्णोर्योगनिद्रेति कथ्यते । तया जगत् संमोह्यते मोहाय संप्रयुज्यते मोहपरायणं क्रियते । तत्तस्माज्ज्ञाने सत्यपि पुत्रादिषु ममत्वं कथं जायते इति अत्र विस्मयो न कार्य इत्यन्वयः । विस्मयो मोहः । योगो निद्रेव योगनिद्रा निःप्रपञ्चात्मावगमो योगस्तद्ध्यानलक्षणो विषयेभ्यश्चित्तवृत्तिनिरोधो विवक्षितः । नतु साक्षान्निद्रा अस्वप्नत्वाद्देवानां । 'योगः संहननोपायध्यानसंगतियुक्तिषु' 'अपूर्ववस्तुलाभेऽपि भेषजेऽपि चरेपि च' । 'मम माया दुरत्यया' इति भगवद्वचनात् ॥ ४१ ॥

**( ४ नागोजीभट्टी )** ननु मायाया आश्चर्येयं शक्तिरत आह । तदिति । योगनिद्रा तमःप्रधाना शक्तिः । एतज्जगत्तया संमोह्यत इत्यन्वयः । जगत्पतित्वेन तस्य मोह्यकोटिबहिर्भावः सूचितः ॥ ४१ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** महामाया हरेरिति ५५ ॥ ४१ ॥

**( ६ दंशोद्धारः )** उपसंहरति । तन्नात्रेति । कासौ महामायेत्यत आह । योगनिद्रेति । परमानन्दशक्तिरित्यर्थः ॥४१॥

**ज्ञानिनामपि चेतांसि देवी भगवती हि सा । बलादाकृष्य मोहाय महामाया प्रयच्छति ॥ ४२ ॥**

**( १ गुप्तवती )** ज्ञानिनामपि केवलिनामपि । अन्येषां किमुतेति तात्पर्यम् ॥ ४२ ॥

**( २ चतुर्धरी )** न केवलं प्रवृत्तिमार्गाणामसौ मोहिका भवति किंतु ज्ञानिनामपीत्याह । ज्ञानिनामपीति । ज्ञानिनां ज्ञानविशेषवतामपि चेतांसि अन्तःकरणानि सा प्रसिद्धा महामाया भगवती अचिन्त्यमहिमा देवी द्योतनशीला हि यस्मात् बलात्स्वशक्तितः आकृष्य विवेकाद्यावर्त्य मोहाय प्रयच्छति मोहानुगामीनि मोहानुकूलानि करोति । भवद्विधानां का कथेति भावः ॥ ४२ ॥

**( ३ शान्तनवी )** महामायायाः प्राधान्यमाह । हि यस्मात् अनादिः प्रसिद्धा वैष्णवी महामाया भगवती ऐश्वर्यादियुता अतः सा देवी स्वेच्छया दीव्यन्ती सती ज्ञानिनामपि उपनिषदुत्थज्ञानिनामपि पुंसां चेतांसि बलात्सामर्थ्यादाकृष्य मोहाय संसारिकत्वाय ममत्वाय प्रयच्छति ददाति । चित्तानि ममत्वाधीनानि करोति इत्यन्वयः । 'स्थौल्यसामर्थ्यसैन्येषु बलं ना काकसीरिणोः' । दाणो यच्छः शिति ॥ ४२ ॥

**( ४ नागोजीभट्टी )** भवादृशानां संसारिणां का वार्ता । अपक्वकषायाणां योगिनामपि सा मोहिकेत्याह । ज्ञानिनामपीति । आकृष्येत्यस्य विवेकादित्यादि । मोहाय प्रयच्छति मोहवन्ति करोतीत्यर्थः । एवं च स्वकर्तव्यसृष्टिवृद्धये एवंप्रभावा सेत्यर्थः ॥ ४२ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** बलादाकृष्येति ५६ ॥ ४२ ॥

**( ६ दंशोद्धारः )** न केवलं विषयिण एव मोहयति किंतु ज्ञानिनोऽपीति कैमुतिकन्यायेनाह । ज्ञानिनामपीति ॥४२॥

**तया विसृज्यते विश्वं त्रैलोक्यं सचराचरम् । सैषा प्रसन्ना वरदा नृणां भवति मुक्तये ॥ ४३ ॥**

**( १ गुप्तवती )** ॥ ४३ ॥

**( २ चतुर्धरी )** तयेति । तया मूलप्रकृतिरूपया विश्वं जगच्चराचरमिति पर्यायैरशेषावान्तरं कार्यजातमभिप्रैति । मोहाय प्रयच्छतीत्युक्तं । ततश्च प्रायेणा(श्रेयो)नुपपत्तिप्रसङ्ग इत्याह । सैषेति । सा बन्धकारणमपि एषा भगवती प्रसन्ना उपासनेन प्रीता सती नृणां मुक्तये कार्यव्यूह(द्वयवि)ध्वंसाय वरदा भवतीत्यन्वयः ॥ ४३ ॥

---

१ 'हरेश्चैषा तया' इति पाठः शान्तनव्यादिसंमतः ।

**( ३ शान्तनवी )** तया देव्या चराचरं विश्वं विसृज्यते विशेषेण सृज्यते उत्पाद्यते । अथच तया देव्या तदेव चराचरं जगत् अविसृज्यते न त्यज्यते किंतु रक्ष्यते । अथच सैषा या देवी नृणां पुंसां वरदा भवति ।अप्रसन्नाऽवरदा भवति । अथच सैषा देवी नृणां भक्तानां प्रसन्ना सती मुक्तये च भवतीत्यन्वयः । तया विसृज्यते तया अविसृज्यते इत्यकारप्रश्लेषो विवक्षातो ज्ञेयः । अ इत्येतत् पृथगव्ययं । 'अमानोनाप्रतिषेधवचने' इति स्मरणात् । अभ्युद्युश्च । 'अभावे नह्यनोनापि' इति । चरतीति चराचरं जंगमरूपं विश्वमित्यर्थः । 'चरिष्णु जङ्गमचरं त्रसमिंगं चराचरं'। 'चरिचलिपतिवदीनां द्वित्वमव्याक्चाभ्यासस्य वा' चरादीनां पचाद्यचि द्विर्भावोऽभ्यासस्य अगागमश्च । अग्विधानसामर्थ्याच्च हलादिःशेषो न । अन्यथा आकारादेश एव वक्तव्यः स्यात् । नचेह चरा चाचरा चेति विगृह्यैकवद्भावेन विश्वविशेषणं । चराचरमित्येतदितिशङ्कनीयं । विश्वग्रहणादेतज्जगद्ग्रहणादेव वा तत्सिद्धेः पौनरुक्त्यप्रसङ्गात् । नहि स्थावरजंगमात्मकादन्यद्विश्वस्य शब्दवाच्यं वास्ति तस्मात् चराचरमिह जंगममेव विवक्षितं । विश्वजगच्छब्दयोरिह भिन्नवाक्यस्थया विवक्षितत्वादपौनरुक्त्यं । समं सर्वं 'विश्वमशेषं कृत्स्नं समस्तनिखिलाखिलानि निःशेषं' 'विष्टपं भुवनं जगत्' । गच्छतीति जगद्विश्वं 'जगत्स्याद्विष्टपे क्लीबं वायौ ना जङ्गमे त्रिषु'इति रुद्रकोशः ॥ ४३ ॥

**( ४ नागोजीभट्टी )** विश्वं समस्तं । नन्वेवं मुक्तिर्दुर्लभैव स्यात्तदाह । सैषेति । मोहकारणमपि सा उपासनादिभिः स्वार्पितनित्यकर्मादिभिश्च प्रसन्ना मोक्षाय वरदा भवति ॥ ४३ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** सैषा प्रसन्नेति ५७ ॥ ४३ ॥

**( ६ दंशोद्धारः )** तामेव विशिनष्टि द्वाभ्यां । विसृज्यते उत्पाद्यते । यद्वा अकारप्रश्लेषेण अविसृज्यते न त्यज्यते । 'अमानोना प्रतिषेधे' ॥ ४३ ॥

## सा विद्याऽपरमा मुक्तेर्हेतुभूता सनातनी । संसारबन्धहेतुश्च सैव सर्वेश्वरेश्वरी ॥ ४४ ॥

**( १ गुप्तवती )** ॥ ४४ ॥

**( २ चतुर्धरी )** एकस्यापि ( आकृष्य ) बन्धमोक्षोभयकारणत्वं समर्थयति । सेति । विद्या ब्रह्मज्ञानलक्षणा । परमपुरुषार्थसाधनत्वात् । संसार एव बन्धस्तस्य हेतुः । चशब्दादविद्यारूपावसा(१)यनित्याशुचिऽदुःखानात्मसु(किमित्य)शुचिसुखात्मख्यातिः । सर्वेषां ब्रह्मादितृणान्तानामीश्वरी प्रवृत्तिनिवृत्तिव्यापारा । ईश्वर्यव्याहतेच्छा। सर्वेश्वराणां ब्रह्मादिनां ईश्वरीति वा । सर्वेश्वरेति राज्ञः संबोधनं वा ॥ ४४ ॥

**( ३ शान्तनवी )** इह महामाया अविद्यारूपा बन्धहेतुः । विद्यारूपा तु मुक्तिहेतुरिति प्रतिपाद्यते । तत्र अविद्यापक्षे तावत् सा प्रसिद्धा देवी अविद्या विद्येतरा । यद्वा वेत्ति वित् ब्रह्मज्ञानसंपन्नः ततोऽन्यः अवित् सांसारिकः तं याति अविद्या । कीदृशी अविद्या । अपरमा परा उत्कृष्टा मा मोक्षलक्ष्मीः ततोऽन्या अपरमा । अथवा न विद्यते परा उत्कृष्टा मा मोक्षलक्ष्मीर्यस्याः सा अपरमा । अथवा अः विष्णुः तस्यैव अपरा उत्कृष्टा मा मोक्षलक्ष्मीर्यतो भवति सा अपरमा । अथवा अः विष्णुः परमः परोऽन्योधिकरणभूतो यस्याः सा अपरमा । पुनः कीदृशी । अविद्या अमुक्तेर्हेतुभूता न विद्यते मुक्तिर्यस्मात्त्रिवर्गात्सोऽमुक्तिः त्रिवर्गो धर्मकामार्थलक्षणः क्षयस्थानवृद्धिलक्षणो वा त्रिवर्गः तस्य हेतुभूता । पुनःकीदृशी अविद्या असनातनी न सना सदाभवा असनातनी । अनादिरपि ह्यविद्या विद्याविनिवर्तनीयत्वादनित्या अध्रुवा । पुनः कीदृशी अविद्या सर्वेश्वरी सर्वे ईश्वराः ईशनशीलाः स्वामिनः स्वस्वामिभावसंबन्धसंबन्धिनो भवन्ति । यतः सा सर्वेश्वरी अखिलप्रपञ्चरूपा सैवेश्वरी ऐश्वर्यसंपन्ना अतएव सा संसारबन्धहेतुः संसार इति बन्धः तस्य हेतुः कारणं । अथवा सर्वेषां लोकानां ईश्वराः ब्रह्मविष्णुमहेश्वराः तेषां ब्रह्मादीनां ईश्वरी ब्राह्मी वैष्णवी माहेश्वरीति व्यपदेशतस्तत्र तद्वशीकृत्यौचित्या । स्वामिनीति यावत् । पुनः कीदृशी अविद्या सा अः विष्णुः तेन सह वर्तमाना । विष्णुमायेत्यर्थः । चकारेण विद्यारूपापि महामायेति पक्षः समुच्चीयते । तथाहि । सा वैष्णवी माया सैव विद्या अतीतप्रपञ्चब्रह्मगोचरा उपनिषदुत्थज्ञानरूपा । अथ वेत्ति वित् आत्मज्ञानं याति विद्या । पुनः कीदृशी विद्या परमा परात्मात्मतत्वगोचरत्वादुत्कृष्टा । पुनः कीदृशी विद्या । सनातनी 'सत्यं ज्ञानमनन्तं ब्रह्म' इति श्रुतेर्ब्रह्मरूपत्वान्नित्या । ब्रह्मतत्वगोचरत्वोपचारौचित्यापि । शाश्वती 'शाश्वतस्तु ध्रुवो नित्यसदातनसनातनाः' । 'सायं चिरं'इत्यादिना ट्युः तुट् टित्वात्ङीप् । पुनःकीदृशी विद्या । सर्वा संपूर्णा विश्वरूपा । पुनःकीदृशी विद्या ईश्वरस्य ईश्वरी ईश्वरेश्वरी । ईश्वरस्यापिहि स्वरूपदिदृक्षुत्वौचित्यावाप्तव्यत्वादवश्याश्रयणीयत्वात्तस्याः । 'स्थेशभासपिसकसो वरच्' इतिवरचि । ईष्टे इति ईश्वरः । ईश्वर इति रूपं । अश्नुते अशू व्याप्तौ । व्याप्नोति इति विगृह्य ईश्वरीति भवति । अश्नोतेराशुकर्मणि वरट्चेच्चोपधाया इत्यौणादिको वरट् । पुनःकीदृशी । विद्या संसारबन्धहेतुः । पुंसां मुक्तेः कारणभूतेत्यर्थः । संसारबन्धरूपस्य हेता गंता संसारबन्धहेता तस्य संसारबन्धहेतुः पुंसः मुक्तेर्मोक्षस्य हेतुभूता । 'ज्ञानादेव तु कैवल्यम्'इति सिद्धान्तश्च । विद्यैव मुक्तिनिदानमिति तात्पर्यं । हेतुरिति । हि गतौ ।

तृचि षष्ठ्येकवचनान्तमेतत् । षष्ठीसमासः । 'कर्तरिच' इति तु षष्ठीसमासप्रतिषेधः प्रायिको 'जनिकर्तुः प्रकृतिः' इति पाणिनिप्रयोगाल्लिङ्गादवसीयते । हेतुशब्दस्तु उकारान्तः कारणवाची । अविद्या अहंमतिः । विद्या तु मोक्षफलं ज्ञानम् । सुरथः सुमेधसं मुनिं महामायामहिमानं प्रष्टुं वाक्यं ऊचे ॥ ४४ ॥

**( ४ नागोजीभट्टी )** नन्वेकस्यैव वस्तुनः बन्धमोक्षोभयहेतुतानुपपन्नेत्यत आह । सा विद्येति । सर्वेश्वरस्येश्वरी ईश्वरत्वसंपादिका । अतो न काचिदसंभावना तस्यामित्यर्थः । किंच विद्याविद्योभयरूपत्वादपि नैतदसंगतिरित्याह । परमा उत्तमपुरुषार्थसाधनीभूता विद्या ब्रह्मज्ञानरूपा सैव सनातनी अनाद्यनन्ता च संसारबन्धहेतुरविद्या च सैवेत्यर्थः । एवंच चिज्जडप्रकृत्युभयात्मकत्वादुभयहेतुता उपपन्नेति भावः ॥ ४४ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** पुनरर्धं इति । पुनः श्लोकरूपो मन्त्रः । तथाहि संसारबन्धहेतुश्च सैव सर्वेश्वरेश्वरी स्वाहा ५८ ॥ ४४ ॥

**( ६ दंशोद्धारः )** सेति । एवंच विद्याऽविद्याविभेदेन सैव मोक्षमोहकर्त्रीति भावः ॥ ४४ ॥

## राजोवाच ।

### भगवन्का हि सा देवी महामायेति यां भवान् । ब्रवीति कथमुत्पन्ना सा कर्मास्याश्च किं द्विज॥४५॥

**( १ गुप्तवती )** भगवन्निति । का कथं किमिति स्वरूपोद्भवप्रभावाणां प्रश्नः ॥ ४५ ॥

**( २ चतुर्धरी )** पूर्वं हरेर्योगनिद्रा महामायेति संक्षेपेणोक्ता तां पुनर्विस्तरा(जिगमिषया)जिज्ञासिषू राजोवाच । भगवन्निति । भगं सम्यग्ज्ञानं विद्यते यस्मिन् । ब्रवीतीति पूर्वेणान्वयः । कर्म चास्याः किमित्यन्वयः ॥ ४५ ॥

**( ३ शान्तनवी )** हे भगवन् हे द्विज सुमेधः मुने भवान् यां महामायेति ब्रवीति आह । का हि सा देवी । सा च कथं केन प्रकारेण उत्पन्ना उद्भूत् । अस्याः देव्याः कर्म च किं । पराक्रमश्च कः इत्युवाच राजेत्यन्वयः । 'इतिहेतुप्रकरणप्रकर्षादिसमाप्तिषु' । पुनः पृच्छति राजा ॥ ४५ ॥

**( ४ नागोजीभट्टी )** विशेषजिज्ञासया पुनः पृच्छति । राजोवाच । भगवन्निति । का किंजातीया । कथं केन प्रकारेण । अस्याः कर्म च किम् ॥ ४५ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** पुना राजेति । पुनः राजोवाच स्वाहेति मन्त्रः ५९ एकोना षष्टिरुच्यत इति एकेन ऊना षष्टिः विंशतित्रयमुच्यते । पुनरर्धमिति पुनरर्धं अर्धश्लोकात्मको मन्त्रः । तथाहि भगवन् का हि सा देवी महामायेति यां भवान् स्वाहा ६० । पुनः श्लोक इति पुनः श्लोकः श्लोकात्मको मन्त्रः । तथाहि ब्रवीतीति ६१ ॥ ४५ ॥

**( ६ दंशोद्धारः )** तस्या विशेषजिज्ञासया पृच्छति । भगवन्नित्यादिद्वाभ्याम् ॥ ४५ ॥

### यत्प्रभावा[1] च सा देवी यत्स्वरूपा यदुद्भवा । तत्सर्वं श्रोतुमिच्छामि त्वत्तो ब्रह्मविदां वर ॥ ४६ ॥

**( १ गुप्तवती )** तदेव पुनः पृच्छति । यत्प्रभावेति । किंप्रभावेत्यादिरर्थः ॥ ४६ ॥

**( २ चतुर्धरी )** यत्स्वभावेति । यत्स्वभावा यल्लक्षणा यत्स्वरूपा यदाकारा यदुद्भवा यत्कारणिका । ब्रह्मविदां वेदज्ञानां (ब्रह्मज्ञानिनां) ॥ ४६ ॥

**( ३ शान्तनवी )** हे ब्रह्मविदांवर श्रेष्ठ त्वत्तः सकाशात् तत् सर्वं श्रोतुमिच्छामि । तदिति किं । सा देवी यत्प्रभावा यत्सामर्थ्या यत्स्वरूपा यदाकृतिः यदुद्भवा यदुत्पत्तिका च । तस्याः देव्याः सामर्थ्यं कीदृशं किंस्वरूपं कीदृशं च प्रादुर्भवनमिति प्रश्नतात्पर्यं । यतः त्वत्तः । 'आख्यातोपयोगे' इत्यपादानता । यः प्रभावो यस्याः सा । यत् स्वरूपं यस्याः सा । यः उद्भवो यस्याः सा तथोक्ता । ब्रह्म विदन्ति ब्रह्मविदः तेषां मध्ये वरः । 'वेदस्तत्त्वं तपो ब्रह्म ब्रह्मा विप्रः प्रजापतिः । ब्रह्म वेदो ब्रह्म तपो ब्रह्म ज्ञानं च शाश्वतं' । ब्रह्मन् इति संबुध्यन्तः पाठः क्वचित् ॥ ४६ ॥

**( ४ नागोजीभट्टी )** यत्स्वभावेत्यादिना । स्वभावस्वरूपोत्पत्तिकारणप्रश्नत्रयं । ब्रह्मविदांवर इत्यनेन ऋषिप्रोक्तसर्वप्रकरणस्य श्रुतिशिरोनुयायित्वं स्फुटितं ॥ ४६ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** पुनरर्धमिति। पुनः अर्धं अर्धश्लोकात्मको मन्त्रः । तथाहि तत्सर्वं श्रोतुमिच्छामि त्वत्तो ब्रह्मविदां वर स्वाहा ६२ ॥ ४६ ॥

**( ६ दंशोद्धारः )** ॥ ४६ ॥

---

१ 'यत्स्वभावा' इति चतुर्धरी–नागोजीभट्टीसंमतः पाठः ।

ऋषिरुवाच ।

**नित्यैव सा जगन्मूर्तिस्तया सर्वमिदं ततम् । तथापि तत्समुत्पत्तिर्बहुधा श्रूयतां मम ॥ ४७ ॥**

**( १ गुप्तवती )** नित्यैव सेत्यादिना रूपं देवानामित्यादिनोत्पत्तेरौपचारिकत्वं चोक्त्वा प्रभावं वक्तुमारभते ॥ ४७ ॥

**( २ चतुर्धरी )** अत्रोत्तरमृषिरुवाचेति । तत्राद्यन्तौ पक्षौ समाधत्ते । नित्येति । नित्या प्राक्प्रध्वंसाभावशून्या । द्वितीयेप्याह । सेति । यत्किंचित्सृष्ट्यादिकर्मजातमाप्यते (प्रतीयते) तत्सर्वमस्या एवेत्यर्थः । सर्वनाम्नः प्रसिद्धाभिधायित्वात् । तुरीयेप्याह । जगदिति । जगदेव मूर्तिः (व्यक्ताकारा) व्यक्तिराकारो यस्याः । सर्वत्रैव सदर्थविहीनप्रत्ययार्थावगमात् । तृतीयेप्याह । तयेति । इदं सर्वं तया ततं व्याप्तमिति । चित्स्वभावासावित्यर्थः । उत्पत्त्याद्यभ्युपगमेनाह । तथापीति । ममेत्यव्ययं । मत्त इत्यर्थः ॥ ४७ ॥

**( ३ शान्तनवी )** अथ सुमेधा ऋषिरुवाच । हे राजन् जगन्मूर्तिः सा देवी नित्यैव । तया देव्या इदं लोकमयं सर्वं ततं कृतं । सा तु केनापि न तता न कृता । तथापि लोकोपकारार्थं तत्समुत्पत्तिः तत्प्रादुर्भावो बहुधा अनेकैः प्रकारैर्मम वाचो युक्तितः त्वया श्रूयतामित्यन्वयः । जगत् जगति वा मूर्तिः कायो यस्याः सा तथोक्ता । तस्याः समीचीना उत्पत्तिः तत्समुत्पत्तिः । 'मूर्तिः काठिन्यकाययोः' ॥ ४७ ॥

**( ४ नागोजीभट्टी )** उत्तरयति । ऋषिरुवाच । नित्यैवेति । जगन्मूर्तिरित्यनेन जगदतिरिक्तमुख्यशरीराभावो ध्वनितः । जगदाश्रयभूता शक्तिरित्यर्थः । केनेति जातिप्रश्नोत्तरं स्वरूपप्रश्नोत्तरं च । तया सर्वमिदं ततमित्यनेन स्वभावोत्तरं । सृष्टिस्वभावा सेत्यर्थः । ततं विस्तारितमित्यर्थः । व्याप्तमितिच इत्यर्थकस्य चित्स्वभावा चेत्यर्थः । सृष्टीत्युपलक्षणं । नित्येत्यनेन मुख्योत्पत्तेरभावात्कारणस्य सुतरामभावेन गौण्यौ कारणोत्पत्तीति दर्शितं । ते उत्पत्तितत्करणप्रश्नोत्तरं तत्समुत्पत्तिः गौरी सा । ममेत्यपादानस्य शेषत्वविवक्षायां षष्ठी । मत्त इत्यर्थः ॥ ४७ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** पुनः ऋषिरिति । पुनः ऋषिरुवाच स्वाहेति मन्त्रः ६३ । पुनरर्धमिति । पुनः अर्धं श्लोकार्धं पादद्वयात्मक इत्यर्थः । तथाहि नित्यैव सा जगन्मूर्तिस्तया सर्वमिदं ततं स्वाहा ६४ । पुनः श्लोकाः षट्मन्त्रा इति पुनः श्लोकाः श्लोकरूपाः षट् मन्त्राः षट्संख्याका मन्त्रा इत्यर्थः । तथाहि तथापीति ६५ ॥ ४७ ॥

**( ६ दंशोद्धारः )** अत्रोत्तरमृषिरुवाच । नित्यैवेति । का यत्स्वरूपेत्यनयोरुत्तरं जगन्मूर्तिरिति । किमस्याः कर्म यत्स्वभावेत्यस्योत्तरं तया सर्वमिदं ततमिति । कथमुत्पन्ना । यदुद्भवेत्यस्योत्तरं नित्यैवेति । तथापीत्यादिचेत्यूह्यम् । ममेत्यव्ययं प्राग्वत् ॥ ४७ ॥

**देवानां कार्यसिद्ध्यर्थमाविर्भवति सा यदा । उत्पन्नेति तदा लोके सा नित्याप्यभिधीयते ॥४८॥**

**( १ गुप्तवती )** ॥ ४८ ॥

**( २ चतुर्धरी )** ननु नित्यायाः समुत्पत्तिरिति विप्रतिषिद्धमेतदित्यत आह । देवानामिति । आविर्भवति प्रकटीभवति ॥ ४८ ॥

**( ३ शान्तनवी )** सा देवी देवानां कार्यसिद्ध्यर्थं यदा आविर्भवति प्रकाशते तदा सा देवी नित्यापि सती लोके उत्पन्ना लब्धजन्मेति अभिधीयते कथ्यते । जनतयेत्यन्वयः । आत्मवचनादात्मरूपत्वाद्भावरूपत्वादकृतकत्वाच्च नित्यत्वं तस्या इति भावः । 'प्रकाशे प्रादुराविः स्यात्' । आविर्भवति प्रकाशते इत्यर्थः । नियतं भवा नित्या । नेर्ध्रुवेत्यप् । 'गतानुगतिको लोको न लोकः पारमार्थिकः । सतीमप्यसतीमाह सीतां रक्षःक्षयाश्रयात्' 'सहजो यः समुल्लासः क्षीराब्धेः सोपि मंस्यते । चन्द्र इत्यत्र किं कुर्मो गतानुगतिकं जगत्' ॥ ४८ ॥

**( ४ नागोजीभट्टी )** देवानां कार्यसिद्ध्यर्थमिति । सर्वकर्मप्रश्नोत्तरम् । अनेनैव देवप्रार्थनया आविर्भावस्य ध्वननात् कथमुत्पन्नेत्युत्तरमपि ॥ ४८ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** उत्पन्नेतीति ६६ ॥ ४८ ॥

**( ६ दंशोद्धारः)** ननु नित्यत्वोत्पत्त्योः परस्परं विरोध इत्याशंक्यौपाधिकी उत्पत्तिरिति दर्शयितुमवतारप्रयोजकमितिहासं प्रस्तौति । देवानामित्यादियावदध्यायसमाप्ति ॥ ४८ ॥

**योगनिद्रां यदा विष्णुर्जगत्येकार्णवीकृते । आस्तीर्य शेषमभजत्कल्पान्ते भगवान्प्रभुः ॥ ४९ ॥**

**( १ गुप्तवती )** योगनिद्रामित्यादिना । विष्णोरप्येषा मोहिकेति प्रदर्शनायानेनैव पदेन विशेष्यनिर्देशः । तेन परिकराङ्कुरोऽलंकार इति काव्यविदः । शेषं सर्पविशेषं कल्पान्ते सर्वनाशसमये आस्तीर्य तावन्मात्रस्यैवावशिष्टत्वध्वननाय शेषपदेन निर्देशः ॥ ४९ ॥

**(२ चतुर्धरी)** अत्रापीतिहासमवतारयति । योगेति । योगनिद्रां स्वेच्छोपात्तां निद्रां विष्णुरीश्वरः शेषमनन्ताहिमास्तीर्य तल्पीकृत्य अभजत् अध्यास्ते । कल्पान्ते ब्रह्मदिवसाऽवसाने भगवान्समग्रगुणावरोधः । तथाच विष्णुपुराणे । 'उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिं । वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति' । प्रभुरप्रतिहतेच्छः ॥ ४९ ॥

**( ३ शान्तनवी )** कल्पान्ते प्रलये ब्रह्मादीनां निशावसाने जगति भुवने एकार्णवीकृते एकार्णवत्वेन कृते सति एकोदकपूरत्वेनावस्थापिते सति भगवान् ऐश्वर्यादिसंयुतः प्रभुः स्वामी विष्णुः व्यापको नारायणः शेषं अनन्तं फणीश्वरं आस्तीर्य प्रसार्य पल्यंकीकृत्य यदा योगनिद्रां अभजत् योगनिद्रामिवासेवत । तदा तस्मिन्काले योगनिद्रोपलक्षिते काले विष्णुकर्णमलोद्भूतौ घोरौ भयंकरौ मधुकैटभाविति विख्यातौ नाम्ना कथितौ द्वौ असुरौ सुरविद्विषौ ब्रह्माणं विष्णोर्नाभिकमलस्थं वेधसं हन्तुं हिंसितुं उद्यतौ उद्युक्तौ उन्मुखावभूतामिति श्लोकयुग्मान्वयः । योगनिद्रैव ध्यानाङ्गनिद्रा तां । वेवेष्टि व्याप्नोति विश्वं विष्णुः । जंगम्यते जगत् तस्मिन् । यस्मिन्नणन्ति अम्भांसि सन्ति बहूनि सोऽर्णवः । 'अर्णसो लोपश्च' इति वः । एकः केवलोऽर्णवः समुद्रः पूर्णो यस्मिंस्तत् एकार्णवं । जगत् प्रलयतः प्राक् सप्तार्णवत्वेन जगद्व्यवस्थापितं । प्रलये तु एकार्णवस्य जगतो भावः ऐकार्णव्यं । ब्राह्मणादित्वात् ष्यञ् वृद्धिः । स्त्रियां एकार्णव्यमेव ऐकार्णवी । 'षिद्गौरादिभ्यश्च' इति ङीप् । तया एकार्णव्या एकार्णवत्वेन कृतं व्यवस्थापितं जगत् तस्मिन् । अथवा विधिना अभूततद्भावविवक्षायां सप्तार्णवमनेकार्णवं जगदेकार्णवं कृतं निर्मितं रचितं एकार्णवीकृतं तस्मिन् जगत्येकार्णवीकृते । अथवा नित्यया भगवत्या जगत्येकार्णवेकृते सतीति मुक्तसंशयः पाठः । 'संवर्तः प्रलयः कल्पः क्षयः कल्पान्त इत्यपि' 'कल्पः शास्त्रे विधौ न्याये संवर्ते ब्रह्मणो दिने' । कल्पस्यान्तोऽवधिः कल्पान्तः तस्मिन् । मन्यतेऽहमेव शूरः इति मधुः । 'मधुः पुंस्यसुरे चैत्रे मधुके सुरभावपि । क्लीबं तु मधुमद्ये स्यात्क्षौद्रे पुष्परसेऽपि च' । कीटस्येव भा प्रभा यस्य तत् कीटभं कर्णजं मलं तत्र भवः कैटभः । बृंहति वर्धते ब्रह्मा तं विष्णोः कर्णौ तयोर्मलं ततः उद्भूतौ ॥ ४९ ॥

**( ४ नागोजीभट्टी )** कथं देवप्रार्थनया तत्कार्यसिद्ध्यर्थमवतार इति जिज्ञासायां तां निवर्तयितुं मोहकारणस्यैव च राज्ञः पृष्टत्वेनादौ मोहिकायास्तमोगुणप्रधानाया अवतारं वक्तुमितिहासमाह । योगनिद्रामिति । कल्पान्ते ब्रह्मदिनान्ते योगनिद्रां तामसीं शक्तिं भगवान् । 'उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम् । वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति' इत्युक्तलक्षणः । तेन भूतानां प्रलयकालं ज्ञात्वा सेयं पालनव्यवहारतिरोधानमन्तरा तदसंभवं मत्वा स्वपालनव्यवहारतिरोधायिकां तामसीं शक्तिं अभजत् । पटेनेव तयात्मानमावृतवानित्यर्थः । प्रभुरित्यनेन स्वेच्छया तदङ्गीकारः । नतु तया बलादस्यावरणमिति ध्वनितं । अत एव योगनिद्रेत्युक्तं । इतरजननिद्रावत् मोहपारवश्यापादनीभवति लीलया सखीवल्लोचनपिधानमात्रं करोति । तदुक्तं हरिवंशे 'सखी सर्वसहस्यैषा माया विष्णोः शरीरजा । सैषा नारायणमुखे स्थिता कमललोचना' इति । तेन अतः स्वस्वरूपज्ञानावरकत्वं प्रदर्शितम् ॥ ४९ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** आस्तीर्येति ६७ ॥ ४९ ॥

**( ६ दंशोद्धारः )** योगनिद्रामिति । एकः केवलोऽर्णवः पूर्णो यस्मिन्नित्येकार्णवं प्रलयात्प्राक् सप्तार्णवत्वेन व्यवहितं तस्य भावः ऐकार्णवी । ब्राह्मणादित्वात्ष्यञ् । षित्वान्ङीप् । 'हलस्तद्धितस्य' इति यलोपः । तथाकृते व्यवस्थापिते । एकार्णवे कृते इति पाठः सुगमः ॥ ४९ ॥

**तदा द्वावसुरौ घोरौ विख्यातौ मधुकैटभौ । विष्णुकर्णमलोद्भूतौ हन्तुं ब्रह्माणमुद्यतौ ॥ ५० ॥**

**( १ गुप्तवती )** ॥ ५० ॥

**( २ चतुर्धरी )** ब्रह्माणं विरञ्चिं ॥ ५० ॥

**( ३ शान्तनवी )** पूर्वश्लोके एवास्य श्लोकस्य व्याख्यास्ति ॥ ५० ॥

**( ४ नागोजीभट्टी )** तदेति । मलोद्भूतावित्यनेनानयोरतितामसत्वं सूचितम् । इतरत्स्पष्टम् ॥ ५० ॥

**( ५ जगच्चन्द्रचन्द्रिका )** विष्णुकर्णेति ६८ ॥ ५० ॥

**( ६ दंशोद्धारः )** तदेति । मन्यतेऽहमेव शूरः इति मधुः । कीटस्येन्द्रगोपस्येव भा प्रभा यस्य तत्कीटभं कर्णमलं तत्र भवः कैटभः ॥ ५० ॥

**स नाभिकमले विष्णोः स्थितो ब्रह्मा प्रजापतिः । दृष्ट्वा तावसुरौ चोग्रौ प्रसुप्तं च जनार्दनम् ॥ ५१ ॥**

**( १ गुप्तवती )** इयं च योगनिद्रा प्रथमचरित्रदेवता महाकाल्येव । तमोगुणप्रधानत्वात् । पूर्वं एवंस्तुतेत्यनेन तामसीपरत्वेन स्तुतेरुपसंहाराच्च ॥ ५१ ॥

**( २ चतुर्धरी )** प्रजानां पतिर्नियन्ता ॥ ५१ ॥

**( ३ शान्तनवी )** विष्णोर्नाभिकमले स्थितः स प्रजापतिः ब्रह्मा तावसुरौ च उग्रौ दृष्ट्वा जनार्दनं च प्रसुप्तं योगनिद्रापन्नं दृष्ट्वा एकाग्रहृदयस्थितः सन् । हरेर्विष्णोः प्रबोधनार्थाय हरिनेत्रकृतालयां तां योगनिद्रां महामायां तुष्टाव स्तुतवान् । इति श्लोकयुग्मान्वयः। नाभिरेव कमलं तत्र वा नाभिः कमलमिव तत्र वा नाभौ कमलं तत्र स्थितः उपविष्टः ब्रह्मा। विप्रोपि कश्चित्स्यात् अत उक्तं प्रजापतिरिति । प्रजापतिर्मनुरपि स्यात् अत उक्तं ब्रह्मेति । अर्द हिंसायां चुरादिः । जनान् अर्दयति हिनस्ति जनार्दनः । अर्द गतौ याचने च । भ्वादिः । जनान् अर्दति गच्छति । ष्टुञ् स्तुतौ । स्तुवनक्रियाफलं स्वरक्षालक्षणं। ब्रह्मण एवेत्यात्मनेपदे सति तुष्टावेति पाठः । अथवा स्तवनक्रियाफलं पारंपर्यादीश्वरक्षणे लक्षणमेवेतियुक्तं परस्मैपदं तुष्टावेति। यदुक्तं देवानां कार्यसिद्ध्यर्थमाविर्भवति सा यदेति। हरेः प्रबोधनार्थायेति तु यद्यपि अव्यवहितं स्तवनक्रियाफलं साक्षात्प्रयोजनमथापि प्रयोजनं दैत्यवधविधिद्वारकं पारम्पर्यावधृतं देवसंरक्षणमेव स्तवनक्रियाफलं । एवं अद्वितीयमग्रं प्रमुखं हृदयं स्वान्तं यस्य स एकाग्रहृदयः अनन्यमनस्कः स्थितः निष्कम्पः । अथवा एकं अद्वितीयमग्रं प्रधानं हृत् चित्तं यस्य स एकाग्रहृत् । अये शुभावहे विधौ दैत्यवधलक्षणे विषये स्थितः दत्तावधानः अयस्थितः । हरेर्नेत्रे एव कृत आलयो यया सा तथोक्ता । अथवा हरिणा नेत्राभ्यां कृत आलयो गृहं यस्याः सा तथोक्ता । अथवा हरेर्नेत्रेण चक्षुषा प्रमाणेन कृतः आलयः असंश्लेषः अनाशः अमोक्षो वा यस्याः सा तथोक्ता । अथवा हरेः परमात्मनो नेता प्रापयिता वेदान्तः हरिनेता तेन अकृतः आलयः गृहं प्रति नियतं स्थानं यस्याः सा तथोक्ता तां । प्रबोधनमेवार्थः प्रयोजनं तस्मै प्रबोधनार्थाय । ब्रह्मा तावत्तां स्तोतुं स्वयमेव प्रतिजानीते प्रतिज्ञां करोति ॥ ५१ ॥

**( ४ नागोजीभट्टी )** तत्र ब्रह्मा केत्यत आह । स नाभिकमले इति । प्रजापतिर्नियन्तेति ब्रह्मणो विशेषणं । प्रसुप्तं त्यक्तपालनव्यवहारम् ॥ ५१ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** दृष्ट्वा ताविति ६९ ॥ ५१ ॥

**( ६ दंशोद्धारः )** स नाभीति। ब्रह्मा कश्चन विप्रः स्यादतः प्रजापतिरिति । दक्षप्रजापत्यादिव्यावृत्तये ब्रह्मेति बोध्यं ॥ ५१ ॥

## तुष्टाव योगनिद्रां तामेकाग्रहृदयस्थितः। विबोधनार्थाय हरेर्हरिनेत्रकृतालयाम् ॥ ५२ ॥

**( १ गुप्तवती )** ॥ ५२ ॥

**( २ चतुर्धरी )** तुष्टावेति । एकाग्रहृदयोऽनन्यनिष्ठान्तःकरणः स्थितः स्थिरः । हरिनेत्रकृतालयामिति नेत्रयोरेव निद्राया अभिव्यक्तेः । वस्तुतस्तु सर्वाङ्ग स्थितैव सा ॥ ५२ ॥

**( ३ शान्तनवी )** पूर्वश्लोके एव व्याख्यातास्य श्लोकस्य टीका ॥ ५२ ॥

**( ४ नागोजीभट्टी )** तुष्टावेति। स एकाग्रमनवच्छिन्नं हृदयं यस्य स तादृशः स्थितः सन्नित्यर्थः । हृदयस्थित इत्यतः शर्परे खरि वा विसर्गलोपः । विबोधनार्थाय पालनव्यवहारप्रवृत्त्यर्थं । नेत्रेत्युपलक्षणं । सर्वाङ्गस्थितत्वात्तस्याः । लोके नेत्रयोरेव भूयो निद्राभिव्यक्तिमत्त्वात् नेत्रेत्युक्तिः ॥ ५२ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** विबोधनार्थायेति ७० ॥ ५२ ॥

**( ६ दंशोद्धारः )** तुष्टावेति । एकाग्रेण हृदयेन स्थितः । यद्वा एकाग्रहृत् अये दैत्यवधे जगत्पालनरूपे शुभविधौ स्थितो दत्तावधानः । हरिणा नेत्राभ्यां कृत आलयो यस्याः ॥ ५२ ॥

## विश्वेश्वरीं जगद्धात्रीं स्थितिसंहारकारिणीम् । निद्रां भगवतीं विष्णोरतुलां तेजसः प्रभुः॥५३॥

**( १ गुप्तवती )** ॥ ५३ ॥

**( २ चतुर्धरी )** कथं तां तुष्टावेत्याह। ब्रह्मोवाच। विश्वेश्वरीमिति । जगद्धात्रीं जननीं । स्थितिर्जन्म संहारो नाशश्च तत्कारिणीं स्तौमि वाचा पूजयामि। विरतेन्द्रियप्रदेशे मनोलयो निद्रा। विष्णोर्निद्रां स्तौमीत्यन्वयः। अतुलमसाधारणं तेजो यस्य। क्वचित्तु स्तौमीत्यादिपद्यार्धस्थाने निद्रां भगवतीं विष्णोरतुलां तेजसः प्रभुरिति पठित्वा ब्रह्मोवाचेति पठन्ति । ततश्च तुष्टावेत्यनेनैवान्वयः । अतुलां अनन्यसमां (सा अतुला तां कस्य तेजसः इति वा त्वमन्येन समां) तेजसो ज्योतीरूपस्य विष्णोः प्रभुरिति ब्रह्मणो विशेषणं । तेजसः प्रभुः ब्रह्मेति वा । तेजसः अतुलां पूरणार्थे करणे षष्ठी । वा न विद्यते तुला यस्याः सा अतुला कस्य तेजसः इति वा ॥ ५३ ॥

**( ३ शान्तनवी )** ब्रह्मा तावत्तां स्तोतुं स्वयमेव प्रतिजानीते प्रतिज्ञां करोति । विश्वेश्वरीमिति। अतुलं असदृशं तेजो यस्य सः अतुलतेजाः तस्य अतुलतेजसः विष्णोर्ध्यानरूपां निद्रां स्तौमि नौमि। 'तेजः प्रभावे दीप्तौ च बले शुक्रेऽपि कीर्तितं। तेजः असहनत्वेऽपि। यदाहुः। 'अधिक्षेपावमानादेः प्रयुक्तस्य परेण यत्। प्राणात्ययेऽप्यसहनं तत्तेजः समुदाहृतं'। कीदृशीं योगनिद्रां। विश्वेश्वरीं विश्वस्य ईश्वरीं व्यापिकां जनयित्रीं। अश्नोतेराशुकर्मणि वरट् चोपधायाः। पुनः छेदे तु कीदृशीं।

जगद्धात्रीं जगतो धारयित्रीं पोषयित्रीं च। पुनः कीदृशीं। स्थितिसंहारकारिणीं स्थितिसर्गसंहारमध्यमावस्थां कुर्वाणां। संहारं च सर्गस्थित्युत्तरावस्थां कुर्वाणां। 'सुप्यजातौ णिनिस्ताच्छील्ये'। पुनः कीदृशीं। भगवतीं षडैश्वर्यसंगतां। जगदिति छेदे तु धात्रीमिति ताच्छील्ये तृन्योगे नलोकाव्ययसूत्रेण षष्ठीनिषेधात् कर्मणि द्वितीयान्तं जगदिति। एतेन विष्णुयोगनिद्रैव जगत्सर्गस्थितिसंहारकारिणी ब्राह्मी वैष्णवी माहेश्वरीमयी शक्तिरिति स्तुतितात्पर्यं सूचितं ॥ ५३ ॥

(४ नागोजीभट्टी) योगनिद्रायाः मूलशक्त्यभेदं मत्वा विशेषयति। विश्वेश्वरीमिति। तत्त्वमेव विविच्याह। जगद्धात्रीमित्यादि। धात्रीं जननीम्। अनेन जगदुत्पत्तिस्थितिलयकर्तृत्वं ब्रह्मलिङ्गं दर्शितम्। अतुलामित्यन्तानि विष्णुनिद्राविशेषणानि। तेजसः प्रभुरिति ब्रह्मविशेषणं। तत्स्तुत्यत्वेनात्युत्कर्षोऽस्या ध्वनितः। विष्णुमोहकतया इतरमोहकत्वमनाश्चर्यमित्यपि ध्वनितम्। आयातोऽर्थः वस्तुतो विष्णोरिति। राहोः शिर इति वत् षष्ठी। विष्णुरूपां निद्रामित्यर्थः। ब्रह्मापि सर्वेश्वरः सर्वशक्तिमान् लोकानुग्रहाय स्वयं मोहित इव दुःखनिवृत्तये इव भगवतीं स्तौति। ऋषेः सर्वज्ञत्वादि चैषां सर्वात्मत्वं सर्वशक्तीनामुपक्रमे दर्शितमेवेति न कश्चिद्विरोधः ॥ ५३ ॥

(५ जगच्चन्द्रचन्द्रिका) पुनरर्धकमिति। पुनः अर्धकं अर्धश्लोकात्मको मन्त्रः। तद्यथा निद्रां भगवतीं विष्णोरतुलां तेजसः प्रभुः स्वाहा ७१। इत्येव पाठो मन्त्राणामेकसप्ततिरुच्यते ॥ ५३ ॥

(६ दंशोद्धारः) विश्वेश्वरीमिति। प्रभुर्ब्रह्मा। तेजसो विष्णोरतुलामनुपमां निद्रां तुष्टावेति पूर्वेणान्वयः। तेजसः प्रभुर्ब्रह्मेतिवा। तेजसां प्रभुरिति पाठे तेजसांदीप्तिमतीं। क्वचित् 'स्तौमि निद्रां भगवतीं विष्णोरतुलतेजसः' इति पाठः। तत्रानुपमतेजसो विष्णोर्निद्रां स्तौमीत्यर्थः। अत्र च विश्वेश्वरीमित्यारभ्यैव स्तुतिः। अतएव तदुत्तरं ब्रह्मोवाचेति न पठ्यते किंतु पाठोऽयमसांप्रदायिकः। कात्यायनीतन्त्रोक्तवत्प्रमाणमन्त्रविभागविरोधात् ॥ ५३ ॥

## ब्रह्मोवाच ।

## त्वं स्वाहा त्वं स्वधा त्वं हि वषट्कारस्वरात्मिका । सुधा त्वमक्षरे नित्ये त्रिधामात्रात्मिका स्थिता५४

(१ गुप्तवती) 'एकैव शक्तिः परमेश्वरस्य भिन्ना चतुर्धा विनियोगकाले। भोगे भवानी पुरुषेषु विष्णुः कोपेषु काली समरेषु दुर्गा' इतिवचनादिभिः विष्णुकालिकयोरेकमूर्तित्वान्मधुकैटभहननमपि तेन वेषेण कालिकयैव कार्यमित्याशयेन तामेव स्तौति। त्वं स्वाहेत्यादिना। स्वाहा देवगणानां तृप्तिकरी। स्वधा पितृगणानां। स्वानाजिहीते स्वान् धत्त इति व्युत्पत्तिरपि संभवति। नत्वव्ययमात्र इति। तेन नमः स्वाहायै स्वधायै इति प्रयोगोप्युपपन्न इति वैयाकरणाः।वषट्कारः वषडिति शब्दः वौषडित्यादेराश्रावयेत्यादिसप्तदशाक्षर्या वोपलक्षणं। तेन सर्वयज्ञात्मिकेत्यर्थः। 'सप्तदशप्रजापतिर्यज्ञेऽन्वायत्त' इति श्रुतेः। स्वरात्मिका स्वर्गात्मिका। सकलकर्मफलोपलक्षणमेतत्। अकारादिस्व(र)रूपेति तु बहवः। सुधा मोक्षो ज्ञानफलमपि त्वमेवेत्यर्थः। अक्षरे प्रणवे नित्ये इति संबुद्धिः। अक्षरे परब्रह्मणीत्यौपनिषदः। 'अक्षरं ब्रह्म परमम्' इति गीतासु। 'अक्षरमम्बरान्तधृतेः' इत्यधिकरणे च तथा दर्शनादिति भावः। त्रिधा अकारोकारमकारात्मना मात्रार्धमात्रे तदीयाऽव्यञ्जनकालौ॥५४॥

(२ चतुर्धरी) त्वमिति। स्वाहा देवहविर्दानमन्त्रः। स्वधा पितृहविर्दानमन्त्रः। वषट् क्रियतेऽत्रेति वषट्कारो यज्ञः तदात्मिकाः तत्स्वरूपाः स्वराः 'उदात्तश्चानुदात्तश्च स्वरितश्च स्वरास्त्रयः' इति शिक्षोक्तास्तदात्मिका। सुधा देवतीर्थे। हे अक्षरे उपचयापचयविपरिणामहीने। नित्ये जन्मविनाशहीने। एतेन सन्मात्रत्वमभिप्रैति। केचित्तु अक्षरे क्षररहिते दशाविषये। किंच नित्ये अकृत्रिमसत्त्वमात्रस्थिते। त्रिधामात्रात्मिकास्थितेति योजयति। त्रिधा त्रिप्रकारा या मात्रा ह्रस्वदीर्घप्लुताः अकारउकारमकारलक्षणा इति। जाग्रत्स्वप्नसुषुप्त्यभिमानी विश्वतैजसप्राज्ञाभिधेया तदात्मिका तत्स्वरूपा तत्स्वभावा च त्वम् ॥ ५४ ॥

(३ शान्तनवी) अशेः सरत् सत्वकलषत्वानि। 'अक्षरं वर्णनिर्माणं वर्णमप्यक्षरं विदुः। अक्षरं नक्षरं विद्यादक्षरं श्रुतितोययोः'। अश्नाति त्रीन्लोकान्भुंक्ते भूतात्मकत्वादक्षरा। अश्नुते व्याप्नोति विश्वात्मकत्वाच्च अक्षरा। यद्वा क्षरति संचलति क्षरं। न क्षरं अक्षरं ध्रुवं। अक्षरा ध्रुवा। अतएव हे अक्षरे हे ध्रुवे हे नित्ये हे शाश्वति हे देवि। त्वं स्वाहा देवतोद्देशेन द्रव्यत्यागजनितदेवतातृप्तिरूपत्वेन आस्थिता अङ्गीकृता। प्रतिज्ञातासि शास्त्रेण। अव्ययं स्वाहेति। यदभ्यधुः 'स्वाहा देवहविर्दाने श्रौषड्वौषट्वषट्स्वधेति'। यद्वा त्वं स्वाहेति दैवहविर्दानमन्त्ररूपासि। यद्वा त्वं स्वाहेत्येवमसि। स्वाहात्वं देवस्वरूपेत्यर्थः। यद्वा त्वं स्वाहासि हुतभुक्प्रियासि। सुष्टु आहूयते स्वाहा। सास्त्यस्याः इति वा स्वाहा। 'स्वाहाग्माय्यनलप्रिया'। यद्वा आकारः। स्यात्पितामहः। त्वं सुष्टु अं पितामहं ब्रह्माणं जिहीषे गच्छसि स्वाहासि त्रय्यसि ब्राह्मयसि। 'आतोऽनुपसर्गे कः'। हे देवि त्वं स्वधा पितृुद्देशेन दीयमानद्रव्यजनिततृप्तिरसि। यद्वा त्वं स्वधेत्येवमसि स्वधात् स्वधेति मन्त्रतो भुञ्जाना। पितृरूपासीत्यर्थः। यद्वा 'अकारो वासुदेवः स्यात्' सुष्टु अं वासुदेवं दधासि पोषयसि स्वधासि लक्ष्मीरसि। हे देवि हि यतः त्वं

वषट्कारोसि अतः वषडिन्द्रायेति वषट्कारभागिन्द्र इति त्वं इन्द्राण्यसीत्यर्थः। यद्वा हे देवि त्वं हि त्वमेव वषट्कारोसि। वषट्कारो यजमानः ऋत्विक्चासि। 'हिहेतावववधारणे'। हे देवि त्वं स्वरात्मिका स्वः स्वर्ग आत्मा यस्याः सा स्वर्गरूपासि। यद्वा त्वं परलोकात्मासि। 'स्वर्गे परे च लोके स्वः'। यद्वा त्वं स्वरात्मिकासि उदात्तत्वादिरूपासि। अथच निषादर्षभादिस्वरात्मिकाप्यसि। अथवा वषट्कारस्वरात्मिका इत्येकं पदं। वषट्कारयति स्वःफलरूपं वषट्कारं तपः प्रयोजनं आत्मा यस्याः सा वषट्कारप्रवर्तकस्वर्गरूपफलात्मासि। हे देवि त्वं सुधासि अमृतरूपासि। यद्वा हे देवि त्वं सुधामत्सि सुधात् असि। हे देवि त्वं त्रीन् लोकान् वेदान् त्रीन् देवान् ब्रह्मविष्णुमहेश्वरान् वा दधासि इति त्रिधासि। यद्वा त्रिधामासि त्रीणि धामानि गृहाणि भुवनलक्षणानि देहानि ब्रह्मादिरूपाणि तेजांसि चन्द्रार्काग्निरूपाणि प्रभावरूपाणि च त्रिशक्तिलक्षाणि यस्याः सा त्रिधामा। हे देवि त्वं त्रात्मिका। त्रैङ् पालने त्रायते त्राः विष्णुः क्विप्। त्राः आत्मा स्वभावो यस्याः सा विष्णुरूपासि। यद्वा संपदादित्वाद्भावे क्विप्। त्राणं त्राः पालनं आत्मा स्वरूपं यस्याः सा पालनरूपासि। यद्वा। हे देवि त्वं त्रिधा त्रिभिः प्रकारैः एकमात्रद्विमात्रत्रिमात्ररूपस्वरा(परपर्याया) परंपरया अवर्णात्मकह्रस्वदीर्घप्लुतभिन्नमात्रा आत्मा यस्याः सा त्रिधामात्रात्मिका स्वरवर्णरूपासि स्थितासि अस्थितासि च। यद्वा त्रिधा त्रिभिः प्रकारैर्ब्राह्मीवैष्णवीमाहेश्वरीरूपाः मातरः आत्मा स्वरूपं यस्याः सा त्रिशक्त्याकृतिस्त्रिधामात्रात्मिकेयं विष्णुयोगनिद्रास्थितेति त्रिधामात्रात्मिका। ॐकाररूपेति च। मात्रा अकारः उकारः मकारश्चेति तदात्मिका तत्स्वरूपेति कश्चिदोम्पदगतवर्णानभाङ्क्षीत् तच्च पापात् पापीयः। ईदृशीमोम्पदव्युत्पत्तिमत्सूत्रामन्धस्यान्धलग्नस्य विनिपातः पदेपदे इत्यन्धपरंपरापारंपर्यपर्यागतामन्धकुकुटीगतिमिव पदेपदे स्खलन्तीं प्रति कियदेव तुष्यामः किं। यद्वा तुष्यामः। कियद्वा तुष्यामः। तथाहि। वर्णेषु ये वर्णैकदेशा वर्णान्तरसमानाकृतयस्तेषु तत्कार्यं न भवति। तच्छायानुकारिणो हि ते न पुनस्त एवेति पृथक्प्रयत्ननिर्वर्त्यं हि वर्णमिच्छन्त्याचार्याः। दर्शिता चास्माभिः ओम्पदव्युत्पत्तिरोंनमश्चण्डिकायै इत्यत्रावतेष्टिलोपश्चेति सूत्रत इत्यलं विस्तरेण ॥ ५४ ॥

( ४ **नागोजीभट्टी** ) कथं तुष्टावेत्यत आह। ब्रह्मोवाच। त्वमिति। स्वाहा देवदानमन्त्रोऽग्निपत्नी च। स्वधा पितृदानमन्त्रः पितृपत्नी च। वषट् क्रियते यत्र स वषट्कारो यज्ञः यज्ञदेवाह्वानमन्त्रश्च। स्वराः षोडश आदयस्तदात्मिका च। सुधा देवान्नं। अक्षरे उपचयापचयपरिणामहीने आभ्यां सत्तामात्ररूपत्वं। त्रिधामात्रात्मिका ह्रस्वदीर्घप्लुतरूपा। अर्धमात्रा व्यञ्जनरूपा। अविशेषकत्वाद्धून्यलिङ्गितया अनुच्चार्यत्वं तदा लिङ्गिता नु तथेति बोध्यम्। त्रिधेत्यतो विशेषत इत्यन्तेन प्रणवरूपता चोक्ता। मात्रात्रयमकारोकारमकारात्मकम्। तदूर्ध्वमर्धमात्रा। तत्र मात्रात्रयम् जाग्रत्स्वप्नसुषुप्त्यभिमानिविश्वतैजसप्राज्ञाभिधेयम्। अर्धमात्रा तु वेदान्तवाक्यार्थभूतनित्यमुक्ततुरीयाभिधेया। तदुक्तम्। 'व्यक्ता तु प्रथमा मात्रा द्वितीयाऽव्यक्तसंज्ञिता। मात्रा तृतीया चिच्छक्तिरर्धमात्रा परं पदं' इति। त्वमेवेति। सा त्वमेवेति पूर्वान्वयित्वम्। सावित्री तत्सवितुरिति ऋक्। तदधिष्ठात्री तद्वाच्या चेत्यर्थः। हेदेवि त्वं परा उत्कृष्टा जननी सर्वजनकत्वात्। सर्ववाग्जननी परा च॥ ५४॥

( ५ **जगच्चन्द्रचन्द्रिका** ) ब्रह्मेति। ब्रह्मोवाचस्वाहेत्येको मन्त्रः ७२। अर्ध इति अर्धश्लोकात्मको मन्त्रः। तथाहि त्वं स्वाहा त्वं स्वधा त्वं हि वषट्कारस्वरात्मिकास्वाहा ७३। अथ श्लोकमन्त्रास्त्रयोदश इति। अथ त्रिसप्ततिमन्त्रोत्तरम् श्लोकमन्त्राः श्लोकरूपा मन्त्राः त्रयो अधिका दश त्रयोदश तत्संख्याका वर्तन्ते इति शेषः। तद्यथा सुधात्वमिति ७४ ॥ ५४ ॥

( ६ **दंशोद्धारः** ) त्वं स्वाहेति। अक्षरे उपचयाऽपचयहीने नित्ये जन्मनाशरहिते। स्वाहा देवतोद्देशेन द्रव्यत्यागजनितदेवतातृप्तिरूपा देवहविर्दानमन्त्ररूपा वा। स्वधा पितृद्देशेन दीयमानद्रव्यजनितपितृतृप्तिरूपा मन्त्ररूपा वा। वषट्कारेति वषट्कारो यजमानस्तद्रूपा मन्त्ररूपा वा। स्वरात्मिका स्वर्गरूपा उदात्तादिरूपा निषादादिरूपा वा। सुधा अमृतरूपा। यद्वा सुधामत्सि सुधा। त्रीन् लोकान्ब्रह्मादीन्वा दधासीति त्रिधामात्रात्मिका अकारादिरूपा। यद्वा त्रीणि धामानि तेजांसि सूर्यचन्द्राग्निरूपाणि भुवनानि वा आसमन्तात् त्रायसे इति त्रिधामात्रा स आत्मा यस्याः सा पालनरूपासि। यद्वा त्रिधामात्रा ह्रस्वदीर्घप्लुताः अकारउकारमकारा वा तदात्मिकेत्यर्थः ॥ ५४ ॥

## अर्धमात्रास्थिता नित्या यानुच्चार्या विशेषतः। त्वमेव सा त्वं सावित्री त्वं देवि[1] जननी परा ६६

( १ **गुप्तवती** ) अनुच्चार्या अर्धचन्द्ररोधिन्यादिध्वन्यष्टकरूपा। तत्स्वरूपं च योगिनीहृदयव्याख्यायां विवेचितमस्माभिः। सावित्री सवितृदेवत्या गायत्री ॥ ५५ ॥

( २ **चतुर्धरी** ) या चार्धमात्रास्थिता। नित्या अपरिणामनिर्विशेषतो मात्रात्रयवैलक्षण्येनानुच्चार्या वेदान्तवाक्यार्थलक्षणमुक्त्यभिमानिनी तुरीयाभिधा या सा त्वमेव। एतेन प्रणवरूपा त्वमेवेति विवक्षितं। तथाचाह भगवान् दत्तात्रेयः। 'अकारश्च तथोकारो मकारश्चाक्षरत्रयं। एता एव त्रयो मात्राः सत्वराजसतामसाः। निर्गुणा योगिगम्या च अर्धमात्रा च

---

१ 'देवजननी' इति चतुर्धरीव्याख्यातः पाठः।

संस्थिता । गान्धारीति च सा ज्ञेया गान्धारस्वरसंश्रया । पिपीलिकागतिस्पर्शा प्रमुक्ता मूर्ध्नि लक्षिता' इति । तथा 'मात्रा-श्चार्धस्ततः(स्तथा) श्रोत्रं विज्ञेयाः परमार्थतः । व्यक्ता तु प्रथमा मात्रा द्वितीयाऽव्यक्तसंज्ञिता । मात्रा तृतीया चिच्छक्ति-रर्धमात्रापरं पदं' इति । 'ह्रस्वा तु प्रथमा मात्रा द्वितीया दीर्घसंज्ञिता । तृतीया तु प्लुतार्धाख्या वचसः सा न गोचरा' इति । सावित्री गायत्री ऋक् । देवि द्योतनशीले परा उत्कृष्टा जननी त्वं । इतरा हि जननी क्वचित्कदाचित्किंचिदेव जनयति । त्वं तु न तथेत्यर्थः । देवजननीति पाठे देवानां माता अदितिस्त्वमिति ॥ ५५ ॥

**( ३ शान्तनवी )** पूर्वं त्रिधामात्रात्मिका इति विशेषणेन अकारादिस्वरूपमातृकात्मतोक्ता । अर्धमात्रात्वमित्यनेन तु ककारादिव्यञ्जनरूपमातृकात्मतोच्यते । हे देवि त्वं अर्धमात्रा अर्धं मात्रायाः अर्धमात्रा सा व्यञ्जनवर्णस्वरूपमातृका त्वमेव । 'अर्धं नपुंसकम्'इति समासः । तदुक्तं 'एकमात्रो भवेद्ध्रस्वो द्विमात्रो दीर्घ उच्यते । त्रिमात्रस्तु प्लुतो ज्ञेयो व्यञ्जनं चार्धमात्रकं' इति । अथवा पूर्वं त्रिधामात्रात्मिकेत्यनेन ॐमात्मकत्वं विवक्षितं । तत्र ॐ इति द्विमात्रे दीर्घत्वात् । मकारस्त्वर्धमात्रः व्यञ्जनत्वात् । एवं त्रिधामात्रात्मकता । अथवा ॐमभ्यादानमिति सूत्रतो वेदादिप्रारम्भे 'ॐअग्निमीळे पुरोहितं' इत्यादौ ॐमूशब्दे ॐ ३ इति प्लुतः । एवं त्रिधामात्रात्मकता । अथवा प्रणवष्टेरिति सूत्रेण यज्ञकर्मणि 'अपां रेतांसि जिन्वतो ३म्' इत्येवं पादस्य वा अर्धस्य वा अन्त्यस्याक्षरस्य ॐ३मूशब्दस्त्रिमात्र आदिश्यते । एवंविधा त्रिधामात्रात्मकता । तत्र ॐ-३मूशब्दे मकाररूपायाः अर्धमात्रास्थिता । नित्या ध्रुवा मोक्षं सूचयन्ती विशेषतः । अनुच्चार्या परमात्मरूपत्वात् । 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह'इति श्रुतेर्विशेषतः लक्षणीया सा अर्धमात्रा त्वमेव । अर्धमात्रया सूचिता या मुक्तिः सा त्वमेवेति भावः । अर्धमात्रायामर्थरूपतया स्थितेत्यपि व्याख्यानं । अथच अं विष्णुं याति अया रमा सा त्वमेव । अथच वदेः क्विप् । वदतीति उत्वाचकः शब्दः । न विद्यते उत्वाचकः शब्दो यस्याः सा नुत् 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह'इति श्रुतेः चरितुं गन्तुं प्राप्तुमर्हाचार्या । अनुच्च सा चार्या च अनुच्चार्या परब्रह्मता सा त्वमेव । हे देवि त्वमेव संध्यासि संध्यायन्त्यस्यां संधीयते अहोरात्रौ वाऽस्यां संध्या पितृप्रसूः पितॄणां मातासीतियावत् । अथवा हे देवि त्वमेव सावित्री सवितुरियं सावित्री ऋगसि । अथवा सा प्रसिद्धा सावित्री । वैष्णवीशक्तिरसीतियावत् । यद्वा सविता देवता यस्याः सा तदादिव्याहृतिरहिता ऋक् सैव व्याहृतिसहिता गायत्रीत्युच्यते । हे देवि त्वमेव वेदजननी गायत्र्यसीतियावत् । नि-त्यस्यापि सतो वेदस्य गायत्र्युपदेशपुरःसरत्वादध्ययनसमये गायत्र्युपदेशानुदयाद्वेदाध्ययनविध्यनुदयः इति गायत्र्युपदेष्टैव सती वेदाध्ययनं जनयति इत्यध्येयाध्ययनैक्यौपचारौचित्यतो वेदं जनयति वेदजननी वेदस्य वा जननी वेदमाता गायत्री-त्युक्तं । हे देवि त्वं परासि श्रेष्ठासि । यद्वा पॄ पालनपूरणयोः । पिपर्ति परा वेदाश्च जनाश्च वेदजनाः । वेदजनानयन्ति सौख्यं प्रापयन्तीति वेदजन्यो ब्राह्म्याद्यास्तेषां परा पालयित्री च त्वमेवासि । देवजननीति पाठे देवानां जननी त्वमेव परा उत्तमा । यद्वा वेदजननीं गायत्रीं पान्ति वेदजननीपाः ऋषयः ब्रह्मादयो वा तान् रक्षितुं रासि गृह्णासि वेदजननि परा त्वमेवासि ॥ ५५ ॥

**( ४ नागोजीभट्टी )** अस्य व्याख्या पूर्वश्लोके द्रष्टव्या ॥ ५५ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** त्वमेव संध्येति ७५ ॥ ५५ ॥

**( ६ दंशोद्धारः )** अर्धमात्रेति । अर्धमात्रा व्यञ्जनरूपा । विशेषतोऽच्संबन्धंविनाऽनुच्चार्या स्फुटमनुच्चार्या । यद्वा अर्ध-मात्रा प्रणवस्था विशेषतो मात्रात्रयात्पृथक्त्वेनानुच्चार्या । यथोक्तं 'अकारश्च तथोकारो मकारश्चाक्षरत्रयं । एता मात्राः पुन-स्त्रिस्रः सत्वराजसतामसाः । निर्गुणा योगिगम्यान्या चार्धमात्रा च संस्थिता । गान्धारी चैव सा ज्ञेया गान्धारस्वरसंश्रया' इति । सावित्री सविता देवता यस्याः व्याहृतिरहिता गायत्री वेदजननी सव्याहृतिका गायत्री । नित्यस्यापि वेदस्य गाय-त्र्युपदेशं विना अध्ययनानधिकाराद्वेदाध्ययनजनकत्वाद्वेदजननी वेदमातृत्वव्यवहारात् । यद्वा वेदाश्च जनाश्च तान्नयं सौख्यं प्रापयन्ति ता वेदजनन्यो ब्रह्माद्यास्तेषां परा पालयित्री । पॄ पालने । पिपर्तीति परा । पचाद्यच् । देवजननीति पाठेऽदिति-रूपा ॥ ५५ ॥

## त्वयैतद्धार्यते[१] विश्वं त्वयैतत्सृज्यते जगत् । त्वयैतत्पाल्यते देवि त्वमत्स्यन्ते च सर्वदा ॥ ५६ ॥

**( १ गुप्तवती )** ॥ ५६ ॥

**( २ चतुर्धरी )** अन्ते प्रलयसमये अत्सि भक्षसि । आत्मसात्करोषीत्यर्थः । अतस्त्वं सर्वथा सर्वसंहर्त्री ॥ ५६ ॥

**( ३ शान्तनवी )** इह हि पाठक्रमादर्थक्रमो बलीयानिति सृष्ट्याद्युपक्रम्योच्यते । हे देवि त्वया ब्राह्म्या शक्त्या एतत् जगत्सृज्यते उत्पाद्यते । हे देवि त्वया वैष्णव्या शक्त्या एतत् जगत् पाल्यते दुःखाद्रक्ष्यते । हेवि त्वं रौद्री शक्तिः

१ 'धार्यते सर्वं' इत्यपि पाठः ।

सती एतत् जगदन्ते अवसाने अत्सि खादसि संहरसि । तदित्थं सर्वदा पुनःपुनः क्रमशः सर्गस्थितिसंहारलक्षणं त्रिविधावस्थापन्नं एतत् विश्वं वस्तुतस्त्वयैकयापि ब्राह्मीवैष्णवीरौद्रीतिव्यपदेशभेदभिन्नया शक्त्या धार्यते । आत्मशक्त्यामधिकरणरूपायां विश्वमाधेयी(त्येवं) क्रियते त्वयैवेति तात्पर्यं । सर्वं ददासीत्यन्वयः ॥ ५६ ॥

**(४ नागोजीभट्टी)** सर्वं जगत् त्वयैव धार्यते । सर्वधारणशक्तिमती त्वमेव । अग्रे एतत्पदानि सर्वपरामर्शकानि । अत्सि आत्मसात्करोषि । तैश्च ब्रह्मलिङ्गं दर्शितम् ॥ ५६ ॥

**(५ जगच्चन्द्रचन्द्रिका)** त्वयैतत्पाल्यत इति ॥ ७६ ॥ ५६ ॥

**(६ दंशोद्धारः)** ॥ ५६ ॥

## विसृष्टौ सृष्टिरूपा त्वं स्थितिरूपा च पालने । तथा संहृतिरूपान्ते जगतोऽस्य जगन्मये ॥५७॥

**(१ गुप्तवती)** ॥ ५७ ॥

**(२ चतुर्धरी)** विसृष्टौ सृष्टिकाले । पालने स्थितिकाले । जगन्मये जगद्रूपिणि । बाहुलकलादाम्प्रत्ययः । यद्वा जगन्ति मयन्ते जायन्ते अस्यां । मय गतौ । अथवा जगति मयो निलयो यस्याः । डुमीञ् प्रक्षेपणे इत्यस्य रूपं ॥ ५७ ॥

**(३ शान्तनवी)** इह जगन्मये इति पाठः । मय गतौ । मयते जानाति मया । पचाद्यचि स्त्रियां टाप् । जगतो मया जगन्मया । तत्संबुद्धौ हे जगन्मये हे भुवनज्ञे हे सर्वज्ञे । सर्वे गत्यर्थाः धातवः प्रयोगात् ज्ञानार्थाः । जगन्मयि इति पाठेपि संबुध्यन्तमेव । देव्यानया स्रष्टव्यत्वेन पालनीयत्वेन संहर्तत्वेन च देवीकर्तृकजगत्कर्मकतत्तत्सर्गादिक्रियाविषयभूताज्जगतो हेतोरागता जगत्सर्गादिव्यापारमुद्दिश्यागता प्रादुर्भूता देवी जगन्मयीत्युच्यते । 'तत आगतः' इत्यधिकृत्य 'मयड्वा' इति सूत्रेण हेतुभ्यो मनुष्येभ्यश्च मयट्प्रत्ययः । तत आगत इत्यर्थे जगतो हेतोरागता देवी जगन्मयी । टिलात् ङिप् ह्रस्वः । अथवा 'तत्प्रकृतवचने मयट्' प्रकृतं प्रस्तुतं उच्यतेऽस्मिन्निति प्रकृतवचनं । तदिति प्रथमासामर्थ्यात् प्रकृतवचनेऽभिधेये मयट् । जगत् प्रकृतं प्रस्तुतं कर्तव्यत्वेनोच्यते अस्यां जगन्मयी देवी । अथवा 'समूहवच' इति मयट् । कर्तव्यानि बहूनि जगन्ति उच्यन्ते अस्यां जगन्मयी तत्संबुद्धौ ह्रस्वः । हे देवि हे जगन्मयि भुवनज्ञे । अथवा हे जगन्मयि जगन्निर्मातुमागते जगन्निर्माणकारणादागते त्वं अस्य जगतः विसृष्टौ विशेषतः सृष्टौ उत्पादने विषये सृष्टिरूपासि । पालने विषये स्थितिरूपासि । तथा अन्तेऽवसाने संहारे विषये संहृतिरूपा चासि इत्यन्वयः । सृष्टिस्रष्ट्रोः पालनपालयित्र्योः संहृतिसंहर्त्र्योश्चाभेदेनातिशयोक्तिः । देव्याः सर्वात्मकत्वेन वा स्वरूपकथनं ज्ञेयं । अथच हे देवि जगन्मयि ब्रह्माणि वर्तते इति व्यपदेशमात्रं । सृष्ट्यादिकं तु त्वमेव तत् त्वमेवच करोषि नाहमिति नम्रोक्तिरप्यवसेया ॥ ५७ ॥

**(४ नागोजीभट्टी)** त्वयैतत्पाल्यते सृष्ट्यादिक्रियारूपापि त्वमेवेत्याह । विसृष्टाविति । सप्तम्यन्तानि तत्काललाक्षणिकानि । तथेति । जगद्रूपे इत्यर्थकं । जगन्मये इत्यत्र छान्दसत्वात् ङीबभावः ॥ ५७ ॥

**(५ जगच्चन्द्रचन्द्रिका)** तथा संहृतीति ७७ ॥ ५७ ॥

**(६ दंशोद्धारः)** विसृष्टाविति । जगन्मये जगद्रूपे । मयटष्टित्वात्ङीपि प्राप्ते आर्षत्वादाप् । यद्वा डुमीञ् प्रक्षेपे । अस्मादेरचि । मयः प्रक्षेपः । जगतो मयोऽस्यामित्यर्थः । मय गतावित्यस्माद्वा पचाद्यचि बोध्यम् । गत्यर्थानां ज्ञानार्थत्वात् हे भुवनज्ञे ॥ ५७ ॥

## महाविद्या महामाया महामेधा महास्मृतिः । महामोहा च भवती महादेवी महासुरी ॥ ५८ ॥

**(१ गुप्तवती)** ॥ ५८ ॥

**(२ चतुर्धरी)** महाविद्या महावाक्यलक्षणाविद्या । महती सर्वविषया माया अन्यत्रान्याकारावभासिनी शक्तिर्महामाया । मूलाविद्येति यावत् । महामेधा सकलात्मावधारणक्षमा धीशक्तिरित्यर्थः । स्मृतिः धर्मशास्त्रं ततो महती महास्मृतिः । वेदविद्येतियावत् । महामोहा महान् रागस्तदा(श्रय)सदत्वात् महामोहा संसारशक्तिः । महादेवी इन्द्रादिलोकपालकर्मस्वरूपा । महासुरी हिरण्याक्षादिस्वरूपा ॥ ५८ ॥

**(३ शान्तनवी)** हे देवि त्वं महती विद्या परब्रह्मगोचरज्ञानरूपासि । हे देवि त्वं महती अविद्या अनिर्वचनीयाविद्या प्रपञ्चपरिज्ञानरूपासि । हे देवि त्वं महती माया अनात्मन्यात्मेतिबुद्धिरात्मन्यप्यनात्मेति बुद्धिर्माया । हे देवि त्वं महामेधा महती धारणावती धीर्बुद्धिः महती अमेधा अधारणावती धीः । हे देवि त्वं महास्मृतिर्ध्यानरूपा महती अस्मृतिः अध्यानरूपा । हे देवि त्वं महामोहा महाममता महाअममता च । हे देवि त्वं भगवती ऐश्वर्यादियुतासि तथा अभगवती अनैश्वर्ययुतासि च । हे देवि त्वं महादेवी महादेवस्य स्त्री । हे देवि त्वं महेश्वरी महतीश्वरी व्यापनस्वभावा । अश्नोतेराशुकर्मणि

वरट्चेचोपधायाः । अथ च महती विद्या यस्यां सा मुक्तिः । महती माया अविद्या यस्यां सा असुक्तिः । इत्थं महामेधा-स्मृतिः महास्मृतिरिष्टदेवतोपासना। महामोहा तृष्णा अस्मृतिर्मूर्च्छा निद्रा च ॥ ५८ ॥

**( ४ नागोजीभट्टी )** महाविद्या महावाक्यलक्षणा । महामाया सच्चिदानन्दे आत्मनि संसारित्वरूपानर्थावभासहेतुमूल-विद्या। महामेधा भगवतः सर्वज्ञत्वशक्तिः। महास्मृतिः विधेः सृष्ट्यनुकूलातीतकल्पगतसकलवस्तुस्मृतिरूपा देवरूपा च । महा-मोहेति संसारस्य मूलकारणरागरूपमोहस्वरूपा । महादेवी सकलदेवशक्तिरूपा । महासुरी हिरण्याक्षादिशक्तिरूपा ॥ ५८ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** महामोहेति ॥ ७८ ॥ ५८ ॥

**( ६ दंशोद्धारः )** महाविद्येति । महाविद्या 'तत्त्वमसि'इति महावाक्यजन्या विद्या महती ब्रह्मादिमोहिका मायाऽवि-द्याशक्तिः । महती मेधा बुद्धिश्च । महती वेदादिविषया स्मृतिश्च । महामोहस्य संसारस्य जनकत्वान्महामोहा महती पाल-नरूपा देवशक्तिश्च । महती देवपराजयकारिणी आसुरीशक्तिश्च । यद्वा महती सुरशक्तिः । तदा महादेवीत्यस्य महादेवस्य स्त्रीत्यर्थः । महेश्वरीति वा पाठः ॥ ५८ ॥

## प्रकृतिस्त्वं हि सर्वस्य गुणत्रयविभाविनी । कालरात्रिर्महारात्रिर्मोहरात्रिश्च दारुणा ॥ ५९ ॥

**( १ गुप्तवती )** कालरात्रिरिति दैनंदिनप्रलयब्रह्मप्रलयमहाप्रलयरूपेति रात्र्यन्तपदत्रयार्थ इत्याहुः । वस्तुतस्तु शक्तिसंगमतन्त्रराजे तिथिविशेषेण रात्रीणां तदभिमानिदेवतानां तन्त्रमन्त्राणां चेमानि नामान्युक्तानि । तद्देवतात्रयसमष्टि-रूपयोगनिद्राप्रतिपादकत्वेन रात्रिसूक्तं बह्वृचेषु प्रसिद्धं । सामविधिब्राह्मणे अथ यः कामयेत पुनर्न प्रत्याजायेयं' इत्यधिकृत्य 'रात्रीं प्रपद्ये' इत्यादिरूपो मन्त्रोऽप्यनुसंधेयत्वेनाम्नातः । स च देवीचन्द्रकलास्तवे चरमश्लोके दीक्षितैर्ज्ञानमोक्षोभयफलकत्वेन व्याख्यातः । हरिवंशेऽप्यस्या विस्तरः । एतद्देवताकत्वादेव रात्रिसूक्तमिति तन्त्रेष्वस्य स्तोत्रस्य व्यवहारः ॥ ५९ ॥

**( २ चतुर्धरी )** प्रकृतिरिति । प्रकृतिर्मूलकारणम् । गुणत्रयं सत्वरजस्तमोपलक्षणं विभावयितुमनुवर्तयितुं शीलं यस्याः । कालो मरणं तदुपलक्षिता रात्रिः । कल्पान्तरात्रिरित्यर्थः । महतः ईश्वरस्य रात्रिर्महारात्रिः । महतः ब्रह्मणो मरणोपलक्षिता रात्रिरिति यावत् । मोहः अकर्तव्ये कर्तव्यमिति ग्रहः स एव रात्रिरिव रात्रिः बुद्धिमोहकत्वात् मोहरात्रिः निद्रास्वरूपा वा । दारुणा दुष्परिहारा ॥ ५९ ॥

**( ३ शान्तनवी )** हे देवि त्वंच त्वमेव सर्वस्य प्रकृतिरिति प्रक्रियते सर्वमनया प्रकृतिः सत्वरजस्तमःसाम्यावस्था अव्यक्ताख्या प्रधानं । अथच त्वमेव गुणान् सत्वरजस्तमांसि विभावयसि पृथक् कृत्य जगद्रूपेणावस्थापयसि गुणत्रयविभा-विनी । सत्वं ज्ञानसुखहेतुः । रजो रागात्मकदुःखहेतुः । तमः आवरकमोहहेतुः । गुणाः प्रकृतिधर्माः । हे देवि त्वमेव का-लरात्रिः जगत्संहारकारिणी यामभङ्गिनी (यमभगिनी) । यत्र प्रलीयते जगत् सा कालरात्रिः । हे देवि त्वमेव महारात्रिः यत्र चतुर्मुखो मुक्तिमगात् । हे देवि त्वमेव दारुणा मोहरात्रिश्चासि । ममतागर्भपातिनी महामायाख्या संसृतिः । 'दंष्ट्राकरा-लकालाग्निरुद्ररूपातिदारुणा । मोहरात्रिर्मोहतनुर्जगत्सूत्रे जगत्करी' ॥ ५९ ॥

**( ४ नागोजीभट्टी )** सत्वरजस्तमोगुणत्रयैर्विभाव्यते या सर्वस्य जडवर्गस्य प्रकृतिः मूलं प्रधानतत्त्वाख्यं सा त्वमेव । एतेन परमाण्वादीनां मूलकारणत्वनिरासः । कालरात्रिरिति ब्रह्मलयोपलक्षिता । महारात्रिः प्रलयरात्रिः । मोहरात्रिः ममतावर्तमोहगर्तपातिनी । महामायाख्या संसृतिकर्त्री । उक्तं च 'दंष्ट्राकरालकालाग्निरुद्रकल्पातिदारुणा । मोहरात्रिर्मोह-तनुर्जगत्सूते(त्रे) जगत्करी' इति । दारुणत्वं चास्याः ब्रह्मज्ञानातिरिक्तानिवर्त्यत्वेन मोहरात्रिर्निशा च । 'अस्यास्तनुस्तमोद्वारा निशादिवसनाशिनी' इति हरिवंशोक्तेः ॥ ५९ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** कालरात्रिरिति ॥ ७९ ॥ ५९ ॥

**( ६ दंशोद्धारः )** प्रकृतिरिति । कालरात्रिः कल्पान्तरात्रिः । महारात्रिर्महाप्रलयः । मोहरात्रिर्मोहरूपममतागर्त-पातिनी मोहरात्रिः । दारुणा दुष्परिहरत्वात् ॥ ५९ ॥

## त्वं श्रीस्त्वमीश्वरी त्वं ह्रीस्त्वं बुद्धिर्बोधलक्षणा । लज्जा पुष्टिस्तथा तुष्टिस्त्वं शान्तिः क्षान्तिरेव च ६०

**( १ गुप्तवती )** बुद्धिः करणभूता । बोधो व्यवसायात्मको लक्षणं फलं यस्याः सा ॥ ६० ॥

**( २ चतुर्धरी )** त्वमिति । श्रीः संपत् लक्ष्मीः । ह्रीरिति अकरणीयवैमुख्यं कश्चिदाह । ऱ्हीरितिमन्त्राक्षरं । अस्यैव साधन(?) अमः अप्रत्ययस्याकारलोपेऽनुनासिके सति ऱ्हीमिति मन्त्राक्षरं भवति । बुद्धिः अन्तःकरणं बोधलक्षणाध्यवसाय-व्यापारा । लज्जा कृते करणीये परं अज्ञानशंकया दुःखं । पुष्टिरुपचयः । तुष्टिरधिगतादन्यत्रान्यधीशान्तिः विषयज्ञानं । क्षान्तिरपकारिणी अनपकारिता ॥ ६० ॥

**( ३ शान्तनवी )**हे देवि त्वं श्रीः संपत्तिरूपासि हरिप्रियाप्यसि । हे देवि त्वं ईश्वरी ईश्वरस्य पत्न्यसि । 'अश्नोतेराशु-

वर्मणि वरदृचेचोपधायाः' इति । जगद्व्यापिनी चासि । हे देवि त्वं ह्रीः असि 'ह्रींकारो वै प्राणः' इति श्रुतेः प्राणभूतासि । ह्रीमिति मकरान्तमव्ययं प्राणवाचि । ह्रीं इत्यनुनासिकस्वरान्तपाठे तु देवीप्रणवासि इति रहस्यं । ह्रीस्त्वमिति तु पाठे लज्जाशब्देन पौनरुक्त्यं स्यात् । हे देवि त्वं बुद्धिरसि चिन्मात्रब्रह्मरूपासि । हे देवि त्वं बोधलक्षणासि बोधयितृव्यापारदर्शनासि। अथवा बोधरूपासि विविधप्रपञ्चविषयविविधावगमरूपासि । हे देवि त्वं लज्जासि व्रीडासि । हे देवि त्वं पुष्टिरसि अवयवोपचितिरसि । हे देवि त्वं तथा तेन (प्रकारेण) तुष्टिरसि प्रीतिरसि । हे देवि त्वं शान्तिरूपासि विषयव्यावृत्तिरसि । हे देवि त्वमेव क्षान्तिस्तितिक्षा चासि ॥ ६० ॥

**( ४ नागोजीभट्टी )** श्रीः संपत् लक्ष्मीः बीजं च । ईश्वरी ऐश्वर्यशक्तिः कामराजबीजं च । ह्रीः भुवनेशी बीजं च । उभयत्राप्यनुनासिकलोपश्छान्दसः । बोधो निर्णयात्मकज्ञानलक्षणं स्वरूपं यस्यास्तादृशी बुद्धिरन्तःकरणं त्वमेवेत्यर्थः । लज्जेति । अन्तःकरणवृत्तिविशेषः । पुष्टिरुपचयः । तुष्टिरधिगतार्थादन्यत्र तुच्छत्वबुद्धिः । शान्तिः विषयेभ्य इन्द्रियोपरमः । क्षान्तिः सत्यां शक्तौ परापराधसहिष्णुता । एवकारस्त्वमित्यनन्तरं योज्यः ॥ ६० ॥

**( ५ जगच्चन्द्रचन्द्रिका )** लज्जा पुष्टिरिति ८० ॥ ६० ॥

**( ६ दंशोद्धारः )** त्वं श्रीरिति । ह्रीः स्वत एवाकार्यतो वैमुख्यं लज्जा लोकशङ्कया । ह्रीमिति पाठे प्राणरूपा । 'ह्रींकारो वै प्राणः' इति श्रुतेः । यद्वा ह्रींबीजरूपा ॥ ६० ॥

**खड्गिनी शूलिनी घोरा गदिनी चक्रिणी तथा । शङ्खिनी चापिनी बाणभुशुण्डीपरिघायुधा[1] ॥ ६१ ॥**

**( १ गुप्तवती )** दशभुजत्वेनेमां स्तौति । खड्गिनीति ॥ ६१ ॥

**( २ चतुर्धरी )** चापिनी धनुष्मती । बाणः शरः । भुशुण्डी गोफणकः यष्टी वा । परिघा लोहलगुडाः । त एव आयुधानि यस्याः सा तथा ॥ ६१ ॥

**( ३ शान्तनवी )** हे देवि हे चण्डिके त्वं यथा उक्तलक्षणप्रकारेण खड्गिनी शूलिनी गदिनी चक्रिणी शङ्खिनी चापिनी बाणा बाणवती परिघायुधा च सती अतएव घोरा अत्युग्रदर्शना भुशुण्डीति भाष्यसे इत्यन्वयः । 'अत इनिठनौ' । गदिनीत्यत्र तु 'व्रीह्यादिभ्यश्च'इति इनिः । सर्वत्र 'ऋन्नेभ्यो ङीप्' । बाणा बाणवती । अर्शआदिभ्योच् मत्वर्थीयः । परिघः परिघातनः लोहबद्धो लगुडः आयुधं यस्याः सा तथोक्ता । खड्गशूलगदाचक्रशङ्खचापबाणपरिघैरष्टभिरायुधैरष्टभुजा । घोरात्युग्राकृतिश्चण्डिका देवी भुशुण्डीति वक्ष्यमाणलक्षणासती प्रसीदत्विति भावः । मुडि खण्डने । शत्रून् मुण्डयति विखण्डयति इति कर्मण्यणि स्त्रियां ङीपि च शत्रुमुण्डी । भुजैः शत्रुमुण्डी भुजशत्रुमुण्डी । चण्डिका । अत्र हि भुजशत्रुमुण्डीशब्दैः 'पृषोदरादीनि यथोपदिष्टं' इति शिष्टोपदिष्टत्वात् ज इत्यस्य अत्रुं इत्यस्य च लोपे कृते भुशुण्डीति व्युत्पाद्यते । 'भुजाभिरष्टभिः शत्रूनष्टावष्टाभिरायुधैः । मुण्डयत्युग्रचण्डीभिर्भुशुण्डी चण्डिका स्मृता' । यच्चाहुः । 'उड्डीयोड्डीय च प्राप्य नदन्ती दशकर्तिका । क्रमते वा नताङ्गी या सा भुशुण्डी निगद्यते' । एतेन बाणभुशुण्डीपरिघायुधेत्येकं पदमिति व्याख्यापव्याख्यावगन्तव्या । बाण इत्यनाकरः पाठ इत्युक्तिरपि व्युदस्ता । भुशुण्डीगोफणिकेत्युक्तिरप्ययुक्तिमूलेपेक्षणीया प्रेक्षावद्भिः । परिघो लोहार्गलमिति तु शब्दतो लिङ्गतोऽर्थतश्च भ्रष्टव्याख्यानं । यदाह क्षीरस्वामी । परितो हन्ति परिघः । 'परौ घः' इति हेर्घत्वं । लोहबद्धो लगुड इति ॥ ६१ ॥

**( ४ नागोजीभट्टी )** घोरा एकहस्तस्थशिरसा भयंकरी । शङ्खिनीति । बाणभुशुण्डीपरिघश्चायुधानि यस्याः सा । अनेनास्याः काल्याः दशभुजात्वं सूचितं । तदुक्तं वैकृतिकरहस्ये । 'योगनिद्रा हरेरुक्ता महाकाली तमोगुणा । मधुकैटभनाशार्थं यां तुष्टावाम्बुजासनः । दशवक्त्रा दशभुजा दशपादाञ्जनप्रभा । विशालया राजमाना त्रिंशल्लोचनमालया । स्फुरद्दशनदंष्ट्रा सा भीमरूपापि भूमिप । रूपसौभाग्यकान्तीनां सा प्रतिष्ठा महाश्रियाम् । खड्गबाणगदाशूलशङ्खचक्रभुशुण्डिभृत् । परिघं कार्मुकं शीर्षं निश्चोतद्रुधिरं दधौ । एषा सा वैष्णवी माया महाकाली दुरत्यया । आराधिता वशीकुर्यात्पूजाकर्तुश्चराचरं' इति । 'उड्डीयोड्डीय च प्राप्य नदन्ती दशकर्तिका । क्रमते या नताङ्गी वा सा भुशुण्डी निगद्यते' । परिघो लोहबद्धो लगुडः ॥६१॥

**( ५ जगच्चन्द्रचन्द्रिका )** शङ्खिनीति ८१ ॥ ६१ ॥

**( ६ दंशोद्धारः )** खड्गिनीति बाणा इति पाठे बाणाः सन्त्यस्या इत्यर्श आद्यच् ॥ ६१ ॥

**सौम्यासौम्यतराशेषसौम्येभ्यस्त्वतिसुन्दरी । परापराणां परमा त्वमेव परमेश्वरी ॥ ६२ ॥**

**( १ गुप्तवती )** परा ब्रह्मादयः । अपराः शक्रादयः ॥ ६२ ॥

**( २ चतुर्धरी )** सौम्या सौम्यवदना ह्लादहेतुत्वात् । अशेषसौम्येभ्यः सकलाह्लादहेतुभ्योऽतिसुन्दरी । सौम्यतरा

---

[1] 'बाणा भुशुण्डी' इत्यपि पाठः ।

निर्वाण( रूप )कारिणीत्वात् । पराणामेवानेकब्रह्मायुषां ब्रह्मादीनां परा प्रकृष्टा परमा प्रकृष्टतरा । परमेश्वरी शक्रादीनामपि ईश्वरी ॥ ६२ ॥

**( ३ शान्तनवी )** हे देवि त्वमेव जगति सौम्यासि अक्रूरा प्रशान्तासि । सोमदैवतिकाप्यसि । अथवा शोभना मा लक्ष्मीर्यस्यासौ सुमः विष्णुः सुमस्य भावः सौम्यं शोभनलक्ष्मीकत्वं तत् यस्या अस्ति असौ सौम्या । अर्शआद्यच् । शोभनलक्ष्मीकत्वयुतासि । अथवा उमासहितः सोमः उमापतिः तस्य भावः सौम्यं तद्यस्याः सा सौम्या उमापतित्वयुतासि । हे देवि त्वमेव सौम्यतरासि । सूते सुधां सोमश्चन्द्रः सोमस्येयं सुधा सौमी सौमीं सुधामर्हति सौम्या देवावलिस्त्वं च । दण्डादित्वात् यः । तयोर्द्वयोस्त्वमतिशयेन सौम्यासौम्यतरा । 'द्विवचनविभज्योपपदे तरबीयसुनौ' इति द्विवचने उपपदे तरप् । 'तसिलादिष्वाकृत्वसुचः' इति पुंवद्भावः । हे देवि त्वं अशेषसौम्येभ्यः अखिलसुंदरेभ्यः पदार्थेभ्यः तु पार्थक्येन अतिसुन्दरी असि । सुष्ठु नन्दयतीति सुन्दरी मनोज्ञा मनोरमा । 'सोमदैवतके सौम्यः सौम्यं स्यात्सुंदरेऽपि च । सौम्योऽक्रूरे बुधे सौम्यः सौम्यः शान्ते प्रयोगतः' । हे देवि त्वमेव परा श्रेष्ठा । हे देवि त्वं पराणां श्रेष्ठानां परमा अत्युत्कृष्टा परमोत्तमा । व्यवस्थया तु श्रेष्ठत्वस्य विवक्षितत्वात् । अन्यथा परेषामिति स्यात् । अथवा परं ब्रह्म अनन्ति कथयन्ति पराणः क्विप् । तेषां मध्ये त्वं परमासि । यद्वा परे चापरे च परापराः । द्वन्द्वे चेति सर्वनामत्वाभावात् सुडागमाभावः । तेषां त्वं परमा । अथ हे देवि त्वमेव परमा उत्कृष्टा लक्ष्मीः । अथवा परमः ईश्वरः तस्य स्त्री त्वमेव परमेश्वरी । 'ईश्वरी स्वामिनी दुर्गा लोकानां व्यापिका च सा' ॥ ६२ ॥

**( ४ नागोजीभट्टी )** सौम्या अक्रूरा भक्तेषु । असौम्यतरा दैत्येषु । अशेषसौम्येभ्यः सकलसुन्दरेभ्यस्तु अतिसुन्दरीत्यर्थः । परेति । इदमुपलक्षणं । पश्यन्तीमध्यमावैखरीणां परा बीजरूपा च पराणां उत्कृष्टानां परमा प्रधानं त्वमेव । यतस्त्वं परमेश्वरी ॥ ६२ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** परावराणामिति ८२ ॥ ६२ ॥

**( ६ दंशोद्धारः )** सौम्येति । आह्लादहेतुत्वात् । सौम्यतरा भक्तानामतिमनोहरा स्वर्गादिदेहत्वात् । सकलाह्लादकेभ्योप्यऽतिसुन्दरी । पराणां ब्रह्मादीनां मध्ये परमा उत्कृष्टा । पराणामित्यत्र परशब्दस्योत्कृष्टार्थत्वेन नियमेनाऽवधेरनपेक्षणाद्व्यवस्थाभावादसर्वनामत्वान्न सुट् । परा माया मोहनैश्वर्यं यस्याः ॥ ६२ ॥

## यच्च किंचित्क्वचिद्वस्तु सदसद्वाखिलात्मिके । तस्य सर्वस्य या शक्तिः सा त्वं किं स्तूयसे तदा ६३

**( १ गुप्तवती )** ॥ ६३ ॥

**( २ चतुर्धरी )** सत् वर्तमाना । असदतीतानागतशक्तिः । स्वभावः सामर्थ्यं वा । यद्वा सन्नित्यमाकाशपरमाण्वादि । असदनित्यं पृथिव्यादि यत्किंचिद्वस्तु नामग्राह्यं तस्य सतोऽसतश्च या शक्तिः सा त्वं तदा किं स्तूयसे । भेदसाध्यत्वात्स्तुतेरित्यर्थः ॥ ६३ ॥

**( ३ शान्तनवी )** हे अखिलात्मिके देवि क्वचित् जगति सत् असत् वा यच्च किंचित् वस्तु पदार्थरूपं प्रतीयते तस्य सर्वस्य सदसदात्मकस्य या शक्तिः सामर्थ्यं सा त्वमेवासि । अतः परं मया किं स्तूयसे इत्यन्वयः । पदं च पदार्थश्च ताभ्यां क्रियमाणा स्तुतिश्च स्तोता च स्तुत्यं च तत्तदुचितशक्तिश्च त्वमेवेति त्वत्तोन्यत्वाभावाद्भेदनिबन्धना स्तुतिः कथं प्रवर्तनीयेति भावः । इयमेव च परमावधिस्तुतिरतोपि का नाम स्तुतिरित्यपरो भावः । अग्न्यादितत्तदौचित्यतत्तदर्थक्रियाकरी शक्तिरप्रतिबद्धात्मधर्मः सामर्थ्यशब्दिता ॥ ६३ ॥

**( ४ नागोजीभट्टी )** सत् ब्रह्मवर्गः । असत् जडवर्गः । तस्य सर्वस्य या शक्तिः सा यदा त्वं तदा कथं स्तव्यसेत्यर्थः । पदपदार्थस्तोत्रस्तुत्यतच्छक्तिस्तुतीनां त्वत्तोऽन्यत्वाभाववद्भेदनिबन्धनात्स्तुतिः कथं स्यादिति भावः ॥ ६३ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** तस्य सर्वस्येति ८३ ॥ ६३ ॥

**( ६ दंशोद्धारः)** ॥ ६३ ॥

## यया त्वया जगत्स्रष्टा जगत्पातात्ति[1] यो जगत् । सोपि निद्रावशं नीतः कस्त्वां स्तोतुमिहेश्वरः ॥६४॥

**( १ गुप्तवती )** ॥ ६४ ॥

**( २ चतुर्धरी )** जगत्स्रष्टा ब्रह्माकारेण । जगत्पाता विष्णुरूपेण । जगदत्ति भक्षयति रुद्रात्मना । स तादृशोऽपीश्वरो यथा त्वया निद्रावशं नीतः तादृशीं त्वां स्तोतुं क ईश्वरः समर्थः किं तर्हि न कोपीत्यर्थः ॥ ६४ ॥

**( ३ शान्तनवी )** हे देवि त्वां स्तोतुं इह क ईश्वरः क समर्थोऽस्ति न कोपि । तथाहि यया जगत्स्रष्टा उत्पादयिता ।

१ 'जगत्पात्यत्ति' इत्यपि पाठः ।

तृन्नन्तोयं । यद्वा भविष्यदनद्यतने लुडन्तोयं । यः जगत्पाति रक्षति । भविष्यत्सामीप्ये लट् । यद्वा जगत्पाता इति पाठः । भविष्यदनद्यतने लुडन्तोयं । यः अवसाने जगत् अत्ति संहरति सोपि विष्णुरपि यया योगनिद्रया त्वया देव्या निद्रावशं नीतः निद्राधीनतां गमितः । 'वशा वन्ध्या गवी वश्या सुतास्त्री करणी वशा । इच्छायन्त्रणयोः पुंसि प्रभुत्वे च वशः स्मृतः' ॥ ६४ ॥

(४ **नागोजीभट्टी**) स्तुत्यत्वाभावमेवाह । पुनः यया ब्रह्मविष्णुरुद्रात्मना जगत्सृष्टिस्थितिलयकर्तापि निद्रावशं नीतः । प्रापित इत्यर्थः । पाता पालकः । अत्ति स्वस्मिन् लयं प्रापयति । तमोगुणप्रधानमायासंबन्धादेव भगवतः सर्वोपसंहारेण स्वस्वरूपेऽवस्थानमिति भावः ॥ ६४ ॥

(५ **जगच्चन्द्रचन्द्रिका**) सोपि निद्रेति ॥ ८४ ॥ ६४ ॥

(६ **दंशोद्धारः**) ॥ ६४ ॥

**विष्णुः शरीरग्रहणमहमीशान एव च । कारितास्ते यतोऽतस्त्वां कः स्तोतुं शक्तिमान्भवेत् ॥६५॥**

(१ **गुप्तवती**) ॥ ६५ ॥

(२ **चतुर्धरी**) विष्णुः पालकः । अहं ब्रह्मा । ईशानो रुद्रः । एते वयं ते त्वया यतः शरीरग्रहणं कारिताः इत्यन्वयः ॥ ६५ ॥

(३ **शान्तनवी**) हे देवि यतस्त्वया महामायया अहं ब्रह्मा विष्णुश्च ईशानश्च ते त्रयोपि शरीरग्रहणं कारिताः । शरीरग्राहिणः कारिताः ममतावृताः कृताः । अतस्त्वां कः पुमान् स्तोतुं शक्तिमान्भवेत् । न कोपि । यः कोपि शरीरी स त्वां स्तोतुमसमर्थ एव । तदन्यस्तु मुक्तस्त्वद्रूप एव सन् कथं त्वामेव स्तोष्यति त्वंच शरीरिणी स्तुतिश्च स्तुत्यस्तोतृभेदनिवन्धना । अतस्त्वद्विषया स्तुतिः कथं घटेत । साकल्येनेति स्तुत्युपसंहार एव वरमिति भावः ॥ ६५ ॥

(४ **नागोजीभट्टी**) अहं ब्रह्मा । शरीरग्रहणं कारिताः । केवलमायिकत्वाच्छरीराणामिति भावः ॥ ६५ ॥

(५ **जगच्चन्द्रचन्द्रिका**) कारितास्ते इति ८५ ॥ ६५ ॥

(६ **दंशोद्धारः**) विष्णुरहमीशानश्च ते त्वया शरीरग्रहणं कारिता इत्यन्वयः ॥ ६५ ॥

**सा त्वमित्थं प्रभावैः स्वैरुदारैर्देवि संस्तुता । मोहयैतौ दुराधर्षावसुरौ मधुकैटभौ ॥ ६६ ॥**

(१ **गुप्तवती**) ॥ ६६ ॥

(२ **चतुर्धरी**) सा अनन्तरोक्तस्वभावा इत्थमेवंविधैः प्रभावैर्माहात्म्यैः । उदारैरसाधारणैः ॥ ६६ ॥

(३ **शान्तनवी**) हे देवि इत्थं वर्णितैः उदारैः दक्षिणैः वा सरलैः वरैः स्वैः स्वात्मीयैः प्रभावैः सामर्थ्यविशेषैः संस्तुता जगन्मोहयन्ती सा त्वं एतौ इमौ । यद्वा आ इतौ एतौ आगतौ दुराधर्षौ दुःखेन अभिभवनीयौ मधुकैटभौ नाम असुरौ सुरद्विषौ मोहय अविवेकं प्रापयेत्यन्वयः । 'दक्षिणे सरलोदारौ' ॥ ६६ ॥

(४ **नागोजीभट्टी**) साऽनन्तरोक्तस्वभावा त्वमित्थमेवंविधैरुदारैरसाधारणैः स्वैः प्रभावैर्माहात्म्यैः संस्तुता एतौ मोहय इत्यर्थः । मोहश्च भगवन्तं प्रति वरदातृरूपः ॥ ६६ ॥

(५ **जगच्चन्द्रचन्द्रिका**) मोहयैताविति ॥ ८६ ॥ ६६ ॥

(६ **दंशोद्धारः**) ॥ ६६ ॥

**प्रबोधं च जगत्स्वामी नीयतामच्युतो लघु । बोधश्च क्रियतामस्य हन्तुमेतौ महासुरौ ॥ ६७ ॥**

(१ **गुप्तवती**) लघु क्षिप्रं । बोधश्चेति । भावश्चेति क्वचित्पाठः ॥ ६७ ॥

(२ **चतुर्धरी**) एतौ हन्तुं । बोधोऽध्यवसायश्चास्य क्रियतामित्यर्थः ॥ ६७ ॥

(३ **शान्तनवी**) हे देवि त्वया जगत्स्वामी अच्युतः दैत्यारिर्विष्णुः लघु शीघ्रं प्रबोधं च उन्निद्रभावं नीयतां । त्वयासौ मुच्यतां । किंच एतौ महासुरौ हन्तुं अस्य अच्युतस्य विष्णोः प्रबोधश्च क्रियतां । उत्साहानुकूलबुध्युन्मेषश्च क्रियतां रच्यतां इत्यन्वयः । प्रबोधमिति प्रधाने कर्मणि द्वितीया । प्रधाने कर्मणि तु नीयतामिति तिङाभिहितत्वात्प्रथमा॥६७॥

(४ **नागोजीभट्टी**) प्रबोधं जागरणं पालनोद्यमरूपं । हन्तुं बोधः प्रवृत्तिः । प्रवृत्तिस्वभावत्वात्तवेति भावः । ब्रह्मणः स्रष्टृत्वेन विषवृक्षोपीति न्यायेन न हनने प्रवृत्तिः । विष्णूपरि यद्यपि पालनप्राधान्यं तथापि सतां पालनस्य दुष्टहननं विना तदसंभवात् । पालनानुगुणेनैव कदाचिद्धन्तृत्वमपि तस्य नानुपपन्नम् । एवंच भगवत्कृतेऽपि मधुकैटभवधे माणवककर्तृकाध्ययने आचार्येण कार्यमाणे कारितैरिव तत्सामर्थ्याचरणेन भगवतस्तद्वधविषयकप्रवृत्तिसंपादकत्वेन प्रेरकतया तद्धन्तृत्वं देव्या अपीति बोध्यम् ॥ ६७ ॥

(५ जगच्चन्द्रचन्द्रिका) पुनरर्धात्मकमिति । पुनः अर्धश्लोकात्मको मन्त्रः । तद्यथा बोधश्च क्रियतामस्य हन्तुमेतौ महासुरौ स्वाहा ८७ ॥ ६७ ॥

(६ दंशोद्धारः) प्रबोधमिति । जागरणं । लघु शीघ्रं । प्रबोधः प्रेरणा ॥ ६७ ॥

ऋषिरुवाच ।

**एवं स्तुता तदा देवी तामसी तत्र वेधसा । विष्णोः प्रबोधनार्थाय निहन्तुं मधुकैटभौ ॥ ६८ ॥**

(१ गुप्तवती) एवं स्तुतेति । अत्रेदं रहस्यं । चरित्रत्रयदेवता महाकालीमहालक्ष्मीमहासरस्वत्यः क्रमेण बहिस्तमोरजसत्त्वरूपा एवान्तः सत्वरजस्तमोरूपा अपीति सात्विकादिपदेनैवासां क्रमेण व्यपदेशः दैत्यसंहारकर्तृत्वमपि । सा सात्विकादिरूपिण्येव । अतएव चण्डिकाया महिषासुरहननकाले मधुपानेनारक्तता चण्डशुम्भादिहनने महिषीवर्णता च वक्ष्यते ॥ ६८ ॥

(२ चतुर्धरी) तामसी निद्राकारेण परिणता अविद्याशक्तिः । तदुक्तं 'आस्तीर्य तामसीशक्तिरविद्या पश्यतोहरा । ययाच्छादितलोकोऽयं पश्यन्नपि न पश्यति' । वेधसा ब्रह्मणा ॥ ६८ ॥

(३ शान्तनवी) तदा तस्मिन् प्रलयकाले तत्र विष्णुनाभिकमले वेधसा एवं स्तुता तामसी तमोगुणसंगता निद्रात्मिका देवी मधुकैटभौ निहन्तुं विष्णोः प्रबोधनार्थाय तस्यैव नेत्रास्यनासिकाबाहुहृदयेभ्यः तथा च उरसः वक्षसश्च निर्गम्य व्यक्तजन्मनः प्रकटजननस्य ब्रह्मणः अव्यक्तजन्मनश्च दर्शने विषये तस्थौ प्रकटीबभूवेति श्लोकयुग्मान्वयः । अव्यक्तात्प्रधानात् जन्म यस्य सः अव्यक्तादात्मनः जन्म यस्य वा । यतोसावात्मभूः नेत्रे च आस्यं च नासिका च बाहवश्च हृदयं चेति द्वन्द्वः । प्राण्यङ्गत्वात् प्राप्तस्यैकवद्भावस्य 'न दधिपयआदीनि' इति निषेधे बहुवचनं । यद्वा अयन्ते अयाः प्राणाः नेत्रास्यनासिकाबाहुहृत्तेन सहिताः अयाः प्राणाः उच्छ्वासनिश्वासलक्षणाः तेभ्यः कोशेभ्यः उरसश्च निर्गत्य निद्रा ब्रह्मदर्शनपथमगमदिति भावः ॥ ६८ ॥

(४ नागोजीभट्टी) ऋषिरुवाच । एवं स्तुतेति । तामसी आवरकत्वेन तमःप्रधाना इयं शक्तिः । मधुकैटभौ एतौ निहन्तुं चेत्यर्थः ॥ ६८ ॥

(५ जगच्चन्द्रचन्द्रिका) ऋषिश्चेति । ऋषिरुवाच स्वाहेति अष्टाशीतिको मन्त्रः ८८ अर्धक इति अर्धश्लोकात्मको मन्त्रः । तद्यथा । एवं स्तुता तदा देवी तामसी तत्र वेधसा स्वाहा ८९ । श्लोकास्तु पञ्च वा इति तु पुनः वै निश्चयेन पञ्च पञ्चसंख्याकाः श्लोकाः श्लोकरूपा मन्त्राः । तद्यथा विष्णोः प्रबोधेति ॥ ९० ॥ ६८ ॥

(६ दंशोद्धारः) एवमिति । तामसी निद्रारूपा ॥ ६८ ॥

**नेत्रास्यनासिकाबाहुहृदयेभ्यस्तथोरसः । निर्गम्य दर्शने तस्थौ ब्रह्मणोऽव्यक्तजन्मनः ॥ ६९ ॥**

(१ गुप्तवती) तया रीत्या तामस्यपि योगनिद्रा स्वान्तःस्थितसत्वमात्रस्य स्वस्या एव रूपान्तरस्यावशेषाय बहिर्व्याप्तं तमोरूपं निःसारितवतीत्याह । नेत्रास्येति । एतेन देव्या एव तन्त्रेषु मधुकैटभहन्तृत्वव्यवहार उपपद्यते । पुरुषाभ्यां सह बाहुयुद्धयोगेन पौरुषरूपेणैव तौ हतवतीति स्थितिः ॥ ६९ ॥

(२ चतुर्धरी) नेत्रास्यादिभ्यो विष्णोरित्यनुषज्यते । प्राण्यङ्गत्वेऽपि क्वचिन्न समाहारः समासोऽभिधानात् । क्वचिन्नित्यः क्वचिदेव कल्पित इति न्यायात् । हृदयं अन्तःकरणं । उरो वक्षः । हृदयं मन इति वा अन्य आह । हृदयं वक्षः उरः प्रधानाङ्गं गुह्यमिति । ब्रह्मणो दर्शने चक्षुर्विषये । अव्यक्तादीश्वरात् जन्म यस्य ॥ ६९ ॥

(३ शान्तनवी) पूर्वश्लोक एव व्याख्यातास्य श्लोकस्य टीका ॥ ६९ ॥

(४ नागोजीभट्टी) नेत्रास्येति । विष्णोरित्यादि । उरो वक्षः । प्राण्यङ्गत्वेपि नैकवच्छान्दसत्वात् । अव्यक्तादीश्वरात् जन्म प्रादुर्भावो यस्य तस्य ब्रह्मणः दर्शने चक्षुर्विषये तस्थावित्यन्वयः ॥ ६९ ॥

(५ जगच्चन्द्रचन्द्रिका) निर्गत्येति ९१ ॥ ६९ ॥

(६ दंशोद्धारः) नेत्रास्येति । पूर्वोक्तस्य विष्णोरिहाप्यनुषङ्गः । विष्णोर्नेत्रादिभ्यो निर्गम्य । प्राण्यङ्गत्वादेकवद्भावे प्राप्ते बहुवचनमार्षं । लक्षणाहेतुरितिसूत्रे मुखनासिकाभ्यामिति भाष्यप्रयोगात् प्राण्यङ्गैकैकवद्भावस्यानित्यत्वाद्वा । तथाच प्रयुज्यते 'ग्रीवाकुक्षिललाटेषु नित्यं स्वेदः प्रशस्यते' । राजहंसास्तु ते चञ्चुचरणैरिति । कश्चित्तु नासिकास्तनयोरिति ज्ञापकमाह तन्न । अस्य निर्देशस्य स्वरूपपरत्वात् । रक्षितस्तु दधिपयआदेराकृतिगणत्वमाह । हृदयं मनः । उरो वक्षः ॥ ६९ ॥

**उत्तस्थौ च जगन्नाथस्तया मुक्तो जनार्दनः । एकार्णवेऽहिशयनात्ततः स ददृशे च तौ ॥ ७० ॥**

(१ गुप्तवती) प्रकृतकर्मानुगुणं विशेष्यमाह । जनार्दन इति ॥ ७० ॥

**( २ चतुर्धरी )** अहिशयनात्सर्पशय्यातः उत्तस्थावित्यन्वयः । स ददृशे च तौ इति चकारात् तौ च तं ददर्शाते इत्यन्वयः । कर्मव्यतिहारे आत्मनेपदं ॥ ७० ॥

**( ३ शान्तनवी )** तया निद्रया देव्या मुक्तः परित्यक्तः जगन्नाथः जनार्दनः विष्णुश्च एकार्णवे जगत्येकजलपूरे अहिशयनात् शेषनागशयनात्सकाशात् उत्तस्थौ उत्थितवान् । ततः शयनादुत्थाय उत्थानादनन्तरं वा स जनार्दनः तौ मधुकैटभौ ददृशे । तावपि तं ददृशाते । परस्मैपदं बाधित्वा कर्तरि कर्मव्यतिहारे आत्मनेपदं । विष्णुकर्तृकं दैत्यकर्मकं तावद्दर्शनं व्यतिबभूवे । अथच तावद्दैत्यकर्तृकं विष्णुकर्मकं दर्शनं व्यतिबभूवे । अन्यथा ददर्श इति स्यात् ॥ ७० ॥

**(४ नागोजीभट्टी )** उत्तस्थौ चेति । तया मुक्तस्त्यक्त इत्यर्थः । अहिशयनात् शेषशयनात् सः तौ ददृशे । अर्थात्तावपि तं ददृशाते इति कर्मव्यतिहारे आत्मनेपदम् ॥ ७० ॥

**( ५ जगच्चन्द्रचन्द्रिका )** एकार्णव इति ॥ ९२ ॥ ७० ॥

**( ६ दंशोद्धारः )** उत्तस्थाविति । अहिशयनात्सर्पशयनात् । ददृशे । कर्मव्यतिहारे तङ् । तौ च भगवन्तं ददृशाते इत्यर्थः ॥ ७० ॥

## मधुकैटभौ दुरात्मानावतिवीर्यपराक्रमौ । क्रोधरक्तेक्षणौ[1] हन्तुं ब्रह्माणं जनितोद्यमौ ॥ ७१ ॥

**( १ गुप्तवती )** मधुकैटभाविति । अत्रैकाक्षराधिक्यं तु वृत्तचन्द्रोदयादावस्माभिर्बहुधा समाहितं ॥ ७१ ॥

**( २ चतुर्धरी )** मधुकैटभौ दुरात्मानाविति नवाक्षरेणास्यानुष्टुभः पादात् । वीर्यमुत्साहः । पराक्रमः शक्त्यतिशयः । ब्रह्माणं अत्तुं ग्रसितुं जनितोद्यमौ आरब्धप्रयत्नौ ॥ ७१ ॥

**(३ शान्तनवी)** कीदृशौ ददृशे जनार्दनः । मधुश्च कैटभश्च तौ । मन्यतेऽहमेव वीर इति मधुः । कीटस्येव भा यस्य तत् कीटभं कर्णमलं तत्र भवः कैटभः । इह हि पृषोदरादित्वात् भइत्युत्तरपदलोपो द्रष्टव्यः । भीमसेनो भीम इतिवत् । क्वचिद्वृत्तबन्ध(भङ्ग)मनुसृत्य ततश्च मधुकैटभौ दुरात्मानाविति पाठः । 'युजोर्जेन सरिद्भर्तुः पथ्यावक्त्रं प्रकीर्तितम्' इति द्वितीयचरणे अतिवीर्यपराक्रमावित्यत्र चतुरक्षरादूर्ध्वं जगणस्य सत्वान्न वृत्तभङ्गः । तेन मधुकैटभावित्यत्र भौ इति न पठनीयमित्यर्थः । पथ्यावक्रतया नभौ । (पथ्यावक्त्रवृत्तबन्धो न गृहीतो भवति 'वर्णादादेर्नसोनश्च सागराद्ये समे गणः । समे लब्ध्यर्गणो जः स्यात् पथ्यावक्त्रं तवानसौ) अन्यथा मधुकैटभौ दुरात्मानाविति नवाक्षरपादत्वेन 'अपि माषं मषं कुर्याच्छन्दोभङ्गं न चाचरेत्' इति छन्दःशास्त्रसमयभङ्गप्रसङ्गः स्यात् । अथवाहुः । 'छन्दोवत् पुराणानि भवन्ति' । अन्यदेवेदं छान्दसं छन्दः । यदभ्यधुस्तद्विदः । 'न्यूनाधिकाक्षरत्वेन यत्र पादः क्वचिद्भवेत् । तद्वैदिकं निवृच्छन्दो मृत्युंजयमनुर्यथा' इति । दुरात्मानौ दुष्टबुद्धी । अतिवीर्यपराक्रमौ अत्युत्कृष्टबलौ अत्युत्कृष्टप्रभावौ अत्युत्कृष्टशक्ती अत्युत्कृष्टाङ्गौ वा । 'वीर्यं बलं प्रभावश्च शक्त्युद्योगौ पराक्रमौ' । क्रोधरक्तेक्षणौ क्रोधेन रक्ते ईक्षणे ययोस्तौ प्रत्येकं तथोक्तौ ब्रह्माणं हन्तुं जनितोद्यमौ । दुर्विधिना जनितः उत्पादितः उद्यमः उत्थितः यमः कालो ययोस्तौ । यद्वा जननं जनिः । संजाता जनिर्यस्यासौ जनितः । तारकादित्वादितच् । जनितोद्यमौ आसन्नकालावितियावत् ॥ ७१ ॥

**( ४ नागोजीभट्टी )** तौ विशेषयति । मधुकैटभाविति । आद्यपादे नवाक्षरत्वं छान्दसत्वात् । वीर्यमुत्साहः । पराक्रमः शक्त्यतिशयः । अत्तुं ग्रसितुं । अनेन प्रवृद्धस्य तमसोऽभिभावकत्वं सूचितं ॥ ७१ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** क्रोधरक्त इति ९३ ॥ ७१ ॥

**( ६ दंशोद्धारः )** ॥ ७१ ॥

## समुत्थाय ततस्ताभ्यां युयुधे भगवान्हरिः । पञ्चवर्षसहस्राणि बाहुप्रहरणो विभुः ॥ ७२ ॥

**( १ गुप्तवती )** बाहुप्रहरणो विभुरित्यस्योत्तरं द्वौ श्लोकौ क्वचित्पठ्येते । 'नच तौ युद्धवैमुख्यं शमं वाप्युपजग्मतुः । ततो विद्यासुखालोकसमुद्भूतमहोत्सवः । हरिरूचे वरो मत्तो युवाभ्यां व्रियतामिति । निशम्यैतद्विभोर्वाक्यमवलोक्य परस्परं' इति ॥ ७२ ॥

**( २ चतुर्धरी )** पञ्चवर्षसहस्राणि । अत्यन्तसंयोगे द्वितीया । बाहू प्रहरणानि यस्य विष्णोः । विभुः प्रभुः ॥ ७२ ॥

**( ३ शान्तनवी )** ततः शयनात्समुत्थाय सः भगवान् ऐश्वर्यादिमान् विभुः व्यापकः हरिः विष्णुः ताभ्यामसुराभ्यां सह युगपत् बाहुप्रहरणः सन् पञ्चवर्षसहस्राणि युयुधे । युध संप्रहरे । आत्मनेपदी दिवादिः । बाहव एव प्रहरणानि आयु-

---

१ 'रक्तेक्षणावत्तुं' इति चतुर्धरीस्थः पाठः ।

धानि यस्यासौ बाहुयुद्धं चकारेत्यर्थः । वर्षाणां सहस्राणि पञ्चेति संख्यायाः शब्दप्राधान्येप्यन्वर्थं वर्षाणामेव प्राधान्यमिति कालस्यात्यन्तसंयोगे द्वितीया । पञ्चसहस्राणि वर्षाणि अभिव्याप्य नियुद्धं व्यधादिति भावः ॥ ७२ ॥

**( ४ नागोजीभट्टी )** अस्याः टीका पूर्वश्लोकेन सह व्याख्याता ॥ ७२ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** पञ्चवर्षेति ॥ ९४ ॥ ७२ ॥

**( ६ दंशोद्धारः )** ॥ ७२ ॥

## तावप्यतिबलोन्मत्तौ महामायाविमोहितौ । उक्तवन्तौ वरोऽस्मत्तो व्रियतामिति केशवम् ॥७३॥

**( १ गुप्तवती )** ॥ ७३ ॥

**( २ चतुर्धरी )** वरः इष्टोऽर्थः व्रियतां गृह्यताम् । इतीत्यवधारणे ॥ ७३ ॥

**( ३ शान्तनवी )** अतिबलोन्मत्तौ महामायाविमोहितौ संतौ तावप्यसुरौ अस्मत्तः वरः वाञ्छितोऽर्थः त्वया व्रियतां प्रार्थ्यतामिति केशवमुक्तवन्तौ ऊचतुः । अत्यधिकबलेन सामर्थ्येन उन्मत्तौ अधिकमदौ महामायाविमोहितौ प्रयुक्तौ प्रापिताविवेकौ । अस्मत्तः आवाभ्याम् । प्रशस्तकेशः केशवः विष्णुः ॥ ७३ ॥

**( ४ नागोजीभट्टी )** तावपीति । वर इष्टोर्थः । व्रियतां गृह्यताम् ॥ ७३ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** पुनरर्धं तु मन्त्राणां सपञ्चनवतिः स्मृता इति । पुनः अर्धं अर्धश्लोकात्मको मन्त्रः । मन्त्राणां सप्तशतीमन्त्राणां तु पञ्चभिः सहिता नवतिः स्मृता चिन्तिता । तद्यथा उक्तवन्तौ वरोऽस्मत्तो व्रियतामिति केशवं स्वाहा ९५ ॥ ७३ ॥

**( ६ दंशोद्धारः )** ताविति । अस्मत्तः । अद्यादित्वात्तसिः । ननु पञ्चम्यास्तसिल् अद्यादिभ्य इति पर्युदासात् महामायाविमोहितावित्यनेन अस्मद्वधमेवायं वरयिष्यतीति विवेकाभावः सूचितः ॥ ७३ ॥

### श्रीभगवानुवाच ।

## भवेतामद्य मे तुष्टौ मम वध्यावुभावपि । किमन्येन वरेणात्र एतावद्धि वृतं मया ॥ ७४ ॥

**( १ गुप्तवती )** ॥ ७४ ॥

**( २ चतुर्धरी )** ॥ ७४ ॥

**( ३ शान्तनवी )** असुरौ प्रति विष्णुरवोचत् । अद्येदानीं चेद्भवन्तौ मे तुष्टौ स्तः तर्हि उभावपि असुरौ मम वध्यौ मया हन्तुमर्हौ । इह 'हनो वा वध च' इति यत् । ण्यति तु घात्यौ भवेतां स्याताम् । अत्र च प्रतिपक्षे विषये किमन्येन वधादपरेण वरेण कृतं स्यात् । वधादितरवरे प्रार्थिते शत्रुशेषप्रसङ्गः स्यात् । तदन्यत्तु वस्तु भगवतो मम प्रार्थितसिद्धमेवेत्याशयादाह । भवतो मया एतावद्धि एतावदेव भवत्कर्मकमकर्तृकं वधलक्षणं वस्तु वृत्तं प्रार्थितं नान्यत् । वाक्ये संधिकार्यमतन्त्रम् । 'एका एकशिरोरुहा त्रिचरणा एकेक्षणा द्विस्तनी' इतिवत् । अथवा वरेणात एतावद्धीति पाठः । अतः एताभ्यां भवद्भ्यां एतावदेव वधरूपं वस्तु मया वृतं नान्यदिति ॥ ७४ ॥

**( ४ नागोजीभट्टी )** श्रीभगवानुवाच । भवेतामिति । अत्र यदि तदेति पूरणीयम् । यदि तुष्टौ तदा तर्हि वध्यौ भवेतामित्यन्वयः । वृतमिति । नपुंसके भावे क्तः । ममेति कर्तुः शेषत्वविवक्षायां षष्ठी ॥ ७४ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** भगवानुवाचेति एको मन्त्रः ९६ । अर्धमन्त्रे द्वे इति द्वे अर्धमन्त्रे भवेतामिति श्लोकस्य अर्धश्लोकात्मकौ द्वौ मन्त्रौ स्यातामित्यर्थः । तद्यथा भवेतामद्य मे तुष्टौ मम वध्यावुभावपि स्वाहा ९७ । किमन्येन वरेणात्र एतावद्धि वृतं मया स्वाहा ९८ । 'वेदभेदे गुप्तवादे मन्त्र'इत्यमरात् । नपुंसकप्रयोगश्चिन्त्यः ॥ ७४ ॥

**( ६ दंशोद्धारः )** भवेतामिति । अत एतावदिति संहिताया अविवक्षणान्न संधिः । अत एतावदिति पाठः सुगमः ॥ ७४ ॥

### ऋषिरुवाच ।

## वञ्चिताभ्यामिति तदा सर्वमापोमयं जगत् । विलोक्य ताभ्यां गदितो भगवान्कमलेक्षणः ॥७५॥

**( १ गुप्तवती )** आपोमयं जलमयम् । आपोशनमित्यादौ प्रसिद्धः आपःशब्दोपि जलवाचकोऽस्ति । छान्दसमेवेति तु वैयाकरणाः ॥ ७५ ॥

**( २ चतुर्धरी )** इत्युक्त(विद्यया)रीत्या वञ्चिताभ्यां छलिताभ्यां आपोमयं जलमयम् । अपोभिर्मार्जनं कुर्यादित्यादावाप शब्दस्य सद्भावात् । तथा विलोक्य दृष्ट्वा आपोमयं अम्मयम् । अथवा आपो जलानि जगत् अमयन् व्याप्नुवन् इति

१ 'वरेणातः' इत्यपि शान्तनवीव्याख्यातः पाठः ।

विलोक्येत्यन्वयः । यद्वा सर्वं जगत् आप इति विलोक्य तथा अमयं अहिंसनं यथा भवति तथा भगवान् गदितः । यद्वा सर्वं जगदमयं विष्णुमयं विष्णुमात्रैकशेषं आपो जलानि विलोक्येत्यन्वयः ॥ ७५ ॥

**( ३ शान्तनवी )** तदा असुरवधप्रार्थनाकाले विष्णुना महामायानुकूलेन वञ्चिताभ्यां विप्रलब्धाभ्यां ताभ्यां मधुकैटभाभ्यां सर्वं जगदापोमयं विलोक्य भगवान्कमलेक्षणः पुण्डरीकाक्षः विष्णुरिति गदितः । इति वक्ष्यमाणप्रकारेण उक्तः । 'विप्रलब्धस्तु वञ्चितः' इति । आप्लृ व्याप्तौ । आपः कर्माख्यायामिति आपस्शब्दः सान्तोप्यस्ति । आपोभिर्मार्जनं कुर्वितिवत् । अपांसि कर्मसाधनानि प्रकृतानि उच्यन्ते अस्मिन् जगति तत् आपोमयं । तत्प्रकृतवचने मयट् । अथवा 'आपः स्त्री भूम्नि' । मय गतौ । अनुदात्तेत्त्वानुबन्धनमात्मनेपदं । चक्षिङो ङित्त्वात् । क्वचित् अनित्यमिति लङि परस्मैपदं । आपः कर्त्र्यः । जगत्कर्म । आपोमयं जगदित्यत्र नकारस्य श्रुत्वेन ञकारः । सर्वमापोमयं जगत् । सर्वं जगत्कर्म । आपः कर्त्र्यः । अमयन् अगच्छन् व्याप्तवत्य इति विलोक्य ताभ्यां हरिरुक्त इति योजना ॥ ७५ ॥

**( ४ नागोजीभट्टी )** ऋषिरुवाच । वञ्चिताभ्यामिति । तदा तस्मिन् समये इति एवं वरप्रार्थनया वञ्चिताभ्यां भगवतीकृतमोहवशात् सर्वं जगत् आपोमयं विलोक्य ताभ्यां भगवान् गदित इत्यर्थः । आपोमयमित्यत्र आप्शब्दसमानादाम्प्रकृतिकादसुन्नन्तादापःशब्दान्मयट् । 'आपोमयमिदं सर्वमापो मूर्तिः शरीरिणाम्' इतिवत् ॥ ७५ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** ऋषिरिति । ऋषिरुवाच स्वाहेत्येको मन्त्रः ९९ । श्लोकार्धं पुनरिति पुनर्भूयोऽपि श्लोकार्धकं अर्धश्लोकरूपो मन्त्रः । तद्यथा । वञ्चिताभ्यामिति तदा सर्वमापोमयं जगत्स्वाहा १०० । श्लोक इति श्लोकरूपो मन्त्रः । तद्यथा विलोक्य ताभ्यां गदितो भगवान् कमलेक्षणः ॥ ७५ ॥

**( ६ दंशोद्धारः )** वञ्चिताभ्यामिति । आपोभिर्मार्जनं कुर्यादित्यादौ दृष्ट आपस्शब्दः सकारान्तोपि ब्रुवते । कतमेपि नपुंसकमापइतिकांशाच्च साधितश्च 'आपः कर्माख्यायाम्' इत्युणादिसूत्रेणासुन्नन्तः तस्मात्प्राचुर्ये मयट् । यद्वा अमयं विष्णुमयं । जगदापो विलोक्येत्यर्थः । यद्वा मय हिंसायां । अस्मात्पचाद्यचि अमयमहिंसं यथा भवति तथा गदित इति क्रियाविशेषणं । यद्वा अमयन्निति छेदः । मय गतौ । सर्वं जगत् आपः अमयन् अगच्छन् व्याप्तवत्य इति विलोक्येत्यर्थः । चक्षिङो ङित्वेनानुदात्तेत्त्वप्रयुक्तात्मनेपदस्यानित्यत्वाल्लङि परस्मैपदम् ॥ ७५ ॥

**(प्रीतौ स्वस्तव युद्धेन श्लाघ्यस्त्वं मृत्युरावयोः)। आवां जहि न यत्रोर्वी सलिलेन परिप्लुता॥७६॥**

**( १ गुप्तवती )** ॥ ७६ ॥

**( २ चतुर्धरी )** श्लाघ्योऽनुरूपः । ऊर्वी पृथिवी यत्र सलिलेन परिप्लुता न तत्र आवां जहि घातयेत्यन्वयः ॥ ७६ ॥

**( ३ शान्तनवी )** किं गदितः कमलेक्षणो भगवान्ताभ्यां । हे विष्णो तव युद्धेन आवां असुरौ प्रीतौ स्वः भवावः । हे विष्णो त्वं आवयोर्मधुकैटभयोः श्लाघ्यः स्तुत्यः मृत्युरन्तकः कालोऽसि । किंतु यत्रोर्वी भूमिः सलिलेन परिप्लुता नाभूत् तत्र आवां मधुकैटभौ जहि हन्या इति ताभ्यां विष्णुरुक्तः । आवयोर्वधरूपं वरं वाञ्छता मायिना तेन विष्णुना आवां असुरौ वञ्चितावभूतां ततो येन नौ वधो न स्यात् स कोन्यस्त्वद्वधोपायः । अयमस्ति संप्रति सर्वं जगदापोमयं जलमयं एव वर्तते । ततश्च यत्रोर्वी जलमयी न दृश्येत तत्रावयोरसुरयोस्त्वत्कर्तृको(स्त्वत्कर्मको) वधोऽस्त्विति । एवंचोक्तोहि सर्वापि पृथिवी जलमय्येवेति क्व नौ हनिष्यत्यसावित्यावाभ्यां असुराभ्यां मायाविभ्यां भगवानपि वञ्चितो भविष्यत्यशुभस्य कालयापनास्त्विति भावः । आपोमय इत्यत्र आपस् इति सान्तं । आपोभिर्मार्जनं कुर्यादिति प्रयोगश्च । मृजमृङ्भ्यां जपुक्त्युकौ । मृत्युः स्त्रीपुंसयो रते । जहि इति हन्तेर्विध्यादौ लोटि 'सेर्ह्यपिच्च' होहन्तेर्जः । आभीयतयाजस्यासिद्धत्वाद्धेर्लुगभावः । वधिः प्रकृत्यन्तरमस्तीति केवलोप्यस्ति वधशब्दः शिष्टप्रयोगतः ॥ ७६ ॥

**( ४ नागोजीभट्टी )** किं गदितं तत्राह । आवामिति । न यत्रोर्वी यत्र वा न सलिलेन परिप्लुता तत्रावां जहीत्यर्थः ॥ ७६ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** आवां जहि न यत्रोर्वी सलिलेन परिप्लुता स्वाहा १०१ ॥ ७६ ॥

**( ६ दंशोद्धारः )** प्रीताविति । त्वन्मृत्युरिति पाठे त्वत् त्वत्तः मृत्युरित्यर्थः ॥ ७६ ॥

**ऋषिरुवाच ।**

**तथेत्युक्त्वा भगवता शङ्खचक्रगदाभृता। कृत्वा चक्रेण वै छिन्ने जघने शिरसी तयोः ॥ ७७ ॥**

**( १ गुप्तवती )** जघने तत्र जलाभावादिति भावः । एतदुत्तरं क्वचिदधिकं पठ्यते । 'हत्वा तु भगवान्विष्णुस्तावुभौ मधुकैटभौ । तयोस्तु मेदसा राजन् महीमेतामकल्पयत् । मेदिनीति तदारभ्य संज्ञामाप वसुंधरा । ततो वीतभयो ब्रह्मा

१ एतत्पद्यार्थं केवलं चतुर्धरीशान्तनवीभ्यामेव विवृतं न सर्वत्र ।

ससर्ज विविधाः प्रजाः' इत्यादि 'संसाराब्धौ न मज्जति'इत्यन्तं तत्पश्चादेवमेषा समुत्पन्नेति श्लोकः । पुराणान्तरे त्वेतदुत्तरं कथाशेषः स्मर्यते । विष्णुना स्वकृतवचनजन्यपातकनिरासाय स्वीयं वचनमङ्गीकृतवतोर्दैत्ययोरुद्धाराय च वनवासेन तपः कृत्वा वरदानाम्न्या नद्यास्तीरे मधुकेश्वरकैटभेश्वरनामकं लिङ्गद्वयं प्रतिष्ठितं । तद्वानवासिकानामकं क्षेत्रं प्रथितमभवदित्यादि । अस्या देव्या इति । इमे व्यधिकरणे षष्ठ्यौ । अस्यास्तामस्या देव्या लक्ष्म्याश्चण्डिका तस्या इत्यर्थः ॥ ७७ ॥

**( २ चतुर्धरी )** तथेत्युक्त्वा तयोर्वचनमङ्गीकृत्य जघने सक्थिद्वयमूले कृत्वा स्थापयित्वा तयोः शिरसी चक्रेण छिन्ने इत्यन्वयः । अत्र स्थलपक्षे ऊर्वोः समाहारः ऊर्वी । अतः जघने अपि ऊर्वी । अथवा देवलस्य पार्थिवत्वात् जघनमपि तथोच्यते ॥ ७७ ॥

**(३ शान्तनवी)** सुमेधाऋषिः सुरथं प्रति वाक्यमूचिवान् । हे मधुकैटभौ यद्यथा युवाभ्यामगादि तत्तथा न ततोन्यथा इत्युक्त्वा शङ्खचक्रगदाभृता भगवता विष्णुना स्वकीये जघने उपस्थादूर्ध्वप्रदेशे तयोरसुरयोः शिरसी कृत्वा निधाय अवस्थाप्य । वै प्रसिद्धौ । चक्रेण छिन्ने कृते अच्छेदिषातामित्यन्वयः । प्रलयकालजलपूरो भगवतो जघनदघ्नो जघनादधः नाभूदिति भगवतो जघनं जलप्लुतं नच । उर्वी च भवति । पृथिव्यारब्धत्वात् । इत्थं विष्णुचक्रोच्छिन्नशिरस्कत्वात्तयोरसुरयोः श्लाघ्यमृत्युता च । शङ्खश्च चक्रं च गदा च । सेनाङ्गत्वादेकवत् । तच्छङ्खचक्रगदं आविभर्ति शङ्खचक्रगदाभृत् तेन । यद्वा शङ्खश्च चक्रं च शङ्खचक्रं तेन सहिता गदा शङ्खचक्रगदा तां बिभर्ति शङ्खचक्रगदाभृत् तेन । स्त्रीकट्याः पुरोभागो हन्यते इति जघने इत्युपलक्षणम् ॥ ७७ ॥

**(४ नागोजीभट्टी)** ऋषिरुवाच । तथेति पूर्वं वर्तमानकथाभिप्रायेण । ऋषिरुवाचेत्युक्तिः । अत्र भूय उपहाराभिप्रायेण । वस्तुतः सप्तशतीत्वव्यवहारप्रयोजकसप्तशतमन्त्रसंख्यापूरणीयतया उक्तिः । यथा चैतत्तथा कात्यायनीसंमतिपूर्वकं सर्वान्ते उपपादयिष्यामः । तत्र न यत्रोर्वीत्येवं संपादयन् तयोः शिरसी जघने उपस्थादूर्ध्वं नाभेरधोभागे कृत्वा चक्रेण छिन्नवान् ॥ ७७ ॥

**(५ जगच्चन्द्रचन्द्रिका)** पुना ऋषरिति । पुनः ऋषिरुवाचेत्ययं मन्त्रः १०२ । श्लोकद्वयं मन्त्रद्वयं भवेदिति द्वौ श्लोकौ द्वौ मन्त्रौ भवेताम् । तद्यथा तथेत्युक्त्वेति १०३ ॥ ७७ ॥

**( ६ दंशोद्धारः )** ॥ ७७ ॥

**एवमेषा समुत्पन्ना ब्रह्मणा संस्तुता स्वयम् । प्रभावमस्या देव्यास्तु भूयः शृणु वदामि ते॥७८॥**

**इति श्रीमार्कण्डेयपुराणे सावर्णिके मन्वन्तरे देवीमाहात्म्ये मधुकैटभवधो नाम प्रथमोऽध्यायः ॥१॥**

**( १ गुप्तवती )** अथात्रोवाचाङ्किता मन्त्रा विचार्यन्ते । ते चापेक्षानपेक्षाभ्यां सदसद्भावाभ्यां च चतुर्विधाः । तत्र सावर्णिरित्यादिः कस्योक्तिरित्याकाङ्क्षायाः सत्वादाद्यो मार्कण्डेय उवाचेति मन्त्रोऽपेक्षितोऽस्ति च । सच वैश्यमेकं ददर्श स इत्यन्तमनुवृत्तः । तदुत्तरश्लोकस्य राजोक्तित्वेपि राजोवाचेत्यस्य नापेक्षा । स पृष्टस्तेनेत्यनेनैव तदर्थस्य निबन्धनात् । एवं राजोक्तिकृतव्यवधानात्तदुत्तरश्लोकारम्भे पुनरपि मार्कण्डेय उवाचेत्यस्यापेक्षायां सत्यामपीत्याकर्ण्येति श्लोकस्थेनेतिशब्देन राजोक्तेः क्रोडीकारेण पूर्वप्रक्रान्ताया अनुवृत्त्याः सन्निहितायाश्च मार्कण्डेयोक्तेर्मध्यपातसंभवेन न तस्य पुनरुल्लेखः । इत्याकर्ण्येति श्लोक एव वैश्यः प्रत्युवाचेत्यस्य निवद्धतया तदुत्तरग्रन्थारम्भे वैश्य उवाचेति मन्त्रो नापेक्षित एव । तथाप्यस्ति । अत एवानन्यगत्या तत्सार्थक्याय तेनैव सोर्थः स्मर्तव्यो न विद्यमानेनाप्युपायान्तरेणेति नियमः कल्पनीयः । पूर्वं श्लोकमन्त्रार्थदशायामेव बुद्धस्यार्थस्य पुनर्बोधस्यादृष्टार्थता वा 'चतुर्भिरत्रिमादत्त' इति विहितमन्त्रेषु द्वितीयादिमन्त्रार्थबोधस्येव वाच्यं । तन्त्रान्तरपक्षे लिह वैश्य उवाचेति मन्त्रो नास्त्येवेति वक्ष्यमाणत्वान्न तत्पक्षे नियमादृष्टादिकुसृष्टिः । ततो राजोवाचेत्याद्युवाचषट्कं च स्थानमपेक्षितमेवास्ति । ततो ब्रह्मोवाचेति नातीवापेक्षितं । तदुत्तरमृष्यादित्रयमपेक्षितमेवास्ति । तत आवां जहीत्यर्धारम्भे मधुकैटभावूचतुरित्यपेक्षितमपि कैश्चित्पठ्यमानमपि ताभ्यां गदित इत्यनेन गतार्थत्वान्नास्ति । तदुत्तरमृषिरुवाचेति तु नातीवापेक्षितं । ऋषिवाक्यस्यातीव सन्निहितत्वेनेति गदित इत्यन्वितेनेतिशब्देन तत्क्रोडीकारसंभवात् । अतएव यामलपाठेऽयं मन्त्रो नास्तीति दिक् ॥ ७८ ॥ ॥ इति श्रीभास्कररायोन्नीतायां गुप्तवत्यां सप्तशतीमन्त्रव्याख्याने प्रथमोऽध्यायः ॥ १ ॥

**( २ चतुर्धरी )** उपसंहरति एवमिति । प्रभावं प्रकृष्टं भवनं । स्वेच्छाकृतं जन्मेति यावत् । भूयः पुनः ते तुभ्यं ॥ ७८ ॥ ॥ इति श्रीचतुर्धरीटीकायां मधुकैटभवधः प्रथमोऽध्यायः ॥ १ ॥

**( ३ शान्तनवी )** एवंप्रकारेण ब्रह्मणात्मभुवा स्वयमात्मना संस्तुता एषा देवी समुत्पन्ना देवकार्यार्थं प्रादुरभूत् ।

हे राजन् सुरथ त्वं भूयः पुनः भूयिष्ठं यथा भवति तथा च अस्याः देव्याः प्रभावं प्रादुर्भावं सामर्थ्यं च शृणु आकर्णय । भूयस्ते वदामि । अहं सुमेधानाम ऋषिः ॥ ७८ ॥ ॥ इति शान्तनवीटीकायां मधुकैटभवधः प्रथमोऽध्यायः ॥ १ ॥

**( ४ नागोजीभट्टी )** एतेन भगवद्देहस्य शुद्धमायिकत्वेनापाञ्चभौतिकतया जघने मारणेपि सलिलप्लुतत्वाभावविशिष्टोर्व्यां प्रार्थितस्य वधस्याधृतिरिति परास्तं । उपसंहरति । एवमेषेति । समुत्पन्ना प्रादुर्भूता । अस्या देव्या इति अधिकरणे षष्ठी । अस्याः तामस्याः मूलभूता या त्रिगुणा महालक्ष्मीः तस्या इत्यर्थः । अतएव तुशब्दसंगतिः । भूयः प्रभावं पुनः प्रादुर्भावं । भूय इत्युक्तिस्तु तामस्यास्तस्या अंशाभेदात् पूर्वोक्तप्रभावोपि तस्या एव इति ध्वनयितुं । यद्वा प्राधानिकरहस्योक्त आद्यचतुर्भुजप्रादुर्भावापेक्षया मध्यमचरित्रवक्ष्यमाणाष्टादशभुजाप्रादुर्भावस्य पुनस्त्वमादाय यदुक्तिः । तदुक्तं लक्ष्मीतन्त्रे । 'योगनिद्रा हरेरुक्ता या सा देवी दुरत्यया । महाकाल्यास्तनुं विद्धि तां मां देवीं सनातनीम् । मधुकैटभनाशार्थमहितौ च तदा तया । जघ्नाते वरलाभेन देवदेवेन विष्णुना । एषा सा वैष्णवी माया महाकाली दुरत्यया । स्तुत्या वशीकृता कुर्यात् दिशः स्तोतुश्चराचरम्'इति । स्तुता विश्वेश्वर्यादिसूक्तरूपया । तदुक्तम् । 'विश्वेश्वर्यादिकं सूक्तं दृष्टं तद्ब्रह्मणा तदा । स्तुतये योगनिद्रायाः समं देव्याः पुरंदरः । अस्या देव्याः समुत्पत्तिश्चरितं स्तोत्रमित्यपि । हिताय सर्वभूतानां धार्यते ब्रह्मवादिभिः' इति विश्वेश्वर्यादिसूक्तमेव रात्रिसूक्तमिति व्यवह्रियते । कालरात्रिर्महारात्रिरिति तत्र रात्रिपदाभ्यासादिति बोध्यम् । विश्वेश्वरीपदेनोपक्रमात् विश्वेश्वरीसूक्तमपि ७८ । समाप्तौ सावर्णेः कः प्रकाशो यत्र तादृशे मन्वन्तरे तद्वर्णने इत्यर्थः ॥ ॥ इति शिवभट्टसुतसतीगर्भजनागोजीभट्टकृतसप्तशतीव्याख्याने प्रथमोऽध्यायः ॥ १ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** एवमेषेति १०४ । श्लोकानामष्टसप्तत्याश्चतुर्भिरधिकं शतम् । उवाचवचनैः सार्धं विभागः प्रथमे मतः इति । श्लोकानां सप्तशतीश्लोकमन्त्राणां अष्टसप्तत्याः अष्टाधिकायाः सप्ततेः । द्विन्यूनाया अशीतेरित्यर्थः । उवाचवचनैः उवाच इति वाक्यकथनैः सार्धं साकं चतुर्भिरधिकं शतं प्रथमेऽध्याये विभागे विभाजने मतः । संमत इत्यर्थः । मार्कण्डेयद्वयं राजत्रयं ततः । ऋषिपञ्चकमुद्दिष्टं भगवानेक एव तु । ब्रह्मैक्यं तु चतुर्विंशतिरर्धमन्त्राः प्रकीर्तिता इति । मार्कण्डेयद्वयमिति मार्कण्डेय उवाचेति द्वौ मन्त्रौ । वैश्यद्वयमिति वैश्य उवाचेति द्वौ मन्त्रौ । राजत्रयं तत इति राजोवाचेति त्रयो मन्त्राः । ऋषिपञ्चकमुद्दिष्टमिति ऋषिरुवाचेति पञ्चमन्त्रा उद्दिष्टाः । भगवानेक एवत्विति तु पुनः भगवानुवाचेति एको मन्त्रः । ब्रह्मैकमिति ब्रह्मोवाचेति एको मन्त्रः । ऊनचतुर्विंशत्यर्धमन्त्राः प्रकीर्तिता इति तु पुनः चतुर्विंशतिसंख्याका अर्धमन्त्रा अर्धश्लोकरूपा मन्त्राः । पादद्वयात्मका मन्त्रा इत्यर्थः । प्रकीर्तिताः । उवाचपदमध्ये तु श्लोकद्वादशकेषु चेति उवाचपदं मध्ये येषां ते उवाचपदमध्यास्तेषु एतादृशेषु श्लोकानां पद्यानां द्वादशकानि तेषु । तथाहि इत्याकर्ण्य वचस्तस्य इति श्लोकस्य अर्धद्वयमध्यवर्ती वैश्य उवाचेत्येको मन्त्र इत्यर्थः । श्लोकस्यार्धद्वयात्मकौ द्वौ मन्त्रौ भिन्नावित्यर्थः । एवं राजोवाचेत्यादिका मन्त्राः पूर्ववत् बोध्याः । तथाहि । कथं ते किंन्विति श्लोकस्यार्धद्वयमध्यवर्ती राजोवाचेत्येको मन्त्रः । श्लोकस्यार्धद्वयात्मकौ द्वौ मन्त्रौ भिन्नावित्यर्थः । तेषु किं भवत इति श्लोकस्य अर्धद्वयमध्यवर्ती वैश्य उवाचेति एको मन्त्रः । श्लोकस्यार्धद्वयात्मकौ मन्त्रावित्यर्थः । करोमि किं यदिति मन्त्रस्यार्धद्वयमध्यवर्ती मार्कण्डेय उवाचेत्ययं मन्त्रः । श्लोकस्यार्धद्वयात्मकौ मन्त्रौ बोध्यौ । उपविष्टौ कथा इति श्लोकस्यार्धद्वयमध्यवर्ती राजोवाचेत्ययं मन्त्रः । श्लोकस्यार्धद्वयात्मकौ द्वौ मन्त्रौ भवतः । ममास्य चेति श्लोकस्यार्धद्वयमध्यवर्ती ऋषिरुवाचेत्ययं मन्त्रः । श्लोकस्यार्धद्वयात्मकौ मन्त्रौ बोध्यौ । संसारबन्धेति श्लोकस्यार्धद्वयमध्यवर्ती राजोवाचेत्ययं मन्त्रः श्लोकस्यार्धद्वयात्मकौ द्वौ मन्त्रौ ज्ञातव्यौ । तत्सर्वं श्रोतुमिच्छामीति श्लोकस्यार्धद्वयमध्यवर्ती ऋषिरुवाचेत्ययं मन्त्रः । एतस्यैव श्लोकस्यार्धद्वयात्मकौ द्वौ मन्त्रौ स्तः । विबोधनार्थायेति श्लोकस्यार्धद्वयमध्यवर्ती ब्रह्मोवाचेत्ययं मन्त्रः । एतच्छ्लोकस्यार्धद्वयात्मकौ मन्त्रौ भवतः। बोधश्च क्रियतामिति श्लोकस्यार्धद्वयमध्यवर्ती ऋषिरुवाचे । त्ययं मन्त्रः । एतस्यैव श्लोकस्यार्धद्वयात्मकौ द्वौ मन्त्रौ स्तः । उक्तवन्ताविति श्लोकस्यार्धद्वयमध्यवर्ती भगवानुवाचेत्ययं मन्त्रः । एतस्यैव श्लोकस्यार्धद्वयात्मकौ मन्त्रौ भवतः । किमन्येनेति श्लोकस्यार्धद्वयमध्यवर्ती ऋषिरुवाचेत्ययं मन्त्रः । एतस्यैव श्लोकस्यार्धद्वयात्मकौ द्वौ मन्त्रौ स्तः । अध्यायादौ मार्कण्डेय उवाचेत्येको मन्त्रः । विलोक्य ताभ्यामिति श्लोकस्यान्ते ऋषिरुवाचेत्यपरो मन्त्रः ॥ ७८ ॥ ॥ इति श्रीकूर्माचलेन्द्रराजर्षिवर्यश्रीज्ञानचन्द्रात्मज श्रीकुमारजगच्चन्द्राश्रितसोमयाजिपुरोहितबलभद्रपण्डितगोत्रापत्यहर्षदेवात्मजावसथ्यभगीरथविरचितानां कराचगोविन्दकृतसप्तशतीमन्त्रहोमविभागकारिकाणां प्रथमाध्यायस्य जगच्चन्द्रचन्द्रिकाख्यटीकायां प्रथमोऽध्यायः ॥ १ ॥

**( ६ दंशोद्धारः )** सावर्णिरेव सावर्णिकः । बाह्वादेराकृतिगणत्वादिञ् । तस्येदं सावर्णिकं । यद्वा सावर्णिकमिति अभिधत्ते । यद्वा सावर्णौ भवं सावर्णिकं । अध्यात्मादित्वाट्ठञ् ॥ ७८ ॥ ॥ इति श्रीमद्गुल्लोपनामढुण्ढिराजभट्टसूरिसूनुराजारामविरचिते सप्तशतीदंशोद्धारे प्रथमोऽध्यायः ॥ १ ॥

# द्वितीयोऽध्यायः २

## ऋषिरुवाच ।

**देवासुरमभूद्युद्धं पूर्णमब्दशतं पुरा । महिषेऽसुराणामधिपे देवानां च पुरंदरे ॥ १ ॥**

**( १ गुप्तवती )** अथ तन्त्रे नवभिः श्लोकैर्द्वितीयाद्यध्यायत्रयमन्त्रविभजनपरो द्वितीयः पटलः । ईश्वर उवाच । द्वितीये ऋषिवागष्टषष्टिः श्लोका इति क्रमः । ततस्तृतीयेऽध्याये तु ऋषिः प्रोवाच देशिके । पञ्चत्रिंशत्ततः श्लोकमन्त्रा ज्ञेया वरानने । देव्युवाच ततः श्लोकमन्त्र एको महेश्वरि । ऋषिरुक्तिः पुनः श्लोकमन्त्राः पञ्च सनातनाः । एवमाहुतयस्तत्र चत्वारिंशच्चतुर्युताः । द्वितीयेऽध्याये ऋषिरुवाचेत्येको मन्त्रः । देवासुरमित्यादयोऽष्टषष्टिः श्लोकमन्त्राः । इत्येकोनसप्ततिः । तृतीये तु ऋषिवाक्यद्वयं देव्युवाचेत्येकः एकचत्वारिंशच्छ्लोकमन्त्रा इति चतुश्चत्वारिंशत् । देशिके इति देव्या एव गुरुत्वेन संबोधनं । 'चतुर्थे त्वृषिवाङ्मन्त्रः श्लोकाः षड्विंशतिस्ततः । पुनस्तथैव ऋष्युक्तिः श्लोकौ द्वौ मन्त्ररूपिणौ । एवं स्तुतेति मन्त्रोऽयमतिगुह्योऽतिपावनः । देव्युक्तिर्व्रियतां मन्त्रः कथितः षोडशाक्षरः । देवा ऊचुरिति प्रोच्य भगवत्या कृतं वदेत् । मन्त्रोऽयं शतवर्णाढ्यो द्वादशोत्तरयुक् पुनः । अथो ऋषिरुवाचेति मन्त्रश्चेति प्रसादिता । इति श्लोकास्तु चत्वारो मन्त्रास्तावन्त एव ते' । श्लोकौ द्वावित्युक्तयोर्मध्ये प्रथमस्य प्रशंसामात्रमेव स्तुतेति । व्रियतामित्यर्धश्लोकमन्त्रोत्तरं । 'ददाम्यहमतिप्रीत्या स्तवैरेभिः सुपूजिता । कर्तव्यमपरं यच्च दुष्करं तन्निवेद्यतां' इति श्लोकः क्वचित्पठ्यते स प्रकृततन्त्रानुसारिभिः नादर्तव्य इति ध्वनयन्नाह । देवा ऊचुरिति । भगवत्या कृतं सर्वं इत्यारभ्याम्बिके इत्यन्तोऽध्यष्टश्लोकात्मक एव मन्त्रो द्वादशाधिकशताक्षर इत्युक्तया मन्त्रोयमित्येकवचनेन च प्रतीयते । प्रार्थनारूपार्थैक्याल्लक्षणतोऽपि युज्यते । परंतु पटलान्ते वक्ष्यमाणाभ्यामेतदध्यायस्थमन्त्रेयत्तातद्विवेचनाभ्यां सह विरोधापत्त्यैकत्वमविवक्षितं । तावन्त एव ते इत्यत्र तच्छब्देनेषध्यवधानेनोक्तानध्युष्टश्लोकाननूद्य तावन्त एवेत्यनेन चतुर्मन्त्रात्मकता विधीयते । अन्यथा तस्य वैयर्थ्यापत्तेः । अतश्चैकोर्धश्लोकमन्त्रस्त्रयः श्लोकमन्त्रा इति सिध्यति । सच यद्यपि काण्वोक्तरीत्या प्रथमार्धमात्रस्यापि निराकाङ्क्षत्वात्स एवेति सुवचं । तथाप्युत्तरश्लोकमन्त्रद्वयेन नैराकांक्ष्यसामञ्जस्यं । अतश्चरमस्यैवार्धस्य पूर्वोक्तेनौत्सर्गिकन्यायेन मन्त्रत्वमास्थेयं । यश्च मर्त्य इति मन्त्रस्य तु सार्धश्लोकत्वे सत्येवैकवाक्यत्वस्य संभवादेवागत्याध्याहारादिभिः पूर्णता स्वीकार्या । अथवा वित्तर्धिविभवैरित्येतन्नैकं पदं किंतु वित्ता ऋद्धीति पदद्वयं भिन्नं । वित्ता तत्संबन्धिज्ञानविषयीभूता सती संपदां विभवैर्ऋद्धिं समर्धयेत्यर्थः । ऋध्नोत्यादेर्विकरणव्यत्ययश्छान्दसः । एतेन धनवित्तपदयोः पौनरुक्त्यमपि समाहितं भवति । वस्तुतस्तु मन्त्रचतुष्टयस्यैकसंख्यावशीकारेणैकस्य कथनादेव ज्ञापकान्मन्त्रार्थोऽत्र परस्पराकाङ्क्षानिष्पत्तये एक एवानुसंधेयः । आहुतिमात्रं तु भिद्यत इत्यन्यत्रोत्सर्गसिद्धस्यैकार्थबोधकत्वैकाहुतिकरणत्वपर्याप्त्यधिकरणतयोः सामानाधिकरण्यस्यापवाद इति न कोपि दोषः । श्लोकाश्चतुर्थेऽध्याये तु षट्त्रिंशत्परमेश्वरि । अथ(र्ध)मन्त्रद्वयेनैव चत्वारिंशद्द्वियुक् पुनः । देवानां देव्याश्चैकैकोक्तिः । ऋषिवाक्यत्रयं द्वावर्धश्लोकौ पञ्चत्रिंशच्छ्लोकमन्त्रा इति द्विचत्वारिंशन्मन्त्रा इत्यर्थः । एवमध्यचरित्रस्य पञ्चाशच्च शतोत्तरं । तथा पञ्चयुतं मन्त्रा महालक्ष्म्या विभेदतः । महालक्ष्म्या इति द्वितीयचरित्रदेवतोक्तिः । एवमुत्तरत्र सरस्वत्यादिदेवतानामध्यायभेदेन तत्रतत्र कथनात्पूर्वाध्याये महाकाल्येव परिशेषाद्देवता । द्वादशत्रयोदशाध्याययोरिह तन्त्रे देवताया अकथनाच्चामुण्डैव सामान्यप्राप्ता देवता चण्डिका वा । तृतीयचरित्रत्वाविशेषात् महासरस्वत्येव वा देवतेति ध्येयम् । इति श्रीगुप्तवत्यां कात्यायनीतन्त्रस्थैकविंशपटलस्य व्याख्या ॥ ॥ अथैतत्संग्रहश्लोकाः सप्त । ऋषिवागष्टषष्टिः स्युः श्लोका देवासुरादयः । एवं द्वितीयकेऽध्याये मन्त्रा एकोनसप्ततिः । ऋषिर्निहन्यमानाद्याः पञ्चत्रिंशत्तु मन्त्रकाः । देव्योक्तिर्गर्जगर्जेतिश्लोक एव ऋषेर्वचः । पञ्चश्लोका इति चतुश्चत्वारिंशत्तृतीयके । ऋषिः शक्रादयः श्लोकाः षड्विंशतिरथर्षिवाक् । श्लोकद्वयमथो देवी श्लोकार्धं व्रियतामिति । देवा ऊचुस्त्रयः श्लोका भगवत्या कृतादिकाः । वृद्धयेऽस्मत्प्रसन्ना त्वं इत्यर्धश्लोकको मनुः । ऋषेर्वचश्चतुःश्लोकीत्यध्याये तु चतुर्थके । मन्त्रा द्विचत्वारिंशत्स्युरध्यायत्रितयात्मनः । मध्यमस्य चरित्रस्य पञ्चपञ्चाशदुत्तराः । शतं मन्त्रास्तेषु देव्या वचसी द्वे ऋषेस्तु षट् । देवानामेकमर्धं द्वे अन्ये श्लोका इति स्थितिः ॥२५॥ मध्यमचरित्रस्य विष्णुर्ऋषिः । महालक्ष्मीर्देवता । उष्णिक् छन्दः । शाकम्भरी शक्तिः । दुर्गा बीजं । वायुस्तत्त्वं । महालक्ष्मीप्रीत्यर्थं जपे विनियोगः । अथ मन्त्रव्याख्या । विप्रचित्तेर्दैत्यस्य पुत्री माहिष्मतीनाम्नी सिन्धुद्वीपाख्यमृषिं तपस्यन्तं महीषीवेषेणाभीषयत् । ततस्तेन महिष्येव भवेति शप्ता सती तस्यैवर्षेः शुक्रं दैत्यकन्यादर्शनेन स्कन्नं पीत्वा महिषासुराख्यं दैत्यं प्रासूतेति कथा वराहपुराणे देवीभागवते च विस्तरेण वर्णिता तत एवावगन्तव्या ॥ देवासुरं तदुभयसमाहाररूपं ॥ १ ॥

**( २ चतुर्धरी )** भूयः शृण्विति अभिहितं तत्रेतिहासमवतारयन् ऋषिरुवाचेति । देवासुरमिति । देवाश्चासुराश्च प्रहर्तारो यस्मिंस्तद्देवासुरं । देवासुराणामिदमिति वा परपदवृद्धिः । अब्दशतमिति । अत्यन्तसंयोगे द्वितीया । महिषे रम्भासुरा-

त्मजे । असुराणां देवद्विषां अधिपे राजनि इति काकाक्षिवदन्वयः । पुरंदरे पुरंदरनाम्नि । वैवस्वतमन्वन्तर इति यावत् ॥ १ ॥

**( ३ शान्तनवी )** पुरा कल्पे ( युगे ) महिषासुरे असुराणामधिपे सति देवानां च पुरंदरे इन्द्रे अधिपे सति देवासुरं युद्धं पूर्ण अन्यूनं अब्दशतं वर्षशतं अभूदित्यन्वयः। असुराणां विजिगीषूणामिदं आसुरं देवानां आसुरं देवासुरं । अथवा देवैः सह आसुरं देवासुरं युद्धं। यद्वा देवाश्च असुराश्च देवासुरं। 'एषां च विरोधः शाश्वतिकः' इत्येकवद्भावः । तस्मिन् अस्ति तद्देवासुरं युद्धं । आर्शआदित्वादच् । यद्वा देवासुरस्येदं देवासुरं युद्धं । संज्ञापूर्वको विधिरनित्य इति ह्यादिवृद्ध्यभावः । अन्यथा दैवासुरमित्येव स्यात् । पुराण्यरीणां दारयति पुरंदरः । 'वाचंयमपुरंदरौ च' इति खच्प्रत्ययः । महिषेऽसुराणामधिपे इति निचृच्छन्दो मधुकैटभौ दुरात्मानावितिवत् ॥ १ ॥

**( ४ नागोजीभट्टी )** भूयः शृण्वित्युक्तं तत्रेतिहासमाह । ऋषिरुवाच । देवासुरमिति । असुरणामधिपे महिषे च सति पुनर्देवानामधिपे पुरन्दरे इन्द्रे सति । देवा असुराश्च प्रहर्तारो यत्र तादृशं युद्धमब्दशतमासीदित्यर्थः। देवासुरमित्यत्रार्शआदित्वादच् । रम्भासुरतपस्यया प्रसन्नस्य शिवस्यांशोऽयं । तत्सुतो महिषः । स च तपसा देवीनिकटे मम सायुज्यं भवत्विति वरं प्रार्थितवानिति कालीपुराणे स्पष्टं ॥ १ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** अथ द्वितीयाध्यायस्य सप्तशतीमन्त्रहोमविभाग उच्यते । अध्यायादावेव ऋषिरुवाचेति सकृन्मनुरिति अध्यायस्य द्वितीयाध्यायस्य आदौ पूर्वमेव ऋषिरुवाचस्वाहेत्येक इति सकृन्मनुरेको मन्त्रः १ । अष्टषष्टिमिताः श्लोकास्तावन्ति मनवो मता इति । अष्ट अधिका षष्टिरष्टषष्टिर्विंशतित्रयं तन्मितास्तत्परिमिताः तावन्त एव प्रत्येकं श्लोकाः देवासुरमभूद्युद्धमित्यादिकाः मनवो मन्त्राः मताः स्मृताः एकोनसप्ततिः सर्वेऽध्याये मन्त्राद्वितीयके। इति एकेन ऊना सप्ततिः विंशतित्रयं नवाधिकमित्यर्थः । सर्वे मन्त्रा मनवः । द्वयोः पूरणो द्वितीयस्तस्मिन् । स्वार्थे कः । अध्यायाः प्रकीर्तिताः उक्ताः । तथाहि ऋषिरुवाचस्वाहा १ । देवासुरमिति २ ॥ १ ॥

**( ६ दंशोद्धारः )** पूर्वाध्यायान्ते भूयः शृण्विति प्रतिज्ञातं तत्प्रतिपादनयेतिहासं प्रस्तौति देवासुरमित्यादिना । देवाश्चासुराश्च योद्धारोऽस्मिन्निति देवासुरम् । अर्शआद्यच् मत्वर्थे । यद्वा देवासुराणामिदं देवासुरं 'तस्येदं' इत्यणि वृद्ध्यभावः । असुराणा मिदं असुरं देवैः सहासुरं देवासुरमिति वा । पुरंदरनामधेये ॥ १ ॥

**तत्रासुरैर्महावीर्यैर्देवसैन्यं पराजितम् । जित्वा च सकलान्देवानिन्द्रोऽभून्महिषासुरः ॥ २ ॥**

**( १ गुप्तवती )** ॥ २ ॥

**( २ चतुर्धरी )** तत्र युद्धे । इन्द्रः सुरराट् ॥ २ ॥

**( ३ शान्तनवी )** तत्र युद्धे महावीर्यैः असुरैः देवसैन्यं पराजितं अभिभूतं अभ्यभावि । ततश्च महिषासुरः सकलान्देवान् जित्वा अभिभूय इन्द्रोऽभूदित्यन्वयः । 'वीर्यं बलं प्रभावश्च वीरकर्म च कीर्तितं' । सिनोति बध्नाति सह अनेन स्वामिना वर्तते वा सेनां सेनैव सैन्यं । चातुर्वर्ण्यादित्वात्स्वार्थे ष्यञ् ॥ २ ॥

**( ४ नागोजीभट्टी )** तत्रेति । इन्द्रः सुरराट् ॥ २ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** तत्रासुरैरिति ३ ॥ २ ॥

**( ६ दंशोद्धारः )** ॥ २ ॥

**ततः पराजिता देवाः पद्मयोनिं प्रजापतिम् । पुरस्कृत्य गतास्तत्र यत्रेशगरुडध्वजौ ॥ ३ ॥**

**( १ गुप्तवती )** ॥ ३ ॥

**( २ चतुर्धरी )** पद्मयोनिं ब्रह्माणं । प्रजापतिमिति तस्य विशेषणं । ईशो रुद्रः ॥ ३ ॥

**( ३ शान्तनवी )** ततः महिषासुरात्पराजिताः प्राप्तपराभवाः देवाः पद्मयोनिं पद्मजं प्रजापतिं ब्रह्माणं पुरस्कृत्य पुरोधाय तत्र गताः । क । यत्र ईशः शर्वः यत्र च गरुडध्वजः विष्णुरास्ते इत्यन्वयः । 'योनिः स्यात्कारणे भगे' । 'पुरोऽव्ययं गत्याख्यं' 'पराजेरसोढः' इत्यपादानाख्या ॥ ३ ॥

**( ४ नागोजीभट्टी )** तत इति । पद्मयोनिं ब्रह्माणं । प्रजापतिमिति तस्य विशेषणं । ब्रह्मणः प्रजास्रष्टृत्वेन सिद्धसंबन्धत्वात् आदौ देवानां तत्र गमनं । ततः पालनसंहारयोः शिवविष्ण्वोरेवाधिकारात्सब्रह्माणं तयोः समीपे गमनम् ॥ ३ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** ततः पराजिता इति ४ ॥ ३ ॥

**( ६ दंशोद्धारः )** ॥ ३ ॥

**यथावृत्तं तयोस्तद्वन्महिषासुरचेष्टितम् । त्रिदशाः कथयामासुर्देवाभिभवविस्तरम् ॥ ४ ॥**

**( १ गुप्तवती )** ॥ ४ ॥

**( २ चतुर्धरी )** यथावृत्तं यथाभूतं तद्वत् तथैव महिषासुरस्य चेष्टितं चरितं । त्रिदशाः देवाः तयोः रुद्रकृष्णयोर्विषये समीपे वा कथयामासुरित्यन्वयः । देवानामभिभवस्य विस्तरः प्रपञ्चो यत्र चेष्टिते ॥ ४ ॥

**( ३ शान्तनवी )** त्रिदशाः देवास्तयोरीशकेशवयोः अग्रे यथा येन प्रकारेण वृत्तं निष्पन्नं महिषासुरचेष्टितं औद्धत्यं तद्वत्तथैव प्रकारेण वृत्तं देवाभिभवविस्तरं देवानां अभिभवस्य विस्तरं शब्दप्रपञ्चनं कथयामासुः । अथवा त्रिदशास्तयोरीशकेशवयोरग्रे यथावृत्तं चरित्रमनतिक्रम्य महिषासुरचेष्टितं कथयामासुः । तद्वत् महिषासुरचेष्टितं यथावृत्तं वृत्तमनतिक्रम्य देवाभिभवविस्तरं देवानां अभिभवो यस्मिन्स विस्तरो यस्मिन्कर्मणि तद्यथा भवति तथा कथयामासुः । महिषासुरचेष्टितं च देवाभिभवं च विस्तरसहितं कथयामासुरिति भावः ॥ ४ ॥

**( ४ नागोजीभट्टी )** यथावृत्तमिति । देवानामभिभवस्य विस्तरः प्रपञ्चो यत्रेति चेष्टितविशेषणं ॥ ४ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** यथावृत्तमिति ५ ॥ ४ ॥

**( ६ दंशोद्धारः )** ॥ ४ ॥

**सूर्येन्द्राग्न्यनिलेन्दूनां यमस्य वरुणस्य च । अन्येषां चाधिकारान्स स्वयमेवाधितिष्ठति ॥ ५ ॥**

**( १ गुप्तवती )** ॥ ५ ॥

**( २ चतुर्धरी )** स महिषासुरोऽधितिष्ठत्यनुतिष्ठति । 'अधिशीङ्स्थासां कर्म' इति कर्मसंज्ञा ॥ ५ ॥

**( ३ शान्तनवी )** चकारेणानुक्तदिक्पलानुग्रहा गृह्यन्ते । ततोऽन्येषां ब्रह्मर्षीणां च अमीषां सूर्यादीनां अधिकारान्स महिषासुरः स्वयमेवाधितिष्ठति । सूर्यस्य इन्द्रस्य अग्नेः अनिलस्य इन्दोर्यमस्य वरुणस्य अतोऽन्येषां च देवानां ऋषीणां चाधिकारेषु स्वयमेव महिषासुरस्तिष्ठति । 'अधिशीङ्स्थासां कर्म' इत्यधिकरणं कर्माख्यं 'उपपादविभक्तेः कारकविभक्तिर्बलीयसी' अन्यथाभिधाने ॥ ५ ॥

**( ४ नागोजीभट्टी )** सूर्येन्द्रेति । स स्वयमित्यत्र 'एतत्तदोः' इति सुलोपः । स्वयमिति द्विसकारपाठस्तु 'अनचिच' इति द्वित्वेन बोध्यः ॥ ५ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** सूर्येन्द्राग्न्यनिलेति ६ ॥ ५ ॥

**( ६ दंशोद्धारः )** ॥ ५ ॥

**स्वर्गान्निराकृताः सर्वे तेन देवगणा भुवि । विचरन्ति तथा मर्त्या महिषेण दुरात्मना ॥ ६ ॥**

**( १ गुप्तवती )** ॥ ६ ॥

**( २ चतुर्धरी )** निराकृताः निःसारिताः भुवि चरन्ति इत्यन्वयः । मर्त्या मनुष्या इव ॥ ६ ॥

**( ३ शान्तनवी )** दुरात्मना तेन महिषासुरेण सर्वे देवगणाः स्वर्गान्निराकृताः सन्तः भुवि विचरन्ति प्रचरन्ति । मर्त्या यथा मरणधर्माणो मनुष्या इव प्रत्याख्याताः निरस्ताः निराकृताः ॥ ६ ॥

**( ४ नागोजीभट्टी )** स्वर्गादिति । निराकृताः निःसारिताः ॥ ६ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** स्वर्गान्निराकृता इति ७ ॥ ६ ॥

**( ६ दंशोद्धारः )** ॥ ६ ॥

**एतद्वः कथितं सर्वममरारिविचेष्टितम् । शरणं च प्रपन्नाः स्मो वधस्तस्य विचिन्त्यताम् ॥ ७ ॥**

**( १ गुप्तवती )** एतद्व इति बहुवचनं हरिहरौ सशक्तिकौ लक्ष्यीकृत्य ॥ ७ ॥

**( २ चतुर्धरी )** वः इति गुरुत्वादेकशो बहुवचनं । प्रपन्ना आगताः स्मो भवामः ॥ ७ ॥

**( ३ शान्तनवी )** अत्र वः इति ब्रह्मविष्णुमहेश्वरापेक्षं बहुवचनं । अस्माभिर्देवैरिन्द्रादिभिः एतत् अमरारिविचेष्टितं देवरिपोः महिषासुरस्य विचेष्टितं औद्धत्यं देवाभिभवनं च सर्वं निरवशेषं च युष्माकमग्रे कथितं । वयमिन्द्रादयः सर्वे वः युष्मान् त्रीन् शरणं रक्षितॄन् दुखेभ्यः पालयितॄन् प्रपन्नाः प्राप्ताः स्मः । तस्य महिषासुरस्य वधः हननं विचिन्त्यतां । येन स हन्येत स उपायो युष्माभिश्चिन्तनीयः । शॄ हिंसायां । शृणाति शत्रून् । 'शरणं गृहरक्षित्रोः' वेदाः प्रमाणमितिवच्छरणमिहैकवचनान्तं विवक्षितं । अस्तेर्लडुत्तमपुरुषबहुवचनान्तं स्मइति । वध हिंसायां । वधनं वधः । भावे घञ् । 'जनिव-

ध्योश्च' इति वृद्ध्यभावः । अतएव च वधितुमर्हौ वध्यौ । 'ऋहलोर्ण्यत्' इति ण्यत् । तथाच मम वध्यावुभावपि इति प्राक्तने प्रयोगे इदं च साधनमवगन्तव्यं । 'हनो वा वधच' इतितु अदन्तत्वं तत्र दर्शितं । ममेति । तत्र 'कृत्यानां कर्तरि वा' इति षष्ठी । यद्वा तत्र वधमर्हतो वध्यौ । 'दण्डादिभ्यो यत्' इति यत् ॥ ७ ॥

( ४ नागोजीभट्टी ) एतद्व इति । वः इति द्वयोर्बहुवचनं गौरवात् । च परं शरणं प्रपन्नाः आगताः स्मो भवामः॥७॥

( ५ जगच्चन्द्रचन्द्रिका ) एतद्वः कथितमिति ८ ॥ ७ ॥

( ६ दंशोद्धारः ) एतद्व इति । व इति बहुवचनं द्वयोरपि कार्यसाधकत्वेन बहुत्वापेक्षया ॥ ७ ॥

**इत्थं निशम्य देवानां वचांसि मधुसूदनः । चकार कोपं शम्भुश्च भ्रुकुटीकुटिलाननौ ॥ ८ ॥**

( १ गुप्तवती ) भ्रुकुटी भ्रुवोः कुटिः कौटिल्यं तेन कुटिले आनने ययोस्तौ ॥ ८ ॥

( २ चतुर्धरी ) भ्रुकुटीललाटचञ्चलतया कुटिले आनने ययोः ॥ ८ ॥

( ३ शान्तनवी ) इत्थं देवानां वचांसि निशम्य आकर्ण्य मधुसूदनः कैटभजित् विष्णुश्च शम्भुः मृत्युंजयः च कोपं चकार । तौ कीदृशाकृती । भ्रुकुटीकुटिलाननौ भ्रकुटीकुटिलाननौ भृकुटीकुटिलाननौ इति पाठत्रयं । भ्रुकुटीभ्रकुटीभृकुटीस्त्रियां । कुट कौटल्ये । 'इकृव्यादिभ्यः' । यद्वा सर्वधातुभ्य इन् । कुटादित्वात् ङित्वात् गुणाभावः । कृदिकारादक्तिनो वा ङीप् । 'इको ह्रस्वो ङ्यो गालवस्य' इत्यौत्तरपदिकं ह्रस्वत्वं । अकारो वा । भ्रुकुंसादीनामिति पक्षे अत्वमौत्तरपदिकं । ततश्च भ्रुवौ क्रोधात् भुग्ने कुटी इव भ्रुकुट्यौ ताभ्यां भ्रुकुटीभ्यां कुटिले भुग्ने आनने ययोस्तौ भ्रुकुटीकुटिलाननौ हरिहरौ । निशम्येति शमेर्णौ 'अत उपधायाः' इति वृद्धौ 'शमोऽदर्शने' इति सूत्रेण चक्षुःसाधनज्ञानादन्यत्र श्रवणे मित्त्वात् 'मितां ह्रस्वः' । चक्षुःसाधनज्ञाने तु निशामय पश्येत्यर्थे ह्रस्वत्वाभावः । चकारात् ब्रह्मापि भ्रुकुटीकुटिलाननौ कोपं चकारेत्यनुसंधेयः ॥ ८ ॥

( ४ नागोजीभट्टी ) इत्थमिति । भ्रुवोः कुटिः कौटिल्यं तेन कुटिले भुग्ने आनने ययोस्तौ । भ्रूशब्दस्य पृषोदरादित्वात् ह्रस्वः । कुटेरिक्प्रत्ययान्तात् 'कृदिकारात्' इति ङीप् । ब्रह्मणः कोपेपि रजआधिक्येन शिवस्य तमोगुणप्राधान्येन कोपेपि तमोगुणस्याधिक्येन विष्णुकोपस्य पालकमूलत्वेन सत्त्वाधिक्यवत्तया त्रिगुणा एषा इति ध्वन्यते । अतएवोक्तं वैकृतिकरहस्ये । 'सर्वदेवशरीरेभ्यो याविर्भूतामितप्रभा । त्रिगुणा सा महालक्ष्मीः साक्षान्महिषमर्दिनी' । तत्रापि रजःसत्वयोराधिक्यं । देवानां रजःसत्वमयत्वात् ॥ ८ ॥

( ५ जगच्चन्द्रचन्द्रिका ) इत्थं निशम्य देवानामिति ९ ॥ ८ ॥

( ६ दंशोद्धारः ) ॥ ८ ॥

**ततोऽतिकोपपूर्णस्य चक्रिणो वदनात्ततः । निश्चक्राम महत्तेजो ब्रह्मणः शंकरस्य च ॥ ९ ॥**

( १ गुप्तवती ) 'मदीयाः शक्तिलेशा ये तत्तद्देवशरीरगाः' इति लक्ष्मीतन्त्रादिवचनाद्देवेष्वायुधेषु च विद्यमानः शक्तिभागः सर्वोप्येकीभूयाष्टादशभुजात्मकनारीशक्तिरूपेण परिणतोऽभूदित्याह । ततोऽतिकोपेत्यादिना ॥ ९ ॥

( २ चतुर्धरी ) चक्रिणो विष्णोः । ततः तत्र । सार्वविभक्तिकस्तसिः । ब्रह्मणः शंकरस्य वदनात् यदित्यनुषज्यते ॥९॥

( ३ शान्तनवी ) ततोऽनन्तरं अतिकोपपूर्णस्य चक्रिणः विष्णोः ब्रह्मणः शंकरस्य च ततः विस्तृतः तस्माच्च वदनात् सकाशात् महत्तेजः निश्चक्राम निरगात् । 'तेजः प्रभावे दीप्तौ च बले शुक्रे प्रकीर्तितं' ॥ ९ ॥

( ४ नागोजीभट्टी ) तत इति । द्वितीयं तत इति प्रसिद्धादित्यर्थकं वदनादित्यस्य विशेषणं ॥ ९ ॥

( ५ जगच्चन्द्रचन्द्रिका ) ततोऽतिकोपेति १० ॥ ९ ॥

( ६ दंशोद्धारः ) तत इति । कोपपूर्णस्य चक्रिणः ततः प्रसिद्धाद्वदनात् । तत्र तेषामित्यर्थे वा । सार्वविभक्तिकस्तसिः ॥ ९ ॥

**अन्येषां चैव देवानां शक्रादीनां शरीरतः । निर्गतं सुमहत्तेजस्तच्चैक्यं समगच्छत ॥ १० ॥**

( १ गुप्तवती ) ॥ १० ॥

( २ चतुर्धरी ) तत्तेजः ऐक्यं एकभावं समगच्छत अभवदित्यन्वयः । समगच्छतेति छान्दसत्वादात्मनेपदं । 'समो गम्यृच्छि' इत्यादेरकर्मकविषयत्वात् । अथवा ऐक्यं एकं । स्वर्थे यण् । समगच्छताऽभवत् ॥ १० ॥

( ३ शान्तनवी ) तेभ्यस्त्रिभ्यः अन्येषां शक्रादीनां च देवानां सुमहत्तेजः कर्तृ । शरीरत एव निर्गतं निरगमत् । तच्च तेजः कर्तृ । ऐक्यं एकं अपृथक् समगच्छत समपद्यत एकमभवत् । ऐक्यमिति । चातुर्वर्ण्यादित्वात् स्वार्थे ष्यञ् । 'अक-

र्मकाच' इत्यनुवृत्तौ 'समो गम्यृच्छि' इत्यादिसूत्रेण गमेरात्मनेपदं तङ् । तच्चैक्यं समपद्यतेत्यपि क्वचित्पाठः । सकर्मकत्वे तु परस्मैपदं । तच्चैक्यं एकतां समगच्छत ॥ १० ॥

**( ४ नागोजीभट्टी )** अन्येषां चेति । कुपितानामिति शेषः । यत्तेजः निर्गतं तच्च ब्रह्मादीनां तेजश्च ऐक्यं एकत्वं समगच्छत । छान्दसस्तङ् ॥ १० ॥

**( ५ जगच्चन्द्रचन्द्रिका )** अन्येषामिति ११ ॥ १० ॥

**( ६ दंशोद्धारः )** अन्येषामिति । एकमेव ऐक्यं । चातुर्वर्ण्यादेराकृतिगणत्वात्स्वार्थे ष्यञ् । एकमभवदित्यर्थः । 'अकर्मकात्' इति वर्तमाने 'समो गम्यृच्छिभ्याम्' इत्यात्मनेपदविधानात्सकर्मके तङसंभवात् । समपद्यतेति क्वचित्पाठः ॥१०॥

## अतीव तेजसः कूटं ज्वलन्तमिव पर्वतम् । ददृशुस्ते सुरास्तत्र ज्वालाव्याप्तदिगन्तरम् ॥ ११ ॥

**( १ गुप्तवती )** ॥ ११ ॥

**( २ चतुर्धरी )** अतीव अत्युच्छ्रितं कूटं पुञ्जं । तत्र पुराणान्तरप्रसिद्धे कात्यायनाश्रमे ॥ ११ ॥

**( ३ शान्तनवी )** ते इन्द्रादयः सुराः तत्र देवसदसि । यद्वा तत्र देवतेजसि देदीप्यमाने जृम्भमाणे जयति सति अतीव अत्यर्थं सुतरां अतितरां सुष्ठु ज्वालाव्याप्तदिगन्तरं ज्वालाभिरर्चिभिः व्याप्तं विद्योतितं दिशां दशानामन्तरं मध्यमन्तरालं येन तं तथोक्तं । ज्वलन्तं दीप्यमानं पर्वतमिव हेमाद्रिमिव तेजसः कूटं ददृशुः दृष्टवन्तः । 'मायानिश्चलयन्त्रेषु कैतवानृतराशिषु । अयोघने शैलशृङ्गे सीराङ्गे कूटमस्त्रियां' 'बलवत्सुष्ठु किमुत स्वत्यतीव च निर्भरे' ॥ ११ ॥

**( ४ नागोजीभट्टी )** अतीवेति । तत्रेत्यस्य काले इति देशे इति वा विशेषः ॥ ११ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** अतीव तेजस इति १२ ॥ ११ ॥

**( ६ दंशोद्धारः )** ॥ ११ ॥

## अतुलं तत्र तत्तेजः सर्वदेवशरीरजम् । एकस्थं तदभून्नारी व्याप्तलोकत्रयं त्विषा ॥ १२ ॥

**( १ गुप्तवती )** ॥ १२ ॥

**( २ चतुर्धरी )** एकस्थमेकाकारेण स्थितं । तदित्यव्ययमानन्तर्ये । नारीऽभून्नार्याकारेण परिणमत् । त्विषा दीप्त्या भासा व्याप्तं लोकत्रयं येन ॥ १२ ॥

**( ३ शान्तनवी )** तत्र देवानां सदसि तत्प्रागुत्पन्नं ब्रह्मविष्णुरुद्रमुखजं तेजः तत्पश्चादुत्पन्नं । इन्द्रादिसर्वदेवशरीरजं च तेजः उभयत्विषा अतुलं अनुपमं । त्विषा दीप्त्या व्याप्तलोकत्रयं एकस्थं एकस्मिन्नेव समवायिनि तिष्ठत् एकत्वेन अपृथक् भावेनावतिष्ठत् वर्तमानं सत् नारी अभूत् । तत्तेजः स्त्रीरूपमभूदिति भावः । 'नृनरयोर्वृद्धिश्च' इति शार्ङ्गरवादिपाठान्नृत्वजातिविवक्षायां ङीषि वृद्धिः ॥ १२ ॥

**( ४ नागोजीभट्टी )** अतुलमिति । तत् ततः । तत्र पुराणान्तरप्रसिद्धे कात्यायनाश्रमे तत्तेजः एकस्थं सन्नारी अभूत् । त्विषा दीप्त्या ॥ १२ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** अतुलं तत्रेति १३ ॥ १२ ॥

**( ६ दंशोद्धारः )** अतुलमिति । तत् ततः । आनन्तर्येऽव्ययं ॥ १२ ॥

## यदभूच्छाम्भवं तेजस्तेनाजायत तन्मुखम् । याम्येन चाभवन्केशा बाहवो विष्णुतेजसा ॥ १३ ॥

**( १ गुप्तवती )** ॥ १३ ॥

**( २ चतुर्धरी )** शाम्भवं शैवं तत्तेजस्तेनाजायत । तदित्यव्ययं । तस्या इत्यर्थः । तस्या मुखं तन्मुखं वा । याम्येन यमसंबन्धितेजसा ॥ १३ ॥

**( ३ शान्तनवी )** यत् शम्भोरिदं शाम्भवं तेजः तेन तस्याः नार्याः मुखं अजायत अजनिष्ट । याम्येन यमदेवताकेन तेजसा तस्याः नार्याः केशा अभवन् । विष्णुतेजसा तस्या नार्याः बाहवश्चाभवन् । 'दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः' इत्यत्र यमाच्चेति व्यक्तव्यमित्याहुः ॥ १३ ॥

**( ४ नागोजीभट्टी )** तेजोविभागेनाङ्गविभागमाह । यदिति । शम्भोः श्वेताङ्गतया तत्तेज आयातं मुखं श्वेतमित्यर्थः । विष्णोर्नीलवर्णतया बाहवोऽष्टादश नीलाः ॥ १३ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** यदभूच्छाम्भवमिति १४ ॥ १३ ॥

( ६ दंशोद्धारः ) यदभूदिति । याम्येन केशा अभवन्नित्यत्र तस्या इत्यध्याहारः । तन्मुखमित्यसमस्तं वा । तदित्यव्ययं तस्या इत्यर्थे ॥ १३ ॥

**सौम्येन स्तनयोर्युग्मं मध्यमैन्द्रेण चाभवत् । वारुणेन च जङ्घोरू नितम्बस्तेजसा भुवः ॥ १४ ॥**

( १ गुप्तवती ) सौम्येनेति । सौम्यशब्दादण् । सोमशब्दाच्छान्दसो वा व्यण् । जङ्घोरू इति भिन्ने पदे । नितम्बः कटिपश्चाद्भागः ॥ १४ ॥

( २ चतुर्धरी ) सौम्येन चान्द्रमसेन तेजसा । जङ्घोर्विति प्राण्यङ्गत्वादेकवद्भावः । दीर्घपाठस्तु एकवद्भावस्य वैदिकः। तथा समर्थनीयः । अन्य आह । जङ्घासहितौ ऊरू जङ्घोरू इति । वारुणेनैव जङ्घा अभवत् । ऊरू नितम्बस्तेजसां भुव इतिवा । नितम्बः कटिपश्चाद्भागः ॥ १४ ॥

( ३ शान्तनवी ) सौम्येन सोमदेवताकेन तेजसा तस्या नार्याः स्तनयोः युग्ममभवत् । ऐन्द्रेण तेजसा मध्यं अभवत् । वरुणसंबन्धिना वारुणेन तेजसा जङ्घोरू जङ्घाभ्यां सहितौ ऊरू जङ्घोरू अभवतां । जङ्घे च ऊरू च वारुणेन तेजसा प्रत्येकमभूतामित्यर्थः । अन्यथा जानुबाहुवत् प्राण्यङ्गत्वादेकवद्भावान्नपुंसकत्वाद्ध्रस्वत्वं स्यात् । भुवस्तेजसा नितम्बः कटिप्रदेशः अभवत् । जङ्घोरू इति नदधिपयअदित्वान्नैकवचनमिति पक्षे जङ्घा च ऊरुश्चेति जात्यैकवचनं विग्रहे ॥ १४ ॥

( ४ नागोजीभट्टी ) सौम्येनेति । सोमसंबन्धिनेत्यर्थः । छान्दसत्वादिदमर्थेऽपि यण् । अत एव श्वेतस्तनी ऐन्द्रेण मध्यं रक्तं । जङ्घे ऊरू इत्यत्र पूर्वनिपातैकवद्भावविधेरनित्यत्वान्न दोषः । भिन्ने पदे वा । जङ्घे ऊरू च वारुणेनेत्यन्वयः । भुवः पृथ्व्याः नितम्बः कटिपश्चाद्भागः ॥ १४ ॥

( ५ जगच्चन्द्रचन्द्रिका ) सौम्येनेति ॥ १५ ॥ १४ ॥

( ६ दंशोद्धारः ) सौम्येनेति । वारुणेन जङ्घा ऊरू नितम्बश्च भुवस्तेजसेति संबन्धः । चकारो भिन्नक्रमः नितम्ब इत्यस्याग्रे बोध्यः । केचित् जङ्घोर्विति । प्राण्यङ्गत्वादेकवद्भावे अर्शआदित्वाद्दीर्घ इत्याहुः । तन्न । द्वन्द्वे जङ्घोरुशब्दस्य पूर्वनिपातप्रसङ्गात् 'लक्षणहेत्वोः' इत्यादिनिर्देशात्पूर्वनिपातानियमाद्वा कथंचिद्योज्यं । जङ्घासहिते ऊरू इति वा बोध्यम् । जङ्घोरु इति ह्रस्वपाठः सुगमः ॥ १४ ॥

**ब्रह्मणस्तेजसा पादौ तदङ्गुल्योऽर्कतेजसा । वसूनां च कराङ्गुल्यः कौबेरेण च नासिका ॥१५॥**

( १ गुप्तवती ) ॥ १५ ॥

( २ चतुर्धरी ) तदङ्गुल्यः पादाङ्गुल्यः वसूनां तेजसा इत्यनुषज्यते ॥ १५ ॥

( ३ शान्तनवी ) ब्रह्मणस्तेजसा तस्या नार्याः पादावभवतां । तदङ्गुल्यः पादयोरङ्गुल्यः अर्कतेजसा अभवन् । अष्टानां वसूनां च तेजसा कराङ्गुल्यः अभवन् । कौबेरेण कुबेरसंबन्धिना तेजसा नासिका अभवत् ॥ १५ ॥

( ४ नागोजीभट्टी ) ब्रह्मण इति । अतएव पादौ रक्तौ । एतदुक्तं वैकृतिकरहस्ये । 'श्वेतानना नीलभुजा सुश्वेतस्तनमण्डला । रक्तमध्या रक्तपादा नीलजङ्घोरुरुन्मदा । सुचित्रजघना चित्रमाल्याम्बरविभूषणा । चित्रानुलेपना कान्तिरूपसौभाग्यशालिनी' इति । एवंच रूपेणापि त्रिगुणत्वं सूचितम् । स्वस्य चित्रत्वात् चित्रमाल्यादिधारणं । वसूनामित्यस्य तेजसेति शेषः । एवमन्यत्रापि ॥ १५ ॥

( ५ जगच्चन्द्रचन्द्रिका ) ब्रह्मणस्तेजसेति १६ ॥ १५ ॥

( ६ दंशोद्धारः ) ब्रह्मण इति । तदङ्गुल्यः पादाङ्गुल्यः नतु तस्या अङ्गुल्यः । सर्वनाम्नामुत्सर्गतः प्रधानपरामर्शित्वात् कराङ्गुल्य इत्यस्य वैयर्थ्यापत्तेश्च ॥ १५ ॥

**तस्यास्तु दन्ताः संभूताः प्राजापत्येन तेजसा । नयनत्रितयं जज्ञे तथा पावकतेजसा ॥ १६ ॥**

( १ गुप्तवती ) प्राजापत्येन दक्षप्रजापतिसंबन्धिना ॥ १६ ॥

( २ चतुर्धरी ) प्राजापत्येन दक्षप्रजापतिसंबन्धिना तेजसेति वामनपुराणदर्शनात् । जज्ञे जातं ॥ १६ ॥

( ३ शान्तनवी ) तस्या नार्याः दन्तास्तु प्राजापत्येन प्रजापतिसंबन्धिना तेजसा संभूताः समभवन् । प्राग्दीव्यतो येषु अर्थेषु 'दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः' । तथा नयनत्रितयं पावकतेजसा वह्नितेजसा जज्ञे अजनिष्ट । जनेः कर्तरि परोक्षे लिड्यात्मनेपदं ॥ १६ ॥

( ४ नागोजीभट्टी ) तस्या इति । प्राजापत्येन दक्षादितेजसा । तेन ब्रह्मणस्तेजसा पादावित्यनेन न विरोधः । पावकोऽग्निः ॥१६ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** तस्यास्तु दन्ता इति १७ ॥ १६ ॥

**( ६ दंशोद्धारः )** तस्या इति । प्राजापत्येन दक्षादिसंबन्धिना ॥ १६ ॥

**भ्रुवौ च संध्ययोस्तेजः श्रवणावनिलस्य च। अन्येषां चैव देवानां संभवस्तेजसां शिवा ॥ १७ ॥**

**( १ गुप्तवती )** संध्ययोः सायंप्रातस्त्रैवर्णिकवन्दनीयदेवतयोः । तेजः कर्तृ । युगलभ्रुवौ जज्ञे । भ्रूयुग्मात्मना परिणतं । तेजसां संभवः एकशरीरात्मना परिणाम एव शिवा ॥ १७ ॥

**( २ चतुर्धरी )** संध्ययोः पूर्वपरयोस्तेजसः भ्रुवावभूतां । करणकर्तृत्वं । साध्वसिश्छिनत्ति इतिवत् । श्रवणौ कर्णौ संभवतीति संभवः कार्यं । अन्येषां वायुनासत्यविश्वकर्मप्रभृतीनां देवानां तेजसां शिवासंभव इत्यन्वयः । अनादिष्टलिङ्गत्वात्पुंस्त्वं ॥ १७ ॥

**( ३ शान्तनवी )** तस्या नार्याः ये भ्रुवौ तत्संध्ययोस्तेजसः । यद्वा यत्संध्ययोस्तेजः तत्तस्या नार्या भ्रुवौ इति ह्युभयथा योज्यं । तथा अनिलस्य वायोः यत्तेजः तौ तस्या नार्याः श्रवणौ शब्दग्रहौ । यद्वा यौ तस्या नार्याः श्रवणौ शब्दग्रहौ तत् अनिलस्य वायोः तेज इत्युभयथापि योज्यं । तदित्थं । उक्तानां च ततोऽन्येषां च देवानां च संबन्धिनां तेजसां यः संभवः समुदायः सा शिवा सर्वमङ्गला देवी । यद्वा या शिवा स देवानां तेजसां संभवः इत्युभयथापि योज्यं । निर्दिश्यमानप्रतिनिर्दिश्यमानयोरेकत्वमापादयन्ति । सर्वनामानि पर्यायेण तल्लिङ्गसंख्याभाञ्जि भवन्ति । श्रूयते शब्द आभ्यामिति करणे ल्युटि श्रवणौ शब्दग्रहौ इति पुल्लिङ्गता । 'कर्णशब्दग्रहौ श्रोत्रं श्रुतिः स्त्री श्रवणं श्रवः' इत्यभिधानतस्तु नपुंसकत्वेन । श्रवणे अनिलस्य चेति पाठोपि सभ्यः ॥ १७ ॥

**( ४ नागोजीभट्टी )** भ्रुवौ चेति । संध्ययोस्तेजः भ्रुवावभूतामित्यन्वयः । करणस्यैव कर्तृत्वविवक्षा । 'पुंनपुंसकयोः कर्णः श्रवणः श्रवणं श्रुतौ' इति हेममाली । अन्येषां च देवानां संबन्धितेजसां शिवा चण्डीसंभवः । एकीभावः कार्यं वेत्यर्थः । एव प्रसिद्धौ ॥ १७ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** भ्रुवौ च संध्ययोरिति १८ ॥ १७ ॥

**( ६ दंशोद्धारः )** ॥ १७ ॥

**ततः समस्तदेवानां तेजोराशिसमुद्भवाम् । तां विलोक्य मुदं प्रापुरमरा महिषार्दिताः ॥ १८ ॥**

**( १ गुप्तवती)** ॥ १८ ॥

**( २ चतुर्धरी )** मुदं चित्तोल्लासं ॥ १८ ॥

**( ३ शान्तनवी )** ततः शिवायाः देव्या आविर्भावानन्तरं समस्तदेवानां तेजोराशिसमुद्भवां तेजःपुंजात्समुद्भवन्तीं तां सर्वमङ्गलां देवीं विलोक्य अमराः प्राक् महिषार्दिता अपि महिषासुरेण हिंसिता अपि मुदं प्रीतिं प्रापुः प्राप्तवन्तः । अर्द हिंसायां चुरादिः । क्तः कर्मणि ॥ १८ ॥

(ततो[1] देवा ददुस्तस्यै स्वानि स्वान्यायुधानि च ।
ऊचुर्जयजयेत्युच्चैर्जयन्तीं ते जयैषिणः ॥ १९ ॥

ततो देवीदर्शनतः प्रमोदावाप्त्यनन्तरं ते देवा जयैषिणः सन्तः तां देवीं जयन्तीं जयजय इत्युच्चैरूचुः । अथ ते देवाः सर्वेऽपि तस्यै देव्यै स्वानि स्वान्यायुधानि च ददुः ॥ १९ ॥)

**( ४ नागोजीभट्टी )** तत इति । तेजोराशिसमुद्भवामिति सापेक्षत्वेपि गमकत्वात्समासः । मुदं हर्षम् । ब्रह्मादिषु विद्यमानस्वतेजसैव भगवती आविर्भूतेति तात्पर्यं । एवमायुधदानमपि बोध्यम् ॥ १८ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** ततः समस्तेति १९ ॥ १८ ॥

**( ६ दंशोद्धारः )** तत इति । तेजोराशिसमुद्भवां इत्यस्यावयवोत्पत्तिमात्रे तात्पर्यं नतु देव्याः । ब्रह्मादीनां देव्यधीनत्वेन पूर्वोक्तेन सह विरोधात् । अनित्यत्वापत्तेश्च ॥ १८ ॥

**शूलं शूलाद्विनिष्कृष्य ददौ तस्यै पिनाकधृक् । चक्रं च दत्तवान्कृष्णः समुत्पाद्य स्वचक्रतः १९**

**( १ गुप्तवती )** शूलं शूलादित्यतः प्राक् । 'ततो देवा ददुस्तस्यै स्वानि स्वान्यायुधानि च' इत्यर्धमधिकं क्वचित्पठ्यते । इदमर्धमेव स्वीकृत्य कबन्धा युयुधुर्देव्या इत्यर्धमुत्तरश्लोकेन पुनरुक्तं कैश्चिदपठ्यमानं परित्यज्याध्यायपाठे तु शेषश्च सर्वनागेश

[1] इदं पद्यं पाठकर्तृभिर्न गृह्यते । सर्वैर्व्याख्यातृभिर्न व्याख्यातं च । केवलं शान्तनव्यामेवास्य संग्रहः ।

इत्यादिश्लोकेषु मन्त्रत्वसामञ्जस्यं संपद्यत इति द्रष्टव्यम् । चक्रं चेति चकाराद्गदामपि । वैकृतिकरहस्ये गदयैव सहाष्टादशायुधसंख्यापूर्तिस्मरणात् ॥ १९ ॥

**( २ चतुर्धरी )** विनिष्कृष्य । उत्पाद्येति यावत् । पिनाकधृक् महादेवः । कृष्णः स्वचक्रतः सुदर्शनात् समुत्पाद्य जनयित्वा । समुत्पाद्येतिवा पाठः । एवमुत्तरत्रापि ॥ १९ ॥

**( ३ शान्तनवी )** देवायुधानि मन्त्रध्यानवशंवददेवताकृतीन्यत्यद्भुतशक्तीनीति शूलात् शूलायुधदैवतात् विनिष्कृष्य आकृष्य पिनाकधृक् पिनाकी शिवः तस्यै देव्यै शूलमायुधं स्वसदृक्षमायुधं ददौ दत्तवान् । आयुधाधिदेवतासामर्थ्यादायुधं स्वसदृक्षमायुधं सूते यत्तत्तस्यै दत्तवानिति भावः । 'अस्त्री शूलं रुगायुधं' । कृष्णः विष्णुः स्वचक्रतः सुदर्शनात् चक्रं समुत्पाद्य आकृष्य तस्यै देव्यै दत्तवान् । यथा देवतेजोभिः तेजोमयी देवी समभवत् तथा तदायुधान्यपि देवायुधसमुद्भवान्येव दैवतेच्छयेति नात्राश्चर्यमिति भावः ॥ १९ ॥

**( ४ नागोजीभट्टी )** शूलमिति । विनिष्कृष्य आकृष्येत्यर्थः । कृषेर्ण्यन्तस्य रूपं । एवमग्रेपि । अत्र चक्रं चेति चाद्गदात् ॥ १९ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** शूलं शूलादिति २० ॥ १९ ॥

**( ६ दंशोद्धारः )** ॥ १९ ॥

## शङ्खं च वरुणः शक्तिं ददौ तस्यै हुताशनः । मारुतो दत्तवांश्चापं बाणपूर्णे[1] तथेषुधी ॥ २० ॥

**( १ गुप्तवती )** इषुधी तूणीरौ ॥ २० ॥

**( २ चतुर्धरी )** वरुणश्च शङ्खं दत्तवानित्यनुषज्यते । चापं धनुः । बाणपूर्णे अक्षयबाणे इषुधी तूणौ । 'तूणोपासङ्गतूणीरनिषङ्गा इषुधिर्द्वयोः' इत्यमरः । इषुधी तूणौ ॥ २० ॥

**( ३ शान्तनवी )** वरुणश्च शङ्खं तस्यै देव्यै ददौ । हुताशनश्च अग्निः तस्यै देव्यै शक्तिमायुधविशेषं ददौ । अत्रापि शङ्खतः शक्तिश्च शङ्खं शक्तिं चाकृष्य दत्तवन्तौ ताविति भावः । मरुदेव मारुतः मारुतो वायुस्तस्यै देव्यै चापं दत्तवान् । तथा मारुतएव बाणपूर्णे शरसंभृते इषुधी तस्यै देव्यै दत्तवान् । अक्षयबाणपूर्णे तूणौ दत्तवान् । 'तूणोपासङ्गतूणीरनिषङ्गा इषुधिर्द्वयोः' । इषवः धीयन्तेऽत्र । इषुधी इति द्विवचनं सव्यापसव्याभ्यां चापाकर्षणसूचनार्थं ॥ २० ॥

**( ४ नागोजीभट्टी )** शङ्खं चेति । वरुणाच्छङ्खस्य । अग्नेः शक्तेः । वायोश्चापबाणयोर्लाभ इत्यर्थः । शङ्खं चेति चकारो वक्ष्यमाणपाशसमुच्चय इत्यर्थे वा ॥ २० ॥

**( ५ जगच्चन्द्रचन्द्रिका )** शङ्खं च वरुण इति २१ ॥ २० ॥

**( ६ दंशोद्धारः )** शङ्खमिति । इषवो बाणा धीयन्तेऽनयोस्ताविषुधी तूणौ । द्विवचनं तु सव्यासव्याभ्यां चापाकर्षणसूचनाय ॥ २० ॥

## वज्रमिन्द्रः समुत्पाद्य कुलिशादमराधिपः । ददौ तस्यै सहस्राक्षो घण्टामैरावताद्गजात् ॥ २१ ॥

**( १ गुप्तवती )** ॥ २१ ॥

**( २ चतुर्धरी )** कालदण्डात् समुत्पाद्येत्यनुषज्यते ॥ २१ ॥

**( ३ शान्तनवी )** अमराधिपः सहस्राक्षः इन्द्रः शचीपतिः कुलिशात् वज्रात् सकाशात् वज्रं पविं समुत्पाद्य आकृष्य तस्यै देव्यै ददौ । किंच स एव इन्द्रः शचीपतिः ऐरावतात् स्वर्गगजात् सकाशात् घण्टां च महतीं आकृष्य तस्यै देव्यै ददौ । 'वज्रोऽस्त्री हीरके पवौ' 'संभवे व्यभिचारे च स्याद्विशेषणमर्थवत्' । इदि परमैश्वर्ये । इन्दति इन्द्रः । सोऽन्योपि स्यात् अत उक्तं अमराधिप इति । सोऽन्योपि देवः स्यात् अत उक्तं सहस्राक्ष इति । सहस्रमक्षीणि यस्य स तथोक्तः । सोऽहिः शेषोपि सहस्राननत्वात् सहस्रमेवाक्षीणि यस्येत्यवधृतविग्रहत्वस्य विवक्षितत्वाददोषः । रूढिर्योगमपहरतीतितु न्यायोऽत्र नाश्रितः । तत्र ह्याश्रितेऽयं व्यावृत्त्या कीर्तनेन शेषो नास्तीति यद्यपि स्यात् तथापि पदाश्रयणजनितः पौनरुक्त्यदोषः प्रसज्येतेत्यलं विस्तरेण । 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्' समासान्तः ॥ २१ ॥

**( ४ नागोजीभट्टी )** वज्रमिति । देयभेदादेकस्यैव दातुः क्वचित्पुनरुपादानेपि न दोषः ॥ २१ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** वज्रमिन्द्र इति २२ ॥ २१ ॥

**( ६ दंशोद्धारः )** वज्रमिति । कुलिशात् वज्रात् ॥ २१ ॥

---

१ 'बाणपूर्णौ' इत्यपि पाठः ।

**कालदण्डाद्यमो दण्डं पाशं चाम्बुपतिर्ददौ । प्रजापतिश्चाक्षमालां ददौ ब्रह्मा कमण्डलुम् ॥ २२ ॥**

**( १ गुप्तवती )** ॥ २२ ॥

**( २ चतुर्धरी )** अम्बुपतिर्वरुणः ब्रह्मा अक्षमालां कमण्डलुं च ददावित्यन्वयः । प्रजापतिरिति ब्रह्मणो विशेषणं ब्रह्मा अक्षमालां कमण्डलुं चेति वामनपुराणदर्शनात् ॥ २२ ॥

**( ३ शान्तनवी )** यतः अन्तकः कालदण्डात् आकृष्य दण्डं कालदण्डं आयुधं तस्यै देव्यै ददौ । अम्बुपतिश्च वरुणः पाशादाकृष्य पाशं ददौ । तस्यै देव्यै पाशाख्यं शस्त्रं ददौ । 'अश्वाख्यशालिशीग्रार्थे? पाशो बन्धनशस्त्रयोः' । प्रजापतिर्ब्रह्मा तस्यै देव्यै अक्षमालां जपमालां ददौ । कमण्डलुं च ददौ । 'अत्री कमण्डलुः कुण्डी' । ब्रह्मा विप्रोऽपि कश्चित्स्यात् अत उक्तं प्रजापतिरिति । स मनुरपि स्यात् अत उक्तं ब्रह्मेति । 'वेदस्तत्त्वं तपो ब्रह्म ब्रह्मा विप्रः प्रजापतिः' ॥ २२ ॥

**( ४ नागोजीभट्टी )** कालेति । उत्पाट्येति शेषः । प्रजानां पतिर्ब्रह्मा । अक्षमालां कमण्डलुं च ददावित्यन्वयः । ब्रह्माक्षमालां कमण्डलुमिति वामनपुराणात् ॥ २२ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** कालदण्डादिति २३ ॥ २२ ॥

**( ६ दंशोद्धारः )** प्रजेति । प्रजापतिरिति ब्रह्मणो विशेषणं । दक्षो वा प्रजापतिः ॥ २२ ॥

**समस्तरोमकूपेषु निजरश्मीन्दिवाकरः । कालश्च दत्तवान् खड्गं तस्याश्चर्म च निर्मलम् ॥ २३ ॥**

**( १ गुप्तवती )** ॥ २३ ॥

**( २ चतुर्धरी )** कालश्चेति । कालो निमिषाद्यभिमानिनी देवता तस्या इति संक्षेपकत्वात् संप्रदानत्वं । यद्वा संबन्धविवक्षायां षष्ठी । अन्य आह । खड्गं दत्तवान् । तस्य खड्गस्य चर्म च दत्तवान् । चर्म किंभूतं । निर्मलं प्रदीप्तं । असु दीप्तौ इत्यस्य धातोः क्विपि रूपं । अथवा चतुर्थ्येकवचनं । 'बहुलं छन्दसि' इति सूत्रेण छन्दसि चतुर्थ्यर्थे षष्ठी बहुलं स्यात् । तस्यै इत्यर्थे तस्या इत्यर्थः ॥ २३ ॥

**( ३ शान्तनवी )** रविः निजान् आत्मीयान् रश्मीन् किरणान् तस्या देव्याः समस्तेषु सर्वेषु रोम्णां कूपेषु आधारगतेषु ददौ निक्षिप्तवान् । 'किरणप्रग्रहौ रश्मी' 'स्वके नित्ये निजं त्रिषु' । कालो यमः तस्यै देव्यै निर्मलं खड्गं निर्मलं स्वच्छं चर्म च दत्तवान् । अङ्गत्राणसाधनं फलकं चर्म चर्ममयत्वाच्चर्म दत्तवान् । 'फलकोस्त्री फलं चर्म' कालो मृत्यौ महाकाले यमनेहसि च स्मृतः ॥ २३ ॥

**( ४ नागोजीभट्टी )** समस्तेति । कालस्तदभिमानिनी देवता । तस्या इति संबन्धत्वेन विवक्षायां षष्ठी ॥ २३ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** समस्तरोमेति २४ ॥ २३ ॥

**( ६ दंशोद्धारः )** समस्तेति । तस्यै इति वक्तव्ये तस्या इति षष्ठी तु शेषत्वविवक्षया रजकस्य वस्त्रं ददातीतिवत् । यद्वा तस्य आः च्छेदः इत्यव्ययमनुरूपार्थे । तस्य खड्गस्य आः योग्यं चर्मेत्यर्थः । तस्यै इति पाठः सुगमः ॥ २३ ॥

**क्षीरोदश्चामलं हारमजरे च तथाम्बरे । चूडामणिं तथा दिव्यं कुण्डले कटकानि च ॥ २४ ॥**

**( १ गुप्तवती )** ॥ २४ ॥

**( २ चतुर्धरी )** अजरे अविनश्वरे नित्यनूतने अम्बरे वाससी । कटकानि वलयानि ॥ २४ ॥

**( ३ शान्तनवी )** क्षीराण्युदकानि यस्य यस्मिन्वा स क्षीरोदश्च । 'उदकस्योदः संज्ञायां' क्षीराब्ध्यधिदेवताः अमलं हारं मुक्ताहारं तस्यै देव्यै दत्तवान् । तथा सएव क्षीरोदः तस्यै देव्यै अजरे च नूतने जरारहिते अम्बरे वाससी दत्तवान् । 'अम्बरं व्योम्नि वाससि' । चूडामणिरित्यारभ्य श्लोकत्रयमेककर्तृकैकक्रियकं द्रष्टव्यं । तथाहि विश्वकर्मा देवशिल्पी सूर्योपि । यदभ्यधुः । 'विश्वकर्मार्कसुरशिल्पिनोः' इति । विश्वस्य कर्मास्मादर्कात् विश्वकर्मास्य सुरशिल्पिन इति विश्वकर्मा स देवशिल्पी तस्यै देव्यै तथा चातुर्येण रचितं दिव्यं दिवि भवं । 'द्युप्रागपागुदक्प्रतीचो यत्' । चूडामणिं शिरोरत्नं ददौ । तथा कुण्डले कर्णवेष्टने सुवर्तुले तस्यै देव्यै स एव विश्वकर्मा ददौ । कटकोऽर्धर्चादित्वादस्त्रियां । तथा स एव तस्यै देव्यै कटकानि वलयानि ह्रस्वसूत्राख्यानि च ददौ । 'कटकोर्धर्चादित्वादस्त्रियां ॥ २४ ॥

**( ४ नागोजीभट्टी )** क्षीरोदश्चेति । अङ्गुलीयकरत्नदानान्तं क्षीरोदः कर्ता ॥ २४ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** क्षीरोदश्चेति २५ ॥ २४ ॥

**( ६ दंशोद्धारः )** ॥ २४ ॥

**अर्धचन्द्रं तथा दिव्यं केयूरान्सर्वबाहुषु। नूपुरौ विमलौ तद्वद्ग्रैवेयकमनुत्तमम् ॥ २५ ॥**

**( १ गुप्तवती )** ॥ २५ ॥

**( २ चतुर्धरी )** केयूरान् अङ्गदानि । 'अङ्गदं तु केयूरं पुंनपुंसकं' इत्यभिधानात् । नूपुरौ हंसकटकौ । ग्रैवेयकं ग्रीवाभरणं । अनुत्तमं न विद्यते उत्तमं यस्मात् ॥ २५ ॥

**( ३ शान्तनवी )** तथा स एव तस्यै देव्यै शुभ्रं अर्धचन्द्रं अर्धचन्द्रस्य समप्रविभागः अर्धचन्द्रः तं ददौ । 'अर्धं नपुंसकं' इति समासः । 'परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः' । तथा स एव विश्वकर्मा तस्यै देव्यै सर्वबाहुषु सर्वेषु बाहुषु केयूरान् केयूराणि अङ्गदानि ददौ । केयूरोर्धर्चादित्वादस्त्रियां । तद्वत्पूर्ववत्स एव विश्वकर्मा तस्या देव्याः पादयोः नूपुरौ मञ्जीरौ विमलौ निर्मलौ मञ्जीरौ ददौ । 'पादाङ्गदं तुलाकोटिर्मञ्जीरो नूपुरोऽस्त्रियां । हंसकः पादकटकः' । तद्वत् पूर्ववत् चातुर्येण रचितं । अनुत्तमं नान्यदुत्तमं यस्मात्तदनुत्तमं वरेण्यं ग्रैवेयकं ग्रीवालंकारं कण्ठभूषणं तस्यै देव्यै ददौ । विश्वकर्मा 'कुलकुक्षिग्रीवाभ्यः श्वास्यलंकारेषु' इति ढकञ् । नात्रसत्कारिणां ग्रैवमित्यत्र त्वनलंकारत्वादणेव ॥ २५ ॥

**( ४ नागोजीभट्टी )** विश्वकर्मणः परशुः अस्त्रकवचदातृत्वं चूडामण्यादिकवचदानान्तं विश्वकर्मकर्तृत्वमित्यन्वयः । तन्मते अर्धचन्द्रशब्देन तदाकारो ललाटभूषणविशेषः ॥ २५ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** अर्धचन्द्रमिति २६ ॥ २५ ॥

**( ६ दंशोद्धारः )** ॥ २५ ॥

**अङ्गुलीयकरत्नानि समस्तास्वङ्गुलीषु च । विश्वकर्मा ददौ तस्यै परशुं चातिनिर्मलम् ॥ २६ ॥**

**( १ गुप्तवती )** ॥ २६ ॥

**( २ चतुर्धरी )** अङ्गुलीयकरत्नान्यङ्गुलीयकभूषणमुख्यानि ॥ २६ ॥

**( ३ शान्तनवी )** तथा स एव विश्वकर्मा देवशिल्पी तस्या देव्याः समस्तासु सकलासु अङ्गुलीषु योग्यानि अङ्गुलीयकरत्नानि समस्तानि तस्यै देव्यै ददौ । 'जिह्वामूलाङ्गुलेश्छः' स्वार्थे कन् । अङ्गुलीषु भवानि अङ्गुलीयकानि । अङ्गुलीयकानां रत्नानि अङ्गुलीयकान्येव वा रत्नानि । 'रत्नं स्वजातिश्रेष्ठेऽपि' इत्यभिधानतः गुणतः श्रेष्ठानि मनोज्ञानि अङ्गुलीयकरत्नानि । रमन्तेऽस्मिन् रत्नं । 'जातौ जातौ यदुत्कृष्टं तद्रत्नमभिधीयते' । यद्वा अङ्गुलीयकानि च रत्नानि चेति द्वन्द्वः । तथा सएव विश्वकर्मा तस्यै देव्यै अतिनिर्मलं परशुं च परान् श्यति खण्डयति परशुः तं परश्वधं ददौ । 'द्वयोः कुठारः स्वधितिः परशुश्च परश्वधः' ॥ २६ ॥

**( ४ नागोजीभट्टी )** ॥ २६ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** अङ्गुलीयकेति २७ ॥ २६ ॥

**( ६ दंशोद्धारः )** ॥ २६ ॥

**अस्त्राण्यनेकरूपाणि तथाभेद्यं च दंशनम् । अम्लानपङ्कजां मालां शिरस्युरसि चापराम् ॥२७॥**

**( १ गुप्तवती )** अभेद्यं दंशनं कवचं ॥ २७ ॥

**( २ चतुर्धरी )** अनेकरूपाणि बहुप्रकाराणि । अभेद्यं भेत्तुमशक्यं दंशनं कवचं । चूडामण्यादिकं विश्वकर्मा ददावित्यन्वयः । अम्लानानि म्लानिहीनानि पङ्कजानि यस्यां ॥ २७ ॥

**( ३ शान्तनवी )** तथा अनेकरूपाणि अस्त्राणि तस्यै देव्यै ददौ विश्वकर्मा । शूलचक्रादिभ्यो देवैः दत्तेभ्योऽन्यान्यायुधानि अस्त्राणि तस्यै देव्यै दत्तवानित्यर्थः । अस्यन्ते अस्त्राणि । तथा स एव विश्वकर्मा अभेद्यं दंशनं तनुत्रं चर्म दंशनं च दिव्यं कवचं च तस्यै देव्यै ददौ । दंश्यते बध्यते दंशनं 'तनुत्रं वर्म दंशनं । उरच्छदः कंकटकोऽजगरः कवचोऽस्त्रियां' । अम्लानानि पङ्कजानि यस्यां सा । माल्यते धार्यते सा माला स्रक् । यद्वा नास्ति म्लानं म्लानिः सर्वदा येषां तानि अम्लानानि पङ्कजानि यस्यां सा तां । आपरां आसमंतादाप्ता आप्तिक्रियापेक्षया आशब्दस्योपसर्गत्वं । आपोऽम्भांसि यैः यानि वा तानि आपानि पङ्कजानि राति गृह्णाति आपरा तां । 'ऋक्पूरब्धूःपथामानक्षे' इति अः समासान्तः । 'ध्यन्तरुपसर्गेभ्योप ईत्' नतु 'ईत्वमनवर्णान्तादितिवक्तव्यम्' इति स्मरणात् । इत्थंच आपरां इति छेदः । यद्वा नास्ति परं श्रेष्ठं यतः सा आपरा अनुत्तमा तां । यद्वा न विद्यन्ते पराः शत्रवो यत्र धार्यमाणायां सा तां । यद्वा ततो देवीतः अपरा न परा अपरा अभिन्ना अपृथग्भूता सदैव संलग्ना तां । यद्वा शिरसि उरसि च अपरां पृथग्भूतां शिरसि मालां माल्यरूपां स्रजं 'माल्यं मालास्रजौ मूर्ध्नि' इत्यभिधानात् उरसि कण्ठात् प्रालम्बरूपां मालां 'प्रालम्बमृजुलम्बि स्यात् कण्ठादित्यभिधात् कण्ठाद्वक्षस्यवलम्बमानं माल्यं मालाख्यं प्रालम्बमुच्यते इति अपरत्वं पृथक्त्वं मालायाः ॥ २७ ॥

**( ४ नागोजीभट्टी )** अम्लानेत्यारभ्य पङ्कजदानान्तं जलधिः कर्ता । तत्र पङ्कजं हस्ते रत्नसिंहयोर्दाने हिमवानदददिति । दद दाने इत्यस्य लङि रूपम् । छान्दसत्वात्परस्मैपदम् ॥ २७ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** अम्लाण्यनेकेति २८ ॥ २७ ॥

**( ६ दंशोद्धारः )** ॥ २७ ॥

## अददज्जलधिस्तस्यै पङ्कजं चातिशोभनम् । हिमवान्वाहनं सिंहं रत्नानि विविधानि च ॥ २८ ॥

**( १ गुप्तवती )** ॥ २८ ॥

**( २ चतुर्धरी )** अददत् । ददातेरात्मनेपदिनोपि छान्दसत्वात् परस्मैपदं । एवं युयुधुरिति, नचोत्पत्स्यन्ति चापरे इति, निरीक्षिष्यामि यन्मुनीन् इति यथा परस्मैपदेप्यात्मनेपदं । भवेथाः सर्वदाम्बिके इति, बध्वा चान्यानकर्षतेति खड्गेन-निरकृंतत, प्राप्स्यसे मत्परिग्रहात् स्वराज्यं प्राप्स्यते भवानिति ॥ २८ ॥

**( ३ शान्तनवी )** जलधिः समुद्रः तस्यै देव्यै शिरसि उरसि विषये अपरामम्लानपङ्कजां मालां अददात् । डुदाञ् दाने । भूतानद्यतने लङ् परस्मैपदं । अदददिति पाठे तु चक्षिङो ङित्करणाल्लिङ्गात् । अनुदात्तेत्त्वनिबन्धनमात्मनेपदमनित्य-मित्यात्मनेपदाभावः । किंच स एव जलधिः तस्यै देव्यै अतिशोभनमत्यर्थं मनोहरं पङ्कजं लीलारविन्दं अददात् अदददा । हिमवान् अद्रिराजः तस्यै देव्यै सिंहं वाहनं ददौ । वाहयति प्रापयति तद्वाहनं । यद्वा वहति वाहनं 'वाहनमाहितात्' इति प्रयोगात् 'अन्येषामपि दृश्यते' इति दीर्घः । यद्वा उह्यते प्राप्यते अनेनेति वाहनं । 'वाहनमाहितात्' इति नि-पातनादुपधादीर्घत्वं । हिनस्ति सिंहः पञ्चास्यः कण्ठीरवः । किंच स एव हिमवान् तस्यै देव्यै च विविधानि नानाप्रकाराणि रत्नानि अददात् ॥ २८ ॥

**( ४ नागोजीभट्टी )** ॥ २८ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** अदददिति २९ ॥ २८ ॥

**( ६ दंशोद्धारः )** अदददिति । अदददिति परस्मैपदमार्षं । ददेरनुदात्तेत्त्वात् । आत्मनेपदानित्यत्वं वा कल्प्यं । अददादिति पाठः सुगमः ॥ २८ ॥

## ददावशून्यं सुरया पानपात्रं धनाधिपः । शेषश्च सर्वनागेशो महामणिविभूषितम् ॥ २९ ॥

**( १ गुप्तवती )** ॥ २९ ॥

**( २ चतुर्धरी )** सुरया अमृतेन अशून्यं पूरितं । मणिभ्यो महान् महामणिः तेनेत्यर्थः ॥ २९ ॥

**( ३ शान्तनवी )** धनाधिपः कुबेरः तस्यै देव्यै सुरया अशून्यं सर्वदा परिपूर्णं पानपात्रं ददौ । सूयते परिवास्यते सुरा गन्धोत्तमा । इमां पृथिवीं धत्ते धारयति सर्वनागेशः सर्वनागाधिपः शेषः अनन्तश्च महामणिविभूषितं । अग्रिमस्थे-नान्वयः ॥ २९ ॥

**( ४ नागोजीभट्टी )** ददाविति । अनेनाष्टादशभुजा सहस्रभुजा चैषेति सूचितम् । तदुक्तं वैकृतिकरहस्ये । 'अष्टादशभुजा पूज्या सा सहस्रभुजा सती' । अष्टादशभुजधार्याणां विशिष्योक्तेः सामान्यतः अन्यैरपि देवैरायुधैरित्युक्तेश्चेति भावः । 'आयु-धान्यत्र वक्ष्यन्ते दक्षिणाधःकरक्रमात् । अक्षमाला च कमलं बाणोऽसिः कुलिशं गदा । चक्रं त्रिशूलं परशुः शङ्खो घण्टा च पाशकः । शक्तिर्दण्डश्चर्म चापं पानपात्रं कमण्डलुः । अलंकृतभुजामेभिरायुधैः कमलासनाम् । सर्वदेवमयीमिशां महालक्ष्मीमिमां नृप । पूजयन्सर्वलोकानां स देवानां प्रभुर्भवेत्' । इति एवंस्वरूपायुधैरस्या ब्राह्मीत्वं वैष्णवीत्वं त्रिगुणात्वं च सर्वमूलभूतशक्तेरयं प्रादुर्भावस्तत्समान इति च सूचितम् । यद्यप्यत्र ब्रह्मादीनामिन्द्रादीनां च शरीरान्निष्क्रान्ततेजो देवीविग्रहरूपेणाभिव्यक्तमा-सीत् आयुधानि च देवैः स्वस्वशूलादिभ्यो विनिर्गमय्य दत्तानि इत्येवोक्तम् तथापि देवीशक्त्यंशा एव तत्तद्देवपालनीयैकदेश-पालनशक्तित्वेन ये देव्या निवेशितास्ते एव महिषवधेन सर्वलोकरक्षणाय पुनरेकीभूय देवीरूपं प्राप्ताः । एवं तदायुधाः निज-शक्त्यंशा अपीति बोध्यम् । 'अहं विभूत्या बहुभिः' इत्यादितृतीयचरितगतवचनसमूहात् । लक्ष्मीतन्त्रेपि शक्रं प्रति लक्ष्मी-वचनानि । 'महालक्ष्मीरहं शक्र पुनः स्वायंभुवेऽन्तरे । हिताय सर्वदेवानां जाता महिषमर्दिनी । मदीयाः शक्तिलेशा ये तत्र देवशरीरगाः । धृतं मया तैः संभूतै रूपं परमशोभनं । अयुधानि च देवानां यानि यानि सुरेश्वर । मच्छक्तयस्तदाका-राण्यायुधानि ममाभवन्' इति ॥ २९ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** ददावशून्यमिति ३० ॥ २९ ॥

**( ६ दंशोद्धारः )** ॥ २९ ॥

**नागहारं ददौ तस्यै धत्ते यः पृथिवीमिमाम् । अन्यैरपि सुरैर्देवी भूषणैरायुधैस्तथा ॥ ३० ॥**

**( १ गुप्तवती )** ॥ ३० ॥

**( २ चतुर्धरी )** नागहारं नागलोकोद्भवं । इमां धत्ते धारयति ॥ ३० ॥

**( ३ शान्तनवी )** नागहारं नागरूपं हारं तस्यै देव्यै ददौ । नागाः सर्पेभ्योऽन्ये देवयोनय इत्याहुः । 'अनन्तो नागराजः स्यात्सर्पराजस्तु वासुकिः । काद्रवेये गजे सीसे नागः स्यान्नागकेशरे' । यैरायुधालंकारादिकं देव्यै समर्पितं देवैस्ततोऽन्यैरपि सुरैः सर्वैर्विभूषणैस्तथा आयुधैश्च ॥ ३० ॥

**( ४ नागोजीभट्टी )** पूर्वश्लोकेन सह व्याख्यातास्य पद्यस्य टीका ॥ ३० ॥

**( ५ जगच्चन्द्रचन्द्रिका )** नागहारमिति ३१ ॥ ३० ॥

**( ६ दंशोद्धारः )** नागहारमिति । नागलोके भवो हारो नागहारः । नाग एव वा हारत्वमापन्नः ॥ ३० ॥

**संमानिता ननादोच्चैः साट्टहासं मुहुर्मुहुः । तस्या नादेन घोरेण कृत्स्नमापूरितं नभः ॥ ३१ ॥**

**( १ गुप्तवती )** ॥ ३१ ॥

**( २ चतुर्धरी )** साट्टहासं महाहाससहितं यथा स्यात् । कृत्स्नमशेषं नभो व्योम । भुवर्लोक इत्यर्थः । आपूरितमभिव्याप्तं ॥ ३१ ॥

**( ३ शान्तनवी )** संमानिता पूजिता सती देवी साट्टहासं अत्यधिकहासगर्भं यथा स्यात्तथा उच्चैः उदग्रं यथा स्यादुदात्तं वा यथा स्यात्तथा मुहुर्मुहुर्वारंवारं ननाद । नद अव्यक्ते शब्दे । सुखार्तो नादमानन्दतः सिंहनादं च कारणं । एतेन संग्रामतः शत्रून् संहारयिष्यामि इति वीररसाविर्भावः सूचितः । सिंहनादेन 'क्ष्वेडा तु सिंहनादः स्यात्' । सिंहस्येव नादो नदनं वीराणां योद्धुकामानां खलु भवति । अट्ट अतिक्रमणहिंसनयोः । भावे घञ् । अट्टनं अट्टः । अट्टेन जातो हासोऽट्टहासः । अट्टहासेन सहितं साट्टहासं । क्रियाविशेषणमेतत् । तस्या देव्याः घोरेण भयंकरेण नादेन सिंहनादेन कृत्स्नं नभः अन्तरिक्षं आपूरितं अभिव्याप्तं कवलितं ॥ ३१ ॥

**( ४ नागोजीभट्टी )** संमानितेति साट्टहासमिति नादक्रियाविशेषणम् । साट्टहासोत्यर्थहासः । नभइति भुवर्लोकोपलक्षणम् ॥ ३१ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** संमानितेति ३२ ॥ ३१ ॥

**( ६ दंशोद्धारः )** ॥ ३१ ॥

**अमायतातिमहता प्रतिशब्दो महानभूत् । चुक्षुभुः सकला लोकाः समुद्राश्च चकम्पिरे ॥ ३२ ॥**

**( १ गुप्तवती )** अमायता अपर्याप्ताधिकरणकरणकेन ॥ ३२ ॥

**( २ चतुर्धरी )** अमायतेति । मीयतेऽनयेति मा परिमाणं तां यता गच्छता मायता । न मायता अमायता । अपरिमितेनेत्यर्थः । यद्वा अमा (रवि)रश्मिविशेषः तां यता गच्छता । स्पृशतेति यावत् । 'अमा नाम रवे रश्मिः सूर्यलोके प्रतिष्ठितः' इति स्मरणात् । यद्वा अमायता सह गच्छता । अर्थादट्टहासेन । 'अमा सह समीपे च' इत्यभिधानात् । यद्वा मानं माया न विद्यते माया यस्य सोऽमायः तद्वदिव आचरतीत्यमायिः तेन अमायता । शत्रन्तात्तृतीयेत्यन्ये । यद्वा अमायस्य भावः अमायता अमितत्वं तया । अमायतातिमहतेत्येकं पदं । अतिमहतेति हेतुगर्भं विशेषणं । प्रतिशब्दो मुख्यसदृशध्वन्यन्तरं । चुक्षुभुश्चलिताः ॥ ३२ ॥

**( ३ शान्तनवी )** अथ च अमायता असमीपे आयता आगच्छता अतिमहता अतिदीर्घेण वर्धमानेन तेन सिंहनादेन घोरेण जनितः प्रतिशब्दः प्रतिध्वनिः महानभूत् । इण् गतौ । आङ्पूर्वः । यद्वा अनुपसर्गः । शतरि इणो यणादेशः । तृतीयान्तं नादेनेत्यस्य विशेषणं । अमायतेतिः । 'समीपार्थे सहार्थे च स्यादमेत्यतदव्ययं' । कश्चित्तु माङ्माने दैवादिकः आत्मनेपदानित्यत्वेन शत्रन्तं मायतेत्येतदित्याख्यत् । तन्न ङित्वनिमित्तात्मनेपदस्यानित्यत्वाभ्युपगमात् । यद्वा माङ्माने दिवादिः । भूतानद्यतने लङ् । तेन नादेन कृत्स्नं नभः आपूरितं सत् अमायत् परिमितं अजायत । अहो विभुः नभः अनन्तं सहत्परिमाणमपि तेन सिंहनादेन आपूरितत्वादमायत परिमितमजायतेत्याश्चर्योक्तिः । अन्यथा विभु तावन्न परिमीयते । परिमीयते चेद्विभुत्वव्याहतिरिति । तेन प्रतिशब्देन निमित्तेन सकला लोकाः चुक्षुभुः क्षोभमापुः । क्षुभ संचलने । 'लोकस्तु भुवने जने' । तेन प्रतिशब्देन समुद्राश्च चकम्पिरे सरित्पतयश्च कम्पमापुः । कपि चलने ॥ ३२ ॥

**( ४ नागोजीभट्टी )** अमायतेति । मा माने दैवादिकण्यन्ते नञ्समासः । तेन असंभवतेत्यर्थः । अस्य नभसीत्यादिः ॥ ३२ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** अमायतेति ३३ ॥ ३२ ॥

**( ६ दंशोद्धारः )** तस्या इति । मीयतेऽनयेति माता मातीति मायन् न मायन् अमायन् तेन । अमितेनेत्यर्थः । यद्वा अम इत्यव्ययं सहार्थे । सह गच्छता अट्टहासेन सहेत्यर्थः । यद्वा अमा सूर्यरश्मिविशेषः । 'अमानाम सूर्यरश्मिः सूर्यलोके प्रतिष्ठिताः' इति वचनात् तां यथाऽस्पृशतेत्यर्थः । यद्वा मानं मायः न विद्यते मायो यस्येत्यमायः । स इवाचरन्न मायन् तेन । घञन्तान्माधातोर्नञ्समासेऽमायशब्दादाचारक्विबन्तात् । यद्वा मानं मा तामयतीति मायः । कर्मण्यण् । न मायोऽमायस्तस्य भावोऽमायता तया । अतिमहतेति समस्तं पदं ॥ ३२ ॥

## चचाल वसुधा चेलुः सकलाश्च महीधराः । जयेति देवाश्च[1] मुदा तामूचुः सिंहवाहिनीम् ॥३३॥

**( १ गुप्तवती )** ॥ ३३ ॥

**( २ चतुर्धरी )** महीधराः पर्वताः । अर्थापत्त्यलंकारोऽयं ॥ ३३ ॥

**( ३ शान्तनवी )** चचाल वसुधा भूः चलनमाप । चल कम्पने । सकलाश्च महीधराः पर्वताः चेलुः कंपिरे कम्पमापुः । चल कम्पने । सर्वत्र कर्तरि लिट् । सिंहो वाहनं यस्याः सा सिंहवाहना तां सिंहवाहनां देवीं । जय लोकोत्कर्षेण वर्तस्वेति देवा ऊचुः । सिंहवाहिनीमिति पाठे सिंहाः वाहयत्यात्मानं सिंहवाहिनी तां सिंहवाहिनीं ॥ ३३ ॥

**( ४ नागोजीभट्टी )** चचालेति । महीधराः पर्वताः ॥ ३३ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** चचालेति ॥ ३४ ॥ ३३ ॥

**( ६ दंशोद्धारः )** जयेति ॥ ३२ ॥

## तुष्टुवुर्मुनयश्चैनां भक्तिनम्रात्ममूर्तयः । दृष्ट्वा समस्तं संक्षुब्धं त्रैलोक्यममरारयः ॥ ३४ ॥

**( १ गुप्तवती )** ॥ ३४ ॥

**( २ चतुर्धरी )** संक्षुब्धमाकुलीकृतं ॥ ३४ ॥

**( ३ शान्तनवी )** अथो एनां देवीं भक्तिनम्रात्ममूर्तयो मुनयस्तुष्टुवुःचकारादानर्चुश्च । भक्त्या नम्राः आत्ममूर्तयो येषां ते तथोक्ताः । आत्ममूर्तयः स्वकीयाः । तदित्थं । देव्याः साट्टहाससिंहनादेन समस्तं त्रैलोक्यं त्रिभुवनं संक्षुब्धं दृष्ट्वा प्राप्तसंक्षोभं वीक्ष्य ते सर्वे अमरारयः महिषासुरादयः दैत्याः सन्नद्धाखिलसैन्याः उदायुधाः सन्तः समुत्तस्थुः योद्धुमुत्थिता अभूवन् इत्यन्वयः । सम्यक् क्षुब्धं संक्षुब्धं । क्षुब्धशब्देन दध्यादिमथनेन साधनमुच्यते । क्षुधादन्यत्र जृंभितमित्येव भवति इह रूपसाम्यात्संक्षुब्धमिव संक्षुब्धं । यदाहुः । क्षुब्धस्वान्तेति निपातनान्मन्थातिरिक्तविषयः क्षुभितमिति प्राप्नोति तत्र परिहारः । क्षुब्धागिरिनदीत्याद्यमिति । 'क्षुब्धागिरिनदीत्याद्यसुपमानाद्भविष्यति' इति । त्रयो लोकाः त्रैलोक्यं । चातुर्वर्ण्यादित्वात्स्वार्थे ष्यञ् अमराणां अरयः अमरारयः । अमराः अरयो येषां ते अमरारयः महिषासुरादिदैत्याः ॥ ३४ ॥

**( ४ नागोजीभट्टी )** तुष्टुवुरिति । भक्त्या नम्रः अपकृष्टत्वज्ञानवानात्मा शरीरं येषां । संक्षुब्धं आकुलं जातमिति शेषः । अमरारयश्च संक्षुब्धा इत्यर्थः ॥ ३४ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** तुष्टुवुरिति ॥ ३५ ॥ ३४ ॥

**( ६ दंशोद्धारः )** आत्मा अन्तःकरणं । मूर्तिः शरीरं । दृष्ट्वेति । क्षुब्धमन्थेति निपातितत्वात्संक्षुब्धमिव संक्षुब्धमित्युपचारात्साधु ॥ ३४ ॥

## सन्नद्धाखिलसैन्यास्ते समुत्तस्थुरुदायुधाः । आः किमेतदिति क्रोधादाभाष्य महिषासुरः ॥३५॥

**( १ गुप्तवती )** ॥ ३५ ॥

**( २ चतुर्धरी )** सन्नद्धानि सज्जितानि अखिलसैन्यानि येषां । समुत्तस्थुः उद्योगं चक्रुः । उदायुधाः उद्यतास्त्राः । आ इत्यव्ययं क्रोधाविष्कारस्यानुकारे ॥ ३५ ॥

**( ३ शान्तनवी )** सन्नद्धाः व्यूढकण्टकाः अखिलाः सैन्याः सैनिकाः एषां सेनाधीश्वराणां ते तथोक्ताः । 'सन्नद्धो वर्मितः सज्जो दंशितो व्यूढकण्टकः' 'सेनायां समवेता ये सैन्यास्ते सैनिकाश्च ते' । योद्धुमूर्ध्वीकृतानि आयुधानि यैस्ते उदा-

---

[1] 'जयेति च मुदा देवास्तामूचुः सिंहवाहनां' इत्थमपि शान्तनवीस्थः पाठः ।

युधाः समुत्तस्थुः । 'अनोरूर्धकर्मणि' इत्युक्तेर्नात्रात्मनेपदं । 'आसु स्यात्कोपपीडयोः' । महिषासुरः आः एतत् किं इति क्रोधात् आभाष्य उक्त्वा ॥ ३५ ॥

( ४ नागोजीभट्टी ) सन्नद्धेति । युद्धाय सज्जानि धृतसन्नाहानि अखिलसैन्यानि येषां । आः इति क्रोधाविष्कारे । अनेन च महिषासुरस्य तमोमयत्वमुक्तम् । दूताप्रेरणात् कस्यचित्सैनिकस्य प्रथममप्रेषणाच्च स्वयमेव क्रोधजमाह । न प्रथममेव युद्धार्थं धावमानाच्च रूपेणापि तमोमयत्वाच्च । अतएव रजःसत्वाधिकदेव्यास्तद्धन्तृत्वम् ॥ ३५ ॥

( ५ जगच्चन्द्रचन्द्रिका ) सन्नद्धेति ३६ ॥ ३५ ॥

( ६ दंशोद्धारः ) आः किमिति । आ इत्यव्ययं क्रोधाविष्कारे । 'आसु स्यात्कोपपीडयोः' ॥ ३५ ॥

**अभ्यधावत तं शब्दमशेषैरसुरैर्वृतः । स ददर्श ततो देवीं व्याप्तलोकत्रयां त्विषा ॥ ३६ ॥**

( १ गुप्तवती ) ॥ ३६ ॥

( २ चतुर्धरी ) अभ्यधावत शब्दलक्ष्याभिमुखं गतवान् ॥ ३६ ॥

( ३ शान्तनवी ) अशेषैरसुरैर्वृतः सन् तं देव्याः शब्दं सिंहनादलक्षणं अभ्यधावत अभिययौ । धावु गतिशुद्ध्योः । स्वरितेत्त्वादात्मनेपदं । श्लोकद्वयमेकान्वयं द्रष्टव्यं । ततः अभिधावनानन्तरं स महिषासुरः तां देवीं ददर्श । कीदृशीं तां । त्विषा दीप्त्या तेजसा व्याप्तलोकत्रयां ॥ ३६ ॥

( ४ नागोजीभट्टी ) अभ्यधावतेति स्वरितेत् ॥ ३६ ॥

( ५ जगच्चन्द्रचन्द्रिका ) अभ्यधेति ३७ ॥ ३६ ॥

( ६ दंशोद्धारः ) ॥ ३६ ॥

**पादाक्रान्त्यानतभुवं किरीटोल्लिखिताम्बराम् । क्षोभिताशेषपातालां धनुर्ज्यानिःस्वनेन ताम् ॥ ३७ ॥**

( १ गुप्तवती ) ॥ ३७ ॥

( २ चतुर्धरी ) किरीटेनोल्लिखितं अम्बरं व्योम यया । धनुर्ज्यानिःस्वनेन क्षोभितान्यशेषपातालानि यया ॥ ३७ ॥

( ३ शान्तनवी ) पादाक्रान्त्या नतभुवं नम्रवसुंधरां किरीटेन उल्लिखिताम्बरां स्पृष्टगगनां । धनुर्ज्यायाः निस्वनेन च क्षोभिताशेषपातालां कम्पितसकलरसातलां ॥ ३७ ॥

( ४ नागोजीभट्टी ) देवीं विशेषयति सार्धेन । पादेति । धनुषो ज्यायाश्च निःस्वनेन । धनुषः केङ्कारः । ज्याया-ष्टङ्कारः ॥ ३७ ॥

( ५ जगच्चन्द्रचन्द्रिका ) पादाक्रान्त्येति ३८ ॥ ३७ ॥

( ६ दंशोद्धारः ) ॥ ३७ ॥

**दिशो भुजसहस्रेण समन्ताद्व्याप्य संस्थिताम् । ततः प्रववृते युद्धं तया देव्या सुरद्विषाम् ॥ ३८ ॥**

( १ गुप्तवती ) समन्ताद्व्याप्य संस्थितां इत्यस्योत्तरं 'अष्टाशीतिसहस्रेण सखीभिः परिवारिताम्' इत्यर्धमधिकं ॥ ३८ ॥

( २ चतुर्धरी ) समन्तात् सर्वतः ॥ ३८ ॥

( ३ शान्तनवी ) भुजसहस्रेण समन्तात्समन्ततः दिशः दश व्याप्य संस्थितां सम्यगवस्थितां । 'मुकुटं किरीटं पुन्नपुंसकं' धनुर्ज्या धनुषि आरोपिता मौर्वी । समन्तात्समन्तत इत्यर्थे अव्ययं । 'संस्थाधारे स्थितौ मृतौ' । ततो देवीदर्शनानन्तरं तया देव्या सह सुरद्विषां महिषासुरादीनां युद्धं प्रववृते प्रकर्षेण अवर्तिष्ट ॥ ३८ ॥

( ४ नागोजीभट्टी ) दिश इति । समन्तात्सर्वतः ॥ ३८ ॥

( ५ जगच्चन्द्रचन्द्रिका ) दिशो भुजेति ३९ ॥ ३८ ॥

( ६ दंशोद्धारः ) तत इति ॥ ३८ ॥

**शस्त्रास्त्रैर्बहुधामुक्तैरादीपितदिगन्तरम् । महिषासुरसेनानीश्चिक्षुराख्यो महासुरः ॥ ३९ ॥**

( १ गुप्तवती ) ॥ ३९ ॥

( २ चतुर्धरी ) शस्त्रैरक्षेप्यैः खड्गादिभिः । अस्त्रैः क्षेप्यैः शरादिभिः । शस्त्रास्त्रैः लोहास्त्रैर्वा । 'शस्त्रमायुधलोहयोः' इत्यमरः । बहुधा बहुप्रकारैः । चिक्षुराख्यः चिक्षुरनामा ॥ ३९ ॥

**( ३ शान्तनवी )** कीदृग्युद्धं । बहुधा उज्झितैः प्रयुक्तैः प्रेरितैः शस्त्रास्त्रैः खड्गबाणादिभिः: आदीपितदिगन्तरं आसमन्तादीपितं द्योतितं दिशामन्तरं मध्यमन्तरालं यस्य यत्र वा तत् तथोक्तं । क्रियाविशेषणं चैतत्स्यात् । तद्यथा 'आयुधं तु प्रहरणं शस्त्रमस्त्रं' इत्यभिन्नार्थतयाभ्यधुस्तथापि शस्त्राणि खड्गादीनि करस्थानि । अस्त्राणि तु बाणादीनि मोक्तव्यानि इत्यस्यावान्तरभेदः । अथवा 'शस्त्रमायुधलोहयोः' इत्यभिधानात् शस्त्रेण लोहेन कालायसेन निर्मितान्यस्त्राणि तैः । अतश्च सेनाङ्गत्वनिबन्धनैकवद्भावशङ्काप्यपास्ता । शास्त्रैरिति पाठे आयुधशास्त्रे कथितान्यस्त्राणि तैः । यद्वा शस्त्रैस्तत्तद्देवताकैर्मन्त्रैः शिक्षितान्यस्त्राणि । यद्वा शस्त्रस्य लोहस्य इमानि शास्त्राणि लोहमयानि तैः । सेनां नयमानः सेनानीर्महिषासुरस्य सेनानीः सेनाधिपः चिक्षुराख्यः चिक्षुरसंज्ञो महासुरः ॥ ३९ ॥

**( ४ नागोजीभट्टी )** शस्त्रास्त्रैरिति । शस्त्रं केवलं । मन्त्रयुक्तं यत्तदस्त्रम् ॥ ३९ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** शस्त्रास्त्रैरिति ४० ॥ ३९ ॥

**( ६ दंशोद्धारः )** शस्त्रैरक्षेप्यैः खड्गादिभिः । अस्त्रैः क्षेप्यैर्बाणादिभिः । यद्वा शस्त्रं लोहं तस्यास्त्रैरित्यर्थः । 'शस्त्रमायुधलोहयोः' इत्यभिधानात् शस्त्रैरायुधैः । अस्त्रैराग्नेयादिभिर्वा ॥ ३९ ॥

## युयुधे चामरश्चान्यैश्चतुरङ्गबलान्वितः । रथानामयुतैः षड्भिरुदग्राख्यो महासुरः ॥ ४० ॥

**( १ गुप्तवती )** ॥ ४० ॥

**( २ चतुर्धरी )** चामरश्च अन्यैः असुरान्तरैः सहितः । चत्वारि रथनागहयपदातान्यङ्गानि यस्य तेन अन्वितः । उदग्राख्य उदग्रनामा ॥ ४० ॥

**( ३ शान्तनवी )** युयुधे । युध संप्रहारे । आत्मनेपदी । संप्रहारो हननं । अथच अन्यः चामरः महासुरश्चतुरङ्गबलान्वितः सन् युयुधे संप्रजहार । 'हस्त्यश्वरथपादातं सेनाङ्गं स्याच्चतुष्टयं' । चत्वारि अङ्गानि यत्र बले तेनान्वितः । रथानां षड्भिः अयुतैः अन्वितः रथानां षष्ट्या सहस्रैर्युक्तः उदग्राख्यो महासुरः युयुधे । एकाद्याः संख्या अष्टादशपर्यन्ताः संख्येयेषु वर्तमानास्त्रिलिङ्गाः विशेष्यलिङ्गा भवन्ति । इह षड्भिरित्येतदयुतैरित्यस्य विशेषणं द्रष्टव्यं । किंच विंशत्याद्यास्तु सर्वाः संख्याः संख्यायां च संख्येये च वर्तमानाः सत्यः एकवचनान्ता एव भवन्ति । किंच संख्यामात्रार्थे वर्तमानाया विंशत्यादेः संख्यायाः द्विवचनबहुवचने अपि भवतः । सरूपाणामेकशेषारम्भात् । द्वे विंशती तिस्रो विंशतयः गवां विंशतयः । इह च षट् अयुतानि षड्भिरयुतैरित्ययुतशब्दस्य एकशेषस्ततो बहुवचनं । एवमुत्तरत्रापि यथासंख्यं व्युत्पत्तिरनुसंधेया । दशसहस्राण्ययुतं ॥ ४० ॥

**( ४ नागोजीभट्टी )** युयुधे इति । अन्यैः प्रधानदैत्यैः सहितः चामराख्यः चिक्षुराख्यश्च रथनागहयपादातरूपचतुरङ्गसेनायुतो युयुधे इत्यर्थः ॥ ४० ॥

**( ५ जगच्चन्द्रचन्द्रिका )** युयुधे इति ४१ ॥ ४० ॥

**( ६ दंशोद्धारः )** रथानामिति । अयुतानां सहस्रेण कोट्येत्यर्थः । 'एकं दशशतं चैव सहस्रमयुतं तथा । लक्षं च नियुतं चैव कोटिरर्बुदमेवच । वृन्दं खर्वो निखर्वश्च शङ्खपद्मौ च सागरः । महापद्मं परार्धं च दशावृत्त्या यथाक्रमम्' इति गणनात् । एवमग्रेपि ॥ ४० ॥

## अयुध्यतायुतानां च सहस्रेण महाहनुः । पञ्चाशद्भिश्च नियुतैरसिलोमा महासुरः ॥ ४१ ॥

**( १ गुप्तवती )** अयुतं दशसहस्राणि । नियुतं दशलक्षाणि ॥ ४१ ॥

**( २ चतुर्धरी )** अयुतानां सहस्रेण कोट्या इत्यर्थः । 'एकं दशशतं चैव सहस्रमयुतं तथा । लक्षं च नियुतं चैव कोटिरर्बुदमेव च । वृन्दं खर्वो निखर्वश्च शङ्खपद्मौ च सागरः । अन्त्यं मध्यं परार्धं च दशवृद्ध्या यथाक्रमं' इति ब्रह्माण्डपुराणे दर्शनात् । पञ्चाशद्भिर्नियुतैः पञ्चकोटिभिः ॥ ४१ ॥

**( ३ शान्तनवी )** महाहनुर्नाम महासुरः रथानां अयुतानि यानि तेषामयुतानां सहस्रेण रथायुतसहस्रेण युद्धसाधनेन देव्या सह अयुध्यत । रथानां कोट्या साधनभूतया युद्धमकरोदित्यर्थः । अयसः खड्गा इव लोमानि असय एव वा लोमानि यस्य स असिलोमा नाम महासुरश्च रथानां पञ्चाशद्भिर्नियुतैः युद्धसाधनैः देव्या सह अयुध्यत युद्धमकरोत् । दशलक्षाणि नियुतं । पञ्चाशन्नियुतानि पञ्चकोट्यः । रथानां पञ्चभिः कोटिभिरयुध्यतेत्यर्थः । द्वौ पञ्चतौ पङ्क्तिः । दशपङ्क्तयः शतं । दशशतानि सहस्रं । दश सहस्राण्ययुतं । दशायुतानि प्रयुतं । तत्तु लक्षमेव । दशलक्षाणि नियुतमेव । अतएव लक्षादुपरि गणितस्थानं नियुतमुक्तं गणितागमे । लक्षमयं नियुतमिति । एतेन तन्निरस्तं । यत् 'अयुतं दशसाहस्रं नियुतं स्याद्दशायुतैः' इति । नियुतं दशायुतैरित्येतदमूलप्रमाणमुपेक्ष्यं प्रेक्षावद्भिः । विंशत्याद्याः सदैकत्वे यद्यपि स्युस्तथापि संख्यामात्रेऽर्थे वर्तमानानां

विंशत्यादीनां संख्यानां द्विवचनबहुवचने अपि भवतः । एकशेषात् । ततश्च पञ्चाशद्भिरित्यत्र बहुवचनं युक्तं । नियुतैरित्यत्र बहुलात् ॥ ४१ ॥

**( ४ नागोजीभट्टी )** अयुध्यतेति । अयुतानामिति नियुतैरिति च तद्गतबहुत्वविवक्षया बहुवचनम् । एवमग्रेपि । 'एकं दशशतं चैव सहस्रमयुतं तथा । लक्षं च नियुतं चैव कोटिरर्बुदमेवच । वृन्दं खर्वो निखर्वश्च शङ्खपद्मौ च सागरः । अन्त्यं मध्यं परार्धं च दशवृद्ध्या यथाक्रमम्' इति ब्रह्माण्डे ॥ ४१ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** अयुध्यतेति ४२ ॥ ४१ ॥

**( ६ दंशोद्धारः )** ॥ ४१ ॥

## अयुतानां शतैः षड्भिर्बाष्कलो युयुधे रणे । गजवाजिसहस्रौघैरनेकैः परिवारितः ॥ ४२ ॥

**( १ गुप्तवती )** एवं 'गजवाजिसहस्रौघैरनेकैरुग्रदर्शनः । उग्रश्चात्युग्रवीर्यश्च त्रिनेत्रश्च महाबलः' इति चरणत्रयमधिकं ॥ ४२ ॥

**( २ चतुर्धरी )** अयुतानां षड्भिः शतैः षष्टिलक्षैः रथानामित्यनुवर्तते । गजवाजिसहस्राणामोघैर्वृन्दैः ॥ ४२ ॥

**( ३ शान्तनवी )** रणे युद्धे बाष्कलो नाम महासुरः अयुतानां षड्भिः शतैः युयुधे । रथानां यानि अयुतानि षड्भिः शतैर्गुणितानि षष्टिलक्षाणि तैः साधनैः देव्या समं बाष्कलो युद्धं चकार । तस्मिन्युद्धे उग्रदर्शनो नाम महासुरः अनेकैर्गजवाजिसहस्रौघैश्च रथानां कोट्या च वृतः परिवेष्टितः सन् देव्या समं अयुध्यत । गजाश्च वाजिनश्च भूयांसः गजवाजि । सेनाङ्गत्वात् द्वन्द्वैकवद्भावः । गजवाजिनो भूयांसः सहस्राणि अपरिमितानि तेषामोघाः समूहाः अनेके अपरिमिताः तैः ॥ ४२ ॥

**( ४ नागोजीभट्टी )** अयुतानामिति । गजवाजीत्यतो बिडालसैन्यम् ॥ ४२ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** अयुतानामिति ४३ ॥ ४२ ॥

**( ६ दंशोद्धारः )** ॥ ४२ ॥

## वृतो रथानां कोट्या च युद्धे तस्मिन्नयुध्यत । बिडालाख्योऽयुतानां च पञ्चाशद्भिरथायुतैः॥४३॥

**( १ गुप्तवती )** बिडालाख्य इति । बिडालाक्ष इति पाठ एव मुख्यः । वामनादिपुराणेषु 'दुर्धरो दुर्मुखश्चैव बिडालनयनस्तथा' इत्यादिदर्शनात् । आख्येतिपाठे नामैकदेशपरतया व्याख्येयं । एवं बिडालस्यासिना कायादित्युत्तराध्यायप्रयोगोपि । अयुतानां पञ्चाशदयुतानि पञ्चाब्जानि । शतकोटिपञ्चकेनेतियावत् ॥ ४३ ॥

**( २ चतुर्धरी )** रथानां च कोट्या वृतः परिवारितः परिवारितनामाऽयुध्यतेत्यन्वयः । बिडालस्याक्षिणी इवाक्षिणी यस्य स बिडालाक्षः । बिडाल इत्याख्या यस्येति केचित् । तन्न 'दुर्धरो दुर्मुखश्चैव बिडालनयनोऽपरः' इति वामनपुराणवचनात् । अथेत्यानन्तर्ये ॥ ४३ ॥

**( ३ शान्तनवी )** वृतः परिवेष्टितः । अथच रथानां कोट्या वृतः । कोटिः संख्याविशेषः । कोटिरर्बुदसंज्ञा संख्या । प्रयुतसंज्ञं लक्षं । अर्बुदसंज्ञा कोटिरिति ह्याहुः । अथ तत्र संयुगे संग्रामे बिडालाख्यः बिडालो नाम महादैत्यः रथानां पञ्चाशद्भिरयुतैः पञ्चभिर्लक्षैः ॥ ४३ ॥

**( ४ नागोजीभट्टी )** वृत इति । अथ तेषां वधानन्तरम् । अयुतानां पञ्चाशद्भिरयुतैः परिवारितो बिडालनामा तत्र संयुगे युयुधे इत्युत्तरश्लोकेनान्वयः । 'दुर्धरो दुर्मुखश्चैव बिडालनयनस्तथा' इति वामनपुराणेपि बिडालनयनशब्दो योगरूढो न केवलं यौगिकः । प्रकृते च नामैकदेशे नामग्रहणं । अतएव बिडालस्यासिनेति वक्ष्यमाणं संगच्छते ॥ ४३ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** वृतो रथानामिति ४४ ॥ ४३ ॥

**( ६ दंशोद्धारः )** बिडालाक्ष इति पाठः । 'बिडालनयनोऽपरः' इति वामनपुराणात् । बिडालस्यासिनेति नामैकदेशग्रहणं । बिडालाख्य इति क्वचित् ॥ ४३ ॥

## युयुधे संयुगे तत्र रथानां परिवारितः । अन्ये च तत्रायुतशो रथनागहयैर्वृताः ॥ ४४ ॥

**( १ गुप्तवती )** ॥ ४४ ॥

**( २ चतुर्धरी )** रथानामयुतानां च पञ्चाशद्भिरयुतैः । पञ्चाशत्कोटिभिरित्यर्थः । परिवारितो वेष्टितः । संयुगे रणे । अन्ये च चण्डमुण्डरक्तबीजादयः । अयुतशो लक्षयुता लक्षसंख्याका वा ॥ ४४ ॥

---

१ 'बिडालाख्यो महादैत्यः' इति शान्तनवीपाठः । 'बिडालक्षः' इत्यपि पाठः कैश्चिद्व्याख्यातः ।

**( ३ शान्तनवी )** परिवारितः परिवेष्टितः सन् देव्या सह समं युयुधे युद्धं चकार ।

( [१]वृतः कालो रथानां च रणे पञ्चाशतायुतैः ।
युयुधे संयुगे तत्र तावद्भिः परिवारितः ॥ ४५ ॥

कालनामा महादैत्यः रणे रथानां पञ्चाशतायुतैः पञ्चशतसंख्यागुणितैस्तैरयुतैः पञ्चभिर्लक्षैः वृतो वेष्टितः युयुधे । अपिच स एव तत्र संयुगे युद्धे तावद्भिरेव हस्तिभिः वाजिभिः पदातिभिश्च सेनाङ्गैः प्रत्येकं पञ्चाशल्लक्षैः परिवारितः सन् देव्या समं युयुधे ॥४५॥) तत्र संयुगे युद्धे अन्ये च चिक्षुरादिभ्योऽपरे ये असुरास्तत्र तेषु महासुरा अयुतशः अयुतैरयुतैः दशसहस्रैः रथनागहयैः करणैर्वृताः परिवेष्टिताः सन्तः देव्या सह युयुधुः । चक्षिङो ङित्करणतोऽनुदात्तेत्त्वनिमित्तात्मनेपदस्यानित्यत्वात्परस्मैपदं । अन्यथात्र युयुधिरे इत्येव न्याय्यं । युध्यतेरनुदात्तेत्त्वात् । इह अन्ये च तत्रेति निर्धारणे सप्तमी । ये चिक्षुरादिभ्योऽन्ये असुराः सन्ति तत्र तेषु महासुरा इति यत्तदोरर्थतो नित्यः संबन्धः । परितो यस्तत्र शब्दः स संयुगे इत्येतदपेक्षयाधिकरणसप्तम्यन्तः । अयुतश इति । 'संख्यैकवचनाच्च वीप्सायां' इति कारकवाचिनः संख्याशब्दात् वीप्सायां शस्प्रत्ययः । रथैः सहिताः नागाः गजाः रथनागाः रथनागैः सहिताः हयाः रथनागहयास्तैः । समानाधिकरणाधिकारे शाकपार्थिवादीनामुपसंख्यानमुत्तरपदलोपश्चेति समासः । अन्यथा रथाश्च नागाश्च हयाश्चेति द्वन्द्वे तु रथनागहयमिति सेनाङ्गत्वादेकवद्भावः स्यात् ॥ ४४ ॥

**( ४ नागोजीभट्टी )** युयुधे इति स्पष्टम् ॥ ४४ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** युयुधे संयुगे इति ४५ ॥ ४४ ॥

**( ६ दंशोद्धारः )** अन्ये चेति । तस्मिन् बिडालाख्ये महिषासुरे वा युध्यमाने इति शेषः । रथैः सहिता नागा रथनागास्तैः सहिता हयाः । द्वन्द्वे तु सेनाङ्गत्वादेकवत्स्यात् ॥ ४४ ॥

## युयुधुः संयुगे देव्या सह तत्र महासुराः । कोटिकोटिसहस्रैस्तु रथानां दन्तिनां तथा ॥ ४५ ॥

**( १ गुप्तवती )** कोटिकोटिसहस्रं परार्धमेव । तत्संख्याकैरप्यनेकै रथादिभिः प्रत्येकं युक्तो महिषासुरः ॥ ४५ ॥

**( २ चतुर्धरी )** कोटिकोटिसहस्रैः कोट्या कोटिसहस्रैः । परार्धैरितियावत् । रथानां दन्तिनां हयानां च कोटिकोटिसहस्रैरित्यर्थः ॥ ४५ ॥

**( ३ शान्तनवी )** महिषासुरस्तु तत्र युद्धे रथानां दन्तिनां हयानां च प्रत्येकं कोटिकोटिसहस्रैर्वृतः परिवेष्टितः सन् तया देव्या सह योद्धुमवहितोऽभूत् । कोट्या गुणिता कोटिः कोटिकोटिः । कोटिकोट्या गुणितानि सहस्राणि कोटिकोटिसहस्राणि तैः । चकारात्पदातिनामपि तावद्भिरेव कोटिकोटिसहस्रैर्वृतः इत्यवगन्तव्यं ॥ ४५ ॥

**( ४ नागोजीभट्टी )** युयुधुरिति । अस्य पूर्वेणान्वयः । अनुदात्तेत्त्वलक्षणतङोऽनित्यत्वात्परस्मैपदम् । उत्तरार्धमुत्तरान्वयि ॥ ४५ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** युयुधुः संयुगे देव्येति ४६ ॥ ४५ ॥

**( ६ दंशोद्धारः )** युयुधुरिति त्वनुदात्तेत्त्वप्रयुक्तात्मनेपदानित्यत्वात्परस्मैपदं ॥ ४५ ॥

## हयानां च वृतो युद्धे तत्राभून्महिषासुरः । तोमरैर्भिन्दिपालैश्च शक्तिभिर्मुसलैस्तथा ॥ ४६ ॥

**( १ गुप्तवती )** ॥ ४६ ॥

**( २ चतुर्धरी )** तोमरैः सर्वलानामभिः । भिन्दिपालैः हस्तिवेधकशरैः । शक्तिभिः शल्यैः । मुसलैर्जयदण्डैश्च ॥४६॥

**( ३ शान्तनवी )** संयुगे युद्धे चिक्षुराद्याः सर्वेऽपि महासुराः तोमराद्यैरायुधैः साधनैः देव्या समं युयुधुः । चक्षिङो ङित्करणाल्लिङ्गादात्मनेपदानित्यत्वात्परस्मैपदं । अन्यथा युयुधिरे इत्येव स्यात् । युधेरनुदात्तेत्त्वात् । 'सर्वला तोमरोऽस्त्रियां' स्तोम्यन्ते श्लाघ्यन्ते तोमराः । स्तोम श्लाघायां । 'भिन्दिपालः सृगस्तुल्यौ' । भिन्दतः शत्रोः प्रयोक्तारं पालयति भिन्दिपालः हस्तक्षेप्यो लगुडः । 'कासूसामर्थ्ययोः शक्तिः' । कासूर्नामायुधविशेषः । 'अयोग्रं मुसलोऽस्त्री स्यात्' । मुस्यते खण्ड्यतेऽनेन मुसलं ॥ ४६ ॥

**( ४ नागोजीभट्टी )** हयानां चेति । रथदन्तिहयानां प्रत्येकं कोटिकोटिसहस्रसंख्यायुतो महिषस्तत्राभूदित्यर्थः । उत्तरान्वयि । भिन्दि इति दन्त्यान्तः ॥ ४६ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** हयानां चेति ४७ ॥ ४६ ॥



[१] इदं पद्यं केवलं शान्तनव्यामेव व्याख्यतं नान्यैष्टीकाकारैः ।

( ६ दंशोद्धारः ) तोमरैरिति । तोमरैः सर्वलादिभिः । भिन्दिपालैः क्षेपणीभिः । शक्तिभि शल्यैः । मुसलैरयोग्रदण्डैः । परशुभिः कुठारैः । पट्टिशैर्विस्तीर्णखड्गैः ॥ ४६ ॥

**युयुधुः संयुगे देव्या खड्गैः परशुपट्टिशैः। केचिच्च चिक्षिपुः शक्तीः केचित्पाशांस्तथापरे ॥ ४७ ॥**

( १ गुप्तवती ) ॥ ४७ ॥

( २ चतुर्धरी ) परशुभिः कुठारिकाभिः । पट्टिशैः खड्गविशेषैः । मुशलपट्टिशौ दन्त्यमध्यान्तौ तालव्यमध्यान्तावपि । महापट्टिसभल्लभवबाणगुरुमुसललंबिनीति(?)भट्टिस्मरणात् । 'वंशः करीशकमुशलमिति' । 'पट्टिश पाशका पाशवश्योशा' इति वोष्मभेदात्(?) ॥ ४७ ॥

( ३ शान्तनवी ) खण्डयति भिनत्ति खड्गः द्विधारः करवालोऽसिरित्यर्थः । परान् श्यन्ति तनूकुर्वन्ति परशवः कुठारभेदाः । 'पट्टिः क्षेत्रादिविन्यासे हिंसास्त्राधारयोरपि' । पट्टिर्धाराविशेषोऽस्त्यस्मिन् पट्टिशः । लोमादिलात् शः । परशुभिः सहिताः पट्टिशाः परशुपट्टिशाः तैः । परशवश्च पट्टिशाश्च आयुधविशेषा इति द्वन्द्वे तु सेनाङ्गत्वात् द्वन्द्वैकवद्भावः स्यात् । ततो युद्धप्रवृत्तेरनन्तरं केचिन्महासुराः देवीं हन्तुं शक्तीश्चिक्षिपुः । क्षिप प्रेरणे । आचिक्षिपुरिति पाठे प्रत्योक्तुमाक्रुष्टवन्तः । तथा केचिद्देवीं हन्तुं पाशांश्चिक्षुपुः पाशान् प्रेरितवन्तः ॥ ४७ ॥

( ४ नागोजीभट्टी ) युयुधुरिति । केचिद्दैत्या इति शेषः । अपरे इत्युत्तरान्वयि ॥ ४७ ॥

( ५ जगच्चन्द्रचन्द्रिका ) युयुधुः संयुगे देव्या खड्गैरिति ४८ ॥ ४७ ॥

( ६ दंशोद्धारः ) केचिच्चेति । प्रचक्रमुः उद्यममित्यध्याहारः । उद्यमं प्रकर्षेण चक्रुरित्यर्थः । तेनाकर्मकत्वाभावात् 'प्रोपाभ्याम्' इत्यात्मनेपदं न । यद्वा प्रेत्युपसर्गप्रतिरूपकमव्ययं नतूपसर्गः ॥ ४७ ॥

**देवीं खड्गप्रहारैस्तु ते तां हन्तुं प्रचक्रमुः । सापि देवी ततस्तानि शस्त्राण्यस्त्राणि चण्डिका ॥४८॥**

( १ गुप्तवती ) ॥ ४८ ॥

( २ चतुर्धरी ) प्रचक्रमुः प्रक्रान्ताः ॥ ४८ ॥

( ३ शान्तनवी ) तथैव अपरे केचित्तु खड्गप्रहारैर्देवीं हन्तुं प्रचक्रमुः । आदिकर्मणि प्रयोक्तव्ये 'प्रोपाभ्यां समर्थाभ्यां' इत्यात्मनेपदेन भाव्यमितिचेत् । उच्यते । पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेणेत्यादिकर्मणि वृत्तिः । अथवा नायं प्रइत्युपसर्गः तर्हि प्रोपसर्गप्रतिरूपकप्रतिरूपकः अव्ययाख्यः । अन्यथा प्रचक्रमिरे इत्यात्मनेपदमेव स्यात् । ततः सा देवी विजिगीषमाणा चण्डिकापि निजान्यात्मीयानि शस्त्राणि खड्गादीनि अस्त्राणि च बाणादीन्यायुधानि वर्षति प्रवर्तयति तच्छीलेति तथोक्ता सती तानि महासुरप्रवर्तितानि प्रयुक्तानि शस्त्राणि खड्गादीनि अस्त्राणि च बाणादीन्यायुधानि ॥ ४८ ॥

( ४ नागोजीभट्टी ) देवीमिति । अपरे तु ते प्रसिद्धदैत्या इत्यर्थः । 'प्रोपाभ्यां' इत्यात्मनेपदं न । छान्दसत्वात्॥४८॥

( ५ जगच्चन्द्रचन्द्रिका ) देवीं खड्गेति ४९ ॥ ४८ ॥

( ६ दंशोद्धारः ) ॥ ४८ ॥

**लीलयैव प्रचिच्छेद निजशस्त्रास्त्रवर्षिणी । अनायस्तानना देवी स्तूयमाना सुरर्षिभिः ॥ ४९ ॥**

( १ गुप्तवती ) अनायस्तं आयासजन्यविकारमप्राप्तं आननं यस्याः सा ॥ ४९ ॥

( २ चतुर्धरी ) अनायस्तानना अविकृतमुखी । 'आयस्तस्तेजिते क्षिप्ते क्लेशिते कुपिते हते' इत्यभिधानात् ॥ ४९ ॥

( ३ शान्तनवी )लीलयैव प्रचिच्छेद द्वेधा चकार खण्डयामास । छिदिर् द्वैधीकरणे । हलादिः शेषे पुनः प्रसङ्गविज्ञानात्सिद्धमिति प्रसक्तोपि । ननु किं हलादिः शेषः नावयवावयवः । समुदायावयवो भवतीति वचनात् । शस्त्राण्यस्त्राणि चण्डिकेति पाठे अन्तरेणापि चकारे चार्थोऽर्थतः क्वचिल्लभ्यते । यथा अहरहर्नयमानापि गामश्वं पुरुषं पशुव्रजं वैवस्वतो न तृप्यतीति वाक्ये । अथवा शस्त्राण्यस्त्राणि चाम्बिका इति पाठः । शस्त्राण्यस्त्राणि चेश्वरी इति तु क्वचित्पाठः । लीला हेलाविलासः खेला क्रीडा वा तथा । अनायस्तमखिन्नमम्लानं आननं मुखं यस्याः सा तथोक्ता देवी विजिगीषमाणा सर्वैर्ब्रह्मादिभिर्ऋषिभिर्वसिष्ठादिभिश्च । यद्वा नारदादिभिः सुरर्षिभिः स्तूयमाना ईश्वरी च भगवती असुराणां देहेषु । यद्वा असुरेषु असुरसंबन्धिषु देहेषु शस्त्राणि खड्गादीनि । अस्त्राणि बाणादीन्यायुधानि ॥ ४९ ॥

( ४ नागोजीभट्टी ) लीलयैवेति । आयासरहितानना ॥ ४९ ॥

( ५ जगच्चन्द्रचन्द्रिका ) लीलयैवेति ५० ॥ ४९ ॥

( ६ दंशोद्धारः ) ॥ ४९ ॥

**मुमोचासुरदेहेषु शस्त्राण्यस्त्राणि चेश्वरी । सोऽपि क्रुद्धो धुतसटो देव्या वाहनकेसरी ॥ ५० ॥**

**( १ गुप्तवती )** धुताः कम्पिताः सटाः केसराणि ग्रीवा वा यस्येति यावत् ॥ ५० ॥

**( २ चतुर्धरी )** धुतसटः कम्पितकेसरः । दन्त्यमध्यस्तालव्यमध्यश्च । केशरः केसरोऽपीति द्विरूपात् । केसरी सिंहः ॥ ५० ॥

**( ३ शान्तनवी )** मुमोच प्रयुक्तवती प्रेरितवती । ईश्वरस्य स्त्री ईश्वरी । यद्वा 'अश्नोतेराशुकर्मणि वरट्चेचोपधायाः' इति । ईश्वरी विश्वव्यापिका भगवतीत्यर्थः । स प्रसिद्धः देव्याः वाहनीभूतः केसरी सिंहोऽपि क्रुद्धः धुतसटः कम्पितस्कन्धकेसरः सन् ॥ ५० ॥

**( ४ नागोजीभट्टी )** मुमोचेति । उत्तरार्धमुत्तरान्वयि । धुताः कम्पिताः सटा येन ॥ ५० ॥

**( ५ जगच्चन्द्रचन्द्रिका )** मुमोचासुरेति ५१ ॥ ५० ॥

**( ६ दंशोद्धारः )** ॥ ५० ॥

**चचारासुरसैन्येषु वनेष्विव हुताशनः । निःश्वासान्मुमुचे यांश्च युध्यमाना रणेऽम्बिका ॥५१॥**

**( १ गुप्तवती )** ॥ ५१ ॥

**( २ चतुर्धरी )** ॥ ५१ ॥

**( ३ शान्तनवी )** असुरसैन्येष्विति । असुरसैन्येषु चचार प्रससार परिबभ्राम । केषु क इव । वनेषु हुताशनोऽग्निरिव । सिंहः क्रोधेन ज्वलद्रूपत्वाद्धुताशन इव । हुताशनसादृश्यं सिंहस्य वर्णितं । यथाच वनानि वनाग्निदग्धानि भस्मीस्युस्तथा दैत्यसैन्यान्यपि देवीवाहनीभूतसिंहरोषानलदग्धानि भवेयुरिति दैत्यसैन्यानां वनसादृश्यं द्रष्टव्यं । 'क्रुद्धः कण्ठीरवो गर्जन्नुज्ज्वलोज्ज्वलदीधितिः । उद्वमन्निव सज्वालमज्वालि ज्वलनं युधि' इति भावः । 'व्रतिनस्तु सटा जटा' इत्यभिधानात् । व्रतिनः शिखा सटेत्युच्यते । इहतु सटेव सटा इत्युपमानात् धुताः सटा येन स तथोक्त इति सटाप्रयोगसिद्धिः । अम्बिका चण्डिका रणे संग्रामे महासुरैः समं युध्यमाना सती यान् यानेव यावत एव निःश्वासान् उच्छ्वासान् मुमुचे उज्झितवती॥५१॥

**( ४ नागोजीभट्टी )** चचारेति । उत्तरार्धमुत्तरान्वयि । यान् यावतः ॥ ५१ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** चचारासुरेति ५२ ॥ ५१ ॥

**( ६ दंशोद्धारः )** ॥ ५१ ॥

**त एव सद्यः संभूता गणाः शतसहस्रशः । युयुधुस्ते परशुभिर्भिन्दिपालासिपट्टिशैः ॥ ५२ ॥**

**( १ गुप्तवती )** ॥ ५२ ॥

**( २ चतुर्धरी )** ते निःश्वासा एव गणाः संभूता इत्यन्वयः । सद्यस्तत्क्षणात् ॥ ५२ ॥

**( ३ शान्तनवी )** ते एव तावन्त एव निःश्वासाः प्रत्येकं सद्यः तस्मिन्नेव क्षणे सहस्रशः गणाः चण्डिकागणाः संभूताः समदृश्यन्त । इह गणाः शताधिकं सहस्रं चेद्विवक्षिताः स्युस्तदा शतसहस्रं एकादशशतानि । शतसहस्रं शतसहस्रमिति वीप्सायां शतसहस्रशः । 'संख्यैकवचनाच्च वीप्सायां' शस् । अथच गणाः शतगुणितानि सहस्राणि शतं वा सहस्राणि स्युस्तदा शतसहस्राणि लक्षमित्यर्थः । शतसहस्राणि शतसहस्राणि शतसहस्रशः । लक्षशतगुणाः समुत्पन्ना इत्यर्थः । ते रणे देवीरोषनिःश्वासजाः गणाः युध्यध्वं युध्यध्वमिति देव्या उपबृंहिताः प्रोत्साहिताः परशुभिर्भिन्दिपालासिपट्टिशैः आयुधैः असुरगणान् नाशयन्तः महासुरैः समं युयुधुः । चक्षिङो ङित्करणात् ज्ञापकात् । अनुदात्तङित' इत्यात्मनेपदनित्यत्वात् युयुधिरे इत्यात्मनेपदमेव स्यात् । भिन्दिपालैः सहिताः असयः खड्गाः तैश्च सहिताः पट्टिशाः तैः । द्वन्द्वे तु सेनाङ्गत्वादेकवचनत्वं स्यात् ॥ ५२ ॥

**( ४ नागोजीभट्टी )** त एवेति । तावन्त एवेत्यर्थः । एकैकनिःश्वासादेकैको गणः संभूत इत्यर्थः । ते गणाः ॥ ५२ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** त एव सद्य इति ५३ ॥ ५२ ॥

**( ६ दंशोद्धारः )** ॥ ५२ ॥

**नाशयन्तोऽसुरगणान्देवीशक्त्युपबृंहिताः । अवादयन्त पटहान् गणाः शङ्खांस्तथापरे ॥ ५३ ॥**

**( १ गुप्तवती )** ॥ ५३ ॥

**( २ चतुर्धरी )** ते गणाः देव्याः शक्त्याः प्रभावेण उपबृंहिताः आप्यायिताः । अवादयन्त इति क्वचित्पाठः । तत्र युयुधुरिति संबन्धः ॥ ५३ ॥

( ३ शान्तनवी ) बृहि वृद्धौ । उपपूर्वः प्रोत्साहने वृद्ध्युत्कर्षे वा वर्तते । देवीशक्त्यपबृंहितानिति केचित्पठन्ति तदा अपपूर्वो बृहिर् वृद्धिवाची । ते गणाः देवीसामर्थ्यात्क्षीणानसुरगणान् नाशयन्तः युयुधुरित्यर्थः । अस्मिन्पाठे गणानां शौर्योत्कर्षो नास्ति । यतो देवीशक्त्युपबृंहिताएवासुरगणान् नाशयन्तो युयुधुः । युद्धे महोत्सवे इव तस्मिन् युद्धमहोत्सवे देव्याः गणाः पटहानानकानवादयन्त वादितवन्तः । वदेर्ण्यन्ताल्लङि 'णिचश्च' इत्यात्मनेपदं । 'आनकः पटहोऽस्त्री स्यात्' । तथा अपरे गणाः शङ्खान् अवादयन्त प्रदध्मुः ॥ ५३ ॥

( ४ नागोजीभट्टी ) नाशयन्त इति । देवीप्रभावेणाप्यायिताः आवादयन्त । वादिन्तवन्त इत्यर्थः । गणाः केचिदिति शेषः ॥ ५३ ॥

( ५ जगच्चन्द्रचन्द्रिका ) नाशयन्त इति ॥ ५४ ॥ ५३ ॥

( ६ दंशोद्धारः ) आवादयन्तः पटहानिति पाठः क्वचित् । आसमन्ताद्वादयन्त इत्यर्थः ॥ ५३ ॥

**मृदङ्गांश्च तथैवान्ये तस्मिन्युद्धमहोत्सवे । ततो देवी त्रिशूलेन गदया शक्तिवृष्टिभिः[१] ॥ ५४ ॥**

( १ गुप्तवती ) ॥ ५४ ॥

( २ चतुर्धरी ) युद्धमेव महोत्सवः । वीराणां हर्षावहत्वात् । शक्तीनां वृष्टिभिर्वर्षणैः ॥ ५४ ॥

( ३ शान्तनवी ) तथा अन्ये च गणाः मृदङ्गान् मुरजान् अवादयन्त । युद्धमहोत्सव इत्यनेन गणानां रणोन्मुखत्वेन शौर्योत्कर्षः संग्रामविजयित्वं च सूच्यते । उत्सूते सुखमुत्सवः । महानुत्सवो महोत्सवः । ततः रणोत्सवोत्साहकारणपटहादिवादनादनन्तरं देवी त्रिशूलेन गदया शरवृष्टिभिः ॥ ५४ ॥

( ४ नागोजीभट्टी ) मृदङ्गांश्चेति । युद्धमेव महोत्सवो वीराणां हर्षत्वात् । शक्तीनां वृष्टिभिर्वर्षैरित्यर्थः ॥ ५४ ॥

( ५ जगच्चन्द्रचन्द्रिका ) मृदङ्गांश्चेति ५५ ॥ ५४ ॥

( ६ दंशोद्धारः ) युद्धमेव महोत्सवः वीराणां हर्षजनकत्वात् ॥ ५४ ॥

**खड्गादिभिश्च शतशो निजघान महासुरान् । पातयामास चैवान्यान्घण्टास्वनविमोहितान्॥५५॥**

( १ गुप्तवती ) ॥ ५५ ॥

( २ चतुर्धरी ) ॥ ५५ ॥

( ३ शान्तनवी ) खड्गादिभिश्च संग्रामसाधनैरायुधैः शतशः शतैः शतैः महासुरान् निजघान नितरां जिहिंस । आदिशब्देन पट्टिशपरशुकुन्तमुद्गरमुसलकर्तरीकरवालिकाभिन्दिपालपरिघशङ्कुतोमरवज्रशक्तिपाशचक्राद्यायुधानि गृह्यन्ते । अथच देवी घण्टास्वनविमोहितान् घण्टानिर्घोषमूर्च्छितान् अन्यान् असुरान् भुवि पातयामास प्रभ्रंशयामास ॥ ५५ ॥

( ४ नागोजीभट्टी ) खड्गेति स्पष्टम् ॥ ५५ ॥

( ५ जगच्चन्द्रचन्द्रिका ) खड्गादिभिश्चेति ५६ ॥ ५५ ॥

( ६ दंशोद्धारः ) पातयामासेति ॥ ५५ ॥

**असुरान् भुवि पाशेन बध्वा चान्यानकर्षयत्[२]। केचिद्द्विधा कृतास्तीक्ष्णैः खड्गपातैस्तथापरे॥५६॥**

( १ गुप्तवती ) ॥ ५६ ॥

( २ चतुर्धरी ) अकर्षयत् आकृष्टवती । कृषेश्चौरादिकाद्रूपं । अकर्षतेति वा पाठः ॥ ५६ ॥

( ३ शान्तनवी ) अथच देवी अन्यान् असुरन्पाशेन अकर्षयच्च आकृष्टवती । कृषेश्चौरादिकात्स्वार्थे णिचि लङि रूपं। ननु च नायं पठ्यते चुरादौ । यत्तु 'कर्षत्याकर्षणेशे तु कर्षते कृषतीत्युभे' इत्येवं पठ्यते । एवं तर्हि भ्वादेः कर्षतेः कर्षणं कर्षः कर्षमकरोत् अकर्षयत् । तत्करोतीति णिच् । देव्यास्तीक्ष्णैः खड्गपातैः केचिन्महासुराः द्विधा कृताः द्विधा खण्डिताः। तथा अपरे असुराः देव्या गदया कृतेन निपातेन विपोथिताः सन्तः भुवि भूमौ शेरते शयितवन्त इत्यर्थः । लङो ङः। 'आत्मनेपदेष्वनतः' 'शीङो रुट्' 'शीङः सार्वधातुके गुणः' ॥ ५६ ॥

( ४ नागोजीभट्टी ) असुरानिति । अकर्षयदिति कृषेश्चौरादिकाल्लङ् । अपर इत्युत्तरान्वयि ॥ ५६ ॥

( ५ जगच्चन्द्रचन्द्रिका ) असुरानिति ५७ ॥ ५६ ॥

( ६ दंशोद्धारः ) अकर्षतेत्यात्मनेपदमार्षम् । अकर्षयदिति पाठे चौरादिकस्य रूपम् केचिदिति ॥ ५६ ॥

---

१ 'शक्तिऋष्टिभिः' इति पाठो नागोजीभट्टीसंमतः । २ 'चान्यानकर्षयत्' इति चतुर्धरीसंमतः पाठः ।

**विपोथिता निपातेन गदया भुवि शेरते । वेमुश्च केचिद्रुधिरं मुसलेन भृशं हताः ॥ ५७ ॥**

**( १ गुप्तवती )** विपोथिताः आघातेनाधः पतिताः शेरते दीर्घतन्द्रया । वेमुरित्यादि छान्दसशब्दनिर्णयो वैयाकरणः शान्तनव्यादिटीकातोऽवसेयः ॥ ५७ ॥

**( २ चतुर्धरी )** गदया विपोथिताः आमर्दिताः सन्तो निपातेन भुवि शेरते इत्यन्वयः । अथवा गदया यो निपातो निपतनं तेन । यद्वा गदयेति षष्ठ्यर्थे तृतीया । गदया निपातेन आघातेनेत्यर्थः । वेमुरुद्गिरन् । बाधितेपि सर्वे विधयः छन्दसि विकल्पन्त इति नानानिर्दिष्टस्यानित्यत्वाद्वा । 'नशसददवादि' इत्यादिना एत्वमभ्यासलोपनिषेधो न भवति । यद्वा निरोष्ठ्यो वकारोऽन्योऽस्ति तस्येदं रूपं । सूत्रे निर्दिष्टो दन्त्य इति 'उद्वेमुस्तत्र रुधिरं बलिनोऽन्ये निराकृताः' इत्यत्रापि भृशं दृढं हतास्ताडिताः ॥ ५७ ॥

**( ३ शान्तनवी )** विपोथिता इति । पुथ हिंसायां । दिवादिः । यदभ्यधुः । 'पुथ्येत्पुंथति हिंसार्थे भाषार्थे पोथयेदिति' । विविधं पोथनं विहननं पोथः स जातो येषां विपोथिताः । संजातविघाता इत्यर्थः । यद्वा विविधः पोथः विघातो येषां ते विपोथाः विपोथाः कृताः विपोथिताः । 'तत्करोति'इति णिचि कर्मणि क्तः । ननुच पुथ्यतेर्णिचि कर्मणि क्तः । ननुच पुथ्यते-रुदुपधत्वान्नपुंसके भावे क्ते कृते किलनिषेधपक्षे पोथितमिति स्यात् । ततश्च विविधं पोथितं पोथनं विहननं येषां ते इति बहुव्रीहौ वाहिताग्न्यादित्वान्निष्ठान्तस्य परनिपाते विपोथिताः स्युः नस्युः । यतः 'उदुपधाद्भावादिकर्मणोरन्यतरस्यां' इति शब्विकरणानामेवोदुपधानां तत्र सूत्रे ग्रहणं नान्येषामित्यभ्युपजग्मुः । यद्वा विपुंथिता इति पाठे पुथ हिंसासंक्लेशनयोः भ्वादिः । कर्मणि क्तः । विपुथिता विहिंसिताः संक्लेशिताः क्लेशिताः । वधिता इति यावत् । केचिच्च महासुराः देव्या मुसलेन भृशं अत्यर्थं हताः ताडिताः रुधिरं रक्तं वेमुः उज्जगरुः । वेमुरिति 'अत एकहल्मध्येऽनादेशादेर्लिटि' टुवम उद्गिरणे इत्यस्य इति निषेधादेत्वाभ्यासलोपौ न स्तः इत्याहुः । ततश्च ववमुः इत्येवं भवितव्यं । अत्र समादधुः । 'नशसददवादिगुणानां' 'अत एकहल्मध्येऽनादेशादेर्न शसददवादिगुणानां लिटि' इत्येकयोगे कर्तव्ये योगविभागादस्यानित्यत्वमिति । ततः वेमुरित्यपि क्वचित् साधु स्यादिति ॥ ५७ ॥

**( ४ नागोजीभट्टी )** विपोथिता इति । अपरे गदया विपोथिता आमर्दिताः निपातेन निपतनेन भुवि शेरत इत्यन्वयः । वेमुरिति छान्दसम् ॥ ५७ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** विपोथिता इति ५८ ॥ ५७ ॥

**( ६ दंशोद्धारः )** गदया विपोथिता निपातेन शेरते गदारूपेण निपातेन वा । कर्मणि घञ् । षष्ठ्यर्थे वा तृतीया । गदाया निपातेन विपोथिता इत्यन्वयः । वेमुश्चेति । वेमुरुद्गीर्णवन्तः । वादित्वादेत्वाभ्यासलोपनिषेधस्तु न । छन्दसि सर्वविधीनां विकल्पनात् । यद्वा 'नशसददवादिगुणानां' इति वक्तव्ये आदिग्रहणमुपदेशे यो वादिरित्यर्थलाभाय तत् । अनुबन्ध एकारान्त इति पक्षेऽस्यावादित्वेन वकारात्प्राक् एकारप्रश्लेषेण वा वादित्वाभावादिह निषेधो नेति भागवृत्तिमते । मतान्तरेपि 'अत एकहल्मध्येऽनादेशादिशसददवादिगुणानां' इति वक्तव्ये योगविभागसामर्थ्यादस्यानित्यत्वं बोध्यं । केचित्तु वमिमोष्ठ्यादिमाहुस्तन्निर्मूलं । जग्धं गीर्णं वान्तमित्यादौ दन्त्योष्ठ्यपाठस्यैव निर्विवादत्वात् ॥ ५७ ॥

**केचिन्निपतिता भूमौ भिन्नाः शूलेन वक्षसि । निराकृताः शरौघेण कृताः केचिद्रणाजिरे ॥ ५८ ॥**

**( १ गुप्तवती )** ॥ ५८ ॥

**( २ चतुर्धरी )** ॥ ५८ ॥

**( ३ शान्तनवी )** केचिच्च महासुराः देव्या शूलेन वक्षसि भिन्नाः विदारिताः सन्तः भूमौ निपतिताः न्यपतन् । केचित् शैलानुकारिणः शैलान् स्वगात्रपरिमाणतः अनुकुर्वाणाः पर्वतायमानाः त्रिदशानां देवानां अर्दनाः अर्दयितारः हिंसकाः असुराः रणाजिरे रणस्याग्रे देव्या प्रयुक्तेन निरन्तरं शरौघेण अविच्छिन्नबाणव्यूहेन कृताः छिन्नाः विद्धाः त्यक्तचेष्टाः प्राणान् असून् मुमुचुः व्यमुञ्चन् । शराणामोघः शरौघः तेन शरौघेण । 'कुमतिच्च' इति णत्वं । निरन्तराः शराः तेषामोघः समूहः तेन निरन्तरशरौघेण ॥ ५८ ॥

**( ४ नागोजीभट्टी )** केचिदिति । शूलेन वक्षसि भिन्नाः भूमौ निपातिताः निपेतुरित्यन्वयः । उत्तरार्धमुत्तरान्वयि ५९

**( ५ जगच्चन्द्रचन्द्रिका )** केचिन्निपतिता इति ५९ ॥ ५८ ॥

**( ६ दंशोद्धारः )** निरन्तरा इति ॥ ५८ ॥

---

१ 'निरन्तरशरौघेण' 'निरन्तराः शरौघेण' इति शान्तनवी ।

**सेनानुकारिणः प्राणान्मुमुचुस्त्रिदशार्दनाः । केषांचिद्बाहवश्छिन्नाश्छिन्नग्रीवास्तथापरे ॥ ५९ ॥**

**( १ गुप्तवती )** सेनामनु पश्चाद्भागे कुर्वन्ति ते सेनानुकारिणोऽग्रेसरा इति यावत् ॥ ५९ ॥

**( २ चतुर्धरी )** श्येनानां पक्षिणामनुकारिणः सदृशाः । यथा श्येनाः स्वपत्रैर्निरन्तरास्तथा दैत्या अपि शरैरित्यन्वयः । यद्वा श्येनाः शल्यमृगाः 'श्येनः पत्रिणि शल्ये च' इत्यजयकोशात् । शरौघपूर्णत्वात् शल्यमृगा इव लक्ष्यन्ते इति । सेनानुकारिण इति पाठे सेनामनु पश्चात् कर्तुं शीलं येषां ते सेनाग्रगा इत्यर्थः । सेनानियन्तार इति केचित् । यद्वा सेध इति पाठे सेधस्तद्वतो मत्स्य इति ॥ ५९ ॥

**( ३ शान्तनवी )** सेनानुकारिणः प्राणान्मुमुचुस्त्रिदशार्दिनः इति वा पाठः । शरौघेण प्रतिलोमकूपं निरन्तराः व्याप्तावयवाः कृताः सेनानुकारिणः । सेना सैन्यं अनु पश्चात् कर्तुं शीलं एषां ते तथोक्ताः अग्रेसराः त्रिदशार्दिनः देवहिंसिनः केचिदसुराः रणाजिरे प्राणान् मुमुचुः अत्याक्षुः । सेधानुकारिण इति पाठे सिध्यन्ति सेधाः । शल्यानुकारिणः इति तु सभ्यः पाठः । 'श्वावित्तु शल्यः' इत्यभिधानात् । शल्यः शल्यको भक्ष्यः पञ्चनखः । शरौघेण निरन्तराः प्रतिलोमकूपं व्याप्ताः कृताः विद्धाः । अतएव शल्यका इव शललीकण्टकशतावृताः शल्यका इव दृश्यमाना रणाग्रे प्राणान् मुमुचुः केचिदसुरा इत्यर्थः । निरन्तराः शरौघेण कृताः इति तु पाठे कृताः रचिता इत्यर्थः । तथा देव्या केषांचित् असुराणां बाहवो भुजाः छिन्नाः खण्डिताः भुवि पेतुः । तथा देव्या परे असुराः छिन्नाः ग्रीवाः शिरोधयो येषां ते तथोक्ताः छिन्नग्रीवाः सन्तः भुवि पेतुः ॥ ५९ ॥

**( ४ नागोजीभट्टी )** सेनेति । सेनामनु पश्चात्कुर्वन्ति सेनाग्रगाः शरौघव्याप्तत्वात् सेनाः शल्लक्यस्तत्सदृशाश्च अपरे छिन्नग्रीवाः प्राणाम्मुमुचुरित्यर्थः ॥ ५९ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** सेनानुकारिण इति ॥ ६० ॥ ५९ ॥

**( ६ दंशोद्धारः )** निरन्तरा इति । सेनामनु पश्चात्कर्तुं शीलं येषां ते । सेनाग्रसरा इत्यर्थः । श्येनानुकारिण इति पाठे श्येनपक्ष्यनुसारिणः । यथा श्येनाः पक्षिण उत्पत्य निपतन्ति तथा तेपि पार्श्वसंलग्नशरपुङ्खतया सपक्षा इवेत्यर्थः ॥ ५९ ॥

**शिरांसि पेतुरन्येषामन्ये मध्ये विदारिताः । विच्छिन्नजङ्घास्त्वपरे पेतुरुर्व्यां महासुराः ॥ ६० ॥**

**( १ गुप्तवती )** ॥ ६० ॥

**( २ चतुर्धरी )** मध्ये हृदि । उर्व्यां भूमौ ॥ ६० ॥

**( ३ शातनवी )** तथा देव्या अन्येषां सुराणां छिन्नानि शरांसि भुवि पेतुः । तथा देव्या अन्ये असुराः वपुषो मध्यदेशे विदारिताः खण्डिताः पेतुः भूमौ वभ्रशुः । 'असाकल्येतु चिचनं' 'छिन्नं छातं लूनं कृत्तं दातं दितं छितं वृक्णं' 'दारितौ भिन्नभेदितौ' । अपरे तु महासुराः महान्तोऽसुराः देव्या विच्छिन्नजङ्घाः खण्डितजङ्घकाः सन्तः उर्व्यां भुवि पेतुः प्रवभ्रशुः ॥ ६० ॥

**( ४ नागोजीभट्टी )** शिरांसीति । छिन्नानीति शेषः ॥ ६० ॥

**( ५ जगच्चन्द्रचन्द्रिका )** शिरांसीति ॥ ६१ ॥ ६० ॥

**( ६ दंशोद्धारः )** ॥ ६० ॥

**एकबाह्वक्षिचरणाः केचिद्देव्या द्विधा कृताः । छिन्नेपि चान्ये शिरसि पतिताः पुनरुत्थिताः ६१**

**( १ गुप्तवती )** ॥ ६१ ॥

**( २ चतुर्धरी )** पतिताः पुनरुत्थिताः इति 'मनुष्याणां सहस्रेषु हतेषु पतितेषु च । उदतिष्ठन्कबन्धानि बहूनुत्थापिता-न्यपि' इति शान्तिपर्वणि । अतः सहस्रेऽभिहते कबन्ध एक उत्तिष्ठते इति ॥ ६१ ॥

**( ३ शान्तनवी )** केचित्तु महासुराः युध्यन्त । एकबाह्वक्षिचरणाः एकबाहुकाः एकाक्षाः एकचरणकाश्च सन्तो देव्या द्विधा कृताः खण्डिताः उर्व्यां पेतुः न्यपतन् । बाहुश्च अक्षि च चरणं च बाह्वक्षिचरणं युद्धतः प्रति महासुरं संपन्नम् । एकमेव बाह्वक्षिचरणं येषां ते एकबाह्वक्षिचरणाः । द्वन्द्वान्ते श्रूयमाणं व्यावर्तकं पदं प्रत्येकमभिसंबध्यते । तथा संपन्नव्रीहियवो ग्रामः । तथा च व्रीहियवधनाः प्रजाः (?) अन्ये महासुराः शिरसि छिन्नेपि सति भूमौ पतिताः पुनस्तदनु उत्थिताः ॥ ६१ ॥

**( ४ नागोजीभट्टी )** एक इति । आशिरः पादपर्यन्तं पाटिता इत्यर्थः । उत्तरार्धमुत्तरान्वयि ॥ ६१ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** एकबाह्वक्षीति ॥ ६२ ॥ ६१ ॥

---

१ 'शैलानुकारिणः' इति शान्तनवी । 'श्येनानुकारिणः' इति चतुर्धरी । २ 'त्रिदशार्दिनः' इति शान्तनवी पाठः ।

**( ६ दंशोद्धारः )** छिन्नेपीति। अयुतवीरवधे एकः कबन्ध उत्तिष्ठत इति प्रसिद्धिः। उक्तंच महाभारते भीष्मपर्वणि। 'मनुष्याणां सहस्रेषु शतेषु पतितेषु च। उदतिष्ठन्कबन्धानि बहून्युत्थाय चाद्रवन्' इति। कश्चित्त्वत्र शतसहस्रशब्दोऽयुतपरत्वेन व्याख्येय इत्याह। तदसत्। बहूनि इत्यस्याऽसंगत्यापत्तेः शतपदस्यानन्तरस्योचितत्वात्॥ ६१॥

**कबन्धा युयुधुर्देव्या गृहीतपरमायुधाः। ननृतुश्चापरे तत्र युद्धे तूर्यलयाश्रिताः॥ ६२॥**

**( १ गुप्तवती )** तूर्याणां लयं कालक्रियामानरूपतालविरामसाम्यमाश्रिताः॥ ६२॥

**( २ चतुर्धरी )** तूर्यलयान्विताः वाद्यानुसारिणः॥ ६२॥

**( ३ शान्तनवी )** कं शिरो बध्नन्ति कबन्धाः सन्तः पुनः शिरोधारिणः सन्तः गृहीतपरमायुधा आत्तोत्तमशस्त्राः सन्तः पुनर्देव्या समं युयुधुः। चक्षिङो ङित्त्वादनुदात्तेत्त्वनिमित्तात्मनेपदानित्यत्वाद्युध्यतेः अनुदात्तेत्त्वेपि परस्मैपदं। अन्यथा युयुधिरे इत्यात्मनेपदमेव स्यात्। गृहीतपरमायुधाः। देव्या इति तृतीयान्तं। 'कबन्धोऽस्त्री क्रियायुक्तमपमूर्धकलेवरं' कस्य शिरोबन्धोऽत्र कबन्धः। कं बध्नाति वा कबन्धः। 'कबन्धं सलिले रुण्डे'। 'युद्धे योद्धृषु शूरेषु सहस्रं कृत्तमूर्धसु। तदावेशात्कबन्धः स्यादेकोऽमूर्धा क्रियान्वितः' इति कबन्धलक्षणं। 'देवीदानवयुद्धे तु कबन्धार्बुदकोटयः। क्षणे क्षणे समुत्पन्ना देव्या युयुधिरे पुनः। देवीदानवयुद्धोत्थकबन्धार्बुदकोटयः। देवीरोषोत्थहुंकारज्वलज्ज्वलनभस्मिताः'। तत्र युद्धे देवीदानवसंग्रामे अपरे महासुराः तूर्यलयाश्रिताः तूर्याणां वाद्यानां ततविततानद्धशुषिराणां चतुर्णां लयः साम्यं वाद्यादीनामन्योन्यसमतामाश्रिताः वीररसावेशवशाः खड्गशक्त्यृष्टिपाणयः युद्ध्यमानाः पूर्वं देव्या छिन्नशिरसोऽपि वीररसाविष्कारात्संग्रामाधिदेवतावेशाच्चाविष्कृतचेतनाः सन्तः पश्चात्कं शिरो बध्नन्ति स्वंस्वं यथास्थानं संनिवेशयन्तीति कबन्धाः सन्तः पुनः शिरोधारिणः सन्तः ननृतुः नृत्यं चक्रुः। चकारात्केचिद्देव्या समं युयुधिरे च। तूर्यलयाश्रिता हि नृत्यन्ति॥ ६२॥

**( ४ नागोजीभट्टी )** कबन्धा इति। 'मनुष्याणां सहस्रेषु हतेषु हतमूर्धसु। तदावेशात्कबन्धः स्यादेको मूर्धा क्रियान्वितः' इति लक्षितः। अपरे कबन्धाश्च युयुधुः॥ ६२॥

**( ५ जगच्चन्द्रचन्द्रिका )** कबन्धा युयुधुरिति ६३॥ ६२॥

**( ६ दंशोद्धारः )** ननृतुरिति। छिन्नानि शिरांसि अर्थादन्येषां यैस्ते कबन्धा इत्यर्थः। यद्वा छिन्नशिरसोपि कं शिरो बध्नन्ति मायावित्वात्। यद्वा कबन्धा असुरविशेषाः। को वायुरेव बन्ध आश्रयो येषामित्यन्ये॥ ६२॥

**कबन्धाश्छिन्नशिरसः खड्गशक्त्यृष्टिपाणयः। तिष्ठतिष्ठेति भाषन्तो देवीमन्ये महासुराः॥ ६३॥**

**( १ गुप्तवती )** कबन्धाः निःशिरस्कदेहा वीरावेशेन क्षतान्तराणामिव शिरश्छेदस्याप्यभावेनोभयत्र व्यासज्यवृत्तिजीवनसत्वात्पतितेन मुखेन भाषणं चलता कबन्धेन प्रहारश्चाभवदित्याशयः॥ ६३॥

**( २ चतुर्धरी )** कबन्धाश्छिन्नशिरस इति पर्यायाभ्यां तेषामतिबहुत्वमाह। छिन्नशिरस इति स्वरूपाख्यानं वा। को वायुरेव बन्धः आश्रयो येषां ते कबन्धा इति वा। यद्वा छिन्नशिरसोपि कबन्धाः कं शिरो बध्नन्तीति कबन्धाः। तेषां मायावित्वात् छिन्नमपि शिरो बद्धं भवतीति तदा बह्वपि क्षमाधिष्ठानत्वाच्च। यद्वा छिन्नं शिरो यैः। कबन्धा अपि अन्येषां शिरः छिन्दन्ति। 'कबन्धोऽस्त्री क्रियायुक्तमपमूर्धकलेवरं' इत्यमरः। पूर्वं छिन्नशिरसः पश्चात्कबन्धाः क्रियायुक्ताः। तूर्यतालाश्रिता इतियावत्। तिष्ठतिष्ठेति भाषन्तो हस्ताक्षेपादेव भाषमाणा इवेति इवार्थो गम्यः। अन्यथा छिन्नशिरस्त्वात् कथं तिष्ठतिष्ठेति वदिष्यन्ति इति कश्चिदाह। कबन्धोऽसुरजातिविशेषः तद्विशेषणं छिन्नशिरस इति। अन्यआह कबन्धजात्यसुरव्यवच्छेदकं छिन्नशिरस इति विशेषणं। ऋष्टय एकधाराः खड्गाः। अन्ये कबन्धेतरे युयुधुः ननृतुश्चेत्यनुषज्यते॥ ६३॥

**( ३ शान्तनवी )** खड्गशक्त्यृष्टिपाणयो हि युध्यन्ते। 'ततं वीणादिकं वाद्यमानद्धं मुरजादिकं। वंशादिकं तु शुषिरं कांस्यतालादिकं घनं'। तथाच भरतः। 'ततं चैवावनद्धं च घनं शुषिरमेव च। चतुर्विधं तु विज्ञेयमातोद्यं लक्षणान्वितं'। अत एवाभ्यधुः। 'चतुर्विधमिदं वाद्यं वादित्रातोद्यनामकं' इति। यद्यपि 'खड्गे तु निस्त्रिंशचन्द्रहासासिऋष्टयः' इति ऋष्टिः खड्गपर्यायस्तथाप्याकृतिसन्निवेशविशेषभेदभिन्नतया पृथक्पृथक् प्रयुक्तः। खड्गशक्त्यष्टपाणय इति तु पाठे खड्गैः शक्तिभिश्च अष्टाः व्याप्ताः पाणयो येषां ते तथोक्ताः। यद्वा दैत्याः केचिदष्टभुजाः सन्तीति। खड्गाश्च शक्तयश्च अष्टस्वपि पाणिषु येषां ते खड्गशक्त्यष्टपाणयः अन्ये महासुराः संग्रामशूराः युद्धे तिष्ठतिष्ठेति देवीं भाषन्तः कथयन्तः स्वकीयामहमहमिकां प्रकटयन्तो देव्या समं योद्धुमाजग्मुरिति शेषः। तिष्ठतिष्ठेत्यत्र 'नित्यवीप्सयोः' इति नित्ये आभीक्ष्ण्ये च तङि तस्य द्विर्वचनं।

१ 'तूर्यलयान्विताः' इति चतुर्धरीसंमतः पाठः।

भाषन्त इति भाष व्यक्तायां वाचि । अनुदात्तेत्त्वात् प्राप्तस्यात्मनेपदस्य चक्षिङो ङित्त्वादनित्यत्वात्परस्मैपदं । शतृप्रत्ययः । तिष्ठतिष्ठेत्यभाषन्तेति पाठे तु अन्ये महासुराः देवीं तिष्ठतिष्ठ अद्य स मदग्रे क्व यास्यसि क्व च निलीयसे इति भर्त्सनं नामग्राहमालपन्नित्यर्थः । 'तिष्ठतिष्ठेति चैवोक्त्वा देव्याऽन्ये युयुधुर्मृधे' अन्ये च महासुराः मृधे युद्धे देवीं तिष्ठतिष्ठेति सभर्त्सनमुक्त्वा देव्यैव समं युयुधुः । 'रुधिरौघविलुप्ताङ्गाः संग्रामे लोमहर्षणे' । लोमाणि रोमाणि हृष्यन्त्युद्भवन्त्यनेनेति लोमहर्षणं तस्मिन् रोमाञ्चोद्गमकारिणि संग्रामे रुधिराणामोघाः स्तोमाः तैः रक्तसमूहैः विलुप्ताङ्गाः अपरे महासुराः देवीमपलायस्वेति संभर्त्सनमुक्त्वैवं देव्या समं युयुधिरे । 'रोमाञ्चो रोमपुलको रोमहर्षणमित्यपि' । 'ओघो वृन्देऽम्भसां रये' ॥ ६३ ॥

**( ४ नागोजीभट्टी )** कबन्धा इति । उभयत्रापि युयुधुरिति शेषः । छिन्नशिरस इति स्वरूपकथनं । छिन्नानि शिरांसि यैरिति वा । ऋष्टय उभयतोधाराः खड्गाः । भाषन्त इति छान्दसः ॥ ६३ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** कबन्धाश्छिन्नेति ६४ ॥ ६३ ॥

**( ६ दंशोद्धारः )** ऋष्टयः खड्गाकारा एकधाराः । तिष्ठतिष्ठेति भाषन्त इति । शतृप्रत्यय आर्षः । आत्मनेपदित्वात् । यद्वा भाषन्त इति भाषः । पचाद्यच् । स इवाचरतीत्याचारक्विबन्ताच्छता ॥ ६३ ॥

## पातितै रथनागाश्वैरसुरैश्च वसुंधरा । अगम्या साभवत्तत्र यत्राभूत्स महारणः ॥ ६४ ॥

**( १ गुप्तवती )** ॥ ६४ ॥

**( २ चतुर्धरी )** ॥ ६४ ॥

**( ३ शान्तनवी )** देव्या पातितैः भ्रंशितैः रथैः नागैः गजैः अश्वैरसुरैश्च आकीर्णा सा वसुंधरा अगम्या अनधिगम्या गन्तुमशक्या तत्राभूत् । क्व यत्र स महारणः संग्रामः देव्या सह महिषासुरसैन्यानामभूत् । पातितै रथेत्यत्र 'रोरि' इति रेफलोपः । रथसहिता नागाः रथनागाः । रथनागसहिताः अश्वाः रथनागाश्वाः तैः । द्वन्द्वे तु सेनाङ्गत्वादेकवद्भावः । वसूनि धारयतीति वसुंधरा । अगम्या असेव्या । गमेः 'पोरदुपधात्' इति यत् ॥ ६४ ॥

**( ४ नागोजीभट्टी )** पातितैरिति । रथनागसहितैरश्वैरित्यर्थः । एवमग्रेपि ॥ ६४ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** पातितै रथेति ६५ ॥ ६४ ॥

**( ६ दंशोद्धारः )** ॥ ६४ ॥

## शोणितौघा महानद्यः सद्यस्तत्र विसुस्रुवुः । मध्ये चासुरसैन्यस्य वारणासुरवाजिनाम् ॥ ६५ ॥

**( १ गुप्तवती )** ॥ ६५ ॥

**( २ चतुर्धरी )** वारणा गजाः । महानद्यः तत्र असुरसैन्यस्य मध्ये सद्यः विसुस्रुवुः ॥ ६५ ॥

**( ३ शान्तनवी )** किंच । तत्र युद्धे असुरसैन्यमध्ये । 'सद्यः सपदि तत्क्षणे' देव्या सह संग्रामारम्भक्षणे एव वारणानां गजानां असुराणां दैत्यानां वाजिनां घोटकानां शोणितौघाः रक्तसमूहा एव महानद्यः समुद्रगाः आपगाः सत्यः विसुस्रुवुः । प्रसुस्रुवुरित्यर्थः । विशेषेण स्रवन्ति प्रवहन्ति स्म । रक्तप्रवाहमय्यो महानद्यो बभूवुरित्यर्थः । विसुस्रुवुः । स्रु गतौ लिट् । उत्स्युवङ् ॥ ६५ ॥

**( ४ नागोजीभट्टी )** शोणितौघेति । असुरसैन्यस्य मध्ये वारणासुरवाजिनां शोणितस्य ओघः प्रवाहो यासु तादृश्यो नद्यः प्रसुस्रुवुः । छान्दसत्वात्समासः ॥ ६५ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** शोणितौघेति ६६ ॥ ६५ ॥

**( ६ दंशोद्धारः )** शोणितौघा इति । वारणाश्च असुराश्च वाजिनश्चेति द्वन्द्वः । तेषां शोणितमेव ओघो जलप्रवाहो यासु ॥ ६५ ॥

## क्षणेन तन्महासैन्यमसुराणां तथाम्बिका । निन्ये क्षयं यथा वह्निस्तृणदारुमहाचयम् ॥ ६६ ॥

**( १ गुप्तवती )** ॥ ६६ ॥

**( २ चतुर्धरी )** महासैन्यं समुदायं क्षयं निन्ये नीतवती ॥ ६६ ॥

**( ३ शान्तनवी )** यथा यद्वद्वह्निः तृणदारुमहाचयं क्षणेन क्षणमात्रेण क्षयं विनाशं नयति तथा निन्ये प्रापयामास । नयतिर्द्विकर्मकः । तृणानि च दारूणि च तृणदारूणि तेषां महान् चयः गणः समूहः तं । यद्वा यथा तथैव साम्यं ॥ ६६ ॥

**( ४ नागोजीभट्टी )** ॥ ६६ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** क्षणेन तदिति ६७ ॥ ६६ ॥

**( ६ दंशोद्धारः )** ॥ ६६ ॥

**स च सिंहो महानादमुत्सृजन्धुतकेसरः । शरीरेभ्योऽमरारीणामसूनिव विचिन्वति ॥ ६७ ॥**

**( १ गुप्तवती )** असूनिव विचिन्वति प्राणानिव विचिनोति ॥ ६७ ॥

**( २ चतुर्धरी )** असून् प्राणान् विचिन्वन् आदाय समुच्चिनोतीवेत्युत्प्रेक्षायां । विचिन्वतीति । अतिपूर्वत्वाच्चिनोतेः क्रियासमभिहारत्वान्नास्त्यपि पञ्चम्या मध्यमपुरुषैकवचनं । अतिविचिन्वति । अतीति अतिपूर्वत्वात् साध्यं ततश्छन्दसि दूरे परेचेति अतिशब्दस्य परनिपातः । यद्वा विचिनोतीति वक्तव्ये विचिन्वतीत्युक्तं । तत्र वर्णागमोऽधिकारो वा छन्दानुरोधेन । 'स देवीं शरवर्षेण ववर्ष समरेऽसुरः । यथा मेरुगिरेः शृङ्गं तोयवर्षेण तोयदः' । यथा अम्बिका महासैन्यं क्षयं निन्ये सिंहश्च तस्मिन् सिंहे असुराणां शरीरेभ्यः असून् प्राणान् विचिन्वति राशिमिव कुर्वति सति ॥ ६७ ॥

**( ३ शान्तनवी )** न केवलमम्बिकैव असुरसैन्यं क्षयं निन्ये अपितु स सिंहश्च । स प्रसिद्धो देवतावाहनीभूतो धुतकेसरः कम्पितस्कन्धकेसरः सिंहश्च महानादं महान्तं नादं कण्ठीरवत्वात् कण्ठगर्जनं उत्सृजन् कुर्वन् यथोचितं असुरसैन्यं क्षयं नाशं निन्ये । प्रापयामास । यच्चाख्यत् । 'सोपि क्रुद्धो धुतसटो देव्या वाहनकेसरी । चचारासुरसैन्येषु वनेष्विव हुताशनः' । अथवा सच सिंहः कर्ता । विचिन्वतीति विचयनक्रियया संबन्धनीयः । स प्रसिद्धः देव्याः सिंहश्च महानादमुत्सृजन् धुतकेसरः सन् अमरारीणां सुरद्विषां शरीरेभ्यः सकाशात् असून् प्राणान् विचिन्वन्निव प्राणान् गृह्णीयादिव । विचिन्वतीति चिञ् चयने । विध्यादौ लिङर्थे लेट् । कर्तरि स्वादिभ्यःश्नुः । लेटस्तिप् 'लेटोऽडाटौ' इति अडागमः । छान्दसो गुणाभावः । इकोयणचितु न । किंतु हुश्नुवोः सर्वधातुके यण् । 'इतश्च लोपः परस्मैपदेषु' इति तु वा । तेनात्र इति श्रूयते । अथवा विचिन्वतीति सप्तमीयं । सच सिंहश्च धुतकेसरः महानादमुत्सृजन् असुरान् व्यापाद्य तच्छरीरेभ्यः प्राणान् विचिन्वतीवेत्युत्प्रेक्षते । ततश्च तस्मिन्सिंहे अमरारीणां शरीरेभ्यः सकाशात् असून् प्राणान् विचिन्वतीव इतस्ततः संहर्तुं गवेषयतीव सति देव्यागणैश्च तैः असुरैः सह युद्धं कृतं । व्यधायीत्यर्थः ॥ ६७ ॥

**( ४ नागोजीभट्टी )** स चेति । क्षयं निन्ये इति शेषः । तत्रोत्प्रेक्षते । अमरारीणां शरीरेभ्यः असून्विचिन्वतीव । 'भूते लट्' इति अडागमो गुणाभावश्च छान्दसः ॥ ६७ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** स च सिंह इति ६८ ॥ ६७ ॥

**( ६ दंशोद्धारः )** स चेति । विचिनोतीति वक्तव्ये छान्दसोऽकारागमः । कश्चित्तु विचितु अतीति छेदः । अति अतिशयेन पुनःपुनर्व्यचिनोदित्यर्थः । क्रियासमभिहारे लोट् । अतः परनिपातश्छान्दस इत्यार्ष आह । तदसत् । क्रियासमभिव्याहारे द्वित्वप्रसंगात् । लोटि कृञोनुप्रयोगापत्तेश्च । नापि समुच्चयस्तत्र सामान्यवचनानुप्रयोगापत्तेश्च । यद्वा विचिन्वतीति लिङर्थे लोट् । इवो भिन्नक्रमः । विचिन्वतीव विचिनुयादिव । लेटस्तिपो 'लोटोऽडाटौ' इत्यडागमः । छान्दसो गुणाभावः । 'हुश्नुवोः' इति यण् । वस्तुतस्तु विचिन्वतीति सप्तम्यन्तं शत्रन्तं । सच सिंह इति पूर्वार्धे । असुराणां सैन्यं क्षयं निन्ये इति पूर्वत्रान्वेति । तत्र तस्मिन्सिंहे अमरारीणां असून् विचिन्वति सति देव्या गणैर्युद्धं कृतमित्यन्वयः ॥ ६७ ॥

**देव्या गणैश्च तैस्तत्र कृतं युद्धं तथासुरैः । यथैषां तुतुषुर्देवाः पुष्पवृष्टिमुचो दिवि ॥ ६८ ॥**

## इति श्रीमार्कण्डेयपुराणे देवीमाहात्म्ये महिषासुरसैन्यवधो नाम द्वितीयोऽध्यायः ॥ २ ॥

**( १ गुप्तवती )** देव्या गणैः कर्तृभिरसुरैः सह तथा युद्धं कृतं । यथा देवास्तुतुषुः ॥ ६८ ॥ इति श्रीगुप्तवत्यां मन्त्रव्याख्याने द्वितीयोऽध्यायः ॥ २ ॥

**( २ चतुर्धरी )** देव्या अम्बिकायाः गणैस्तत्र असुरैः सार्धं तथा युद्धं कृतं । यथा दिवि देवाः एषां गणानां तुष्टुवुस्तुष्टा इत्यन्वयः ॥ ६८ ॥ इति श्रीचतुर्धरीटीकायां द्वितीयोऽध्यायः ॥ २ ॥

**( ३ शान्तनवी )** तत्र संग्रामभूमौ देव्याः अम्बिकायाः अम्बिकारोषनिःश्वासभूतैर्गणैश्च तैरसुरैः सह युद्धं तथा कृतं यथा दिवि स्वर्गे देवाः दिविषदः पुष्पवृष्टिमुचः संतः एनां देवीं तुष्टुवुः स्तुतवन्तः । पुष्पाणां वृष्टयः ताः मुञ्चन्ति पुष्पवृष्टिमुचः । युद्धं महासुरैः । अथैनां तुष्टुवुरिति पाठे तु देव्याः गणैश्च तत्र युद्धभूमौ तैर्महासुरैः समं युद्धं कृतं । अथ समनन्तरं पुष्पवृष्टिमुचो देवा दिविषदः एनां युध्यमानां ससिंहां सगणामम्बिकां तुष्टुवुः । अहो इदं नामाश्चर्यं । योद्धारो मायाविनो महासुराः तैः सममेकाकिन्यबला युध्यते । महासुरसैन्यान्यप्यनेकानि दशशः शतशः अयुतशः लक्षशः कोटिशः कोटिकोटिशश्च क्षयं तयैकयैव नीतानि । तद्रणे कबन्धाः अपि तया अबलया युध्यन्ते । तेच तदबलारोषहुंकारज्वलज्ज्वलनज्वालावलीढाः क्षणेक्षणे भस्मीभवन्ति । अथच रणमण्डले तदबलाविखण्डितप्रचण्डविक्रमोल्लासिमहायोद्धृमहासुरवपुर्विगलद्रुधिरौघाः महानद्यः प्रवहन्ति इति तामत्यद्भुताद्भुतचरितां लोकाभ्युदयैकफलोदयामम्बिकां दिविषदः स्तुवन्तीत्यर्थः ॥ ६८ ॥

इति श्रीमद्राजाधिराजश्रीमत्तोमरान्वयश्रीमदुद्धरणात्मजश्रीशंतनुचक्रवर्तिविरचितायां शान्तव्यां चण्डिकामाहात्म्यटीकायां महिषासुरसैन्यवधविध्युपलक्षितो द्वितीयोऽध्यायः ॥ २ ॥

( ४ नागोजीभट्टी ) देव्या इति । चोप्यर्थे । तुतुषुस्तुष्टाः ॥६८॥ इति शिवभट्टसुतसतीगर्भजनागोजीभट्टकृते सप्तशतीव्याख्याने द्वितीयोऽध्यायः ॥ २ ॥

( ५ जगच्चन्द्रचन्द्रिका ) देव्या गणैरिति ६९ ॥ ६८ ॥ ॥ इति श्रीकूर्माचलेन्द्रराजर्षिवर्यश्रीज्ञानचन्द्रात्मजश्रीकुमारजगचन्द्राश्रितसोमयाजिपुरोहितबलभद्रपण्डितगोत्रापत्यहर्षदेवात्मजावसथिभगीरथविरचिता कण्वगोविन्दकृतसप्तशतीमन्त्रहोमविभागकारिकाणां द्वितीयाध्यायस्य जगचन्द्रचन्द्रिकाख्यटीका संपूर्णा ॥ २ ॥

( ६ दंशोद्धारः ) देव्या इति । एषां तुतुषुः तुष्टा बभूवुः । तुष्टवुरिति पाठे एतानित्यर्थे शेषे षष्ठी। युद्धमित्यध्याहारो वा ॥ ६८ ॥ ॥ इति श्रीमद्भल्लोपनामढुण्ढिराजभट्टसूरिसूनुराजारामविरचिते सप्तशतीदंशोद्धारो द्वितीयोऽध्यायः ॥ २ ॥

---

# तृतीयोऽध्यायः ३

## ऋषिरुवाच ।

**निहन्यमानं तत्सैन्यमवलोक्य महासुरः । सेनानीश्चिक्षुरः कोपाद्ययौ योद्धुमथाम्बिकाम् ॥१॥**

( १ गुप्तवती ) अथ पूर्वाध्यायान्त्यश्लोकान्तमृष्युक्तेरनुवृत्तिसत्त्वेपि पुनरेतदध्यायारम्भे ऋषिरुवाचेति कथनमध्यायसमाप्तिबोधकवाक्यस्य सूतायुक्तिरूपस्य व्यवधायकतया तस्या उत्तरत्रानुवृत्त्यभिप्रायेण । अत एव यामलादितन्त्रे समाप्तिवाक्यस्यापि स्वातन्त्र्येण मन्त्रान्तरत्वकथनमुपपद्यते । ततस्त्रिदशाः कथयामासुरित्यनेनैव गतार्थत्वात्सूर्येन्द्राग्न्यनिलेन्दूनामिति श्लोकत्रयारम्भे देवा ऊचुरित्यनपेक्षितत्वादेव नास्ति । तदुत्तरमृषिरुवाचेत्यपेक्षितमपि नैतत्तन्त्रसंमतमिति मण्डूकप्लुत्यैवाध्यायप्रारम्भस्थस्यासमाप्त्यनुकर्षः । तन्त्रान्तरेषु सप्तश्लोकोत्तरं ऋषिरिति पठ्यत एव । एवमष्टमे भक्ष्यमाणास्त्वया चोग्रा इत्यर्धादुत्तरं दशमे श्लोकत्रयोत्तरं चापेक्षितस्य तन्त्रान्तरे सतोप्यृषिमन्त्रस्य प्रकृततन्त्रेऽभावादियमेव तत्र गतिरिति दिक् ॥ १ ॥

( २ चतुर्धरी ) ॥ १ ॥

( ३ शान्तनवी ) अथ महिषासुरस्य सेनानीः चिक्षुरः चिक्षुरसंज्ञकः महासुरः तत्सैन्यं तस्य महिषासुरस्य सैन्यं देव्या निहन्यमानं नितरां हन्यमानं अवलोक्य वीक्ष्य कोपाद्योद्धुमम्बिकां देवीं ययौ जगाम । निहन्यमानमिति 'वर्तमानसामीप्ये वर्तमानवद्वा' इति भूते लट् । निहतमित्यर्थः ॥ १ ॥

( ४ नागोजीभट्टी ) ऋषिरुवाच । निहन्यमानमिति ॥ १ ॥

( ५ जगच्चन्द्रचन्द्रिका ) अथ तृतीयाध्यायस्य सप्तशतीमन्त्रहोमविभाग उच्यते । आदौ ऋषिरुवाचैक इति । आदौ अध्यायस्य पूर्वं ऋषिरुवाच इति एको मन्त्रो भवेत् । ऋषिरुवाचस्वाहा १ । पञ्चत्रिंशत्ततः परं । निहन्यमानाद्याः श्लोका मुखरागाकुलाक्षरं । इत्यन्ता इति । ततः परं ऋषिरुवाचेत्यनन्तरं निहन्यमान आद्यो येषां ते निहन्यमानाद्याः मुखरागाकुलाक्षरमित्यन्ता एतत्पर्यन्ताः श्लोकाः श्लोकरूपा मन्त्राः पञ्च अधिका त्रिंशत् पञ्चत्रिंशत् । पञ्चदश अधिका विंशतिरित्यर्थः । वर्तते इति शेषः । तथाहि ऋषिरुवाच १ । निहन्यमानमिति २ ॥ १ ॥

( ६ दंशोद्धारः ) ॥ १ ॥

**स देवीं शरवर्षेण ववर्ष समरेऽसुरः । यथा मेरुगिरेः शृङ्गं तोयवर्षेण तोयदः ॥ २ ॥**

( १ गुप्तवती ) ॥ २ ॥

( २ चतुर्धरी ) यथा मेरुगिरेः शृङ्गमिति अभूतोपमा ॥ २ ॥

( ३ शान्तनवी ) स चिक्षुराख्यः असुरः समरे संग्रामे शरवर्षेण निरन्तरं प्रयुक्तबाणपातनेन देवीं ववर्ष छादयामास । कः केन कमिव । तोयं ददातीति तोयदः मेघः तोयवर्षेण संततप्रवृद्धपाथःप्रथितपातनेन मेरुगिरेः हेमाद्रेः शृङ्गं यथा शृङ्गमिव । 'न भिन्ने वचने लिङ्गे न हीनाधिकतापि वा । उपमादूषणायालं यत्रोद्वेगो न धीमतां । क्रियावाचित्वमाख्यातुमेकोऽत्रार्थः प्रदर्शितः । प्रयोगतोऽनुसर्तव्या अनेकार्था हि धातवः' । यद्वा यथातथैवैवसाम्ये ॥ २ ॥

( ५ जगच्चन्द्रचन्द्रिका) स देवीमिति ३ ॥ २ ॥

( ६ दंशोद्धारः ) स देवीमिति । यथा मेरुगिरेः शृङ्गमित्यभूतोपमा । मेघमण्डलस्य मेरोरधो विद्यमानत्वात् ॥ २ ॥

**तस्य छित्त्वा ततो देवी लीलयैव शरोत्करान् । जघान तुरगान्बाणैर्यन्तारं चैव वाजिनाम् ॥३॥**

**( १ गुप्तवती )** ॥ ३ ॥

**( २ चतुर्धरी )** शरोत्करान् शरसमूहान् । यन्तारं सारथिं ॥ ३ ॥

**( ३ शान्तनवी )** ततोऽनन्तरं देवी संग्रामे लीलयैव क्रीडयैव अनायासेनैव बाणैः तस्य चिक्षुरसंज्ञस्य महासुरस्य शरोत्करान् बाणपुञ्जान् छित्त्वा खण्डयित्वा तुरगान् घोटकान् बाणैर्जघान । अथच बाणैरेव वाजिनां घोटकानां यन्तारं सारथिं जघान । 'क्रीडा लीला च नर्म च' । 'स्त्रीणां विलासविव्वोकविभ्रमाललितं तथा । हेलालीलेत्यमी वाहाः क्रियाः शृङ्गारभावजाः' 'नियन्ता प्राजिता यन्ता सूतः क्षत्ता च सारथिः' ॥ ३ ॥

**( ४ नागोजीभट्टी )** तस्येति । उत्करः समूहः । वाजिनां यन्तारं रथं च जघानेत्यन्वयः ॥ ३ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** तस्य छित्त्वेति ४ ॥ ३ ॥

**( ६ दंशोद्धारः )** ॥ ३ ॥

**चिच्छेद च धनुः सद्यो ध्वजं चातिसमुच्छ्रितम् । विव्याध चैव गात्रेषु छिन्नधन्वानमाशुगैः ॥४॥**

**( १ गुप्तवती )** ॥ ४ ॥

**( २ चतुर्धरी )** आशुगैः बाणैः ॥ ४ ॥

**( ३ शान्तनवी )** सा देवी सद्यः सपदि तत्क्षणे एव आशुगैः विशिखैः धनुः कोदण्डं चिच्छेद अच्छिनत् । अत्युन्नतं अत्युच्चतरं ध्वजं केतनं आशुगैः चिच्छेद अच्छैत्सीत् । छिन्नं धनुः यस्य स तथोक्तः तं छिन्नधन्वानं चिक्षुरं महासुरं गात्रेषु सर्वावयवेषु च आशुगैरेव विव्याध ताडयामास । व्यध ताडने 'लिट्यभ्यासस्योभयेषां' इति संप्रसारणं । 'आशुगौ वायुविशिखौ' । धनुरर्धर्चादित्वान्नपुंसकेपि । अन्यथा 'धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम्' इत्यभिधानात् पुंस्येव स्यात् । 'धनुर्वंशविशुद्धोपि निर्गुणः किं करिष्यति' इतिवत् ॥ ४ ॥

**( ४ नागोजीभट्टी )** चिच्छेदेति । आशुगाः बाणाः ॥ ४ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** चिच्छेदेति ५ ॥ ४ ॥

**( ६ दंशोद्धारः )** ॥ ४ ॥

**स च्छिन्नधन्वा विरथो हताश्वो हतसारथिः । अभ्यधावत तां देवीं खड्गचर्मधरोऽसुरः ॥ ५ ॥**

**( १ गुप्तवती )** ॥ ५ ॥

**( २ चतुर्धरी )** ॥ ५ ॥

**( ३ शान्तनवी )** सः चिक्षुराख्यः महासुरः देव्या छिन्नं धन्व धनुर्यस्य सः छिन्नधन्वा । विच्छिन्नो रथो यस्य स विरथः। हताः अश्वाः यस्य सः हताश्वः । हतः सारथिर्यस्य सः हतसारथिः । ईदृगवस्थः खड्गचर्मधरः सन् तां देवीं हन्तुं अभ्यधावत उपाद्रवत् । सृ गतौ । सर्तेर्वेगितायां गतौ धावादेशो वक्तव्यः । यद्येवं सर्तेः परस्मैपदित्वादात्मनेपदं न स्यात् । स्यात्कर्तरि कर्मव्यतिहार इति । न स्यात् 'न गतिहिंसार्थेभ्यः' इति प्रतिषेधात् । अतश्च 'अभ्यधावत्ततो देवीं' इत्यपाठिषुः । यद्वा धावु गतिशुद्ध्योः इत्येतस्य स्वरितेत्त्वात् पाक्षिकमस्यात्मनेपदमित्यस्तु । अभ्यधावत तां देवीमित्यपि पाठपाटवं पठितॄणां। 'फलकोऽस्त्री फलं चर्म' गात्रत्राणं चर्ममयत्वाच्चर्म । धृञ् धारणे धरते धरः। खड्गश्च चर्म च खड्गचर्म । सेनाङ्गत्वोदकवद्भावः । खड्गचर्मणो धरः खड्गचर्मधरः । अन्यथा कर्मण्यण् स्यात् ॥ ५ ॥

**( ४ नागोजीभट्टी )** ॥ ५ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** स छिन्नधन्वेति ६ ॥ ५ ॥

**( ६ दंशोद्धारः )** ॥ ५ ॥

**सिंहमाहत्य खड्गेन तीक्ष्णधारेण मूर्धनि । आजघान भुजे सव्ये देवीमप्यतिवेगवान् ॥ ६ ॥**

**( १ गुप्तवती )** सव्ये वामे ॥ ६ ॥

**( २ चतुर्धरी )** सिंहमाहत्येति । सव्ये वामे । तस्या भुजमित्यग्रिमेणान्वयः ॥ ६ ॥

**( ३ शान्तनवी )** अतितरां वेगवान् इति अतिवेगवान् सः चिक्षुरः सेनानीरसुरः तीक्ष्णाः नेमयो धारा यस्य तेन तथोक्तेन खड्गेन मण्डलाग्रेण सिंहं मूर्धनि आहत्य प्रहृत्य देवीमपि सव्ये वामे भुजे आजघान प्रजहार । अकर्मकत्वात्पराङ्गकर्मकत्वाच्च 'आङो यमहनः' इत्यात्मनेपदाप्राप्तिः । 'वामं शरीरं सव्यं स्यादपसव्यं तु दक्षिणं ॥ ६ ॥

**( ४ नागोजीभट्टी )** सिंहमिति । सव्ये वामे ॥ ६ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** सिंहमाहत्येति ७ ॥ ६ ॥

**( ६ दंशोद्धारः )** सिंहमिति । 'आङो यमहनः' इत्यात्मनेपदं तु न । अकर्मकात्स्वाङ्गकर्मकादिति वचनात् । सव्ये वामे ॥ ६ ॥

**तस्याः खड्गो भुजं प्राप्य पफाल नृपनन्दन । ततो जग्राह शूलं स कोपादरुणलोचनः ॥ ७ ॥**

**( १ गुप्तवती )** पफाल विशीर्णः ॥ ७ ॥

**( २ चतुर्धरी )** तस्या भुजमित्यन्वयः । पफाल अभज्यतेत्यर्थः । ञिफला विशरण इत्यस्य रूपं । हे नृपनन्दन । यद्वा नन्दयतीति नन्दः । हे नृपनन्द । न पफाल आत्मक्रियानिष्पत्तिं नाकरोत् । एवंच फल निष्पत्तावित्यस्मादेव रूपं । तच्छूलमिति पाठः । 'अस्त्री शूलं रुगायुधं' इति द्विलिङ्गत्वाभिधानात् ॥ ७ ॥

**( ३ शान्तनवी )** हे राजन् सुरथ निशामयेति तस्याः देव्याः वामभुजं प्राप्य चिक्षुराख्यमहासुरप्रयुक्तः खड्गः मण्डलाग्रः पफाल । ञिफला विशरणे । विशशार चूर्णीबभूव विशीर्णोऽभूत् । ततः खड्गभङ्गानन्तरं कोपात् अरुणलोचनः रक्तलोचनः सः चिक्षुराख्योऽसुरः शूलं त्रिशूलं आयुधं जग्राह अग्रहीत् । 'अस्त्री शूलं रुगायुधं' ॥ ७ ॥

**( ४ नागोजीभट्टी )** तस्या इति । पफाल विशीर्णः । तस्या भुजमित्यन्वयः ॥ ७ ॥

**( ५ जगच्चन्द्रचन्द्रिका)** तस्या खड्ग इति ८ ॥ ७ ॥

**( ६ दंशोद्धारः )** तस्याः इति । पफाल व्यशीर्यत । ञिफला विशरणे । यद्वा नृपान्नन्दयतीति नृपनन्दनः । मूलविभुजादित्वात्कः । तत्संबुद्धिः हे नृपनन्दन । पफाल । निजकार्यं चकारेत्यर्थः । फल निष्पत्तौ । अन्तर्भावितण्यर्थः ॥ ७ ॥

**चिक्षेप च ततस्तत्तु भद्रकाल्यां महासुरः । जाज्वल्यमानं तेजोभी रविबिम्बमिवाम्बरात् ॥ ८ ॥**

**( १ गुप्तवती )** ॥ ८ ॥

**( २ चतुर्धरी )** तेजोभी रश्मिभिः जाज्वल्यमानं अत्यन्तं ज्वलत् । अम्बरात् आकाशे । 'सुपां सुपो भवन्ति' इति सप्तम्यर्थे पञ्चमी । यद्वा अम्बरे समवस्थायि रविबिम्बमिवेति ल्यब्लोपे पञ्चमी । केचित्तु अम्बरं । अत सातत्यगमने इति क्विप् रविबिम्बस्यैव विशेषणमाहुः । तेजोभी रविबिम्बमिवेति । रोरीतिलोपे शिति दीर्घत्वं । ह्रस्वपाठे तु अविशब्द एव रविबिम्बवचनः । 'अविर्मेषे गिरौ सूर्ये' इत्यभिधानात् ॥ ८ ॥

**( ३ शान्तनवी )** ततः त्रिशूलग्रहणादनन्तरं चिक्षुराख्यो महासुरः ततः प्राक् गृहीतत्रिशूलमायुधं भद्रकाल्यां देव्यां विषये चिक्षेप अक्षैप्सीत् । क्षिप प्रेरणे । कीदृशं त्रिशूलं । अम्बरात् आकाशात् अम्बरमाकाशं आक्रम्य तेजोभिः रविबिम्बमिव सूर्यमण्डलमिव जाज्वल्यमानं देदीप्यमानं इत्यर्थः । अम्बरादिति कर्मणि ल्यब्लोपे पञ्चमी वक्तव्या । तेजोभिः रविबिम्बमित्यत्र रोरीति रेफलोपे पूर्वस्याणो दीर्घः । तेजोभिरविबिम्बमित्यदीर्घपाठेऽपि अवेः सूर्यस्य बिम्बमिवेत्यर्थः । 'अवयः शैलमेषार्काः' इत्यभिधानात् । अम्बरमिति सततं गच्छति अम्बरादिति प्रथमान्तत्वे तु रविबिम्बविशेषणं द्रष्टव्यं । भद्रा च सा कालस्य कालाग्निरुद्रस्य स्त्री काली चेति भद्रकाली । यद्वा काली चण्डिका ॥ ८ ॥

**( ४ नागोजीभट्टी )** चिक्षेपेति । तत् शूलं अम्बराद्रविबिम्बमिव इत्युत्तरान्वयि । तेजोभिः इत्यत्र इलोप इति दीर्घः ॥ ८ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** चिक्षेपेति ९ ॥ ८ ॥

**( ६ दंशोद्धारः )** चिक्षेपेति । जाज्वल्यमानमत्यर्थं ज्वलत् । अम्बरात् आकाशे । छान्दसत्वाद्विभक्तिव्यत्ययः । यद्वा अम्बरे अवस्थाप्य चिक्षेपेत्यर्थः । ल्यब्लोपे पञ्चमी । यद्वा अम्बरमततीत्यम्बरात् । प्रथमान्तं रविबिम्बविशेषणं । अत सातत्यगमनेऽस्मात् क्विप् तेजोभिरविबिम्बमिति पाठे अविः बिम्बमिति च्छेदः । 'अविः शैले रवौ मेषे' इति विश्वः ॥ ८ ॥

**दृष्ट्वा तदापतच्छूलं देवी शूलममुञ्चत । तेन तच्छतधा नीतं शूलं स च महासुरः ॥ ९ ॥**

**( १ गुप्तवती )** तेन देवीमुक्तेन प्रतिशूलेन स चिक्षुरश्च शतधा नीत इति लिङ्गविपरिणामेनान्वयः ॥ ९ ॥

**( २ चतुर्धरी )** ॥ ९ ॥

**( ३ शान्तनवी )** तत् चिक्षुरप्रयुक्तं आपतत् आगच्छत् शूलं कर्म दृष्ट्वा देवी स्वकीयं शूलं अमुञ्चत प्रयुक्तवती । तेन देव्या अम्बिकया प्रयुक्तेन शूलेन तत् चिक्षुरप्रयुक्तं शूलं शतधा शतप्रकारैः चूर्णतां नीतं प्रापितमभूत् । न केवलं चि-

क्षुरसंबन्धिशूलमेव शतधा चूर्णतां नीतं अपितु सः चिक्षुरश्च महासुरः देव्या प्रयुक्तेन शूलेन शतधा चूर्णतां नीत इत्यर्थः । चिक्षुरप्रयुक्तं शूलं चिक्षुरश्च देव्या प्रयुक्तेन शूलेन शतधा चूर्णतां नीतश्चाभूदित्यर्थः । 'अस्त्री शूलं रुगायुधं' । अमुञ्चत । मुच्लृ मोक्षणे स्वरितेत् ॥ ९ ॥

(४ नागोजीभट्टी) दृष्ट्वेति । तत् एवं सुन्दरं शूलमापतत् आगच्छत् दृष्ट्वा चेत्यर्थः । तच्च शतधा नीतमिति शेषः ॥९॥

(५ जगच्चन्द्रचन्द्रिका) दृष्ट्वा तदेति १० ॥ ९ ॥

(६ दंशोद्धारः) ॥ ९ ॥

**हते तस्मिन्महावीर्ये महिषस्य चमूपतौ । आजगाम गजारूढश्चामरस्त्रिदशार्दनः ॥ १० ॥**

(१ गुप्तवती) ॥ १० ॥

(२ चतुर्धरी) ॥ १० ॥

(३ शान्तनवी) महिषासुरस्य चमूपतौ सेनाधिनाथे तस्मिन् चिक्षुरे चिक्षुराख्ये महासुरे देव्या हते संग्रामे व्याहते सति चामरो नाम त्रिदशार्दनः अमरहिंसनः महासुरः गजारूढः सन् देव्या सह संग्राममवितुं आजगाम आययौ आगतवान् । वीर्यं बलं प्रभावश्च । अर्दयति हिनस्ति अर्दनः ॥ १० ॥

(४ नागोजीभट्टी) हते तस्मिन्निति ॥ १० ॥

(५ जगच्चन्द्रचन्द्रिका) हते तस्मिन्निति ११ ॥ १० ॥

(६ दंशोद्धारः) हत इति । चामरनामा दैत्यः ॥ १० ॥

**सोऽपि शक्तिं मुमोचाथ देव्यास्तामम्बिका द्रुतम् । हुंकाराभिहतां भूमौ पातयामास निष्प्रभाम् ११**

(१ गुप्तवती) ॥ ११ ॥

(२ चतुर्धरी) ॥ ११ ॥

(३ शान्तनवी) अथ सः चामरः चामरनामा महादैत्यः देव्याः प्रतिघातनाय शक्तिं आयुधविशेषं मुमोच । प्रचिक्षेप । अथ अम्बिका देवी तां शीघ्रं सत्वरं हुंकाराभिहतां अतएव निष्प्रभां तां चामरदैत्यप्रयुतां शक्तिं भूमौ पातयामास प्रभ्रंशयांचकार ॥ ११ ॥

(४ नागोजीभट्टी) सोऽपीति । हुंकारेति ह्रस्वम् ॥ ११ ॥

(५ जगच्चन्द्रचन्द्रिका) सोऽपि शक्तिमिति १२ ॥ ११ ॥

(६ दंशोद्धारः) सोऽपीति । देव्यै इति वक्तव्ये शेषे षष्ठीयम् । वधायेत्यध्याहारो वा ॥ ११ ॥

**भग्नां शक्तिं निपतितां दृष्ट्वा क्रोधसमन्वितः । चिक्षेप चामरः शूलं बाणैस्तदपि साच्छिनत् ॥१२॥**

(१ गुप्तवती) ॥ १२ ॥

(२ चतुर्धरी) ॥ १२ ॥

(३ शान्तनवी) चामराख्यो महासुरः आत्मीयां शक्तिं आयुधं देव्या भग्नां चूर्णितां भूमौ निपतितां प्रभ्रष्टां दृष्ट्वा क्रोधसमन्वितः अप्रतिहतशक्तिः । शक्तिरद्य मदीया हता ईदृगवस्थामास्तादिति क्रोधोर्मिमूर्च्छितः सन् देवीं प्रति शूलं चिक्षेप मुमोच । तदपि चामरदैत्यप्रयुक्तं शूलं सा देवी बाणैः कृत्वा अच्छिनत् खण्डयामास । छिदिर् द्वैधीकरणे । भूतानद्यतने लङ् लिङ्विषयेपि क्वचिदस्ति । पुराकल्प एव तदासीदिति भाष्यकारप्रयोगाल्लिङ्गादित्याहुः ॥ १२ ॥

(४ नागोजीभट्टी) ॥ १२ ॥

(५ जगच्चन्द्रचन्द्रिका) भग्नां शक्तिमिति १३ ॥ १२ ॥

(६ दंशोद्धारः) ॥ १२ ॥

**ततः सिंहः समुत्पत्य गजकुम्भान्तरस्थितः । बाहुयुद्धेन युयुधे तेनोच्चैस्त्रिदशारिणा ॥ १३ ॥**

(१ गुप्तवती) ॥ १३ ॥

(२ चतुर्धरी) समुत्पत्य आप्लुत्य ॥ १३ ॥

(३ शान्तनवी) ततः देव्या चामरीये शूले भग्ने चूर्णिते सति अनन्तरं सिंहः पञ्चास्यः उच्चैः समुत्पत्य सम्यगुत्प्लुत्य

गजस्य कुम्भौ तयोरन्तरं मध्यं तस्मिन् गजकुम्भान्तरे विन्दौ स्थितः सन् तेन त्रिदिशारिणा सुरद्विषा चामरेण देव्येन समं उच्चैरतितरां बाहुभ्यां प्रवर्तितेन युद्धेन बाहुयुद्धेन नियुद्धेन संप्रहारेण युयुधे संप्रजह्ने । युध्यतेरनुदात्तेत्त्वादात्मनेपदं। 'कुम्भौ तु पिण्डौ शिरसस्तयोर्मध्ये विदुः पुमान्' ॥ १३ ॥

(४ नागोजीभट्टी) तत इति । समुत्पत्य आप्लुत्य । गजकुम्भान्तरस्थित इत्येकं पदम् ॥ १३ ॥

(५ जगच्चन्द्रचन्द्रिका) ततः सिंह इति १४ ॥ १३ ॥

(६ दंशोद्धारः) ॥ १३ ॥

**युध्यमानौ ततस्तौ तु तस्मान्नागान्महीं गतौ । युयुधातेऽतिसंरब्धौ प्रहारैरतिदारुणैः ॥ १४ ॥**

(१ गुप्तवती) युयुधाते इति प्रकृतिवद्भावश्छान्दसः ॥ १४ ॥

(२ चतुर्धरी) अतिसंरब्धौ क्रोधातिशयशालिनौ ॥ १४ ॥

(३ शान्तनवी) ततो बाहुयुद्धप्रवृत्तितः तु पुनः युध्यमानौ तौ सिंहचामरौ तस्मान्नागाद्गजात्सकाशात् महीं भूमिं गतौ सन्तौ अतिदारुणैः भयंकरैः प्रहारैः अतिसंरब्धौ अतितरां क्रोधाविष्टौ युयुधाते । संग्रामं चक्रुः । संपूर्वो रभिः क्रोधार्थः । युयुधाते अतिसंरब्धौ इति छेदः । मणीवादित्वात्प्रगृह्यत्वाभावात्प्रकृतिभावाभावात् 'एङः पदान्तादति' इति पूर्वरूपत्वमेव । अथवा शिष्टप्रयोगतः संज्ञापूर्वको विधिरनित्यः । ओर्गुणादित्यतः स्वायंभुवप्रयोगवत् ॥ १४ ॥

(४ नागोजीभट्टी) युध्यमानाविति । नागात् गजात् । युयुधाते इत्यत्र प्रगृह्यत्वाभावश्छान्दसः ॥ १४ ॥

(५ जगच्चन्द्रचन्द्रिका) युध्यमानाविति १५ ॥ १४ ॥

(६ दंशोद्धारः) युध्यमानाविति । नागात् गजात् युयुधातेऽतिसंरब्धावित्यत्र संधिरार्षः । एदन्तद्विवचनत्वेन प्रगृह्यत्वात् प्राचामनुरोधेनेद् । नव्यमते अतिशब्दः प्रकारे । मणीवेत्यत्र वशब्दो वाशब्दो वा बोध्य इत्युक्तं । अवयवानामपि समुदायार्थत्वमत्र बीजं । अतएव भागुरिरवाप्योरलोपमाह । अवाप्योरित्युदाहरणं परिगणने तु धिषणेति न सिध्येदित्याशयः । मणीवादित्वं वा कल्प्यं ॥ १४ ॥

**ततो वेगात्खमुत्पत्य निपत्य च मृगारिणा । करप्रहारेण शिरश्चामरस्य पृथक्कृतम् ॥ १५ ॥**

(१ गुप्तवती) ॥ १५ ॥

(२ चतुर्धरी) वेगात् गतितारम्यात् खमाकाशं । मृगारिणा सिंहेन पृथक्कृतं छिन्नं ॥ १५ ॥

(३ शान्तनवी) ततो युद्धरसावेशतो वेगात् जगज्जयरयात् खं अन्तरिक्षं उत्पत्य उत्प्लुत्य पुनर्वेगान्निपत्य च मृगारिणा मृगशत्रुणा सिंहेन चामरस्य चामरनाम्नो महासुरस्य शिरः मस्तकं करप्रहारेण करकृतः प्रहारस्ताडनं तेन पृथक्कृतं दूरीकृतं छिन्नं । 'प्रवाहजवयोर्वेगो विण्मूत्रातिप्रवर्तने' ॥ १५ ॥

(४ नागोजीभट्टी) तत इति । युद्धानन्तरं वेगात्खमुत्पत्य गत्वा पुनस्ततो निपत्यावतीर्य इत्यर्थः ॥ १५ ॥

(५ जगच्चन्द्रचन्द्रिका) ततो वेगादिति १६ ॥ १५ ॥

(६ दंशोद्धारः) ॥ १५ ॥

**उदग्रश्च रणे देव्या शिलावृक्षादिभिर्हतः । दन्तमुष्टितलैश्चैव करालश्च निपातितः ॥ १६ ॥**

(१ गुप्तवती) मुष्टिभिस्तलैश्चपेटाभिश्च ॥ १६ ॥

(२ चतुर्धरी) रणे युद्धे दन्तेन हस्तिदन्तेन निर्मितो मुष्टिः खड्गमुष्टिस्तस्य तलैरधोभागाघातैः । यद्वा दन्तैर्मुष्टिभिस्तलैः करतलैश्च । भुजसहस्रत्वाद्बहुवचनं ॥ १६ ॥

(३ शान्तनवी) रणे देव्या शिलाभिः पाषाणैः वृक्षैस्तरुभिः। आदिशब्दात् धनुराद्यायुधैश्च उदग्रः उदग्राख्यो महासुरः हतः न्यघाति व्यसूकृतः । करालो नाम महासुरः चकारात्ससैन्यः दन्तमुष्टितलैः दन्तैर्मुष्टिभिः तलैः प्रतलैः । चशब्दात् खड्गादिभिरायुधैश्च रणे सिंहेन गणैः देव्या च निपातितः न्यघाति व्यसूकृतः । 'पाणौ चपेटप्रतलप्रहस्ता विस्तृताङ्गुलौ' । दन्तैः सहिताः मुष्टयः दन्तमुष्टयः दन्तमुष्टिभिः सहिताः तलाः प्रतलाः दन्तमुष्टितलाः तैः । द्वन्द्वे तु प्राण्यङ्गत्वादेकवद्भावः स्यात् । दन्तो गजदन्तः तेन निर्मितो मुष्टिः छुरिकामुष्टिः तस्य तलैः भागदेशैः छुरिकाधाराविशेषैश्च निपातित इत्यपि व्याख्यानं । कश्चिद्दत्तमुष्टितलैरिति क्लान्तं पाठित्वा दत्तं मुष्टितलं यैर्गुणैस्ते दत्तमुष्टितलाः तैर्निपातित इत्यपि व्याख्यत् ॥१६॥

(४ नागोजीभट्टी) उदग्रश्चेति । रणे युद्धे दन्तैर्गजदन्तनिर्मितायुधैः मुष्टिभिः तलैश्चपेटैश्च इत्यर्थः । यद्वा दन्तैर्दन्तक्षतैरित्यर्थः ॥ १६ ॥

(५ जगच्चन्द्रचन्द्रिका) उदग्रश्च रण इति १७ ॥ १६ ॥

(६ दंशोद्धारः) उदग्र इति । उदग्रनामा दैत्यः । एवमग्रेपि दैत्यनामान्यूह्यानि । दन्तैः मुष्टिभिः तलैश्चपेटाभिः । यद्वा दन्तो गजदन्तः तन्मयमुष्टिभिस्तलैस्तलभागैरित्यर्थः ॥ १६ ॥

**देवी क्रुद्धा गदापातैश्चूर्णयामास चोद्धतम्। बाष्कलं भिन्दिपालेन बाणैस्ताम्रं तथान्धकम् १७**

(१ गुप्तवती) ॥ १७ ॥

(२ चतुर्धरी) उद्धतं उद्धतनामानं ॥ १७ ॥

(३ शान्तनवी) रणे देवी क्रुद्धा उद्धतं नाम महासुरं चशब्दात् ससैन्यं गदापातैश्चूर्णयामास संपिपेष परासुमकार्षीत् । त्रिनेत्रा परमेश्वरी चण्डिका देवी रणे क्रुद्धा सती भिन्दिपालेन हस्तक्षेप्येण लगुडेन बाष्कलं नाम महासुरं जघान जिहिंस व्यसुं चकार । 'भिन्दिपालः सृगस्तुल्यौ' । 'रिष्टिः कृपाणिका प्रोक्ता भिन्दिपालस्तु गोफणिः' इति । भिण्डिपालव्याख्यानममूलमपव्याख्यानं मूले प्रेक्ष्यं प्रेक्षावद्भिः । तथा परमेश्वरी बाणैस्ताम्रं नाम माहासुरं जघान व्यसुं चकार । तथा परमेश्वरी बाणैरेव अन्धकनामानं महासुरं जघान ॥ १७ ॥

(४ नागोजीभट्टी) देवीति । उद्धतं तन्नामानं । भिन्दीति दमध्यः ॥ १७ ॥

(५ जगच्चन्द्रचन्द्रिका) देवी क्रुद्धेति १८ ॥ १७ ॥

(६ दंशोद्धारः) ॥ १७ ॥

**उग्रास्यमुग्रवीर्यं च तथैव च महाहनुम्। त्रिनेत्रा च त्रिशूलेन जघान परमेश्वरी ॥ १८ ॥**

(१ गुप्तवती) ॥ १८ ॥

(२ चतुर्धरी) ॥ १८ ॥

(३ शान्तनवी) तथा परमेश्वरी उग्रास्यं उग्रं आस्यं मुखं यस्य तं उग्रास्यं नाम महासुरं जघान व्यसुंचकार तथा परमेश्वरी उग्रवीर्यं उग्रं वीर्यं यस्य तं उग्रवीर्यनामानं महासुरं जघान । चशब्दात्ससैन्यं तं व्यसुं चकार । 'वीर्यं बलं प्रभावश्च' । तथैव परमेश्वरी बाणैरेव महान्तौ हनू कपोलाधोभागौ यस्य तं महाहनुं नाम महासुरं जघान । चशब्दात्ससैन्यं तं व्यसुं चकार । त्रिनेत्रं चेति पाठे परमेश्वरी त्रीणि नेत्राणि यस्य तं त्रिनेत्रं नाम महासुरं त्रिशूलेन जघान । चशब्दात्ससैन्यकं तं व्यसुं चकार । परमा ईश्वरी । अश्नोतेराशुकर्मणि वरट्चेचोपधायाः । यद्वा परमेश्वरस्य स्त्री परमेश्वरी ॥ १८ ॥

(४ नागोजीभट्टी) ॥ १८ ॥

(५ जगच्चन्द्रचन्द्रिका) उग्रास्यमिति १९ ॥ १८ ॥

(६ दंशोद्धारः) ॥ १८ ॥

**बिडालस्यासिना कायात्पातयामास वै शिरः। दुर्धरं दुर्मुखं चोभौ शरैर्निन्ये यमक्षयम् ॥१९॥**

(१ गुप्तवती) ॥ १९ ॥

(२ चतुर्धरी) बिडालस्य बिडालाक्षस्य । संज्ञैकदेशे संज्ञाप्रतीतिरिति न्यायात् । यमक्षयं यमगृहं । बाणैर्दुर्धरं दुर्मुखं निन्ये ॥ १९ ॥

(३ शान्तनवी) रणे देवी असिना खड्गेन बिडालस्य बिडालनाम्नो महासुरस्य शिरः मूर्धानं कायात् । शरीरात् वै प्रख्यातितः पातयामास प्रभ्रंशयामास । रणे देवी शरैः दुर्धरं च दुर्मुखं च उभौ महासुरौ कर्मणी । यमक्षयं यमस्य गृहं द्वितीयं कर्म । निन्ये प्रापयामास । नयतिर्द्विकर्मकः । 'क्षयो यक्ष्मणि कल्पान्ते तथैव निलयेऽपि च' ।

कालं च कालदण्डेन कालरात्रिरपातयत् । उग्रदर्शनमत्युग्रैः खड्गपातैरताडयत् ॥ २० ॥
असिनैवासिलोमानमाच्छिदत्सा रणोत्सवे । गणैः सिंहेन देव्या च जपक्ष्वेडाकृतोत्सवैः ॥ २१ ॥

कालं नाम महासुरं कालरात्रिरम्बिका कालदण्डेन अपातयत् । उग्रदर्शनं नाम महासुरं अत्युग्रैः खड्गपातैः कालरात्रिरम्बिका

---

१ इदं श्लोकद्वयं पाठकर्तृभिर्नाद्रियते । केवलं शान्तनव्यामेव व्याख्यातं ।

अताडयत् । तड आघाते चुरादिः । सा कालरात्रिरम्बिका रणोत्सवे असिनैव असिलोमनामानं महासुरं अच्छिनत् अच्छैत्सीत् । 'क्ष्वेडा तु सिंहनादः स्यात्' कालं चेत्यादिश्लोकद्वयं केचित्पठन्ति केचित्तु न ॥ १९ ॥

**( ४ नागोजीभट्टी )** बिडालस्येति । यमक्षयं यमगृहम् ॥ १९ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** बिडालस्येति २० ॥ १९ ॥

**( ६ दंशोद्धारः )** बिडालस्येति । बिडालाख्यस्य । यमक्षयं यमगृहम् ॥ १९ ॥

**एवं संक्षीयमाणे तु स्वसैन्ये महिषासुरः । माहिषेण स्वरूपेण त्रासयामास तान्गणान् ॥ २० ॥**

**( १ गुप्तवती )** ॥ २० ॥

**( २ चतुर्धरी )** ॥ २० ॥

**( ३ शान्तनवी )** एवं प्रागुक्तभङ्ग्या स्वसैन्ये आत्मीयसैन्ये स्वयं संक्षीयमाणे सति महिषासुरस्तु तदसहमानः सन् महिषेण महिषसंबन्धिना महिषाकारेण स्वरूपेण तान् देवीसंबन्धिनो गणान् त्रासयामास उद्वेजयामास । संक्षीयमाण इति । क्षि क्षये भ्वादिरकर्मकः परस्मैपदी । इह तु प्रयोगतोऽन्तर्भावितण्यर्थविवक्षायां 'नाभुक्तं क्षीयते कर्म' 'क्षीयन्ते चास्य कर्माणि' इतिवत् सकर्मकत्वे सति कर्मकर्तरि लटः शानचि 'कर्मवत्कर्मणा तुल्यक्रियः' इति यक्यात्मनेपदे अकृत्सार्वधातुकयोर्दीर्घे रूपं ॥ २० ॥

**( ४ नागोजीभट्टी )** एवमिति । गणान् निश्वाससंभवान् ॥ २० ॥

**( ५ जगच्चन्द्रचन्द्रिका )** एवं संक्षीयेति २ ॥ २० ॥

**( ६ दंशोद्धारः )** एवमिति । तान् निःश्वासभवान् ॥ २० ॥

**कांश्चित्तुण्डप्रहारेण खुरक्षेपैस्तथापरान् । लाङ्गूलताडितांश्चान्यान् शृङ्गाभ्यां च विदारितान् २१**

**( १ गुप्तवती )** ॥ २१ ॥

**( २ चतुर्धरी )** खुरक्षेपैः पादाघातैः । कवर्गद्वितीयोयं खुरशब्दः । 'अश्वादिस्तु कवर्गयोः' इत्यभिधानात् ॥ २१ ॥

**( ३ शान्तनवी )** स महिषासुरः तुण्डप्रहारेण तुण्डेन वक्त्रेण जनिताघातेन कांश्चित्कानपि गणान् देवीरोषजनितान् पुरुषान् रणशूरान् भूतले पातयामास । तथा खुरक्षेपैः अपरान् गणान् भूमौ भूतले पातयामास । 'शफं क्लीबे खुरः पुमान्' । स तथा अन्यान् लाङ्गूलताडितान् गणान् भूमौ पातयामास । 'पुच्छोऽस्त्री लूमलाङ्गूले' । स तथान्यांश्च शृङ्गाभ्यां विदारितान् विषाणाभ्यां भेदितान् गणान् भूमौ पातयामास । 'दारिते भिन्नभेदितौ' ॥ २१ ॥

**( ४ नागोजीभट्टी )** कांश्चिदिति । खुरः कवर्गादिः ॥ २१ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** कांश्चित्तुण्डेति २२ ॥ २१ ॥

**( ६ दंशोद्धारः )** ॥ २१ ॥

**वेगेन कांश्चिदपरान्नादेन भ्रमणेन च । निःश्वासपवनेनान्यान्पातयामास भूतले ॥ २२ ॥**

**( १ गुप्तवती )** ॥ २२ ॥

**( २ चतुर्धरी )** वेगेन गतितारतम्येन । भ्रमणेन मण्डलाकारगत्या ॥ २२ ॥

**( ३ शान्तनवी )** तथा महिषः नादेन ध्वनिना कण्ठगर्जितेन अपरान् व्याकुलचित्तान् भूमौ पातयामास । सः तथा अन्यान्गणान् निःश्वासपवनेन निःश्वास एव पवनो वायुस्तेन पातयामास । सः महिषः तथा अपरान् गणान् भ्रमणेन परितोऽग्रतःपार्श्वतश्च भूतले पातयामास । स तथा वेगेन जवेन कांश्चिदपरान्भूमौ पातयामास ॥ २२ ॥

**( ४ नागोजीभट्टी )** वेगेन कांश्चिदिति । वेगयुक्तभ्रमणेन । वेगो गतेः । भ्रमणं मण्डलाकारगतिः ॥ २२ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** वेगेनेति २३ ॥ २२ ॥

**( ६ दंशोद्धारः )** ॥ २२ ॥

**निपात्य प्रमथानीकमभ्यधावत सोऽसुरः । सिंहं हन्तुं महादेव्याः कोपं चक्रे ततोऽम्बिका ॥२३॥**

**( १ गुप्तवती )** ॥ २३ ॥

**( २ चतुर्धरी )** प्रमथा गणाः तेषामनीकं सैन्यं ॥ २३ ॥

---

१ 'क्षुरक्षेपैः' इत्यपि पाठः ।

**( ३ शान्तनवी )** इत्थं महिषासुरः महादेव्याः अम्बिकायाः प्रमथानां अनीकानि सैन्यानि प्रमथगणान् निपात्य भूमौ नितरां पातयित्वा तस्याः सिंहं पञ्चास्यं हन्तुं हिंसितुं अभ्यधावत आभिमुख्येन अधावत् । 'वरूथिनी बलं सैन्यं चक्रं चानीकमस्त्रियां' । ततः प्रमथगणमथनतः सिंहं हन्तुमागमत् । ततश्च महिषमहासुरविषयेऽम्बिका चण्डिका कोपं चक्रे क्रोधं व्यधादित्याह । कोपं चक्रे ततोऽम्बिकेति ॥ २३ ॥

**( ४ नागोजीभट्टी )** निपात्येति । प्रमथाः गणाः २४ ॥ २३ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** निपात्येति ॥ २३॥

**( ६ दंशोद्धारः )** ॥ २३ ॥

## सोऽपि कोपान्महावीर्यः खुरक्षुण्णमहीतलः । शृङ्गाभ्यां पर्वतानुच्चांश्चिक्षेप च ननाद च ॥२४॥

**( १ गुप्तवती )** ॥ २४ ॥

**( २ चतुर्धरी )** ॥ २४ ॥

**( ३ शान्तनवी )** महावीर्यः सः महिषासुरः खुरक्षुण्णमहीतलः सन् क्रोधात् कोपात् अग्रैकपादशफनिष्पिष्टकृताग्रक्षोणिभागः सन् उच्चैरभ्रंलिहान् पर्वतान् उच्चैरभ्रंलिहमुकुटमूर्धनि देव्यामुच्चैश्चिक्षेपच उच्चैरक्षैप्सीत् । अथवा उच्चैर्ननाद । णद अव्यक्ते शब्दे । गलगर्जनं चोच्चैश्चकार । 'वीर्यं बलं प्रभावश्च' । बलं प्राणसामर्थ्यं । महावीर्यसंपन्नः सत्ववान् महिषोऽतितरामिति यावत् ॥ २४ ॥

**( ४ नागोजीभट्टी )** ॥ २४ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** सोऽपि कोपादिति २५ ॥ २४ ॥

**( ६ दंशोद्धारः )** ॥ २४ ॥

## वेगभ्रमणविक्षुण्णा मही तस्य व्यशीर्यत। लाङ्गूलेनाहतश्चाब्धिः प्लावयामास सर्वतः ॥ २५ ॥

**( १ गुप्तवती )** ॥ २५ ॥

**( २ चतुर्धरी )** तस्य वेगभ्रमणाभ्यां विक्षुण्णा मही व्यशीर्यत विशीर्णा । कर्मकर्तर्यात्मनेपदं ॥ २५ ॥

**( ३ शान्तनवी )** तस्य महिषस्य महासुरस्य वेगेन जवेन युक्तं भ्रमणं तेन विक्षुण्णा विशेषेण संपिष्टा मही विशीर्यत स्वयमेव विशीर्णा अभवत् । शॄ हिंसायां । क्र्यादिः परस्मैपदी विपूर्वकोऽकर्मकः । इह तु अन्तर्भावितण्यर्थविवक्षायां विशीर्यते मेघः स्वयमेव । विशीर्यते सेतुः स्वयमेवेतिवत्कर्मकर्तरि लिङि रूपं । किंच तस्य महिषस्य लाङ्गूलेन पुच्छेन आहतस्ताडितोऽब्धिरर्णवः सर्वतः सर्वत्र पृथिव्यां सकलजनान् प्लावयामास वारिमग्नं चकार । तसिप्रकरणे 'आद्यादिभ्य उपसंख्यानम्' इत्यधिकरणे तसिः। यद्वा कर्मणि ल्यब्लोपे पञ्चमी । सर्वतः सर्वां पृथ्वीं प्राप्य प्लावयामास मज्जयामासेत्यर्थः॥२५॥

**( ४ नागोजीभट्टी )** वेगेति । विक्षुण्णा कुट्टिता व्यशीर्यतेति कर्मकर्तरि रूपं । सर्वतः । सार्वविभक्तिकस्तसिः । प्लावयामास । जलेनेति शेषः ॥ २५ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** वेगभ्रमणेति २६ ॥ २५ ॥

**( ६ दंशोद्धारः )** वेगेति । व्यशीर्यतेति कर्मकर्तरि तङ् ॥ २५ ॥

## धुतशृङ्गविभिन्नाश्च खण्डं खण्डं ययुर्घनाः। श्वासानिलास्ताः शतशो निपेतुर्नभसोऽचलाः २६

**( १ गुप्तवती )** ॥ २६ ॥

**( २ चतुर्धरी )** खण्डंखण्डमिति क्रियाविशेषणं । ययुरुपागताः घना मेघाः श्वासानिलास्ताः निःश्वासवातनिक्षिप्ताः नभसः आकाशात् । असु क्षेपणे ॥ २६ ॥

**( ३ शान्तनवी )** घनाश्च महान्तो मेघाः तेन महिषेण धुताभ्यां शृङ्गाभ्यां विभिन्नाः विदारिताः सन्तः खण्डं खण्डं शकलं शकलं ययुः प्रापुः । महिषेण धुतशृङ्गविदारिताः महान्तो मेघाः खण्डप्रकाराः खण्डसदृशाः सन्तः खण्डसादृश्यं ययुरित्यर्थः । 'प्रकारे गुणवचनस्य' इति अधिकस्याल्पसादृश्ये गुणवचनस्य द्विर्भावः। खण्डं खण्डमयुरिति तु पाठे 'कर्मधारयवदुत्तरेषु' इति विकल्पेन कर्मधारयत्वातिदेशात् द्विरुक्तयोर्भागयोर्मध्ये पूर्वभागसंबन्धिन्याः विभक्तेर्लुक् । श्वासानिलास्ताः शतशो । श्वासानिलाहताः शीर्णाः । श्वासानिलास्ताऽविशीर्णाः इति पाठत्रयं । तस्य महिषस्य रोषजाः श्वासा एव अनिलाः वायवः तैरस्ताः क्षिप्ताः अत एव विशीर्णाश्चूर्णीभूताः अचलाः पर्वताः नभसः सकाशात् निपेतुः निपतिताः । यद्वा श्वासानिलास्ताः

शतशः । शतंशतं शतशः । 'संख्यैकवचनाच वीप्सायां' इति शस्प्रत्ययः । यद्वा श्वासानिलाहताः शीर्णाः श्वासानिलैराहतास्ताडिताः इत्यनुसंधेयं । शीर्णाश्चूर्णीभूताः ॥ २६ ॥

**( ४ नागोजीभट्टी )** धुतेति । कम्पितेत्यर्थः । खण्डस्य खण्डा यस्यां क्रियायां । श्वासानिलेनाकाशं प्रत्यस्ताः क्षिप्ताः अचलाः पुनराकाशात्पेतुरित्यर्थः ॥ २६ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** धुतशृङ्गेति २७ ॥ २६ ॥

**( ६ दंशोद्धारः )** ॥ २६ ॥

## इति क्रोधसमाध्मातमापतन्तं महासुरम् । दृष्ट्वा सा चण्डिका कोपं तद्वधाय तदाकरोत् ॥ २७ ॥

**( १ गुप्तवती )** ॥ २७ ॥

**( २ चतुर्धरी )** क्रोधसमाध्मातं क्रोधेनोद्दीप्तम् ॥ २७ ॥

**( ३ शान्तनवी )** इति प्रागुक्तरीत्या क्रोधसमाध्मातं क्रोधाग्नियुक्तं क्रोधेन समन्तादाविष्टमासमन्ताद्विजृम्भितं आपतन्तं अभ्यधावन्तं महिषं महासुरं दृष्ट्वा वीक्ष्य तदा तद्वधाय तं महिषं हन्तुं चण्डिकादेवी कोपं अकरोत् । वध हिंसार्थः इति । वधिः प्रकृत्यन्तरं 'जनिवध्योश्च' इति वधिग्रहणादवसीयते । तद्वधायेति। तस्य वधनं वधः । भावे घञ् 'जनिवध्योश्च 'अतउपधायाः' वृद्ध्यभावः । 'क्रियार्थोपपदस्य च कर्मणि स्थानिनः' इति चतुर्थी । तद्वधं विधातुं कोपं क्रोधमकरोत् अकुप्यत । चडि कोपे । चण्डते चण्डति वा चण्डिका ॥ २७ ॥

**( ४ नागोजीभट्टी )** ॥ २७ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** इति क्रोधेति २८ ॥ २७ ॥

**( ६ दंशोद्धारः )** इतीति । क्रोधेन समाध्मातं संतप्तम् ॥ २७ ॥

## सा क्षिप्त्वा तस्य वै पाशं तं बबन्ध महासुरम् । तत्याज माहिषं रूपं सोऽपि बद्धो महामृधे २८

**( १ गुप्तवती )** ॥ २८ ॥

**( २ चतुर्धरी )** तस्येति । संबन्धलक्षणा षष्ठी । मृधे युद्धे ॥ २८ ॥

**( ३ शान्तनवी )** म्रियन्ते यस्मिन्वीराः मृधं युद्धं तत्र महति मृधे सा चण्डिकादेवी तावत् तस्य महिषस्य महासुरस्य वधाय वै प्रसिद्धं वरुणादवाप्तं पाशं पाशाख्यमायुधं क्षिप्त्वा प्रवर्तन्तं महिषं महासुरं बबन्ध । अथ स पाशबन्धमसहिष्णुर्माहिषं रूपं तत्याज अत्याक्षीत् । ततोनु स संत्यक्तमाहिषाकारो मायाविलासादन्य एव पशुः शार्दूलः खड्गः पोत्री वा प्रशस्तः प्रथमक्षतगात्रोऽभूत् । अथ देव्या पाशेन सोपि वा बद्ध एवाभूत् ॥ २८ ॥

**( ४ नागोजीभट्टी )** सेति । सा तस्योपरि पाशं क्षिप्त्वा तं बबन्धेत्यन्वयः ॥ २८ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** सा क्षिप्त्वेति २९ ॥ २८ ॥

**( ६ दंशोद्धारः )** सा क्षिप्त्वेति । तस्य पाशं बन्धनायेति शेषः । तस्य तस्मिन् । संबन्धसामान्ये षष्ठी वा ॥ २८ ॥

## ततः सिंहोऽभवत्सद्यो यावत्तस्याम्बिका शिरः । छिनत्ति तावत्पुरुषः खड्गपाणिरदृश्यत ॥२९॥

**( १ गुप्तवती )** ॥ २९ ॥

**( २ चतुर्धरी )** ॥ २९ ॥

**( ३ शान्तनवी )** ततः महिषादिरूपपरित्यागादनन्तरं सः महासुरः मायाविलासवशः सपदि देव्या समं योद्धुं सिंहोऽभूत् । ततः अम्बिकादेवी तस्य मायामयसिंहस्य शिरः मूर्धानं यावत् यावता कालेन छिनत्ति छेत्स्यति तावत् तावत्येव काले स मायावी महासुरः खड्गपाणिः पुरुषः प्रादुर्भवन् अदृश्यत दृष्टः । देव्येति शेषः । यावच्छिनत्ति इति भविष्यतिकाले 'यावत्पुरानिपातयोर्लट्' छिदिर् द्वैधीकरणे रुधादिः । 'यावत्तावच साकल्ये वधौ मानेऽवधारणे' । खड्गं पाणौ यस्य स तथोक्तः । 'प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ भवतः' इति च वक्तव्यं ॥ २९ ॥

**( ४ नागोजीभट्टी )** तत इति । तस्य सिंहीभूतस्य । अदृश्यत देव्येति शेषः ॥ २९ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** ततः सिंह इति ३० ॥ २९ ॥

**( ६ दंशोद्धारः )** तत इति । छिनत्ति छेत्स्यति । 'यावत्पुरानिपातयोः' इति भविष्यति लट् ॥ २९ ॥

**तत एवाशु पुरुषं देवी चिच्छेद सायकैः । तं खड्गचर्मणा सार्धं ततः सोऽभून्महागजः ॥ ३० ॥**

**( १ गुप्तवती )** ॥ ३० ॥

**( २ चतुर्धरी )** आशु शीघ्रं । आश्वेव तं पुरुषं चिच्छेदेत्यन्वयः । सायकैर्बाणैः । खड्गचर्मणा सहितं पुरुषं खड्गं च चर्म च चिच्छेदेत्यन्वयः ॥ ३० ॥

**( ३ शान्तनवी )** ततः खड्गपाणेः पुरुषस्य दर्शनादनन्तरमेव देवी आशु सत्वरं सायकैराशुगैः खड्गचर्मणा सार्धं तं खड्गपाणिं पुरुषं कण्ठे चिच्छेद । खड्गं चर्म च पुरुषं च सायकैश्चिच्छेदेति सूचयितुं सार्धमित्युक्तं । खड्गं चर्म च खड्गचर्म । सेनाङ्गत्वादेकवद्भावः । तेन सार्धं 'फलकोऽस्त्री फलं चर्म' चर्ममयं गात्रत्राणं हस्तग्राह्यं फलकं । ततः पुरुषरूपतः सकाशात् स महासुरः महागजोऽभूत् ॥ ३० ॥

**( ४ नागोजीभट्टी )** तत इति । तं पुरुषं देवी आश्वेव । खड्गचर्मणेति समाहारद्वन्द्वः । तत्सहितं सायकैश्चिच्छेदेत्यन्वयः ॥ ३० ॥

**( ५ जगच्चन्द्रचन्द्रिका )** तत एवाश्विति ३१ ॥ ३० ॥

**( ६ दंशोद्धारः )** ॥ ३० ॥

**करेण च महासिंहं तं चकर्ष जगर्ज च । कर्षतस्तु करं देवी खड्गेन निरकृन्तत ॥ ३१ ॥**

**( १ गुप्तवती )** ॥ ३१ ॥

**( २ चतुर्धरी )** ॥ ३१ ॥

**( ३ शान्तनवी )** सच महागजः करेण हस्तेन शुण्डादण्डेन तं प्रसिद्धं देव्या वाहनं सिंहं चकर्ष आकृष्टवान् जगर्ज च । बृंहितं चकार । 'बृंहितं करिगर्जितं' । गर्ज शब्दे भ्वादिः परस्मैपदी । गजः सिंहं चकर्षेति हि महासुरविनाशसूचक उत्पातोयं । प्रसिद्धिवैपरीत्यात् । ततः देवी तु पुनः सिंहं कर्षतः आक्षिपतः आहरतः तस्य महागजस्य करं शुण्डादण्डं खड्गेन चन्द्रहासेन निरकृन्तत निष्कृष्य अच्छैत्सीत् । कृती छेदने परस्मैपदी । यदभ्यधुः । 'कृणत्ति कृन्ततीत्येते वेष्टने छेदने क्रमात्' इति । इह तु छान्दसमात्मनेपदं । ऋषयश्छान्दसं पदमनुकुर्वन्ति । अन्यथा निरकृन्तदित्येव स्यात् । कर्षतस्तत्करं देवीति पाठे कर्षतो गजस्य स करः प्रसिद्धः तत्कर इति व्याख्या । इह स महासुरः प्राञ्चहाहवक्षमः 'महिषोऽभूत्ततो व्याघ्रः खड्गः पोत्री हरिः पुमान् । गजोऽथ महिषो भूयो मायावी स महामृधे' इत्येतदावेदयितुमाह ॥ ३१ ॥

**( ४ नागोजीभट्टी )** करेणेति । महासिंहं देवीवाहनं कर्षत इत्यस्य सिंहमित्यादि । निरकृन्ततेति छान्दसम् ॥ ३१ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** करेण चेति ३२ ॥ ३१ ॥

**( ६ दंशोद्धारः )** करेणेति । गजेन सिंहाकर्षणं महासुरविनाशसूचक उत्पातोयम् । अकृंतत । कृती छेदने । परस्मैपदित्वेपि तङार्षः ॥ ३१ ॥

**ततो महासुरो भूयो माहिषं वपुरास्थितः[१] । तथैव क्षोभयामास त्रैलोक्यं सचराचरम् ॥ ३२ ॥**

**( १ गुप्तवती )** ॥ ३२ ॥

**( २ चतुर्धरी )** वपुः शरीरं । आस्थितो गृहीतवान् । तथैव पूर्ववत् ॥ ३२ ॥

**( ३ शान्तनवी )** ततः गजरूपवपुस्त्यागादनन्तरं भूयः पुनरपि स महासुरः माहिषं वपुराश्रितः प्राप्तवान् सन् तथैव पूर्ववदेव प्राग्वत् महिषः सन् त्रैलोक्यं क्षोभयामास क्षोभं प्रापयामास । तथैव स चराचरं त्रैलोक्यं लोकत्रयं क्षोभयामास । आश्रित इति श्रिञ् सेवायां सेवानुसरणे गतिविशेषे इति कर्तरि क्तः । आस्थित इति पाठे तु आङ्पूर्वस्तिष्ठतिः प्रतिज्ञानार्थः सकर्मकः । 'गत्यर्थाकर्मकश्लिषशीङ्स्थास' इत्यादिना कर्तरि क्तः । वपुरास्थितः अङ्गीकृतवान् सन् त्रैलोक्यं क्षोभयामासेत्यर्थः । आस्थितेत्यविसर्गपाठे तु 'आङः स्थः प्रतिज्ञाने' इत्यात्मनेपदं । कर्तरि लुङ् । 'स्थाघ्वोरिच्' इत्याकारस्य इत्वं सिचः कित्वं च । तेन गुणाभावः । 'ह्रस्वादङ्गात्' इति सिचो लोपः । त्रैलोक्यं सचराचरं इत्यत्र त्रयो लोकास्त्रैलोक्यं । चातुर्वर्ण्यादित्वात्स्वार्थे ष्यञ् । स इति छेदे तु स महासुर इत्यर्थः । चराश्च देवादयः । अचराश्च पर्वतादयः । चराचरं । सर्वो द्वन्द्वो विभाषैकवद्भवति । चराचरात्मकं त्रैलोक्यं स महासुरः क्षोभयामासेत्यर्थः । यद्वा चराश्चाचराश्च चराचरास्तैः सहितं त्रैलोक्यं सचराचरं संभवात्स्वरूपाख्यानतो विशेष्यभावः । यद्वा त्रैलोक्यं क्षोभयामास । तत् कीदृशं । चराचरं जगदात्मकमित्यर्थः । स महासुरः जगदात्मकं त्रैलोक्यं क्षोभयामासेत्यर्थः । यद्वा सचराचरं सजङ्गमाजङ्गमसहितं

---

१ 'वपुराश्रितः' इति शान्तनवीपाठः ।

त्रैलोक्यं क्षोभयामासेत्यर्थः। चरिगत्यर्थः। 'चरिचलिपतिवदीनां वा द्वित्वमच्याक्चाभ्यासस्य' इति पचाद्यचि द्विर्भावेऽभ्यासस्य च आगागमः। अविधिसामर्थ्याद्धलादिःशेषाभावः। अन्यथा ह्यागमादेशयोर्विशेषाभावादागमलिङ्गमपार्थकं स्यात्। 'चरिष्णु जङ्गमचरं त्रसमिङ्गं चराचरं' ॥ ३२ ॥

**( ४ नागोजीभट्टी )** तत इति। तथैव प्राग्वदेव ॥ ३२ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** ततो महेति ३३ ॥ ३२ ॥

**( ६ दंशोद्धारः )** ॥ ३२ ॥

## ततः क्रुद्धा जगन्माता चण्डिका पानमुत्तमम्। पपौ पुनः पुनश्चैव जहासारुणलोचना ॥ ३३ ॥

**( १ गुप्तवती )** क्रुद्धेति। तुरीयापि चण्डिका प्रधानहननरूपं कृत्यापि रजोगुणाविर्भावाधिक्येन स्वस्यां महालक्ष्मीत्वमापादितवतीति ध्वननाय मध्ये पानमाह। अतएवारुणलोचनत्वं मुखरागादिश्च युज्यते ॥ ३३ ॥

**( २ चतुर्धरी )** पीयत इति पानं मधु ॥ ३३ ॥

**( ३ शान्तनवी )** पीयते इति पानं। कर्मणि ल्युट्। ततस्त्रैलोक्यक्षोभणादनन्तरं जगन्माता जगतां जननी जगद्धिता चण्डिकादेवी क्रुद्धा सती अतएव अरुणलोचना अरुणे रक्ते लोचने यस्याः सा। उत्तमं अमृतं पानं मधु पुनः पुनः पपौ। पा पाने। लीलया मध्वेव पपौ। पुनः पुनश्च जहासैव। युद्धं तु न गणयामास। हसे हसने। लिटस्तिपो णल्। पपाविति 'आत औ णलः'। वीरपानं चकारेत्यर्थः। 'वीरपानं तु यत्पानं वृत्ते भवि निवारणे' वीराणां कर्तव्यं मद्यपानं विरपानं 'मुहुः पुनः पुनः शश्वदभीक्ष्णमसकृत्समाः' 'घटायुतायुतोन्मानं मधु मांसोपदंशकं। एकैकश्वासतश्चण्डी पपावत्र रणोत्सवे' ॥ ३३ ॥

**( ४ नागोजीभट्टी )** तत इति। महिषस्य शिवावतारत्वेन जायमानदयादिविच्छेदायात्र मद्यपानं पानंमद्यं। कर्मणिल्युट्। पानादरुणलोचना पुनःपुनर्जहासेत्यन्वयः ॥ ३३ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** ततः क्रुद्धेति ३४ ॥ ३३ ॥

**( ६ दंशोद्धारः )** ॥ ३३ ॥

## ननर्द चासुरः सोपि बलवीर्यमदोद्धतः। विषाणाभ्यां च चिक्षेप चण्डिकां प्रति भूधरान् ३४॥

**( १ गुप्तवती )** ॥ ३४ ॥

**( २ चतुर्धरी )** बलं शारीरं सामर्थ्यं। वीर्यं उत्साहः। ताभ्यां यो गर्वः मदः। उद्धतः उद्रिक्तः ॥ ३४ ॥

**( ३ शान्तनवी )** बलेन सामर्थ्येन। वीर्येण प्रभावेन तेजसा। मदेन हर्षेण गर्वेण च उद्धतः अविनीतः निर्मर्यादः उत्कटः स महिषः असुरोऽपि ननर्द च कण्ठगर्जनं चकार। 'नर्द गर्द शब्दे' चण्डिकां प्रति भूधरान् गिरीन् विषाणाभ्यां शृङ्गाभ्यां चिक्षेप प्रक्षिप्तवान्। 'अविनीतः समुद्धतः'। 'स्थौल्यसामर्थ्यसैन्येषु बलं ना काकसीरणोः'। 'वीर्यं बलं प्रभावश्च' ॥ ३४ ॥

**( ४ नागोजीभट्टी )** ननर्देति। बलं शारीरं। वीर्यमुत्साहः। ताभ्यां मदो गर्वः ॥ ३४ ॥

**( ५ जगच्चन्द्रचन्द्रिका)** ननर्द चेति ३५ ॥ ३४ ॥

**( ६ दंशोद्धारः )** ननर्देति। बलं शरीरशक्तिः। वीर्यं उत्साहशक्तिः। ताभ्यां मदो गर्वस्तेनोद्धतः 'विषाणं दन्तशृङ्गयोः'। इत्यमरः ॥ ३४ ॥

## सा च तान्प्रहितांस्तेन चूर्णयन्ती शरोत्करैः। उवाच तं मदोद्धूतमुखरागाकुलाक्षरम् ॥ ३५ ॥

**( १ गुप्तवती )** लक्ष्म्याः सुरायाश्च मादकत्वेन साम्याच्च। 'सहेत्या(?) वा एतद्देवताया रूपं यन्मधु' इति श्रुतेश्च मदेन सुराजन्येन उद्धतः अतिशयितो मुखस्य रागो रक्तिमा यत्र। आकुलान्यस्पष्टाक्षराणि च यस्मिन्कर्मणि तत् ॥ ३५ ॥

**( २ चतुर्धरी )** मदेन उद्धूतो मुखरागो यस्याः सा। आकुलाक्षरं अव्यक्तवर्णं यथा स्यात्तथा ॥ ३५ ॥

**( ३ शान्तनवी )** सा चण्डिका तेन महिषेण महासुरेण प्रक्षिप्तान् क्षिप्तान् तान् भूधरान् गिरीन् शरोत्करैः शराणां उत्करैः उत्क्षेपैः प्रक्षेपणैः चूर्णयन्ती निःशेषयन्ती सती महिषासुरं मदोद्धूतमुखरागाकुलाक्षरं यथास्यात्तथा उवाच। मदान्मधुपानजादुद्धूतो मुखे रागः तेनाकुलान्यक्षराणि वर्णा यस्मिन्कर्मणि वचने तन्मदोद्धूतमुखरागाकुलाक्षरं। क्रियाविशेषणानां कर्मत्वं नपुंसकैकत्वं च वक्तव्यं। यद्वा मदोद्धूतमुखरागा देवी मदेन मधुपानजेन उद्धूतो जातो मुखे रागः कषायभावो यस्याः सा तथोक्ता। आकुलाक्षरमिति क्रियाविशेषणं। आकुलानि व्यामिश्रितानि अस्पष्टानि अक्षराणि यस्मिन्कर्मणि तत् आकुलाक्षरं अस्पष्टाक्षरं ॥ ३५ ॥

**( ४ नागोजीभट्टी )** सा चेति । मदेनोद्धूतः अतिशयेन जातो मुखे रागो यस्याः सा । आकुलाक्षरमिति वचनं क्रियाविशेषणम् । मद्यस्वभावोऽयम् ॥ ३५ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** सा च तानिति ३६ ॥ ३५ ॥

**( ६ दंशोद्धारः )** मदेनोद्धतो यो मुखरागस्तेनाकुलान्यक्षराणि यस्यां क्रियायां तथोवाच मदोद्धतमुखरागेति देवीविशेषणं पृथक्पदं वा ॥ ३५ ॥

## देव्युवाच ।

**गर्ज गर्ज क्षणं मूढ मधु यावत्पिबाम्यहम् । मया त्वयि हतेऽत्रैव गर्जिष्यन्त्याशु देवताः ॥३६॥**

**( १ गुप्तवती )** मधु यावत् पिबामि लक्ष्म्यावेशविशिष्टा यावद्भवामि । मया लक्ष्म्या । 'इन्दिरा लोकमाता मा' इति कोशात् ॥ ३६ ॥

**( २ चतुर्धरी )** गर्जगर्जेति संभ्रमेण पुनरुक्तिः । आशु शीघ्रं ॥ ३६ ॥

**( ३ शान्तनवी )** अत्र ह्याकुलाक्षरमुवाचेत्युक्तत्वात् गर्जगर्ज इत्येवं प्रतिपदं व्यत्यस्ताक्षरं देव्युक्तं । ऋषिणा तु तत्संस्कृत्यार्थसंगत्या प्रणीतं । रे मूढ हे अज्ञ त्वं क्षणं तावत् गर्जगर्ज । यावदहं मधु पिबामि यावता क्षणेन मधु पास्यामि तावन्तं क्षणं त्वमपि कण्ठगर्जनं कुरुकुरु । तावदेव तवायुः । ततः क्षणान्तरे मया त्वयि महिषासुरे हते व्यसूकृते सति अत्र अत्रैव संग्रामभूमावेव । अत्रैवास्मिन्नेव क्षणेऽवसरे वा आशु अविलम्बितं देवताः इन्द्रादयो देवाः गर्जिष्यन्त्यानन्दतो गास्यन्ति । गृजि शब्दे लृट् । पिबामीति । पा पाने भविष्यति काले 'यावत्पुरानिपातयोर्लट्' इति लट् । 'अज्ञे मूढयथाजातमूर्खवैधेयबालिशाः' ॥ ३६ ॥

**( ४ नागोजीभट्टी )** देव्युवाच । गर्जगर्जेति संभ्रमेण द्विरुक्तिः । मदेन च पिबामीति पूर्वे पपावित्युक्तिः राजानं प्रति क्रम इति न दोषः ॥ ३६ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** देव्युवाचैक इति । देव्युवाचेति एको मन्त्रः । तथाहि देव्युवाच स्वाहा ३७ । गर्जगर्जेति चापरे इति । तथाहि गर्जगर्ज क्षणं मूढ इति अपरोऽन्यः श्लोकरूपो मन्त्रः ३८ ॥ ३६ ॥

**( ६ दंशोद्धारः )** गर्जेति । गर्जगर्जेति 'नित्यवीप्सयोः' इति पौनःपुन्ये द्वित्वं । पिबामि पास्यामि । 'यावत्पुरा' इति लट् ॥ ३६ ॥

## ऋषिरुवाच ।

**एवमुक्त्वा समुत्पत्य सारूढा तं महासुरम् । पादेनाक्रम्य कण्ठे च शूलेनैनमताडयत् ॥ ३७ ॥**

**( १ गुप्तवती )** ॥ ३७ ॥

**( २ चतुर्धरी )** पादेनाक्रम्य । पृष्ठे इति शेषः ॥ ३७ ॥

**( ३ शान्तनवी )** सा देवी एवमुक्त्वा समुत्पत्य उत्प्लुत्य तं महिषासुरं आरूढा आरूढवती सती एनं महिषं महासुरं कण्ठे च कण्ठप्रदेश एव एकेन पादेन उचितेनाक्रम्य शूलेन आयुधेन अताडयत् । तड आघाते चुरादिः । आरूढा । इह तु 'गत्यर्थाकर्मक' इत्यादिना कर्तरि क्तः । एनमित्यन्वादेशे रूपमिदम् । 'एतदोऽन्यतरस्यां' ॥ ३७ ॥

**( ४ नागोजीभट्टी )** ऋषिरुवाच । एवमिति । समुत्पत्य कूर्दनं कृत्वा तं सा आरूढा अथ एनं पादेनाक्रम्य दृढं बध्वा कण्ठे शूलेनाताडयदित्यन्वयः ॥ ३७ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** ऋषिरुवाचेति ऋषिरुवाचस्वाहेत्ययं मन्त्रः ३९ । पुनश्च श्लोकपञ्चकमिति । पुनर्भूयोऽपि श्लोकानां पञ्चकं पञ्चश्लोकरूपा मन्त्रा इति । तथाहि एवमुक्त्वेति ४० ॥ ३७ ॥

**( ६ दंशोद्धारः )** ॥ ३७ ॥

**ततः सोऽपि पदाक्रान्तस्तया निजमुखात्ततः । अर्धनिष्क्रान्त एवाति[१] देव्या वीर्येण संवृतः॥ ३८॥**

**( १ गुप्तवती )** ॥ ३८ ॥

**( २ चतुर्धरी )** ततस्तान् निजमुखात् आत्ममुखात् । ततः शूलताडनात् हेतोः अर्धनिष्क्रान्तः निःसृतार्धकायः तया देव्या वीर्येण सामर्थ्येन अत्यतिशयेन संवृतः प्रतिबद्ध इत्यर्थः ॥ ३८ ॥

---

१ 'एवासीद्देव्या' इति शान्तनवीपाठः ।

( ३ शान्तनवी ) ततोऽनन्तरं स महिषासुरः तया देव्या पदा पादेन आक्रान्तः शूलेन ताडितः सन्नपि ततस्तस्मान्निजमुखादात्मीयात् महिषवक्रात् सकाशात् अर्धनिष्क्रान्त एव अर्धेन शरीरेण निर्गतः देव्या वीर्येण बलेन सामर्थ्येन संवृतः संछादितः स्तम्भित आसीत्। तथैवास न संपूर्णो निष्क्रान्तः । अर्धनिष्क्रान्तः अर्धेन वा निःष्क्रान्तः अर्धनिष्क्रान्तः ॥ ३८ ॥

( ४ नागोजीभट्टी ) तत इति । तया पादाक्रान्तः दृढं धृतोपि सः ततः शूलताडनोत्तरं ततः महिषस्वरूपीयात् निजमुखादर्धनिष्क्रन्तः निःसृतार्धकाय एव देव्या वीर्येण अति अतिशयेन संवृतः परिवद्धः निष्क्रमितुं नाशकदित्यर्थः ॥ ३८ ॥

( ५ जगच्चन्द्रचन्द्रिका ) ततः सोऽपीति ४१ ॥ ३८ ॥

( ६ दंशोद्धारः ) ॥ ३८ ॥

**अर्धनिष्क्रान्त एवासौ युद्ध्यमानो महासुरः। तया महासिना देव्या शिरश्छित्त्वा निपातितः ३९**

( १ गुप्तवती ) तया देव्या मधुपानेन परिणता राजसीलक्ष्मीस्तया निपातित इत्यर्थः । शिरश्छेदोत्तरमपि युद्धशेषः पुराणान्तरेषु द्रष्टव्यः ॥ ३९ ॥

( २ चतुर्धरी ) एवं च 'शिरश्छेदोद्भवं तद्वद्दानवं खड्गपाणिनं' इत्यादिविशेषः कल्पान्तरीण इति प्रतीयते ॥ ३९ ॥

( ३ शान्तनवी ) असौ महासुरः महिषवक्रात् अर्धनिष्क्रान्तः शरीरस्यार्धेन निर्गतः युध्यमान एव युद्धं कुर्वाण एव तया देव्या भगवत्या महासिना मण्डलाग्रेण शिरः तस्यासुरस्योत्तमाङ्गं छित्वा भूमौ निपातितः । शरीरस्यार्धः निष्क्रान्तः । विशेषणसमासः । शरीरस्यार्धेन वा निष्क्रान्तः अर्धनिष्क्रान्तः । 'कर्तृकरणे कृता बहुलं' इति समासः । न बहुव्रीहिः । अर्धो निष्क्रान्तो देहभागो यस्य सोऽर्धनिष्क्रान्तः इति बहुव्रीहौ वातादिष्विति निष्ठान्तस्य परनिपातः । नात्र 'अर्धं नपुंसकं' इति समासः । अर्धनिष्क्रान्तस्येति विग्रहप्रसङ्गात् ॥

एवं स माहिषो नाम ससैन्यः ससुहृद्गणः । त्रैलोक्यं मोहयित्वा तु तया देव्या विनाशितः ॥ ४० ॥

एवमुक्तरीत्या महिषो नाम प्रसिद्धः स महासुरः ससैन्यः सैन्यसहितः ससुहृद्गणः सुहृद्गणसहितः त्रैलोक्यं त्रीन्लोकान् मोहयित्वा मोहं दुःखं प्राप्तवान् । ततो युद्धं कुर्वाणो देव्या तया भगवत्या तु विनाशितः विनाशं प्रापितः । महाकाल्या निपातितः इति क्वचित्पाठः । महान्कालः उग्रः तत्पत्न्या महती काली दुर्गा तया वा निपातितः । परासुः कृतः ।

त्रैलोक्यस्थैस्तदा भूतैर्महिषे विनिपातिते । जयेत्युक्तं तदा सर्वैः सदेवासुरमानुषैः ॥ ४१ ॥

तदा तस्मिन्समये देव्या महिषे महासुरे विनिपातिते सति त्रैलोक्यस्थैः सर्वैः पुरुषैः देवीं प्रति जयेति लोकोत्कर्षेण वर्तस्वेत्युक्त्वा । कीदृशैः त्रैलोक्यस्थैः सर्वैः पुरुषैः । सदेवासुरमानवैः देवाः स्वर्लोकसद्मानः इन्द्रादयः । असुराः पाताललोकसद्मानो बलिप्रभृतयः । मानवाः भूलोकसद्मानो ब्राह्मणादयः । तैः सहिताः तैः । पुनः कीदृशैः । त्रैलोक्यस्थैः तदा भूतैः तस्मात् महिषासुरात् आभूताः पीडां प्राप्तवतः तैः 'आस्तु स्यात्कोपपीडयोः' भूप्राप्तावात्मनेपदी चुरादिः 'आधृषाद्वा' इति णिजभावपक्षे कर्तरि क्ते रूपं । योगविभागात्समासः । इत्थंभूतेति निर्देशाद्वा ॥ ३९ ॥

( ४ नागोजीभट्टी ) अर्धेति । एवंच शिरश्छेदोद्भवं तं दानवं शूलपाणिनमिति विशेषः । कल्पान्तरीय इति बोध्यम् ॥ ३९ ॥

( ५ जगच्चन्द्रचन्द्रिका ) अर्धनिष्क्रान्त इति ४२ ॥ ३९ ॥

( ६ दंशोद्धारः ) ॥ ३९ ॥

**ततो हाहाकृतं सर्वं दैत्यसैन्यं ननाश तत् । प्रहर्षं च परं जग्मुः सकला देवतागणाः ॥ ४० ॥**

( १ गुप्तवती ) ननाश पलायितं । अत्र ऋषिद्वयं यथास्थानमपेक्षितमेव । देव्युक्तिरनपेक्षितैवास्तीति दिक् ॥ ४० ॥

( २ चतुर्धरी ) हाहाकृतं कृतहाहाशब्दं । सर्वमित्यवशिष्टाभिप्रायेण ननाश पलायितं । प्रहर्षं हर्षोद्रेकं परं निरतिशयं जग्मुर्लब्धवन्तः ॥ ४० ॥

( ३ शान्तनवी ) ततो महिषमर्दनानन्तरं यत्किंचिद्दैत्यसैन्यं अवशिष्टं अल्पं स्वल्पं तदपि हाहाकृतं हाहाइति ससंभ्रमं दीनभावेन कृतं आहितं सत् ननाश । णश अदर्शने । अदर्शनमभावः । अदृष्टमभूत् । किंच देवतानां गणास्तु सकलाः सर्वेऽपि परमुत्कृष्टं प्रहर्षं संतोषं जग्मुश्च प्राप्तवन्तः । 'हा विषादशुगर्दिषु' । चापले द्वे भवत इति वक्तव्यं । संभ्रमेण प्रवृत्तिश्चापलं । हाहाइति संभ्रमप्रवृत्त्या दीनत्वेन कृतमनाथं ननाश । दैत्यसैन्यमित्यर्थः ॥ ४० ॥

( ४ नागोजीभट्टी ) तत इति । ननाश पलायितं । हाहेति कृतं येनेति सैन्यविशेषणम् ॥ ४० ॥

---

१ अयं श्लोको न पाठान्तर्गतः केवलं शान्तनवीकारेणैव व्याख्यात इति मध्ये निवेशितः ।

**( ५ जगच्चन्द्रचन्द्रिका )** ततो हाहेति ४३ ॥ ४० ॥
**( ६ दंशोद्धारः )** तत इति । ननाश पलायितम् । णश अदर्शने ॥ ४० ॥

**तुष्टुवुस्तां सुरा देवीं सह दिव्यैर्महर्षिभिः । जगुर्गन्धर्वपतयो ननृतुश्चाप्सरोगणाः ॥ ४१ ॥**

**इति श्रीमार्कण्डेयपुराणे सावर्णिके० महिषासुरवधस्तृतीयोऽध्यायः ॥ ३ ॥**

**( १ गुप्तवती )** ॥ ४१ ॥ ॥ इति श्रीगुप्तवत्यां मन्त्रव्याख्याने तृतीयोऽध्यायः ॥ ३ ॥
**( २ चतुर्धरी )** दिव्यैर्दिविभवैः । महर्षिभिर्नारदादिभिः ॥ ४१ ॥ ॥ इति श्रीमार्कण्डेयपुराणे चतुर्धरीटीकायां तृतीयोऽध्यायः ॥ ३ ॥
**( ३ शान्तनवी )** अथ तां देवीं सुरा इन्द्रादयः दिविभवैः दिव्यैः महर्षिभिः सह सहितास्तुष्टुवुः स्तुवन्तः । सुराश्च दिव्यमहर्षयश्च देवीं स्तुवन्त इत्यर्थः । अथ गन्धर्वपतयश्च जगुः हाहाहूहूप्रभृतयो गन्धर्वा गायनाः तेषां पतयो गायनविचक्षणास्तुम्बरुप्रभृतयः गीतवन्तः । गै शब्दे लिट् । अथाप्सरोगणाश्च अप्सरसां गणाश्च ननृतुः उर्वशीप्रभृतयः स्वर्गवाराङ्गनाः अप्सरसः तासां गणाः नृत्तवन्तो देवीविजयमहोत्सवे । नृती गात्रविक्षेपे । लिट् उस् ॥ ४१ ॥ ॥ इति श्रीमद्राजाधिराजश्रीतोमरान्वयश्रीमदुद्धरणात्मजश्रीशन्तनुचक्रवर्तिरचितायां शान्तनव्यां चण्डिकामाहात्म्यटीकायां महिषासुरवधविस्युपलक्षितस्तृतियोऽध्यायः ॥ ३ ॥
**( ४ नागोजीभट्टी )** तुष्टुवुरिति । सुरा इन्द्राद्याः । दिव्यैर्ब्रह्मादिभिः महर्षिभिश्च सह तुष्टुवुरित्यर्थः ॥ ४१ ॥
इति शिवभट्टसतीगर्भजनागोजीभट्टकृते सप्तशतीव्याख्याने महिषासुरवधो नाम तृतीयोऽध्यायः ॥ ३ ॥
**( ५ जगच्चन्द्रचन्द्रिका )** तुष्टुवुस्तामिति ४४ ॥ चतुश्चत्वारिंशतिस्तु सर्वे मन्त्रास्तृतीयके इति । तु पुनः तृतीयके अध्याये सर्वे मन्त्राः चतुर्भिरधिकास्त्रिंशतिः स्युरिति शेषः । चतुर्दशाधिकत्रिंशतिः स्युरित्यर्थः ॥ ४१ ॥ ॥ इति श्रीभगीरथविरचिता सप्तशतीमन्त्रहोमविभागकारिकाणां जगच्चन्द्रचन्द्रिकाख्या टीका संपूर्णा ॥ ३ ॥
**( ६ दंशोद्धारः )** ॥ ४१ ॥ ॥ इति श्रीदंशोद्धाराख्यसप्तशतीटीकायां तृतीयोऽध्यायः ॥ ३ ॥

---

## चतुर्थोऽध्यायः ४

### ऋषिरुवाच ।

**शक्रादयः सुरगणा निहतेऽतिवीर्ये तस्मिन्दुरात्मनि सुरारिबले च देव्या ।
तां तुष्टुवुः प्रणतिनम्रशिरोधरांसा वाग्भिः प्रहर्षपुलकोद्गमचारुदेहाः ॥ १ ॥**

**( १ गुप्तवती )** शक्रादय इति महर्षीणामुपलक्षणं । उभयेषामप्येतद्दृष्टत्वात् । 'महिषान्तकरीसूक्तं दृष्टं देवैर्महर्षिभिः' इति तन्त्रान्तरात् । तस्मिन् महिषासुरे तां महालक्ष्मीं प्रणतिभिर्नम्रा शिरोधरा ग्रीवा अंसौ च येषां ते । पुलकोद्गमेन रोमाञ्चाविर्भावेन चारवः कण्टकिता इव देहा येषाम् ॥ १ ॥
**( २ चतुर्धरी )** (ततः सुरगणाः सर्वे देव्या इन्द्रपुरोगमाः । स्तुतिमारेभिरे कर्तुं निहते महिषासुरे ॥ १ ॥
ततोऽनन्तरं इन्द्रमुख्या देवाः महिषासुरवधादनन्तरं देवीस्तुतिं कर्तुं आरेभिरे उद्यमं चक्रुः ॥ १ ॥)[1]
शक्रादय इति । तस्मिन्महिषे सुरारिबले दैत्यसैन्ये देव्या निहते सति सुरगणास्तां देवीं वाग्भिस्तुष्टुवुरित्यन्वयः । देवा इति पाठः । सुरगणाः देवाः क्रीडायुक्ताः इति योज्यं । शिरोधरा ग्रीवा । अंसौ स्कन्धौ ( बाहुमूर्धानश्च ) प्रणत्या नम्राः शिरोधरांसा येषां ते । प्रहर्षपुलकोद्गमः प्रहर्षजनितरोमोत्थानं तेन चारवो देहा येषाम् ॥ १ ॥
**( ३ शान्तनवी )** ऋषिरुवाच सुमेधा ऋषिः सुरथं राजानं प्रति वाक्यमुक्तवान् ।
ततः सुरगणाः सर्वे देव्या इन्द्रपुरोगमाः । स्तुतिमारेभिरे कर्तुं निहते महिषासुरे ॥ १ ॥
चण्डिकया रणे महिषासुरे निहते सति ततोऽनन्तरं इन्द्रपुरोगमाः शक्रमुखाः सर्वेपि सुरगणाः देव्याः स्तुतिं कर्तुमारेभिरे उपक्रान्तवन्तः । रभ राभस्ये । आत्मनेपदे लिङि पुरो गच्छति पुरोगमः । इन्द्रः पुरोगमः अग्रेसरो येषां ते तथोक्ताः । 'पुरोगमः पुरोगामी' । रणे देव्या चण्डिकया तस्मिन्नतिवीर्ये सुरारिबले महिषासुरसैन्ये च तस्मिन्नतिवीर्ये दुरात्मनि महिषासुरे च निहते

[1] इदं पद्यमध्यायारम्भे चतुर्धरीशान्तनव्योरेव विवृतमस्ति ।

वधिते सति प्रणतिनम्रशिरोधरांसाः प्रहर्षपुलकोद्गमचारुदेहाः शक्रादयः सुरगणाः तां देवीं वाग्भिः तुष्टुवुः स्तुतवन्तः। वीर्यं बलं प्रभावश्च। प्रणतिभिः नम्राः शिरोधराः शिरोधयः कंधराः ग्रीवाः अंसाः स्कन्धा भुजशिरांसि च येषां ते तथोक्ताः। धरन्ति धराः शिरसां धराः शिरोधराः प्रहर्षेण प्रमोदेन पुलकाः रोमाञ्चाः तेषां उद्गमः प्रादुर्भावः तेन चारवः मनोरमाः देहाः येषां ते तथोक्ताः। वाग्भिरिति चतुर्विधाभिः वाणीभिः। यद्भाष्यं 'चतुष्टयी शब्दानां प्रवृत्तिः' 'जातिशब्दा गुणशब्दाः क्रियाशब्दाः द्रव्यशब्दाश्चचतुर्धा' इति। अन्ये त्वाहुः। 'द्रव्यं गुणं क्रियां जातिमाहुः शब्दाश्चतुर्विधाः। यदृच्छया प्रयुक्ताः स्युः संज्ञाशब्दस्तु पञ्चमः। अपरे त्वाहुः। 'वैखरीशब्दनिष्पत्तिर्मध्यमाश्रुतिगोचरा। द्योतितार्था च पश्यन्ती सूक्ष्माचाप्यनपायिनी' इति चतुर्धा वागुच्यते। शब्दान्तं निष्पत्तिर्यस्याः सा शब्दनिष्पत्तिः घटाद्यर्थरूपा वाक् वैखरी इत्युच्यते। श्रुतिगोचरा श्रोत्रग्राह्या वाक् मध्यमेत्युच्यते। द्योतितः अर्थो यया सा द्योतितार्था ज्ञानरूपा वाक् पश्यन्तीत्युच्यते। अनपायिनी ब्रह्मरूपा वाक् सूक्ष्मेत्युच्यते ॥ १ ॥

(४ नागोजीभट्टी) तुष्टुवुः सुरा इत्युक्तं तां स्तुतिमाह। ऋषिरुवाच। शक्रादय इति। तस्मिन्महिषासुरे देव्या निहते इत्यन्वयः। शिरोधरा ग्रीवा। अंसः स्कन्धः। पुलकाः रोमाञ्चाः ॥ १ ॥

(५ जगच्चन्द्रचन्द्रिका) अथ चतुर्थाध्यायस्य सप्तशतीमन्त्रहोमविभाग उच्यते। आद्य ऋषिरुवाचेति शक्राद्याः श्लोकमन्त्रकाः। षड्विंशा इति। आद्यः प्रथमः ऋषिरुवाचेति ऋषिरुवाचस्वाहेत्ययं मन्त्रो वर्तते १। शक्राद्याः शक्रादयः सुरगणा इत्येवमादयः श्लोकमन्त्रकाः श्लोकरूपा मन्त्राः षड्विंशाः। षडधिका विंशतिरित्यर्थः। शक्रादय इति २ ॥ १ ॥

(६ दंशोद्धारः) शक्रादय इति। सुरारिबले च देवा इति पाठे देवाः क्रीडायुक्ताः इति बोध्यम्। प्रणत्या आनतं शिरोधरांसं ग्रीवास्कन्धं येषां ते। अंसशब्दस्याऽल्पाक्षरत्वेन पूर्वप्रयोगस्याऽनित्यत्वात्परनिपातः ॥ १ ॥

**देव्या यया ततमिदं जगदात्मशक्त्या निःशेषदेवगणशक्तिसमूहमूर्त्या।**
**तामम्बिकामखिलदेवमहर्षिपूज्यां भक्त्या नताः स्म विदधातु शुभानि सा नः ॥ २ ॥**

(१ गुप्तवती) ॥ २ ॥

(२ चतुर्धरी) इदं जगत् ब्रह्माण्डं आततं अभिव्याप्तं आत्मशक्त्या निजेनौपाधिकस्वभावेन। वैभवेनेत्यर्थः। कथं तर्हि अस्या मूर्तिमत्त्वं इत्याह। निःशेषेति। निःशेषदेवगणस्य शक्तिसमूहाय सामर्थ्योपचयाय मूर्तिः विग्रहो यस्याः। 'मूर्तिर्देहे परिग्रहे'। देवगणैर्हि प्राग् आर्तस्वरैः प्रार्थिता सती शक्तिरासीत्। यद्वा ततं प्रपञ्चितं। सृष्टमित्यर्थः। आत्मशक्त्या निजप्रभावेण निःशेषदेवगणस्य शक्तिसमूहः तेजोंशप्रचय एव मूर्तिः कायो यस्याः तया। भक्त्या सेव्यसेवकभावस्वीकारपुरःसरेण नम्रीभावेन नताः प्रणताः स्म। स्मइत्यव्ययं स्मः इत्यर्थे। पादपूरणे वा छन्दोनुरोधात् लुप्तविसर्जनीयं वा। अम्बिका नोऽस्माकं शुभानि विदधातु ॥ २ ॥

(३ शान्तनवी) निःशेषदेवगणशक्तिसमूहमूर्त्या यया देव्या आत्मशक्त्या स्वशक्त्या इदं जगत् प्रपञ्चितं तां अखिलदेवमहर्षिपूज्यां अम्बिकां चण्डिकां देवीं भक्त्या आनतास्म। सा नोऽस्माकं शुभानि विदधातु करोतु। 'तुहिचस्महवै पादपूरणे'। निःशेषाः सर्वे देवाः तेषां गणाः तेषां शक्तयः तासां समूहाः ते एव मूर्तयो यस्याः सा तथोक्ता। अखिलाः सर्वे देवा महर्षयश्च तैस्तैश्च पूज्यां पूजनीयां। आनताः वयं भक्तिप्रह्वाः ॥ २ ॥

(४ नागोजीभट्टी) देव्येति। आततं व्याप्तं ततं सृष्टं च निःशेषदेवगणशक्तीनां समूहनाय वृद्धये तच्छक्तिसमूह एव तेजोंशप्रचयएव च मूर्तिर्विग्रहो यस्यास्तयेत्यर्थः। समूह इति भावे क्तः। नताः स्मेत्यत्र 'वा शरि' इति विसर्गस्य सः ॥ २ ॥

(५ जगच्चन्द्रचन्द्रिका) देव्या ययेति ३ ॥ २ ॥

(६ दंशोद्धारः) देव्येति। ततं व्याप्तं सृष्टं वा। अशेषदेवगणानां शक्तिसमूहाय सामर्थ्योपचयाय मूर्तिर्यस्याः। निःशेषदेवगणानां शक्तिसमूह एव मूर्तिर्यस्या इति वा। स्मेति छान्दसत्वात् विसर्गलोपः। स्मः इत्यर्थेऽव्ययं वा पादपूरणे वा ॥ २ ॥

**यस्याः प्रभावमतुलं भगवाननन्तो ब्रह्मा हरश्च नहि वक्तुमलं बलं च।**
**सा चण्डिकाखिलजगत्परिपालनाय नाशाय चाशुभभयस्य[1] मतिं करोतु ॥ ३ ॥**

(१ गुप्तवती) ॥ ३ ॥

(२ चतुर्धरी) प्रभावं प्रकृष्टं स्वभावं अतुलं अनन्यसाधारणं बलं सामर्थ्यं च वक्तुं वर्णयितुं नह्यलं न पर्याप्ता इत्य-

१ 'चासुरभयस्य' इति नागोजीभट्टीसंमतः पाठः।

न्वयः । अशुभं अकल्याणं भयं भाविदुःखप्रतिसंधानजमसुखं । अशुभभयस्य नाशाय चेत्यन्वयः । वैभाषिक एकवद्भावः । अशुभा दैत्यास्तेभ्यो भयं तस्य नाशायेति वान्वयः ॥ ३ ॥

**( ३ शान्तनवी )** यस्याः देव्याः अतुलं अनुपमं प्रभावं बलं च वक्तुं साकल्येन वर्णयितुं ब्रह्मा चतुर्मुखः भगवान् सवैश्वर्यसंपन्नः अनन्तः विष्णुः हरश्च नालं न हि समर्थः । हि प्रसिद्धमेतत् । सा चण्डिका देवी अखिलजगत्परिपालनाय अशुभभयस्य च नाशाय मतिं करोतु । अखिलं जगत् पालयितुं अशुभेभ्यो भयं नाशयितुं च स्वयं स्वान्तं दत्तावधानं करोतु । प्रभावः प्रभुत्वं । 'स्थौल्यसामर्थ्यसैन्येषु बलं' । असुरभयस्य इति पाठः । अशुभभवस्येति पाठे भवः उदयः ॥ ३ ॥

**( ४ नागोजीभट्टी )** यस्या इति । यस्या अतुलं प्रभावं तेजः बलं शारीरं वक्तुं अनन्तः सहस्रास्योपि ब्रह्मा स्रष्टापि हरः सर्वशक्तिरपि नालं न पर्याप्ताः । असुरेभ्यो भयस्येत्यर्थः । समाहारे द्वन्द्वो वा ॥ ३ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** यस्याः प्रभावमिति ४ ॥ ३ ॥

**( ६ दंशोद्धारः )** यस्या इति । अशुभमकल्याणं भयं भाविदुःखप्रतिसंधानं । समाहारे द्वन्द्वैकवद्भावः । अशुभयुक्तस्य भयस्येत्युत्तरपदलोपो वा ॥ ३ ॥

**या श्रीः स्वयं सुकृतिनां भवनेष्वलक्ष्मीः पापात्मनां कृतधियां हृदयेषु बुद्धिः ।**
**श्रद्धा सतां कुलजनप्रभवस्य लज्जा तां त्वां नताः स्म परिपालय देवि विश्वम् ॥ ४ ॥**

**( १ गुप्तवती )** कृतधियां 'पण्डितेषूत्तमानां च विद्वत्सु कृतबुद्धयः' इति भारतात् । कुलजनप्रभवस्य महाकुलोत्पन्नकुलवधूसमूहस्य । स्मेति विसर्गलोपोऽव्ययं वा ॥ ४ ॥

**( २ चतुर्धरी )** सुकृतिनां पुण्यशीलानां भवनेषु गृहेषु या स्वयमात्मना पूर्वरूपापहारेणेत्यर्थः । श्रीः संपदित्यन्वयः । तथा पापात्मनां पापशीलानां भवनेष्वलक्ष्मीरित्यन्वयः । तथा कृतधियां अभ्याससंस्कृतान्तःकरणानां हृदयेषु अन्तःकरणेषु बुद्धिः अध्यवसायः । यद्वा हृदये मनसि सुबुद्धिः स्वर्गापवर्गसाधनं ज्ञानं । तथा सतां सत्पथगानामास्तिकानां आगमचोदिते तथात्वाध्यवसायः श्रद्धा । कुलजनप्रभवस्य शुद्धसंतानजन्मनो जनस्याकरणीयाप्रवृत्तिलक्षणान्तःकरणगुणो लज्जा तां तथाविधां । विश्वं जगत् ॥ ४ ॥

**( ३ शान्तनवी )** हे देवि सुकृतिनां पुण्यवतां भवनेषु गेहेषु या श्रीः संपत्तिरभूदस्ति भविष्यति स्वयं तां त्वां नताः प्रणताः वयं स्म । अतस्त्वं सुकृत्यात्मकं विश्वं श्रीः सती परिपालय । हे देवि पापात्मनां भवनेषु या अलक्ष्मीः अभूदस्ति भविष्यति स्वयं तां त्वां नताः प्रणताः वयं । अतस्त्वं पापात्मकं विश्वं अलक्ष्मीः सती परिपालय । हे देवि कृतधियां शास्त्रजनितधियां ज्ञानिनां हृदयेषु या बुद्धिः अभूदस्ति भविष्यति स्वयं तां त्वां नताः प्रणताः वयं । अतस्त्वं कृताध्यात्मकं बुद्धिः सती परिपालय । हे देवि सतां सज्जनानां हृदयेषु या श्रद्धा सत्कर्मनिष्ठाऽभूदस्ति भविष्यति स्वयं तां त्वां नताः प्रणताः वयं । अतस्त्वं श्रद्धा सती सदात्मकं विश्वं परिपालय । हे देवि त्वं कुलजनप्रभवस्य सतां सज्जनानां कुलभूतस्य लोकस्य हृदये या लज्जाऽभूदस्ति भविष्यति स्वयं तां त्वां नताः प्रणताः वयं । अतस्त्वं सकलाचारसंरक्षणे लज्जां लज्जासती सत्कुलजनप्रभवात्मकं विश्वं परिपालय । स्मशब्दः पादपूरणे । स्वयमव्ययं । सुष्ठु अयः शुभावहो विधिर्यस्मिन् कर्मणि नमने परिपालने वा तत् । स्वयमिति क्रियाविशेषणं । नपुंसकलिङ्गम् ॥ ४ ॥

**( ४ नागोजीभट्टी )** या श्रीरिति । पापात्मनां भवनेष्वलक्ष्मीः । कृतधियां निर्मलान्तःकरणानां हृदये बुद्धिः स्वर्गापवर्गसाधनं । सतां हृदयेषु श्रद्धा आस्तिक्यबुद्धिः । कुलजनप्रभवस्य शुद्धजन्मनो हृदयेषु लज्जा अकरणीयाप्रवृत्तिलक्षणान्तःकरणवृत्तिविशेषः । नताः स्मेति प्राग्वत् ॥ ४ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** या श्रीरिति ५ ॥ ४ ॥

**( ६ दंशोद्धारः )** या श्रीरिति । सुकृतिनां भवनेषु श्रीः पापात्मनां भवनेष्वलक्ष्मीरित्यन्वयः । कृतधियां अभ्याससंस्कृतचित्तानां हृदयेषु बुद्धिरसद्युदासपूर्वकस्तत्त्वाध्यवसायः । यद्वा हृदयेषु मनःसु बुद्धिः स्वर्गादिसाधनज्ञानं । सतामास्तिकानां श्रद्धा आगमचोदिते तत्त्वनिश्चयः । कुलजनप्रभवस्य शुद्धसंतानजन्मनोऽकार्यकरणे लज्जा ॥ ४ ॥

**किं वर्णयाम तव रूपमचिन्त्यमेतत्किं चातिवीर्यमसुरक्षयकारि भूरि ।**
**किं चाहवेषु चरितानि तवाति[1] यानि सर्वेषु देव्यसुरदेवगणादिकेषु ॥ ५ ॥**

**( १ गुप्तवती )** किं वर्णयाम । तव रूपवीर्यचरितानि वाचामगमोचराणीत्यर्थः ॥ ५ ॥

---

१ 'तवाद्भुतानि' इत्यपि पाठः ।

**( २ चतुर्धरी )** एतच्च स्तुतिपरं । वस्तुतस्त्वनिर्वाच्यैव त्वमित्याह । किमिति । इदं तव रूपं स्वरूपं किं वर्णयामेति समर्थनायां पञ्चमी । असामर्थ्ये हेतुमाह । अचिन्त्यमिति । सर्वेषु असुरदेवगणादिकेषु अचिन्त्यं अनिरूपणीयं सर्वोत्कृष्टत्वादित्यन्वयार्थौ । एतत्प्रसिद्धं अतिवीर्यमनन्यसाधारणं सामर्थ्यं च तव किं वर्णयामेत्यन्वयः । प्राचीन एव हेतुः । भूरि प्रचुरं । हे देवि यानि चाहवेषु तव अति चरितानि अनन्यसमानि चेष्टितानि च किं वर्णयामेत्यन्वयः । इहापि स एव हेतुत्वेन विपरिणमते । सु(स्व)चरितानीति वा पद(रि)च्छेदः ॥ ५ ॥

**( ३ शान्तनवी )** असुराश्च देवाश्च असुरदेवाः । शाश्वतिकविरोधविवक्षायां तु असुरदेवं । तेषामसुराणां च देवानां च गणाः आदयो येषां मनुष्यादीनां ते तथोक्ताः तेषु । 'अजाद्यदन्तं' इत्यसुरशब्दस्य पूर्वप्रयोगः । अजाद्यदन्तत्वादभ्यर्हितत्वाच्च । अमरदैत्यगणादिकेषु इति पाठः सभ्यः । हे देवि सर्वेषु असुरदेवगणादिकेषु तव अद्भुतं रूपं अचिन्त्यं मनसापि चिन्तयितुं स्मर्तुं अप्यशक्यं एतत्तव मनोहरं रूपं वाचा किं वर्णयामः । वर्ण वर्णक्रियायां । चुरादिलोडन्तं तत् । मनसापि स्मर्तुमशक्यं तत् वाचा किं वर्णयितुं शक्यं स्यादिति भावः । हे देवि तव भूरि अधिकं असुरक्षयकारि अतिवीर्यं च किं वाचा वर्णयामः । यन्मनसापि अचिन्त्यं स्यात् वीर्यं बलं प्रभावश्च । हे देवि सर्वेषु असुरदेवगणादिकेषु आहवेषु संग्रामेषु तवाद्भुतानि चरितानि वीरकर्माणि च किं वर्णयामः वाचा वाण्या यानि मनसापि स्मर्तुमशक्यानि ॥ ५ ॥

**( ४ नागोजीभट्टी )** एषा आपाततः स्तुतिर्वस्तुतस्त्वनिर्वाच्याऽसुत्यैवेत्याह । किमिति । असुरा दैत्याः । देवाः शिवादयः । गणाः प्रमथाः । तत्प्रभृतिषु अचिन्त्यं सर्वोत्कृष्टत्वादनिरूपणीयं तव रूपं । अतः किं केन प्रकारेण वर्णयाम । च परं दैत्यनाशकारि भूरि वीर्यं अति अत्युत्कृष्टं । च परं युद्धेषु यानि चरितानि तान्यप्यति अत्युत्कृष्टानि । अतः किं वर्णयामेत्यन्वयः । सर्वत्राचिन्त्या इति ॥ ५ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** किं वर्णयाम इति ६ ॥ ५ ॥

**( ६ दंशोद्धारः )** किं वर्णयाम इति । लोडुत्तमबहुवचनं । दन्त्यपाठे सुचरितानीति च्छेदः । यानि सर्वेषु असुरदेवगणादिकेषु अतिशयेन वर्तन्ते । अद्भुतानीति वा पाठः ॥ ५ ॥

**हेतुः समस्तजगतां त्रिगुणापि दोषैर्न ज्ञायसे हरिहरादिभिरप्यपारा ।**
**सर्वाश्रयाखिलमिदं जगदंशभूतमव्याकृता हि परमा प्रकृतिस्त्वमाद्या ॥ ६ ॥**

**( १ गुप्तवती )** दोषैः बुद्धिमान्द्यादिभिः अंशभूता । तवेति शेषः । 'पादोऽस्य विश्वाभूतानि' इति श्रुतेः । अव्याकृता नामरूपव्याक्रियातः पौर्वकालिकी । अत एवाद्या ॥ ६ ॥

**( २ चतुर्धरी )** मूलप्रकृतिश्च त्वमेवेत्याह । हेतुरिति । त्वं समस्तजगतां हेतुः मूलकारणं । तत्रोपपत्तिमाह । त्रिगुणेति । सत्वरजस्तमोमयीत्यर्थः । नन्वेवं रागादिसंबन्धः स्यान्नच सः । किंतु सर्वकारणं त्वमेवेत्याह । अपीति । त्रिगुणापि सती दोषैः रागादिभिर्न ज्ञायसे । न विषयीक्रियसे इत्यर्थः । एवमपि परिच्छिन्नतया सर्वकारणमप्यसीत्याह । हरिहरादिभिरिति । अथवा सर्वाश्रयेति क्वचित् तत्पुरुषेऽपि वाच्यलिङ्गता । सर्वाश्रया सर्व आश्रयो यस्या इति बहुव्रीहिः । कारणान्तरमप्यस्तीत्याह । अखिलमिति । इदमखिलं जगत् ब्रह्माण्डं अंशभूतं तवैकदेशाश्रितं अनन्तब्रह्माण्डाधिकरणत्वात् । नत्वेवं विकारापत्तिः । सांशत्वेन मूर्तित्वापत्तेरित्याह । अव्याकृतेति । षड्विधविकारहीनेत्यर्थः । 'भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च । अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा' इति भगवद्गीतासु । हि यस्मात् त्वं आद्या प्रकृतिः तस्याः विशेषणं परमेति । परः परमात्मा मीयते जीवभावेनावच्छिद्यतेऽनयेति परमा । परो हि प्रकृतधर्माध्यासात् जीवभावेनाध्यवसीयते ॥ ६ ॥

**( ३ शान्तनवी )** हे देवि त्वं त्रिगुणापि त्रयो गुणाः यस्यां सा सत्वं रजस्तम इति त्रयो गुणाः सत्वगुणा त्वं वैष्णवी शक्तिः सती जगन्ति रक्षसि । रजोगुणा त्वं ब्राह्मी शक्तिः सती जगन्ति सृजसि । तमोगुणा त्वं माहेश्वरी शक्तिः सती जगन्ति संहरसि । अत एव त्रिगुणाप्यसि । अत एव त्वं समस्तजगतां हेतुरसि । सर्जनीयसंरक्षीयसंहरणीयानि विविधानि जगन्ति स्वर्गभूपातालाख्यानि तेषां त्वं हेतुरसि । हे देवि त्वं हरिहरादिभिरपि देवैस्तत्त्वतो न ज्ञायसे । मायारूपत्वात् । हे देवि त्वं अपारा अनवधिरनन्ता अन्तरहिता । हे देवि त्वं सर्वाश्रया सर्वः आश्रयो यस्याः सा तथोक्ता या आश्रीयते आश्रया सर्वस्याश्रया सर्वाश्रयापि । हे देवि इदमखिलं जगत् तवैव अंशभूतं मायामयत्वाज्जगतः अंशरूपेण समस्तं निष्पन्नं समस्तांशत्वभूतत्वं प्रापदिति वा अंशभूतं । हे देवि त्वमव्याकृतासि केनापि न व्याकृतासि पदेन वाक्येन वा । 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' इति श्रुतेः । त्वं च विद्यात्वेन परब्रह्मतत्त्वमेव । यद्वा हे देवि त्वं अव्याकृतासि केनापि प्रकाशितासि । परप्रकाशित्वानभ्युपगमात् ब्रह्मस्वरूपस्य स्वयंप्रकाशत्वाभ्युपगमाच्च । तस्य त्वं च परब्रह्म तत्त्वमेव स्वयं प्रकाशमानमनतिशयानन्दचिद्रूपमसीत्यर्थः । यद्वा हे देवि त्वमव्याकृतासि अव्याहतासि । केनापि न हिंसितासि । कृञ् हिंसायां स्वादिः । त्व-

मेव तु युद्धे हितान्व्याकृणोषि व्याहंसि। यदभ्यधुः । 'हिंसाकरणयोः स्वादौ कृणोति कृणुते कृञः । करोति कुरुते द्वे द्वे संपद्येते पदे क्रमात्' इति । अव्याकृता हि परमा इति पाठे तु हि यस्मात् हे देवि त्वं परमा परा उत्कृष्टा मा लक्ष्मीः ततः अव्याकृता अः विष्णुः तेन व्याकृता उरसि स्थापिता लोकेषु वा व्याकृता व्यवस्थिता । यद्वा हे देवि हि यस्मात् तव समस्तरोमकूपेषु निजरश्मीन् दिवाकरो ददौ । अतस्त्वं अव्याकृतासि अविना सूर्येण आसमन्तात् कृतासि तेजोभिर्निर्मितासि। अतएव त्वं परमा परा श्रेष्ठा मा तेजोलक्ष्मीः। 'अवयः शैलमेषार्काः' । यद्वा अव्याकृता हि परमा प्रकृतिस्त्वमाद्या। हे देवि हि यतः त्वं जगतामाद्या मूलभूता । अतः सृष्टेः प्राक् केवलैवेति अव्याकृता सत्वरजस्तमोगुणानुदयात् भेदप्रत्ययानुदयात्स्वत्वादिना अपृथक्कृता सांख्यदर्शनप्रसिद्धा परमा प्रकृतिः प्रधानाख्यासि । इयं देवी सांख्यमते प्रकृतिराख्याता । वेदान्तिनस्तु तामनिर्वचनीयामात्ममायामनादिमविद्यामाहुः । शाब्दिकास्तां शब्दशक्तिमाचक्षते । तान्त्रिकास्तां कर्मणामपूर्वोत्पादनसामर्थ्यलक्षणां फलगतिमाहुः । तार्किकास्तां च स्तुता(?)चावसिति सिद्धिभिदामाहुः । शैवास्तां शिवशक्तिमाहुः। वैष्णवा विष्णुमायां तामाहुः । शाक्तास्तु तां महामायामनादिमादिमां शक्तिमाहुः । पौराणिकास्तु तां देवीमाहुः ॥ ६ ॥

**( ४ नागोजीभट्टी )** मूलप्रकृतिस्त्वमेवेत्याह । हेतुरिति । त्वं समस्तजगतां हेतुर्मूलकारणम् । तत्र हेतुः । यतः त्रिगुणा सत्वरजस्तमोयुता । नन्वेवं रागादिसंबन्धेन सर्वकारणं न स्यादत आह । अपीति । त्रिगुणापि दोषैः रागादिभिर्न ज्ञायसे न विषयीक्रियसे । यद्वा दोषैर्विशिष्टा केनापि न ज्ञायसे । तदभावादित्यर्थः । नन्वेवं परिच्छिन्नतया सर्वहेतुत्वं न स्यादत आह । हरिहरादिभिरप्यपारा अज्ञाता । परिच्छेदाभावादित्यर्थः। तत्र हेतुः । सर्वाश्रया सर्वमाश्रयं यस्याः सा । कार्यं हि कारणमाश्रयते । सर्वत्र वर्तमाना च । यत एव जगत् तवांशभूतं सर्वसमष्टेर्ब्रह्मणस्त्वदंशत्वात् । एतद्वयं परिच्छिन्नं लयाहतं स्यादिति भावः । नन्वेवं विकारापत्तिरत आह । अव्याकृता षड्विधविकाररहितत्वात् हि यतः संसारमाद्या प्रथमा प्रकृतिः सत्वरजस्तमसां साम्यावस्थासि । कीदृशी । परमा पर आत्मा मीयते जीवभावेन विच्छिद्यते यया । परमात्मैव प्रकृतिः धर्माध्यासाज्जीवत्वेनाध्यवसीयते ॥ ६ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** हेतुः समस्तेति ७ ॥ ६ ॥

**( ६ दंशोद्धारः )** मूलप्रकृतिश्च त्वमेवेत्याहुः । हेतुरिति । यतो हरिहरादिभिरप्यपारा अपरिच्छिन्ना। तत्र हेतुः । सर्वाश्रया । आर्षत्वात्परवल्लिङ्गत्वाभावेन विशेष्यनिघ्नता । यद्वा सर्वेषामाश्रयो यस्यामिति बहुव्रीहिः । हेत्वन्तरमाह । अखिलं जगत्तवांशभूतं । नचैवं विकारितापत्तिरित्याह। अव्याकृता विकाररहिता। यत आद्या परमा प्रकृतिः पर आत्मा मीयतेऽवच्छिद्यतेऽनया जीवत्वेनेति परमा । आवरणशक्तिरित्यर्थः ॥ ६ ॥

## यस्याः समस्तसुरतासमुदीरणेन तृप्तिं प्रयाति सकलेषु मखेषु देवि ।
## स्वाहासि वै पितृगणस्य च तृप्तिहेतुरुच्चार्यसे त्वमत एव जनैः स्वधा च ॥ ७ ॥

**( १ गुप्तवती )** सुरता देवता । 'देवात्तल्'इति देवशब्दोऽर्थपरः । यद्वा सुरसमूहः सौमा 'पौष्णं त्रैतमालभेत'इति वाक्ये त्रयाणां यमलानां समूहस्त्रिता तत्र भवस्त्रैत इत्यत्रैव प्रकृतेऽपि निर्वाहाय 'गजसहाभ्यां च' इति वार्तिके चकारादन्यत्रापीति मुख्यत्वात् । समस्तसुरशक्तिरूपा त्वमित्यन्वयो वा । तृप्तिं प्रयाति देवगण इति शेषः ॥ ७ ॥

**( २ चतुर्धरी )** यस्याः स्वाहायाः समुदीरणेन समुच्चारणेन समस्तसुरता निःशेषदेवगणः । तृप्तिं प्रयाति । सा स्वाहासि भवसि । यत्तदोः साहचर्यनियमात् । स्वधा च त्वमेवेत्यन्वयः । अतो हेतोः त्वं उच्चार्यसे । पितृकर्मस्विति शेषः ॥७॥

**( ३ शान्तनवी )** समस्तसुरता इति । सुर ऐश्वर्ये । सुरन्ति सुराः। सुराणां भावः सुरता । सास्ति येषां ते सुरताः इन्द्रादयः । मत्वर्थे अर्शआदित्वादच् । समस्ताश्च ते सुरताश्च समस्तसुरताः । समस्तविबुधा इति यावत् । हे देवि सा वै प्रसिद्धा स्वाहा त्वमेवासि । 'स्वाहा च हुतभुक्प्रिया' । यस्याः स्वाहायाः समुदीरणेन उच्चारणेन सकलेषु मखेषु यज्ञेषु समस्तसुरताः समस्तविबुधाः यज्ञभुजः तृप्तिं प्रयान्ति प्राप्नुवन्ति । किंच हे देवि वै प्रसिद्धा सा स्वधा त्वमेवासि । अत एव खलु पितृयज्ञेषु जनैः पितृश्राद्धकृद्भिः पुरुषैः पितृगणस्य तृप्तिहेतुः स्वधा स्वधेत्येवंरूपमन्त्रात्मा सती त्वमेवोच्चार्यसे कथ्यसे । 'दैवे श्राद्धे भवेत्स्वाहा पैत्र्ये श्राद्धे स्वधोच्यते' । 'स्वाहा देवहविर्दाने श्रौषड्वौषड्वषट्स्वधा' इत्यभिधाने तु विभागो नाश्रितः ॥७॥

**( ४ नागोजीभट्टी )** यस्या इति । हे देवि यस्याः समुदीरणेन उच्चारणेन समस्तसुरता सकलसुरसमूहः सर्वयज्ञेषु तृप्तिं प्रयाति सा स्वाहा त्वमेवासि । वै प्रसिद्धं । तथा पितृगणस्यापि तृप्तिहेतुस्त्वमेव । अतएव जनैः पितृकर्मणि स्वधा च उच्चार्यते वा ॥ ७ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** यस्याः समस्तेति ८ ॥ ७ ॥

**( ६ दंशोद्धारः )** यस्या इति । यस्याः स्वाहायाः समुदीरणेन समुच्चारणेन समस्तसुरता समस्तदेवगणस्तृप्तिं प्रयाति सा स्वाहासि । तथा स्वधा च पितृगणतृप्तिहेतुरसि ॥ ७ ॥

**या मुक्तिहेतुरविचिन्त्यमहाव्रता त्वमभ्यस्यसे सुनियतेन्द्रियतत्त्वसारैः ।**
**मोक्षार्थिभिर्मुनिभिरस्तसमस्तदोषैर्विद्यासि सा भगवती परमा हि देवी ॥ ८ ॥**

**( १ गुप्तवती )** अस्तसमस्तदोषैः 'ऋतंभरा तत्र प्रज्ञा' इति योगसूत्रोक्ताऽसत्त्वविषयकत्वादिदोषविरहिताबुद्धिभिः परमा विद्यासि निर्विकल्पकवृत्तिरूपा त्वमेवासि ॥ ८ ॥

**( २ चतुर्धरी )** या मुक्तिहेतुरिति । हे देवि सा प्रसिद्धा विद्या त्वमसि । भवती भगवद्विषये(ब्रह्मविषये)तियावत् । परमा प्रकृष्टतमा । तत्रोपपत्तिमाह । येति । 'सा विद्या या विमुक्तये' इति वचनात् । अचिन्त्यं दुरनुष्ठेयं महाव्रतं साधनं यस्याः सा तथा । महाव्रतमाह भगवान् पातञ्जलिः । 'अहिंसा सत्यमस्तेयं ब्रह्मचर्यापरिग्रहाः । एते तु जातिदेशकालसमयावच्छिन्नाः सार्वभौमा महाव्रतं' इति । हि हेतौ । यस्मात् विद्यासीत्यन्वयः । अतस्त्वं मुनिभिर्मननपरैरभ्यस्यसे । पुनरध्यवस्यसे । सुष्ठु नियतानि वशीकृतानीन्द्रियाणि यैः तैः तत्त्वं ब्रह्मैव सारो येषां सुनियतेन्द्रियाश्च ते तत्त्वसाराश्चेति विग्रहः । अस्ताः ध्वस्ताः समस्ता दोषा रागादयो येषाम् ॥ ८ ॥

**( ३ शान्तनवी )** हे देवि हि निश्चयेन या मुक्तिहेतुः अचिन्त्यमहाव्रता परमा वेदान्तोद्भावनीयपरब्रह्मतत्त्वावगतिरूपसाक्षात्कारलक्षणा विद्यास्ति सा भगवती त्वमेव सुनियतेन्द्रियतत्त्वसारैः मोक्षार्थिभिरस्तसमस्तदोषैर्मुनिभिः अभ्यस्यसे पुनः पुनरावर्त्यसे शिक्ष्यसे इत्यन्वयः । विद्यासि इति पाठे तु हे देवि हि निश्चयेन त्वमेव भगवती सा परमा वेदान्तश्रवणमनननिदिध्यासनवर्जनीयब्रह्मतत्त्वावगत्याकृतिसाक्षात्कृतिरूपा विद्यासि । या यद्रूपा विद्या त्वमेव मुक्तिहेतुः अविचिन्त्यमहाव्रता त्वं सुनियतेन्द्रियतत्त्वसारैर्मोक्षार्थिभिः अस्तसमस्तदोषैः मुनिभिरभ्यस्यसे शिक्ष्यसे शश्वद्गुरुभ्य इत्यन्वयः । मुक्तिरमृतं कैवल्यं । 'ज्ञानादेव तु कैवल्यं' इत्युपगमात् मुक्तिहेतुर्विद्या । 'हेतुर्ना कारणं बीजं' । कीदृशी विद्या । अचिन्त्यानि चिन्तयितुमप्यशक्यानि दुश्चराणि महान्ति व्रतानि उपवासादीनि पुण्यानि यस्यां सा अविचिन्त्यमहाव्रता अभ्यस्यसे । असु क्षेपणे । अभिपूर्वः कर्मणि लट् । थासः से । सुष्ठु नियतानि विषयेभ्यो व्यावर्तितानि इन्द्रियाणि यैस्ते सुनितेन्द्रियाः ते च ते तत्त्वसाराश्चेति सुनितेन्द्रियतत्त्वसाराः । तत्त्वं तत्त्वं ज्ञानं सारं न्याय्यं (नान्यं) येषां ते तत्त्वसाराः मन्यन्ते मुनयः तैः मोक्षमर्थयन्ते मोक्षार्थिनः । अस्तः नष्टः समस्तः दोषः कामक्रोधलोभादिरूपो एषां ते अस्तसमस्तदोषाः तैः । विद्यते ज्ञायतेऽनया विद्या भगवती सर्वैश्वर्यसंपन्ना परमा सा चोत्कृष्टा ॥ ८ ॥

**( ४ नागोजीभट्टी )** प्रकृतिरूपत्वमुक्त्वा ब्रह्मापि त्वमेवेत्याह । येति । हे देवि या मुक्तिहेतुः । अविचिन्त्यमनुष्ठेयत्वचिन्ताया अप्यविषयं महाव्रतं अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहरूपं योगशास्त्रप्रसिद्धं साधनं यस्या ईदृशी च या सा भगवती भगवद्विषया परमा उत्कृष्टविद्या तद्विषयावरणभञ्जिका ब्रह्मज्ञानरूपा त्वमेवासि । हि यतः अतस्त्यक्तसमस्तरागादिमोक्षेच्छुभिर्मुनिभिर्वशीकृतेन्द्रियैः तत्त्वं ब्रह्मैव ज्ञेयत्वेन सारो येषां तैरभ्यस्यते इत्यर्थः । अभ्यस्यसे इत्यत्रासंधिः संहिताया अनित्यत्वात् ॥ ८ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** या मुक्तिहेतुरिति ९ ॥ ८ ॥

**( ६ दंशोद्धारः )** या मुक्तिहेतुरिति । सा परमा उत्कृष्टा भगवती विद्या त्वमेव । सा का । याऽविचिन्त्यमहाव्रता अविचिन्त्यं महाव्रतं यस्याः । महाव्रतं च पातञ्जले अभिहितं । 'अहिंसासत्यमस्तेयं ब्रह्मचर्यापरिग्रहाः । एते तु जातिदेशकालसमयावच्छिन्नाः सार्वभौमा महाव्रतम्' इति । सुष्ठु नियतानि इन्द्रियाणि यैः । तत्त्वं ब्रह्मैव सारो येषां ते च ते ॥ ८ ॥

**शब्दात्मिका सुविमलर्ग्यजुषां निधानमुद्गीथरम्यपदपाठवतां च साम्नाम् ।**
**देवि त्रयी भगवती भव भावनाय वार्ता च सर्वजगतां परमार्तिहन्त्री ॥ ९ ॥**

**( १ गुप्तवती )** शब्दात्मिका नादब्रह्म । ऋग्यजुषामिति समासान्तोज् नेह अनित्यत्वात् । उद्गीथः पञ्चभक्तिकस्य साम्नो द्वितीया भक्तिरुत्तमत्वात् सैव निर्दिष्टा । रम्यपदपाठो देवतापदस्तोमैः कालपूरणं । भवभावनाय उत्पत्तिकृत्यार्थं वार्ता जीवनस्थितिकृत्यं । आर्तिहन्त्री अनुग्रहकृत्यवती । तेन पञ्चकृत्यपरायणेति यावत् ॥ ९ ॥

**( २ चतुर्धरी )** शब्दात्मिका इति । शब्दात्मिका शब्दब्रह्मस्वरूपा । ऋक् ऋग्वेदः । यजूंषि यजुर्वेदः । सुविमलानि निर्दोषाणि ऋग्यजूंषि चेति तेषां साम्नां सामवेदानां च विविधानामाश्रय इत्यर्थः । व्यक्त्यपेक्षया बहुवचनं निधानमिति । अजहल्लिङ्गत्वात् वाच्यलिङ्गाभावः । उद्गीतमुच्चैर्गानं तेन रम्यः पदानां पाठो विद्यते येषु सामसु । उद्गीथेति पाठे उद्गीथः

१ 'अभ्यस्यते' इति पाठः । २ 'उद्गीतरम्य' इति पाठो बहुभिर्व्याख्यातः समीचीनश्च ।

साम्नीयः विभक्तिविशेषः । तेन रम्याणां पदानां रसविशेषभाजां पाठो विद्यते येषु । 'साम्न उद्गीथो रसः' इति श्रुतेः । यद्वा उद्गीथः प्रणवो मन्त्रः तेन रम्यपदपाठवतामिति सर्वेषां विशेषणं । 'उद्गीथः प्रणवो मन्त्रः सर्वव्यापी निरञ्जनः' इति नैगमाभिधानाच्च । तेन रम्यपदपाठवतामिति सर्वेषां विशेषणं । 'ब्रह्मणः प्रणवं कुर्यादादावन्ते च सर्वदा । क्षरत्यादौ (अवद्येनौ) कृतं पूर्वं परस्ताच्च विशीर्यते' इति मनुस्मरणात् । इत्थं त्रयी वेदत्रयरूपा त्वं । आथर्वणास्तु शान्तिकपौष्टिकाभिचारिकात्मकतयैतेष्वन्तर्भावात् पृथङ्नामाभिधानम् । देवयति सर्वान् प्रवृत्तिनिवृत्त्युपदेशेन व्यवहारयतीति देवी भगवती वीर्यातिशयशालिनी सर्वप्राणिभ्यो बलीयस्त्वात् । भवः संसारः तस्य भावनाय अनुवर्तनाय । वार्ता कृष्यादिरूपा । 'कृषिर्वणिज्या तद्वच्च तृतीयं पशुपालनं । विद्या ह्येता महाभाग वार्तावृत्तित्रयाश्रयाः' इति विष्णुपुराणे दर्शनात् । परमार्तिहन्त्री पीडातिशयस्फोटिनी । वार्ताविशेषणं वा भवती भावनाय संसारज्ञानार्थं त्रयी वेदस्त्वमित्यन्वयः । अन्य आह भवभावनाय संसारस्थितये त्रयी त्वं यज्ञोपदेशत्वात् । तथाच 'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः' इति ॥ ॥ ९ ॥

**( ३ शान्तनवी )** हे देवि त्वं भगवती ऐश्वर्यादिसंपन्ना शब्दात्मिका वर्णपदवाक्यरूपवाणीस्वरूपा सुविमलर्ग्यजुषां उद्गीथरम्यपदपाठवतां साम्नां च निधानं सर्वजगतां आर्तिहन्त्री परमा उत्तमा चतुर्वर्गदर्शनी वार्ता वृत्तान्तरूपा त्रय्यसि वेदानां त्रयी भवसीत्यन्वयः । अथ वा हे देवि भवती त्वं सर्वजगतां भवभावनाय संसृत्युत्पादनाय परं निधानं आश्रयः स्थानं वसतिरसि आर्तिहन्त्र्यसि । त्वं वार्तासि कृषिगोरक्ष्यादिवृत्तिरसि । त्वं शब्दात्मिका नादरूपासि । यद्वा वर्णपदवाक्यरूपासि गद्यपद्यात्मिकासि । हे देवि त्वं सुविमलानि ऋग्भिः सहितानि यजूंषि तेषां विमलर्ग्यजुषां ऋचः ऋग्वेदाः यजूंषि यजुर्वेदाः तेषां उद्गीथरम्यपदपाठवतां साम्नां सामवेदानां त्रय्यसि इत्यन्वयः । वेदशाखानां बाहुल्याद्बहुवचनप्रयोगः । उद्गीथ उद्गानं अत एव रम्यपदपाठवतां उद्गिथेन रम्याणि पदानि तैः कृत्वा पाठवतां । अन्यथा पदानां पाठः पदपाठः उद्गीथेन रम्यः पदपाठो येषां तानि उद्गीथरम्यपदपाठानि सामानि इति स्यात् । उद्गीथः प्रणव इति क्षीरतरङ्गिणीकारो व्याख्यत् । उद्गीथः सामवेदः इत्यौणादिवृत्तिकारः । प्रणवपक्षे उद्गीथरम्यता ऋग्यजुषामपि अस्ति । यद्वा उद्गीथः उद्गानं साम्नि प्रसिद्धं । 'वार्ता वृत्तौ जनश्रुतौ' वृत्तिः कुसीदपाशुपाल्यवाणिज्याख्या । जनश्रुतिर्वृत्तान्तः । 'स्त्रियामृक्सामयजुषी इति वेदास्त्रयस्त्रयी' । ऋचश्च यजूंषि च ऋग्यजुषाणि । अचतुरादिना अच् समासान्तः । इह तु समासान्तविध्यनित्यत्वमाश्रितं । सुविमलानि ऋग्यजूंषि येषां । यद्वा समासान्तरमुक्तमेव । भवभावनाय भवः शिवः परमात्मा तस्य भावनं ध्यानं तस्मै प्रवृत्ता त्रयी त्वमेवासि इत्यर्थः । 'रुद्रे (उग्रे) जन्मनि कल्याणे प्राप्तौ संसृतिसत्तयोः' । भवः आर्तिहन्त्रीति । 'जनिकर्तुःप्रकृतिः' इति निर्देशात्समाससिद्धिः । 'आर्तिः पीडा धनुःकोट्योः' अङ्पूर्वता क्वचित् । देवि इति । अत्र देवि इति संबुध्यन्तः पाठः । असीति संबन्धतः ॥ ९ ॥

**( ४ नागोजीभट्टी )** शब्देति । सुविमलानामपौरुषेयत्वेन दोषरहितानां ऋचां यजुषां साम्नां च निधानमाश्रयः शब्दब्रह्मरूपा भवस्य संसारस्य भावनाय प्रवृत्त्यविच्छेदाय या देवी द्योतनशीला त्रयी वेदत्रयी सा भगवती भवन्ति ते भवाः प्राणिनस्तेषां भवाय जीवनाय वार्ता कृषिवाणिज्यपशुपालत्वम् ॥ ९ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** शब्दात्मिकेति १० ॥ ९ ॥

**( ६ दंशोद्धारः )** शब्दात्मिकेति । शब्दात्मिका शब्दब्रह्मरूपा सुविमलानां ऋग्यजुषां ऋग्वेदयजुर्वेदौ तयोर्निधानमाश्रयः । व्यत्ययभिप्रायेण बहुवचनं । उद्गीतेनोच्चैर्गानेन रम्याणां पदानां पाठो विद्यते येषु तेषां साम्नां च निधानं । उद्गीथेति पाठे उद्गीथः सामविशेषः । यद्वा उद्गीथेन प्रणवेन रम्यपदपाठवतामिति ऋग्यजुषामपि विशेषणम् । 'उद्गीथः प्रणवो मन्त्रः सर्वव्यापी निरञ्जनः' इत्यभिधानात् । कश्चित्तु रम्यः पदपाठो येष्विति विजग्राह । तच्चिन्त्यं । कर्मधारयान्मत्वर्थीयस्यास्य निषिद्धत्वात् । बहुव्रीहिणैव गतार्थत्वात् । अथर्वणस्त्वभिचारादिविषयत्वेन त्रय्यामन्तर्भावान्न पृथगभिधानं मन्यन्ते । देवयति प्रवृत्तिनिवृत्त्युपदेशेन सर्वान् व्यवहारयतीति देवी भगवती सर्वोत्कृष्टा त्रयी । भवभावनाय संसारानुवर्तनाय वार्ता कृष्यादिः । यद्वा भवभावनाय संसारस्थितये त्रयी त्वमित्यन्वयः । 'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः' इति वचनेन यज्ञादिद्वारा स्थितिकर्तृत्वात् ॥ ९ ॥

**मेधासि देवि विदिताखिलशास्त्रसारा दुर्गासि दुर्गभवसागरनौरसङ्गा ।**
**श्रीः कैटभारिहृदयैककृताधिवासा गौरी त्वमेव शशिमौलिकृतप्रतिष्ठा ॥ १० ॥**

**( १ गुप्तवती )** नौरसङ्गा सङ्गाभावस्यैव तारकत्वात् 'सङ्गः सर्वात्मना त्याज्यः' इति वचनात् ॥ १० ॥

**( २ चतुर्धरी )** मेधा इति । मेधा सरस्वती । विदितः ज्ञातः अखिलशास्त्राणां सारस्तत्त्वं यया सा । दुर्गो दुरवच्छेदो यो भवसागरः संसारसागरः तत्र नौरिव नौः पारगतिसाधनं । असङ्गा अप्रतिहतप्रसरा । अन्य आह । सङ्गा अद्वितीया ।

नौस्तु कर्णधारवाहकयुक्ता । त्वं तद्रहितापि पारयसि । श्रीर्लक्ष्मीः कैटभारेः हृदये एकया अद्वितीयया कृतोऽधिवासो यया सा शशिमौलौ हरशिरसि कृता प्रतिष्ठा आस्पदं यया । यद्वा शशिमौलेर्हरस्य कृता प्रतिष्ठा उत्कर्षो ययेत्यन्वयः ॥ १० ॥

**( ३ शान्तनवी )** हे देवि त्वं मेधासि । अत एव त्वं विदिताखिलशास्त्रसारासि । यद्वा हे देवि त्वं विदिताखिलशास्त्रसारा मेधासि । 'धीर्धारणावती मेधा' । विदितानि अखिलानि शास्त्राणि साराणि चतुर्वर्गतत्त्वपराणि न्याय्यानि यया मेधया सा त्वमेवासि । 'प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा । पुंसां येनोपदिश्येत तच्छास्त्रमभिधीयते' । हे देवि त्वं असङ्गा संत्यक्ताखिलबन्धहेतुः अप्रतिबन्धा अनिवारितगतिः दुर्गा दुःप्रापा दुःखेन गम्यमाना दुर्गा दुर्गभवसागरनौरसि । दुर्गो दुस्तरः भवः संसारः सागर इव दुर्गभवसागरः दुर्गभवसागरे नौः दुर्गभवसागरनौः तरणिरसि । लोके नौः नौका प्रसिद्धा । यद्वा दुर्गो दुस्तरो भवः संसारः तं दुर्गभवं स्यति खण्डयति दुर्गभवसा । न विद्यते गरो विषं दुःखं यत्र सा अगरा अगरा चासौ नौश्चेति अगरनौः । दुर्गभवसा चासौ अगरनौश्चेति दुर्गभवसागरनौः । अथवा हे देवि त्वं दुर्गे दुर्गमे दुःप्रापे भवे शंभौ परब्रह्मतत्त्वसारे सामृते विषये असङ्गा रागादिरहिता दुर्गा दुःप्रापा दुर्लभा नौस्तरणिरसि । नौरिव नौः । देवी ब्रह्मप्राप्तिसाधनभूता विद्यारूपेति भावः । हे देवि त्वं कैटभारिहृदयैककृताधिवासा श्रीरसि । विष्णुवक्षस्थलनिवासिनी लक्ष्मीस्त्वमेवासि । कीटस्येव इन्द्रगोपकस्येव भा यस्य तत् कीटभं विष्णुकर्णमलं तत्र भवः कैटभः असुरः अधिवासः स्थितिर्यस्याः सा तथोक्ता । 'हृदयं चित्तवक्षसोः' । हे देवि त्वमेव शशिमौलिकृतप्रतिष्ठा गौरी उमा असि । शशी चन्द्रः मौलौ किरीटे यस्य स चन्द्रशेखरः शंभुः तेन कृता प्रतिष्ठा अवस्थितिरर्धशरीरभाक्त्वेन यस्याः सा तथोक्ता । 'चूडा किरीटं केशाश्च संयता मौलयस्त्रयः' ॥ १० ॥

**( ४ नागोजीभट्टी )** तदधिष्ठात्र्यपि त्वमेवेत्याह । मेधासीति । मेधा सरस्वती । सैव दुःखप्राप्यत्वेन दुर्गासीत्युच्यते । दुर्गसंसारसागरस्य नौः ज्ञानद्वारा । एवं पूर्वार्धेन ब्राह्मीत्वं चोक्तं । प्रसिद्धनौतो व्यतिरेकमाह । असंगेति । सा हि कर्णधारादिसंगवती । शंभौ कृता प्रतिष्ठा आस्पदं यया । अर्धशरीरत्वात् । उत्तरार्धेन रौद्रीत्वं वैष्णवीत्वं चोक्तम् ॥ १० ॥

**( ५ जगच्चन्द्रचन्द्रिका )** मेधासीति ११ ॥ १० ॥

**( ६ दंशोद्धारः )** मेधासीति । मेधा सरस्वती विदितोऽखिलशास्त्राणां सारस्तत्त्वं यया । दुर्गे दुर्गमे भवसागरे सङ्गाऽप्रतिहतप्रसारा नौः । यद्वा असङ्गा अद्वितीया । कर्णधाराद्यनपेक्षेत्यर्थः । कैटभारिर्विष्णुः ॥ १० ॥

**ईषत्सहासममलं परिपूर्णचन्द्रबिम्बानुकारि कनकोत्तमकान्तिकान्तम् ।**
**अत्यद्भुतं प्रहृतमात्तरुषा तथापि वक्त्रं विलोक्य सहसा महिषासुरेण ॥ ११ ॥**

**( १ गुप्तवती )** अत्यद्भुतमिति । ईदृशवक्त्रालोकनेनारिषड्वर्गध्वंसपूर्वकचित्तशुद्ध्या परतत्त्वावबोधस्य सद्योऽवश्यंभावादिति भावः । तेन पापाधिक्यं ध्वनितम् ॥ ११ ॥

**( २ चतुर्धरी )** ईषद्धासेन सह वर्तत इति ईषत्सहासं । सेषद्धासमिति वक्तव्ये ईषत्सहासमिति पदव्यत्ययश्छान्दसः । यद्वा ईषत्सहासमिति क्रियाविशेषणं भिन्नं पदं । कनकोत्तमं अत्युत्कृष्टं काञ्चनं तस्य कान्तिरिव कान्तिर्यस्य । कनकादप्युत्तमा कान्तिर्यस्येति वा । अतएव कान्तं मनोरमं । तथापि वक्त्रं विलोक्य महिषासुरेण प्रहृतं तदत्यद्भुतमत्याश्चर्यमित्यर्थः । आत्तरुषा व्याप्तकोपेनेति महिषासुरस्य विशेषणं । सहसा बलेन ॥ ११ ॥

**( ३ शान्तनवी )** ईषत्सहासं मन्दस्मितोपेतं अमलं रुचिरं परिपूर्णचन्द्रबिम्बानुकारि पूर्णेन्दुबिम्बोपमं कनकेषु उत्तमं यत्कनकं तस्येव कान्तिः शोभा यस्य तत् कनकोत्तमकान्ति अतएव कान्तं शोभाढ्यं मनोहरं । हे देवि ईदृग्विधं तव वक्त्रकमलं जगन्मोहनं जयति तथापि तव वक्त्रं विलोक्य सहसा अतर्कितं आत्तरुषा प्राप्तकोपेन महिषासुरेण प्रहृतं इत्यद्भुतमेतत् । अहो ईदृशं जगन्मोहनं जगत्संजीवनं वक्त्रं विलोक्य पुमानानन्दमाप्नुयात् । तत्कथं महिषासुरस्तद्विलोक्य संजातकोपः प्राहार्षीदिति चित्रमेतदिति भावः । अतर्किते तु सहसा अव्ययं । बले त्वनव्ययं । सहसा बलेन वा महिषासुरेण प्रहृतं । 'सहो बलं सहा मार्गः' । सहते सहः । अनव्ययत्वे सहसाकृतमिति । 'ओजःसहोम्भस्तमसस्तृतीयायाः' इत्यौत्तरपदिकमलुग्विधानं चावगमकं । अत्यद्भुतं । अदिभवोदुतच् । आदित्याश्चर्येऽव्ययं । आत्ता रुट् क्रुध् येन सः तेन परिपूर्णचन्द्रबिम्बानुकारि तादृशमिति ॥ ११ ॥

**( ४ नागोजीभट्टी )** ईषदिति । ईषत् हाससहितं । छान्दसः पदव्यत्ययः । पूर्वार्धोक्तगुणविशिष्टं तव वक्त्रं विलोक्यापि आत्तरुषा प्राप्तरोषेण महिषासुरेण सहसा दर्शनसमकालमेव तथातिनिष्ठुरं यत्प्रहृतं तदत्याश्चर्यमित्यर्थः । जगन्मोहकमिति दृष्ट्वापि न तस्य मोह इति अतिसुभेदोऽयम् । तादृशस्यापि वधेन देव्या एवोत्कर्षः सिद्ध्यति ॥ ११ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** ईषत्सहासेति १२ ॥ ११ ॥

**( ६ दंशोद्धारः )** ईषदिति । ईषद्धासेन सहवर्तमानं । सेषद्धासमिति वक्तव्ये आर्षः पदव्यत्ययः । यद्वा ईषदिति प्रहृतविशेषणं । कनकोत्तमस्य कान्तिरिव कान्तिर्यस्य । कान्तिकान्तमिति पाठे कनकादुत्तमा कान्तिर्यस्य अतएव कान्तं 'ईदृशमपि वक्त्रं विलोक्य महिषासुरेण प्रहृतमित्यद्भुतं । आह्लादि मुखचन्द्रावलोकनेन कोऽयमनवकाशः । अवकाशस्यानौचित्यादिति भावः ॥ ११ ॥

**दृष्ट्वा तु देवि कुपितं भ्रुकुटीकरालमुद्यच्छशाङ्कसदृशच्छवि यन्न सद्यः ।**
**प्राणान्मुमोच महिषस्तदतीव चित्रं कैर्जीव्यते हि कुपितान्तकदर्शनेन ॥ १२ ॥**

**( १ गुप्तवती )** पुण्याधिक्यं चास्तीत्याह । दृष्ट्वेति । उद्यदित्यारक्तताध्वननाय शशाङ्कविशेषणं ॥ १२ ॥

**( २ चतुर्धरी )** तव वक्त्रं दृष्ट्वा यत्सद्यस्तत्क्षणान्महिषः प्राणान्न मुमोच तदतीव चित्रं आश्चर्यमित्यर्थः । भ्रुकुट्या कौटिल्येन करालं भीषणं । उद्यच्छशाङ्कसदृशच्छवि रोषारुणं । जीव्यते जीवितुं शक्यते । हि हेतौ । कुपितस्यान्तकस्य यमस्य दर्शनेनावलोकनेन ॥ १२ ॥

**( ३ शान्तनवी )** हे देवि कुपितं क्रोधाविष्टं भ्रुकुटीकरालं भ्रुकुट्या करालं विषमं विरुद्धं भयंकरं अतएव क्रोधताम्रं उद्यच्छशाङ्कसदृशच्छवि । उद्यत् उदयं कुर्वन् शशाङ्कः शशलाञ्छनः शशी आरक्तः पूर्णमण्डलचन्द्रः तेन सदृशी छविः प्रभा पल्लवरागताम्रा यस्य तत्तथोक्तं त्वदीयं संग्रामोन्मुखं मुखं दृष्ट्वा तु दृष्ट्वैव महिषो महिषासुरः सद्यः सपदि दर्शनक्षण एव प्राणान्न मुमोच न तत्याज इति यत् तदतीव चित्रं । युक्तोऽयमर्थः । हि निश्चयेन । कुपितान्तकदर्शनेन कुपितकृतान्तदर्शनेन कैर्जन्तुभिः जीव्यते । न कैश्चिदपि । जीव प्राणधारणे । अकर्मकत्वाभावे लटि यगात्मनेपदे प्रथमपुरुषैकवचनमेव । भावस्यैकत्वात् । प्राणधारणं प्रकृतावन्तर्भूतं इति । जीवति देवदत्त इति प्रयोगे पृथक्प्राणपदं कर्मवाचिनः प्रयुज्यते । अनुच्यमानेऽपि तस्मिन्प्राणान्धारयतीति गम्यमानत्वात् । अतश्च जीवतिरकर्मकः । भ्रुवौ कुटी इव भ्रुकुटी । 'इको ह्रस्वोऽङ्यो गालवस्य' इत्युत्तरपदिकं ह्रस्वत्वं अलं च वा तेन भ्रुकुटीव भ्रुकुटी । भ्रुकुटीकरालं कुटिलं । 'बलवत्सुष्ठु किमुत स्वत्यतीव च निर्भरे' 'करालो दन्तुरे तुङ्गे' । कृणोति हिनस्ति करालं ॥ १२ ॥

**( ४ नागोजीभट्टी )** दृष्ट्वा त्विति । दृष्ट्वापीत्यर्थः । भ्रुवोः कुटी वक्रता तया करालं भीषणं । उद्यच्छशाङ्कत्वेनेनातिरक्तता । अनेन महिषस्यापि धीरत्वं । देव्युत्कर्षः प्राग्वदेव ॥ १२ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** दृष्ट्वा तु देवीति १३ ॥ १२ ॥

**( ६ दंशोद्धारः)** दृष्ट्वेति । भ्रुवोः कुट्या कौटिल्येन करालं । उद्यच्छशाङ्कसदृशच्छवि कोपादरुणम् । जीव्यते जीवितुं शक्यते ॥ १२ ॥

**देवि प्रसीद परमा-भवती भवाय सद्यो विनाशयसि[1] कोपवती कुलानि ।**
**विज्ञातमेतदधुनैव यदस्तमेतन्नीतं बलं सुविपुलं महिषासुरस्य ॥ १३ ॥**

**( १ गुप्तवती )** मा च भा च मामे श्रीधियावैश्वर्यपाण्डित्ये इति यावत् । परे उत्कृष्टे मामे लभ्येते यस्मात् स परमाभः प्रसादः तद्वती त्वं चेद्भवाय कुलाभिवृद्धये भवसि । कोपवती चेन्नाशयसि । न केवलमेकमेव किंतु कुलानि । अतोऽस्मासु प्रसीदैव । कोपफलं दर्शयति । विज्ञानमेतदिति ॥ १३ ॥

**( २ चतुर्धरी )** प्रसीद प्रसादं कुरु । परा उत्कृष्टा सानुग्रहा मा बुद्धिर्यस्याः सा तथा सती भवती त्वं भवायोद्भवसंपदे भवतीति यावत् । यद्वा भवाय भावाय संपदे भवतीति यावत् । यद्वा भवभावनाय संसारविभूतिजननाय भवती त्वं परमा उत्कृष्टा । प्रसादपरमेति वा पाठः । कुलानि गणान् । बलं सैन्यं । अस्तं विनाशं नीतं प्रापितं ॥ १३ ॥

**( ३ शान्तनवी )** हे देवि प्रसीद प्रसन्ना भव । हे देवि त्वं परमासि परा उत्कृष्टा मा लक्ष्मीरसि । हे देवि भवती प्रसन्ना सती जगतां भवाय संपदुद्भवाय सद्यः सपदि भवती संपद्यते । हे देवि भवती त्वं कोपवती अप्रसन्ना भवसि तर्हि सद्यः सपदि जगतां कुलानि गृहाणि वंशान् समूहान् वा विनाशयति । विध्वंसयति इह भवतीति भवच्छब्दप्रयोगे युष्मदस्मच्छब्दान्यत्वेन शेषे प्रथमः पुरुषः । विनाशयतीत्यत्र 'वंशे वृन्दे गृहे कुलं' । उक्तमर्थं प्रकृतेन देवीचरितेन योजयति विज्ञातमित्यादिनार्धेन । हे देवि भवती कोपवती कुपिता सती कुलानि विश्वानि विनाशयतीत्येतत् अधुनैव विज्ञातं विदितमस्माभिः । एतत् किं यत् त्वां एतं आ इतं एतं योद्धुमागतं सुविपुलं सुष्ठु बहुलं बहुतरं महिषासुरस्य बलं सैन्यं अस्तं विनाशं नीतं प्रापितमित्येतदस्माभिर्ज्ञातं । प्रसादपरमा भवती भवायेति पाठे तु हे देवि भवती प्रसादेन प्रसन्नत्वेन परमा उत्कृष्टा स्याश्चेत् तर्हि लोकानां भवाय भूतये संपदुदयाय भवति संपद्यते । अथ चेत् भवती कोपवती स्याः तर्हि सद्यः सपद्येव कुलानि

[1] 'विनाशयति' इति शान्तनवी ।

लोकानां वृन्दानि विनाशयत्येवेति पूर्वार्धस्यार्थो ज्ञेयः। प्राग्वदुत्तरार्धार्थः। भवतीति भवच्छब्दयोगे प्रथमपुरुष एव। विनाशयतीति अस्तमदर्शने अस्तमिति मकारान्तमव्ययमनुपलब्धेर्थे वर्तते। असु क्षेपण इत्यतो नपुंसके भावे क्ते तु अस्तं प्रेरणं दू(ती)रीकरणं अन्यत्र क्षयं नीतं प्रापितमित्यर्थः स्यात्। विनाशं नीतमित्यर्थस्तु न स्यात्। अस्तमित्यव्ययग्रहणेऽलिष्टसिद्धिः॥ १३॥

**(४ नागोजीभट्टी)** देवीति। देवि प्रसीदेत्युक्त्वा विचार्य व्यर्थमेतद्वचः प्रसन्नत्वादेव तवेत्याह। भवती परमा परा सानुग्रहा मा बुद्धिर्यस्यास्तादृशी। कथमेतत् ज्ञानं तत्राह। यतो नो भवाय कोपवती त्वं नो रिपूणां कुलानि सद्यो विनाशयसि। तत्र संप्रतिपत्तिमाह। विज्ञातमित्यादि। एवंच कोपोप्यपररक्षणफलको न तु स्वाभाविक इति सत्वगुणप्रधानत्वं दर्शितम्॥ १३॥

**(५ जगच्चन्द्रचन्द्रिका)** देवि प्रसीदेति १४॥ १३॥

**(६ दंशोद्धारः)** देवीति। परा सानुग्रहा मा शोभा यस्यास्तथा भवती जायमाना त्वं प्रसीद। भवाय उत्तरोत्तरसंपदे। भवती त्वमिति वाऽन्वयः। भवभावनायेति पाठे संसारविभूतिजननाय। अस्तं विनाशं॥ १३॥

**ते संमता जनपदेषु धनानि तेषां तेषां यशांसि न च सीदति धर्मवर्गः।**
**धन्यास्त एव निभृतात्मजभृत्यदारा येषां सदाभ्युदयदा भवती प्रसन्ना॥ १४॥**

**(१ गुप्तवती)** प्रसादफलमाह। ते संमता इति त्रिभिः। धन्या धनलाभवन्तः। 'धनगणंलब्धा' इति यः॥१४॥

**(२ चतुर्धरी)** संमताः संमानभाजः। न सीदति अवसानं न भलते। धर्मवर्ग इति धर्मपदं पुरुषार्थोपलक्षणं। पुरुषार्थवर्ग इत्यर्थः। धन्याः श्लाघ्याः निभृता विनीताः आत्मजाः सुताः भृत्याः सेवकाः दाराः कुटुम्बादयः येषां ते॥ १४॥

**(३ शान्तनवी)** हे देवि भवती सदाभ्युदयदा सती येषां प्रसन्नास्ति त एव लोकाः जनपदेषु नीवृत्सु देषेशु संमताः सत्पुरुषाः लब्धप्रतिष्ठाः स्युः। हे देवि भवती येषां प्रसन्नास्ति तेषामेव धनानि स्युः। तेषामेव यशांसि कीर्तयः स्युः। हे देवि भवती सदा अभ्युदयदा सती येषां प्रसन्नास्ति तेषामेव बन्धुवर्गश्च न सीदति न दुःख्यति। चकाराचतुष्पात्प्रभृतिश्च न सीदति। त एव धन्या धनेषु साधवः। यद्वा धनानि लब्धारः प्राप्तारः धन्याः। 'धनगणंलब्धा' इति सूत्रेण यत् प्रत्ययः। 'सुकृती पुण्यवान् धन्यः'। हे देवि येषां भवती सदाभ्युदयदा सती प्रसन्नास्ति त एव निभृतात्मजभृत्यदाराः धन्याश्च स्युः। निभृताः विनीताः शिक्षितकुलाचारा अचपलाः आत्मजाः सुताः भृत्याः अनुचराः दाराः कुलस्त्रियश्च येषां ते तथोक्ताः। देव्याः समनुग्रहात् भवन्त्येते गुणा इति भावः। 'निभृतविनीतप्रश्रिताः समाः'॥ १४॥

**(४ नागोजीभट्टी)** ते इति। संमताः महाजनाङ्गीकृताः। धर्मवर्गः धर्मघटितो वर्गः धर्मार्थकाममोक्षरूपः। धन्याः पुण्यवत्त्वेन प्रसिद्धाः। निभृताः नितरां पोषिताः। अभ्युदयदा सर्वमनोरथदा॥ १४॥

**(५ जगच्चन्द्रचन्द्रिका)** ते संमता इति १५॥ १४॥

**(६ दंशोद्धारः)** ते संमता इति। धर्मवर्ग इति पुरुषार्थोपलक्षणं। निभृता विनीता आत्मजभृत्यदारा येषां। बन्धुवर्ग इत्यपि पाठः॥ १४॥

**धर्म्याणि देवि सकलानि सदैव कर्माण्यत्यादृतः प्रतिदिनं सुकृती करोति।**
**स्वर्गं प्रयाति च ततो भवतीप्रसादाल्लोकत्रयेऽपि फलदा ननु देवि तेन॥ १५॥**

**(१ गुप्तवती)** धर्म्याणि धर्मेण प्राप्याणि। 'नौवयाधर्म' इत्यादिना यः॥ १५॥

**(२ चतुर्धरी)** धर्म्याणि धर्मादनपेतानि। अत्यादृतोऽतिश्रद्धावान्। ततः कर्मणा हेतोः स्वर्गं ब्रह्मलोकादिलक्षणं चकारान्मोक्षं च भवतीप्रसादाद्भवत्यनुग्रहात्। छन्दोनुरोधात् न पुंवद्भावः। यद्वा भवतीति भिन्नं पदं। प्रसादात्प्रसन्नतया। ननु भो तेन हेतुना लोकत्रये इह स्वर्गे मोक्षेपीत्यर्थः। तत्रैहिकं फलं सत्कर्माचरणं स्वर्गीयसुखानुभवः। मौक्तिकं निलानन्दोद्बोधः। लोकद्वय इति ठः। तत्र इहलोके परलोके च॥ १५॥

**(३ शान्तनवी)** हे देवि भवतीप्रसादात् भवत्याः देव्याः प्रसादात्संभावितः सुकृती सुकृतवान् पुण्यवान्जनः प्रतिदिनं सदैव अत्यादृतः अतितरां सादरः सन् सकलानि समस्तानि स्वशाखोक्तानि अतएव धर्म्याणि धर्मेण प्राप्याणि धर्मादनपेतानि वा यथायथं स्मार्तानि श्रौतानि चोभयानि वा कर्माणि ब्रह्मयज्ञाद्यानि करोति। ज्योतिष्टोमादीनि हि स्वर्गकामः करोति ततश्च स्वर्गं प्रयाति। इत्थं पुनः कर्म करोति पुनः स्वर्गं प्रयाति। तेन हेतुना हे देवि लोकद्वयेपि भुवि दिव्यपि त्वमेव फलदासि। ननु इदं इत्थमेव। 'प्रश्नावधारणानुज्ञानुनयामन्त्रणे ननु' 'नौवयोधर्म' इति धर्मेण प्राप्याणीत्यर्थे यत्प्रत्ययः। यद्वा धर्मादनपेतानि धर्म्याणि 'धर्मपथ्यर्थन्यायादनपेते' इति यत्। 'आदृतौ सादरार्चितौ'। ननुच भवतीप्रसादादित्यत्र सर्वनाम्नो

वृत्तिमात्रे पूर्वपदस्य पुंवद्भावो भवतीति भवत्प्रसादादिति स्यात् । उच्यते । पुंवदिति योगविभागसाध्यमिदं पुंवत्त्वं । क्वचिदेव योगविभागादिष्टसिद्धिः । ततश्च 'एकोऽहं भवतीसुतः क्षयकरो मातः कियन्तोऽरयः' इतिवत्पुंवद्भावाभावः । क्वचिदस्त्येव भवतीति तु छित्वा प्रसादात् प्रसन्नत्वाद्भवती लोकद्वयेपि फलदास्ति इति पुंवत्त्वशङ्कानिरासपरव्याख्याने भवतीसुतक्षयकर इति प्रयोगः कदर्थितः स्यात् ॥ १५ ॥

**( ४ नागोजीभट्टी )** धर्म्याणीति । हे देवि भवतीप्रसादात् यः सुकृती प्राग्जन्मार्जितपुण्यवान् सततमेव सुकृतलब्धात्त्वत्प्रसादादेव अत्यादृतः नित्यनैमित्तिकादावतिश्रद्धावान् प्रतिदिनं सदैव । षष्टिघटिकावच्छेदेन सकलानि धर्म्याणि कर्माणि करोति । पुनस्त्वत्त एव त्वत्प्रीत्युद्देशेन कृतकर्मभ्यो लब्धत्वत्प्रसादादेव स्वर्गं प्रयाति । ततः क्रमेण वा मोक्षं च । ननु निश्चये । तेन त्वं लोकत्रयेऽपि फलदा इति शेषः ॥ १५ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** धर्म्याणीति १६ ॥ १५ ॥

**( ६ दंशोद्धारः )** धर्म्याणीति । चान्मोक्षं । भवतीप्रसादात् । आर्षत्वान्न पुंवद्भावः । यद्वा भवती कर्त्री । प्रसादाल्लोकत्रयेऽपि फलदा । ऐहिकफलं सदाचारः । स्वर्गफलं सुखानुभवः । मुक्तिफलं नित्यानन्दः । लोकद्वये इति वा पाठः ॥१५॥

**दुर्गे स्मृता हरसि भीतिमशेषजन्तोः स्वस्थैः स्मृता मतिमतीव शुभां ददासि ।**
**दारिद्र्यदुःखभयहारिणि का त्वदन्या सर्वोपकारकरणाय सदार्द्रचित्ता ॥ १६ ॥**

**( १ गुप्तवती )** ॥ १६ ॥

**( २ चतुर्धरी )** दुर्गे संकटे । दारिद्र्यं निर्धनता । दुःखं प्रतिकूलप्रवेदनीयं । भयमनागतप्रतीकूलसंधानजदुःखं । आर्द्रचित्ता स्निग्धचित्ता त्वदन्या कापीत्यर्थः ॥ १६ ॥

**( ३ शान्तनवी )** हे देवि हे दुर्गे भीतस्य अस्वस्थस्य अशेषजन्तोः सर्वस्यापि प्राणिनः स्वान्तेन स्मृता सती त्वं भीतिं हरसि । हे दुर्गे त्वं स्वस्थैरभीतैः तु जन्तुभिः स्मृता सती अतीव शुभां मतिं चतुर्वर्गफलसाधनभूतां बुद्धिं ददासि । त्वन्मन्त्रत्वद्ध्यानत्वद्भजनपरां मतिं वा ददासि । तदित्थं । हे देवि त्वं दारिद्र्यदुःखभयहारिणि सर्वोपकारकरणाय सर्वोपकारान् कर्तुं सदा आर्द्रचित्ता कृपार्द्रहृदया परा देवता त्वदन्या कास्ति । न कापि 'अम्बादितो भयं हर्तुं मतिं दातुमनुत्तमां । देवि त्वदपरा कास्ति सर्वोपकृतिकारिणी' । दुःखेन गन्तुं शक्यतेऽस्यां दुर्गा 'सुदुरोरधिकरणेच' इति डः । 'बलवत्सुष्ठुकिमुत स्वत्यतीव च निर्भरे' । स्वस्थैः स्वर्गस्थैर्देवैः स्मृता अतीव शुभां मतिं ददासि इत्यर्थः । दारिद्रा दुर्गतौ दरिद्राति दुर्गच्छति निःस्वीभवति निर्धनीभवत्यकिंचनीभवतीति दरिद्रः दरिद्रस्य भावः कर्म च दारिद्र्यं दारिद्र्यतः समुत्थितं दुःखं दारिद्र्यदुःखं दारिद्र्यदुखाद्भयं दारिद्र्यदुःखभयं तत् हरतीति तच्छीला दारिद्र्यदुखःभयहारिणी तस्याः संबुद्धिः । हे दारिद्र्यदुःखभयहारिणि सर्वेषु भक्तेषु अभक्तेषु उदासीनेषु शत्रुषु च उपकाराणां करणं विधानं तस्मै ॥ १६ ॥

**( ४ नागोजीभट्टी )** दुर्गे इति । दुर्गे दुर्गमे संकटे इति यावत् । तन्नाम इति च । दरिद्रशब्दाद्भावे घञ् । भयं प्रतिकूलप्रतिसंधानजम् । आर्द्रचित्ता स्निग्धचित्ता ॥ १६ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** दुर्गे इति १७ ॥ १६ ॥

**( ६ दंशोद्धारः )** दुर्गे इति । दुर्गे संकटे । संबोधनं वा ॥ १६ ॥

**एभिर्हतैर्जगदुपैति सुखं तथैते कुर्वन्तु नाम नरकाय चिराय पापम् ।**
**संग्राममृत्युमधिगम्य दिवं प्रयान्तु मत्वेति नूनमहितान्विनिहंसि देवि ॥ १७ ॥**

**( १ गुप्तवती )** ईषत्सहासमिति श्लोकद्वयेनोक्तमाश्चर्यं परिहरति द्वाभ्यां । एभिरिति ॥ १७ ॥

**( २ चतुर्धरी )** एभिरिति । एभिरसुरैः हतैः सद्भिः । प्रकृत्यादित्वात्तृतीया । चिराय चिरकालं । नरकायेति तादर्थ्ये चतुर्थी । पापं प्रतीकूलं कुर्वन्तु नामेति नामशब्दोऽभ्युपगमे । नूनमुत्प्रेक्षायां ॥ १७ ॥

**( ३ शान्तनवी )** अथैषा देवी सर्वोपकारकरणाय दत्तावधाना सदार्द्रचित्ता स्यात् किमिति तर्हि दैत्यान् निहन्ति तत्रोत्तरमाह । उपैतु इति लोडन्तः पाठः । कुर्वन्तु इतिवत् । नाम इत्यपपाठः । नाम्ब इति पाठे न अम्ब इति छेदः । हे देवि हे अम्ब हे सर्वजननि त्वं सर्वोपकारकरणाय सदा कृपार्द्रचित्ता असीति यत्तत्तथैव नान्यथा । तथाहि एभिः अहितैर्जगत्पीडाकरैर्महिषासुरादिभिर्दैत्यैर्हतैः रणे त्वद्धतैः जगत् लोकः सुखमुपैतु पीडकाभावात् सुखं प्राप्नोतु । तथा एते अहिताः लोकत्रयद्रुहः महिषासुरादयो दैत्याः चिराय नरकाय नरकं निरयं गन्तुं पापं पाप्मानं कुर्वन्तु । किंतु । संग्रामे मृत्युं मरणं अधिगम्य मृत्युमुपेत्य दिवं स्वर्गं प्रयान्तु प्राप्नुवन्तु इति मत्वा विचिन्त्य अनुग्रहबुद्ध्या एव एतान् अहितान् सर्वलोक-

द्रुहो महिषासुरादीन् दैत्यान् विनिहंसि मारयसि । ततोऽन्यानपि दैत्यान् विनिहंसि हनिष्यसि च । 'वर्तमानसामीप्ये वर्तमानवद्वा' इति लट् । नूनमवश्यं । निश्चयेऽव्ययं । 'चिराय चिररात्राय चिरस्याद्याश्चिरार्थकाः' अव्ययाख्याः । अम्ब इति 'अम्बार्थनद्योर्ह्रस्वः' । नामेत्येव पाठे न आम नरकाय इति छेदः । आमनरकाय कुष्ठादिमहाव्याधिप्रधाननरकाय पापं न कुर्वन्तु इत्यर्थः । अथवा 'नामप्राकाश्यसंभाव्यक्रोधोपगमकुत्सने' । एभिः असुरैर्हतैः जगत्सुखमुपैतु । तथा एते असुराः यद्यपि पापं कृतवन्तः कुर्वन्तुनाम । चिराय चिरकालं तथा वधेनोद्धरणीया इत्यर्थः । नरकाय पापं कुर्वन्तु नाम तथापि संग्राममृत्युमधिगम्य तु दिवं प्रयान्तु इति मत्वा नूनं निश्चित्याह । हे देवि त्वं एतान् असुरान् अहितान् विनिहंसि तस्मात्त्वं सर्वोपकारकरणाय सदार्द्रचित्तासीति यदुक्तं तत्तथैव नान्यथा ॥ १७ ॥

**( ४ नागोजीभट्टी )** सर्वोपकारित्वमुपपादयति । एभिरिति । दैत्यैरित्यर्थः । उपैतीति लट् । उपैत्वित्यर्थः । एते दत्याः । नामेत्यभ्युपगमे । नरकायेति तादर्थ्ये चतुर्थी । तथापि रणे मृत्युं प्राप्य स्वर्गं गच्छन्तु इति हेतुत्रयं मनसि कृत्वा जगदहितान् हंसीत्यर्थः ॥ १७ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** एभिर्हतैरिति १८ ॥ १७ ॥

**( ६ दंशोद्धारः )** नन्वसुरापकारिण्या मम कथं सर्वोपकारित्वमित्यत आहुः । एभिरिति । असुरहननेन जगदुपकारित्वं पापिनामपि स्वर्गदानेन दैत्योपकारित्वं इति भावः ॥ १७ ॥

**दृष्ट्वैव किं न भवती प्रकरोति भस्म सर्वासुरानरिषु यत्प्रहिणोषि शस्त्रम् ।**
**लोकान्प्रयान्तु रिपवोऽपि हि शस्त्रपूता इत्थं मतिर्भवति तेष्वहितेषु साध्वी ॥ १८ ॥**

**( १ गुप्तवती )** शस्त्रेण धारातीर्थत्वात्पावनेन पूताः ॥ १८ ॥

**( २ चतुर्धरी )** दृष्ट्वैव विलोक्यैव दृष्ट्या चक्षुषैवेति (दृष्ट्या दर्शनेनैवेति) पाठार्थौ । न किं भस्म प्रकरोति कर्तुं शक्नोति । प्रहिणोषि व्यापारयसि । लोकान् इन्द्रलोकादीन् शस्त्रैः पूताः क्षीणपापाः । शस्त्रैः पूतान् निर्जितानिति पाठार्थौ । इत्थं एवंप्रकारेषु तेषु रिपुष्वपि अतिसाध्वी परोपकारस्वरूपा ॥ १८ ॥

**( ३ शान्तनवी )** हे देवि भवती सर्वासुरान् सर्वेषामपि असून् प्राणान् रान्ति गृह्णन्ति सर्वासुराः तान् असुरान् दृष्ट्वैव क्रूरदृष्टयैव भस्म भस्मीभूतान् किं न प्रकरोति किं न भस्मीकरोति । किंतु सामर्थ्यतः करोत्येव । तथापि हे देवि त्वं अरिषु शत्रुषु शस्त्रं आयुधं प्रहिणोषि प्रयुंक्षे इति यत् तत्र तवाभिप्रायोऽन्यएव । हि निश्चयेन । रिपवोऽपि शत्रवोपि संग्रामे शस्त्रपूताः शस्त्रहताः कृतप्रायश्चित्ता इव शमितपापफलाः सन्तः लोकान् वाञ्छितान् स्वर्गादीन् प्रयान्त्विति । तदित्थं । हे देवि तव तेष्वहितेष्वपि शत्रुष्वपि साध्वी मतिरनुग्रहबुद्धिर्भवति । किं पुनः साधुषु स्वधर्मनिरतेषु साध्वी तव मतिर्भवतीति किं ब्रूम इति भावः । भवतीशब्दप्रयोगे प्रकरोतीति प्रथमपुरुषः । भस्मत्वस्य विधेयत्वादेकत्वेपि न विरोधो वेदाः प्रमाणमितिवत् । प्रहिणोषि । हि गतौ 'स्वादिभ्यः श्नुः' 'हिनुमीना' इति णत्वं । 'लोकस्तु भुवने जने' । साध्वी । 'वोतो गुणवचनात्' इति ङीप् ॥ १८ ॥

**( ४ नागोजीभट्टी )** दृष्ट्वेति । दर्शनोत्तरमेतावन्मात्रेणैव भस्मकरणयोग्येषु यत् त्वं शस्त्रं पातयसि तत्तेषामुत्तमलोकप्राप्तये इति तेष्वपि उपकारिकैव त्वमिति किं वक्तव्यं भक्तेष्विति भावः ॥ १८ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** दृष्ट्वैव किं नेति १९ ॥ १८ ॥

**( ६ दंशोद्धारः )** ननु जगद्रक्षार्थमेतान्हन्मि तत्कथं स्वर्गादिदानेनोपकारित्वं निर्णीतं भवद्भिरिति चेत्तत्राहुः । दृष्ट्वैवेति । लोकानिन्द्रलोकादीन् । शस्त्रपूतानिति पाठे शस्त्रनिर्जितानित्यर्थः ॥ १८ ॥

**खड्गप्रभानिकरविस्फुरणैस्तथोग्रैः शूलाग्रकान्तिनिवहेन दृशोऽसुराणाम् ।**
**यन्नागता विलयमंशुमदिन्दुखण्डयोग्याननं तव विलोकयतां तदेतत् ॥ १९ ॥**

**( १ गुप्तवती )** ॥ १९ ॥

**( २ चतुर्धरी )** खड्गस्य प्रभानिकरो दीप्तिसमूहस्तस्य विस्फुरणैः सर्वतः प्रसरणैः उग्रैः भयानकैः कृत्वा शूलाग्रं शूलमुख्यं । अग्रशब्दस्य श्रेष्ठवाचित्वात् । तस्य कान्तिनिवहेन दीप्तिसमूहेन कृत्वा असुराणां दृशः चक्षूंषि कर्तॄणि विलयं विनाशनं यन्नागताः तदेतदाश्चर्यमिति शेषः । हेतुगर्भविशेषणमाह । अंशुमत् इन्दुखण्डयोग्यं अर्धचन्द्रान्वितं तव आननं मुखं विलोकयतामित्यन्वयः ॥ १९ ॥

**( ३ शान्तनवी )** हे देवि रणे तव उग्रैः खड्गप्रभानिकरविस्फुरणैः तथा उग्रेण शूलाग्रकान्तिनिवहेन च असुराणां दृष्टयः

दृशः विलयं विनाशं नागताः नागमन् इति यत् तदेतदन्यदेवास्ति कारणं । किं तत् । अंशुमदिन्दुखण्डयोगि आननं सुधांशुखण्डयुक्तं तव वक्त्रं विलोकयतां इति हेतुगर्भितं विशेषणं असुराणां । यद्यपि असुराः रणे देव्याः अंशुमदिन्दुखण्डयोगि अमृतांशुखण्डयुक्तं आननं न विलोकयेयुः तर्हि उग्रैः खड्गप्रभानिकरविस्फुरणैः तथा उग्रेण शूलाग्रकान्तिनिवहेन च विलयं गतदृशः विनाशं गतदृष्टयः संपद्येरन्निति भावः । अत्र क्रियातिपत्तिर्घटते । यथा हे देवि संग्रामे यद्यसुरास्त्वामृतांशुमयेन्दुखण्डयोगि आननं न व्यलोकयिष्यन् तर्हि उग्रैः खड्गप्रभानिकरविस्फुरणैः तथा उग्रेण शूलाग्रकान्तिनिवहेन च विलीनदृशः समपश्यन्त । नच तदेतत् समपत्स्यत । यत् यस्मात् अंशुमदिन्दुखण्डयोगि आननं व्यलोकयिष्यन् । तस्मादसुरा विलीनदृशो न पश्यन्त इति । खड्गप्रभाः तासां निकरः स्तोमः तस्य विस्फुरणानि संचलनानि तैः । शूलस्याग्राणि त्रीणि तेषां कान्तयः प्रभाः तासां निवहः समूहः तेन अंशवः किरणाः तद्वानिन्दुरमृतमयूखः तस्य खण्डः शकलः तेन योगः संबन्धो मेलनं तद्वत् अंशुमदिन्दुखण्डेन योक्तुमर्हं योग्यं आननं अंशुमदिन्दुखण्डयोग्याननं इत्यपि समासः । 'अकः सवर्णे दीर्घः' ॥ १९ ॥

**( ४ नागोजीभट्टी )** खड्गेति । निकरः समूहः । विस्फुरणं सर्वत्र प्रसरणम् । निवहः समूहः । यद्विलयं नागतास्तदेतत् अंशुमद्यदिन्दुखण्डं तद्योगि तद्युक्तमाननं तव विलोकयतां चैषामाश्रयादिति शेषः ॥ १९ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** खड्गप्रभेति २० ॥ १९ ॥

**( ६ दंशोद्धारः )** खड्गप्रभेति । किंच खड्गप्रभानिकरविस्फुरणैः असिकान्तिसमूहस्फुरणैः शूलाग्रस्य शूलमुख्यस्य दीप्तिसमूहेन च कृत्वा असुराणां दृशो विलयं यन्नागतास्तदेतद्युक्तमिति शेषः । यतः अंशुमदिन्दुखण्डयोगि अर्धचन्द्रान्वितं तवाननं विलोकयतां । यद्वा अंशुमदिन्दोः खण्डने योग्यं शरत्पूर्णचन्द्रापेक्षयाऽधिकाह्लादकारित्वात् सर्वोत्कृष्टत्वन्मुखचन्द्रावलोकनेनाह्लादितारिदृष्टीनां दुःसहमपि शस्त्रतेजः सुसहं जातमित्यर्थः । कश्चित्तु तदेतदाश्चर्यमित्यध्याजहार तन्न । अंशुमदित्यादिहेतुगर्भविशेषणासंगतेः ॥ १९ ॥

**दुर्वृत्तवृत्तशमनं तव देवि शीलं रूपं तथैतदविचिन्त्यमतुल्यमन्यैः ।**
**वीर्यं च हन्त्रृहृतदेवपराक्रमाणां वैरिष्वपि प्रकटितैव दया त्वयेत्थम् ॥ २० ॥**

**( १ गुप्तवती )** हृतदेवपराक्रमाणां दैत्यानां हन्तृ वीर्याणामित्यन्वयः ॥ २० ॥

**( २ चतुर्धरी )** हे देवि तव दुर्वृत्तवृत्तशमनं दुर्जनचेष्टाखण्डनशीलं चरितं रूपं सौन्दर्यं अस्ति । हृतो देवानां पराक्रमो यैस्तेषामसुराणामित्यर्थः । इत्थं एवं सत्यपि दया शस्त्रप्रहरणलक्षणा । शस्त्रहता हि पापिनोऽपि पूयन्ते ॥ २० ॥

**( ३ शान्तनवी )** हे देवि तव शीलं सद्वृत्तं कर्तृ । दुर्वृत्तवृत्तशमनं । दुष्टं वृत्तं येषां ते दुर्वृत्ताः तेषां दुष्टचरित्राणां पुंसां वृत्तस्य शमनं शमयितृ निवारकं वर्तते । यद्वा दुष्टेन वृत्तेन वृत्तं निष्पन्नं फलं दुर्वृत्तवृत्तं दुष्टं फलं नरकलक्षणं तस्य शमनं शमयितृ अपनेतृ तव शीलं । तथा हे देवि तव एतत् सर्वसौभाग्यसौन्दर्यभाजनं रूपं अचिन्त्यं मनसापि विचारयितुमशक्यं अविचार्यं सत् अन्यैर्मनोहरैरतुल्यं असदृशं असाधारणमसमानं वर्तते । तथाच हे देवि तव वीर्यं च हृतदेवपराक्रमाणां दैत्यानां हन्तृ घातकं वर्तते । तथा हे देवि इत्थं प्रागुक्तभणित्या त्वया देव्या स्वकीया दया कृपा वैरिष्वपि प्रकटितैव प्रकाशितैव । 'वृत्तं पद्ये चरित्रे त्रिष्वतीते दृढनिस्तले' 'शीलं स्वभावे सद्वृत्ते' 'रूपं गुणे स्वभावे च' । अचिन्त्यं स्मर्तुं अशक्यं वीर्यं बलं प्रभावश्च । वीर्यं कर्तृ । हृतः देवानां पराक्रमो यैः तेषां असुराणां ॥ २० ॥

**( ४ नागोजीभट्टी )** दुर्वृत्तानां वृत्तं पापं तस्य शमनं तव शीलं स्वाभाविको गुणः । तथान्यैरतुल्यमत एवाविचिन्त्यम् । कीदृशमिति चिन्ताविषयं दृष्ट्वैव किंनेत्यादिना रूपमाकृतिः च परं हृता आत्मसात्कृताः देवा येन ईदृशः पराक्रमो येषां तेषां दैत्यानां हन्तृ वीर्यं । एवं चेदृशरूपेणेदृशबलेन तेषां शस्त्रतो हननमिति तदीयपापशान्तये इति तेषु दयैव त्वया कृतेति भावः ॥ २० ॥

**( ५ जगच्चन्द्रचन्द्रिका )** दुर्वृत्तेति २१ ॥ २० ॥

**( ६ दंशोद्धारः )** ॥ २० ॥

**केनोपमा भवतु तेऽस्य पराक्रमस्य रूपं च शत्रुभयकार्यतिहारि कुत्र ।**
**चित्ते कृपा समरनिष्ठुरता च दृष्टा त्वय्येव देवि वरदे भुवनत्रयेऽपि ॥ २१ ॥**

**( १ गुप्तवती )** अतिहारि अतिसुन्दरं । वरदे वरान् ददासीति कृपा । वरान्दैत्यान् हंसि खण्डयसीति निष्ठुरता च ॥ २१ ॥

---

१ 'हन्तृहृतदेव' इत्यपि पाठः ।

**( २ चतुर्धरी )** ते तव पराक्रमे केनान्येनोपमा भवतु । अपितु न केनापि । रूपं च तव शत्रुभयकारि शत्रूणां भयकर्तृ शीलं यस्य तत् । अतिहारि अतिमनोहरं कुत्र । न कुत्रापि । किंतु भुवनत्रये त्वय्येवेत्यन्वयः ॥२१ ॥

**( ३ शान्तनवी )** हे देवि वरदे भुवनत्रयेऽपि ते तव अस्य पराक्रमस्य केन सह उपमा भवतु । केनापि उपमैव नास्ति । निरुपमत्वात्ते पराक्रमस्य । ननु 'अतुलोपमाभ्यां' इति निषेधात् तृतीया न स्यात् सह विवक्षायां तृतीयास्त्येव । सूत्रं तु षष्ठ्यर्थं सहभावाविवक्षार्थं च । हे देवि हे वरदे रूपं च शत्रुभयकारि शत्रूणां भयोत्पादनशीलं ततोऽन्येषां तु अतिहारि अतिमनोहारि तवैवास्ति न त्वन्यस्य कस्यापि । हे देवि हे वरदे त्वदीये चित्ते कृपा च समरनिष्ठुरता तथा त्वय्येव दृष्टा नान्यत्र दृष्टा न कुत्रापि दृष्टेति भावः । भवत्विति लोट् । दृष्टा इति निष्ठा । दृष्ट्वा इति क्त्वान्तोऽपपाठः । कृपा समरनिष्ठुरता इति च प्रथमा नतु द्वितीया । समरे निष्ठुराया भावः । 'त्वतलोर्गुणवचनस्य पुंवद्भावः' ॥ २१ ॥

**( ४ नागोजीभट्टी )** केनेति । अतिहारि मनोहरं । विरोधोऽत्रालंकारः । केनोपमेति तृतीया आर्षत्वात् । चित्ते कृपा रिपुष्वप्युपकारकत्वात् निष्ठुरता तु स्पष्टैव । अत्र कृपा स्वाभाविकी निष्ठुरता त्वारोपितेति विरोधपरिहार इति बोध्यम् २१

**( ५ जगच्चन्द्रचन्द्रिका )** केनोपमेति २२ ॥ २१ ॥

**( ६ दंशोद्धारः )** केनेति । अतिहारि अतिमनोहरम् ॥ २१ ॥

**त्रैलोक्यमेतदखिलं रिपुनाशनेन त्रातं त्वया समरमूर्धनि तेऽपि हत्वा ।**
**नीता दिवं रिपुगणा भयमप्यपास्तमस्माकमुन्मदसुरारिभवं नमस्ते ॥ २२ ॥**

**( १ गुप्तवती )** ॥ २२ ॥

**( २ चतुर्धरी )** ते रिपवोऽपि समरमूर्धनि रणप्रधानस्थाने हत्वा दिवं नीता इत्यन्वयः । उन्मदाः उद्रिक्ताहंकाराः ये सुरारयस्तद्भवं तेभ्यो जातं भयमपि अपास्तं अपनीतं । ते तुभ्यं ॥ २२ ॥

**( ३ शान्तनवी )** हे देवि त्वया एतत् त्रैलोक्यं रिपुनाशनेन अखिलं यथा भवति तथा त्रातं रक्षितं । त्रैङ् पालने । 'नुदविदोन्दत्राघ्राह्रीभ्योऽन्यतरस्यां'इति वा निष्ठानत्वं । हे देवि त्वया समरमूर्धनि युद्धभूमौ रिपुगणान् हत्वा ते रिपुगणाः दिवं स्वर्गं नीताः प्रापिताः । हे देवि त्वया अस्माकं देवानां उन्मदसुरारिभवं भयमपि अपास्तं अपक्षिप्तं दूरीकृतं । हे देवि सर्वजननि नमस्ते । लोके खलु हिताः नतिमर्हन्ति । त्रयो लोकास्त्रैलोक्यं । चातुर्वर्ण्यादित्वात् स्वार्थे ष्यञ् । अखिलं त्रैलोक्यमिति पाठे पौनरुक्त्यशङ्का । न विद्यतेऽखिलं यस्मिन्निति क्रियाविशेषणं द्रष्टव्यं । 'संभवे व्यभिचारे च स्याद्विशेषणमर्थवत्' । रिपूणां नाशनेन समरमूर्धनि समरस्य मूर्धेव मूर्धा युद्धाग्रभूमिः । तत्र उदुच्छ्रितमदेभ्यः सुराणामरिभ्यो दैत्येभ्यो भवं संभवं । 'नमः स्वस्ति'इति चतुर्थी ॥ २२ ॥

**( ४ नागोजीभट्टी )** त्रैलोक्यमिति । त्वयेत्यन्तमेकान्वयः । ततो रिपुगणा इत्यन्तं अपरं वाक्यं । भयमित्यतो भवमित्यन्तमपरं । अनेन चित्ते कृपेत्येतद्विवृतम् । नमस्ते इत्यनेन नमस्कारातिरिक्तप्रत्युपकारणे नास्माकं सामर्थ्यमिति ध्वनितम् ॥ २२ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** त्रैलोक्यमिति २३ ॥ २२ ॥

**( ६ दंशोद्धारः )** ॥ २२ ॥

**शूलेन पाहि नो देवि पाहि खड्गेन चाम्बिके । घण्टास्वनेन नः पाहि चापज्यानिःस्वनेन च ॥२३॥**

**( १ गुप्तवती )** ॥ २३ ॥

**( २ चतुर्धरी )** ॥ २३ ॥

**( ३ शान्तनवी )** हे देवि हे अम्बिके त्वं शूलेन आयुधेन शत्रुभ्यो नोऽस्मान् पाहि रक्ष । पा रक्षणे । 'सेर्ह्यपिच्च' । 'अस्त्री शूलं रुगायुधं' । हे देवि अम्बिके त्वं घण्टास्वनेन घण्टायाः स्वनेन नः शत्रुतः पापतश्च पाहि । हे देवि हे अम्बिके त्वं चापज्यानिःस्वनेन चापारोपिताकृष्टमौर्वीजनितनिःस्वनेन च नोऽस्मान् पाहि शत्रुतः पाप्मनश्चेति शेषः ॥ २३ ॥

**( ४ नागोजीभट्टी )** ॥ २३ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** शूलेनेति २४ ॥ २३ ॥

**( ६ दंशोद्धारः )** ॥ २३ ॥

**प्राच्यां रक्ष प्रतीच्यां च चण्डिके रक्ष दक्षिणे । भ्रामणेनात्मशूलस्य उत्तरस्यां तथेश्वरि ॥ २४॥**

**( १ गुप्तवती )** भ्रामणेनेत्यनेन विदिक्ष्वध ऊर्ध्वं च रक्षेति ध्वनितं ॥ २४ ॥

**( २ चतुर्धरी )** दक्षिणे दक्षिणभागे भ्रामणेन। संज्ञापूर्वकविधेरनित्यत्वात् ह्रस्वो न भवति । यथा। 'स तैराक्रमयामास अस्मान् संक्रामितैः परैः' इति ॥ २४ ॥

**( ३ शान्तनवी )** हे ईश्वरि ईश्वरस्य पत्नि । यद्वा हे ईश्वरि जगद्व्यापिनि । 'अश्नोतेराशुकर्मणि वरट्चेच्चोपधायाः' । हे देवि हे चण्डिके त्वं आत्मनः शूलस्य आयुधस्य भ्रामणेन परितोऽभितश्चक्राकारेण परिवर्तनेन अस्मान् देवान् प्राच्यां दिशि रक्ष शत्रुतः। हे ईश्वरि हे चण्डिके त्वं प्रतीच्यां दिशि पश्चिमायामाशायां आत्मशूलस्य भ्रामणेन अस्मान् रक्ष शत्रुतः । हे ईश्वरि अम्बिके आत्मशूलस्य भ्रामणेन दक्षिणे दिग्विभागे अवाच्यां दक्षिणस्यां दिशि अस्मान् रक्ष शत्रुतः। तथा हे ईश्वरि हे अम्बिके हे चण्डिके त्वं आत्मशूलस्य भ्रामणेन उत्तरस्यां दिशि अस्मान् रक्ष शत्रुतः। भ्रामणेनेति भ्रमणस्येदं भ्रामणं प्रदक्षिणीकरणं परितो मण्डलीकरणं । अन्यथा अनवस्थानमात्रं चलनमात्रं वा शूलसमवेता क्रिया स्यात्। अतश्च प्रदक्षिणाकृति परिभ्रामणं विवक्षितमिति सूचयितुं प्राच्यां प्रतीच्यां दक्षिणस्यामुत्तरस्यामित्युक्तं । चकाराद्विदिग्ग्रहणं ॥ २४ ॥

**( ४ नागोजीभट्टी )** प्राच्यामिति । दक्षिणे इत्यस्य दिग्भागे इति शेषः । भ्रामणेनेत्यत्र ह्रस्वाभावः संज्ञापूर्वकविधेरनित्यत्वात् ॥ २४ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** प्राच्यां रक्षेति २५ ॥ २४ ॥

**( ६ दंशोद्धारः )** प्राच्यामिति । दक्षिणे दक्षिणभागे ॥ २४ ॥

## सौम्यानि यानि रूपाणि त्रैलोक्ये विचरन्ति ते। यानि चात्यर्थघोराणि तै रक्षास्मांस्तथा भुवं॥२५॥

**( १ गुप्तवती )** ॥ २५ ॥

**( २ चतुर्धरी )** सौम्यानि सृष्टिस्थितिव्यापाराणि अत्यन्तमतिशयेन घोराणि संहारकराणि । अत्यर्थेति वा पाठः । अस्मान् रक्ष । तथा भुवं पृथिवीं चेत्यर्थः ॥ २५ ॥

**( ३ शान्तनवी )** हे देवि त्रैलोक्ये त्रिषु लोकेषु ते तव यानि सौम्यानि सुन्दराणि प्रसन्नानि रूपाणि विचरन्ति विहरन्ति । यानि चात्यन्तघोराणि भयंकराणि रूपाणि विचरन्ति तैस्तैश्च रूपैरुपलक्षिता त्वं तैस्तैः करणैर्वा अस्मान्देवान् रक्ष। तथा तैरेव द्विविधैः रूपैर्भुवं रक्ष । तथा चकारात् तैरेव रूपैः पातालं रक्ष । 'सौम्यं तु सुन्दरे सोमदेवते' 'सोमाद्यणि भवेत्सौम्यं सुन्दरे तूपचारतः'। 'अनुगृह्णाति यान्देवी तेषां सौमी जगन्मयां । नानुगृह्णाति यान्देवी तेषां घोरा जगन्मयी' ॥२५॥

**( ४ नागोजीभट्टी )** सौम्यानीति । सृष्टिस्थितिव्यापाराणि । अत्यर्थघोराणि संहारव्यापाराणि । तथा भुवं पृथिवीं चेत्यर्थः ॥ २५ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** सौम्यानीति २६ ॥ २५ ॥

**( ६ दंशोद्धारः )** ॥ २५ ॥

## खड्गशूलगदादीनि यानि चास्त्राणि तेऽम्बिके । करपल्लवसङ्गीनि तैरस्मान् रक्ष सर्वतः ॥ २६ ॥

**( १ गुप्तवती )** ॥ २६ ॥

**( २ चतुर्धरी )** करपल्लवसङ्गीनि करपल्लवेन सङ्गः संसर्गो विद्यते येषाम् ॥ २६ ॥

**( ३ शान्तनवी )** हे अम्बिके देवि यानि ते तव करपल्लवसङ्गीनि खड्गशूलगदादीनि यान्यायुधानि तैः यानि चास्त्राणि धनुरादीनि सन्ति तैश्च त्वं सर्वतः समंततः अस्मान् त्वदेकशरणान् देवान् रक्ष । दुःखतः पापतः शत्रुतश्च पालय। 'हस्तिशुण्डाशुवाहाग्रबलिपूक्तः करः पुमान्' । करो हस्तः पाणिः। 'पञ्चशाखः शयः पाणिः' 'अङ्गुल्यः करशाखाः स्युः' करपल्लवाः अङ्गुल्यः तैः सङ्गः तद्वन्ति करपल्लवसङ्गीनि । यद्वा करः पल्लव इव करपल्लवः तेन सङ्गः तद्वन्ति वा करपल्लवसङ्गीनि । हस्तस्थितानीत्यर्थः । 'समंततस्तु परितः सर्वतो विष्वगित्यपि' । खड्गश्च शूलश्च गदा च खड्गशूलगदं । सेनाङ्गत्वादेकवत्त्वं । तत् आदिर्येषां तानि तथोक्तानि धनुरादीनि ॥ २६ ॥

**( ४ नागोजीभट्टी )** खड्गेति । सङ्गः संसर्गः ॥ २६ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** खड्गशूलेति २७ ॥ २६ ॥

**( ६ दंशोद्धारः )** ॥ २६ ॥



---

१ 'चात्यन्तघोराणि' इति चतुर्धरीशान्तनव्योः संमतः पाठः ।

ऋषिरुवाच ।

**एवं स्तुता सुरैर्दिव्यैः कुसुमैर्नन्दनोद्भवैः । अर्चिता जगतां धात्री तथा गन्धानुलेपनैः ॥ २७ ॥**

**( १ गुप्तवती )** ॥ २७ ॥

**( २ चतुर्धरी )** नन्दनोद्भवैर्देवोद्यानजातैः । गन्धैः श्रीवासादिभिः । अनुलेपनैः श्रीखण्डादिभिः ॥ २७ ॥

**( ३ शान्तनवी )** एवमुक्तभणित्या जगतां धात्री पोषयित्री देवी देवैः स्तुता ततो दिव्यैर्दिवि भवैः नन्दनोद्भवैः नन्दनं स्वस्तनवनं तत उद्भवैः कुसुमैः । तथा दिव्यैः गन्धानुलेपनैः चार्चिता पूजिता आराधिता गन्धैरनुलेपनीयैः गन्धाः कुङ्कुमादयः । 'कुङ्कुमागरुकस्तूरिकर्पूरं चन्दनं तथा । महासुगन्धमित्युक्तं नाम्ना स्याद्यक्षकर्दमः' । अनुलेपनमङ्गरागः ॥२७॥

**( ४ नागोजीभट्टी )** ऋषिरुवाच । एवमिति । नन्दनं देवोद्यानं । दिव्यैः उत्कृष्टैः । गन्धाः श्री(रागा)वासादयः । अनुलेपनं श्रीचन्दनादि ॥ २७ ॥

**( ५ जगच्चन्द्रचन्द्रिका)** आद्येन ऋषिरुवाचेत्यनेन सह खड्गशूलान्ताः श्लोकरूपा मन्त्राः सप्तविंशतिमन्त्राद्या इत्यर्थः । ऋषिरिति ऋषिरुवाच स्वाहेत्यष्टाविंशतिका मन्त्राः २८ । श्लोकद्वयमिति । श्लोकयोर्द्वयं युग्मं द्वौ श्लोकरूपौ पृथङ्मन्त्राविल्यर्थः । तथाहि एवं स्तुतेति २९ ॥ २७ ॥

**( ६ दंशोद्धारः )** ॥ २७ ॥

**भक्त्या समस्तैस्त्रिदशैर्दिव्यैर्धूपैः सुधूपिता । प्राह प्रसादसुमुखी समस्तान्प्रणतान्सुरान् ॥ २८ ॥**

**( १ गुप्तवती )** ॥ २८ ॥

**( २ चतुर्धरी )** दिव्यैर्मनोज्ञैः । प्रसादेन कृपया शोभनं मुखं यस्याः । सुरान्देवान्प्रणतान् चरणौ गतान् ॥ २८ ॥

**( ३ शान्तनवी )** समस्तैरखिलैस्त्रिदशैर्देवैर्भक्त्या दिवि भवैः धूपैः गन्धाद्यैः धूपराजैः सुधूपिता सुपूजिता देवी प्रसादसुमुखी प्रसादत्वेन प्रसन्नत्वेन सुमुखी सती तान् प्रणतान्समस्तान् सुरान् इन्द्रादीन्देवान् वाक्यं प्राह उवाच । उपसर्गप्रतिरूपः प्रशब्दोऽव्ययाख्यः । अहेति निपातस्तिङन्तप्रतिरूपकः कालसामान्यवचनः । शोभनं सुखमस्त्यस्याः सुमुखी । 'स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्' इति वा ङीष् टाप् च । 'नखमुखात्संज्ञायाम्'इति ङीषो निषेधस्तु संज्ञायामेव ॥ २८ ॥

**( ४ नागोजीभट्टी )** भक्त्येति । अन्तःकरणेन प्रेमतया भजनं सेवनं भक्तिः तया प्रेमलक्षणया भक्त्या दिव्यैर्मनोज्ञैः धूपैस्त्विति पाठः ॥ २८ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** भक्त्या समस्तैरिति ३० ॥ २८ ॥

**( ६ दंशोद्धारः )** ॥ २८ ॥

देव्युवाच ।

**व्रियतां त्रिदशाः सर्वे यदस्मत्तोऽभिवाञ्छितम् । (ददाम्यहमतिप्रीत्या[३] स्तवैरेभिः सुपूजिता) ।**

देवा ऊचुः ।

**भगवत्या कृतं सर्वं न किंचिदवशिष्यते ॥ २९ ॥**

**( १ गुप्तवती)** ॥ २९ ॥

**( २ चतुर्धरी )** अतिप्रीत्या प्रीत्यतिशयेन । प्रीतेति वा पाठः ॥ २९ ॥

**( ३ शान्तनवी )** हे सर्वे त्रिदशाः युष्मत्कृतैरेभिः स्तवैः प्रपूजिता अहं अतिप्रीतास्मि । युष्माभिः सर्वैर्देवैर्यदस्मत्तः सकाशात् अभिवाञ्छितं अभिलषितं वर्तते तद्वस्तु व्रियतां प्रार्थ्यतां । अहं ददामि दास्यामि । इह प्रीत्या प्रीता इति पाठद्वयं । अत्र आद्ये पाठे अर्थ उक्तः । यत्तन्मत्तोऽभिवाञ्छितं इति पाठः सभ्यः । यदस्मत्तोऽभिवाञ्छितमिति पाठे असत् देवीतः व्रियतां अहं ददामीति वचनचातुर्यं । कीदृशं स्यात् । बहुत्वेनोपक्रम्यैकत्वेनोपसंहाराद्वाचोयुक्तिरियं वाचोयुक्तिमतामुद्वेगं जनयतीत्यर्थः ।

[३]कर्तव्यमपरं यच्च दुष्कृतं तन्निवेद्यतां । इत्याकर्ण्य वचो देव्याः प्रत्यूचुस्ते दिवौकसः ॥

हे देवाः अपरं युष्माभिः कर्तव्यं सत् दुष्कृतं दुःसाध्यं यत् तच्च मदग्रे मह्यं निवेद्यतां ज्ञाप्यतां तदप्यपरं महिषासुरवध-

---

१ 'धूपैस्तु धूपिता' इति पाठः । २ इदं पद्यार्धं गुप्तवतीनागोजीभट्टीकारैर्नादृतं दृश्यते । ३ इदं पद्यमपि केवलं शान्तवीकारैरेव व्याख्यातमतो नास्य मूले निवेशः कृतः ।

पेक्षया द्वितीयं कार्यं साधयामीति भावः । इति इत्थं देव्याः वचः आकर्ण्य श्रुत्वा ते सर्वे दिवौकसः इन्द्रादयः सुराः प्रत्यूचुः प्रतिवाक्यमुक्तवन्तः । दिवि ओकांसि निवासा येषां ते दिवौकसः । पृषोदरादित्वात्साधुः ॥ २९ ॥

**( ४ नागोजीभट्टी )** देव्युवाच । म्रियतामिति । देवा ऊचुः । भगवत्येति ॥ २९ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** देवीति । देव्युवाचेत्ययं मन्त्रः ३१ । ततः परं देव्युवाचेत्यनन्तरं म्रियतां त्रिदशाः सर्वे यदस्मत्तोऽभिवाञ्छितं स्वाहा ३२ इति अर्धश्लोकमन्त्रोऽर्धश्लोकरूपो मन्त्रः । अथ देवा ऊचुरिति । अथानन्तरं देवा ऊचुः स्वाहेत्यपरो मन्त्रः ३३ । ततः परमिति । देवा ऊचुरित्यनन्तरं भगवत्या कृतं सर्वमित्यर्धं श्लोकमन्त्रक इति भगवत्येत्यादि अर्धश्लोकरूपो मन्त्रः । तथाहि भगवत्या कृतं सर्वं न किंचिदवशिष्यते स्वाहा ३४ ॥ २९ ॥

**( ६ दंशोद्धारः )** ॥ २९ ॥

**यदयं निहतः शत्रुरस्माकं महिषासुरः । यदि वापि वरो देयस्त्वयास्माकं महेश्वरि ॥ ३० ॥**

**( १ गुप्तवती )** ॥ ३० ॥

**( २ चतुर्धरी )** ॥ ३० ॥

**( ३ शान्तनवी )** हे देवि यद्यस्मात् त्वया भगवत्या अस्माकं देवानां शत्रुरयं महिषासुरनामा निहतः व्यसूकृतः अतस्त्वया भगवत्या सर्वमस्माकं देवानां प्रयोजनं कृतमेव । न किंचिदवशिष्यते न किंचित्कार्यशेषोऽवशिष्यते । न कश्चिदपि शत्रुः शेषोऽवशिष्टः । हे महेश्वरि महानीश्वरः तस्य स्त्री । यद्वा महती ईश्वरी । 'अश्नोतेराशुकर्मणि वरट्चेचोपधायाः' देवि यदि पक्षान्तरे । त्वया भगवत्या अस्माकं त्वदनुग्रहजीविनां देवानां त्वदेकजीविनीं वरश्च देयोऽनुमतः स्यात् तर्हि अयं वरः प्रार्थ्यतेऽस्माभिः ॥ ३० ॥

**( ४ नागोजीभट्टी )** यदिति । यत इत्यर्थः । पूर्वान्वय्यर्थम् । उत्तरार्धमुत्तरान्वयि । यदि वापीति । वाशब्द एवमर्थे । यद्येवं सत्यपि वरो देय इति तवेच्छा चेत्तदा वक्ष्यमाणमस्त्वित्यर्थः । अस्माकमस्मभ्यमित्यर्थः ॥ ३० ॥

**( ५ जगच्चन्द्रचन्द्रिका )** यदयं निहताद्यं च श्लोकमन्त्रत्रयं भवेदिति । तु पुनः यदयं निहत आद्यो यस्य तत् यदयं निहताद्यं श्लोकरूपा ये मन्त्रास्तेषां त्रयं भवेत् । त्रयः पृथक् मन्त्रा भवेयुरित्यर्थः । तथाहि यदयं निहत इति ३५॥३०॥

**( ६ दंशोद्धारः )** ॥ ३० ॥

**संस्मृता संस्मृता त्वं नो हिंसेथाः परमापदः । यश्च मर्त्यः स्तवैरेभिस्त्वां स्तोष्यत्यमलानने ॥ ३१ ॥**

**( १ गुप्तवती )** ॥ ३१ ॥

**( २ चतुर्धरी )** हिंसेथा इति । भौवादिगणपाठादात्मनेपदं । हे अमलानने प्रसन्नवदने अम्बिके यश्च मर्त्यः लोकः एभिः स्तवैः पूर्वोक्तैः त्वां स्तोष्यति ॥ ३१ ॥

**( ३ शान्तनवी )** कोऽसौ । हे देवि त्वं परमापत्सु अस्माभिस्त्वदेकशरणैर्देवैः संस्मृता संस्मृता सती वारंवारं ध्याता सती नोऽस्माकं परमापदः परमाः आपदः । यद्वा परमा अत्यर्थाः आपदः येभ्यस्ते परमापदः शत्रवः तान् महासुरान् हिंसेथाः हिंस्याः । हिसि हिंसायां । रुधादेः प्रार्थने । लिङ् परस्मैपदस्थाने 'व्यत्ययो बहुलं' इत्यात्मनेपदस्य थासः सीयुट् । अस्माकमिति दानप्रतिग्रहभावाभावात्संप्रदानत्वात्संबन्धे षष्ठ्येव । मात्रा पित्रा च पुत्राणां बालानां कशिपुर्दीयते 'रजकस्यांशुकं दत्ते स्वामी भृत्यस्य वेतनं' इतिवत् । पक्षान्तरे चेद्यदिच । देवाः द्वितीयं वरं प्रार्थयन्ते । हे अम्बिके हे अमलानने हे प्रसन्नवदने त्वं अस्माभिः प्रपन्ना प्रणता सेविता सती वरदासि अतः यश्च मर्त्यः एभिस्त्वद्विषयैरस्माभिर्देवैः कृतैः स्तवैः त्वां देवीं स्तोष्यति भक्तितः स्तविष्यति ॥ ३१ ॥

**( ४ नागोजीभट्टी )** संस्मृतेति । हिंसेथा इत्यार्षः । उत्तरार्धमुत्तरान्वयि ॥ ३१ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** संस्मृता संस्मृतेति ३६ ॥ ३१ ॥

**( ६ दंशोद्धारः )** यदीति । हिंसेथा इति भौवादिकस्य रूपं नतु रौधादिकस्य । तस्य परस्मैपदित्वात् ॥ ३१ ॥

**तस्य वित्तर्द्धिविभवैर्धनदारादिसंपदाम् । वृद्धयेऽस्मत्प्रसन्ना त्वं भवेथाः सर्वदाम्बिके ॥ ३२ ॥**

**( १ गुप्तवती )** वृद्धय इति । अस्मदिति निमित्तपञ्चमी । प्रसन्ना सती सर्वदा पुरुषार्थप्रदा भवेथाः । मर्त्यस्यापराधानिमित्तीकृत्य तस्मै मा क्रुध्य इति भावः । स्पष्टमन्यत् ॥ ३२ ॥

**( २ चतुर्धरी )** तस्य मर्त्यस्य अस्मत्प्रसन्ना सती अस्माकं प्रसन्ना सती त्वं वित्तर्द्धिविभवैः धनदारादिसंपदां । वित्तं वेदनं । ज्ञानमिति यावत् । भावे क्तविधानात् । ऋद्धिः उपचयः । विभवः ऐश्वर्यं । तैरिति सहार्थे तृतीया । अर्थेनापि भ-

१ 'यदि चापि' इति पाठः । २ 'अस्मत्प्रसन्ना' इति शान्तनवी संमतः पाठः ।

वतीति स्मरणात् । धनं कनकादि । आदिशब्दः क्षेत्रादिपरिग्रहार्थः । (आदिशब्दात्पुत्रदारादिसंग्रहः) धनदारादय एव संपदः तासां वृद्धये उपचयाय भवेथा इत्यन्वयः ॥ ३२ ॥

( ३ **शान्तनवी** ) तस्य मर्त्यस्य मनुषस्य वित्तर्द्धिविभवैः सह धनदारादिसंपदां सदा वृद्धये प्रवृद्धये भवेथाः । सर्वदा वित्तस्य अर्थस्य ऋद्धेः समृद्धेर्विभवैरुद्भवैः सह धनस्य गोमहिष्यश्वादेः दाराणां पत्नीनां । आदिशब्दात्सेवकादीनां संपदां क्षेत्रारामधान्यपुत्रमित्रादिसंपत्तीनां च वृद्धये भवेथाः । प्रार्थने लिङ् । 'व्यत्ययो बहुलं' इत्यात्मनेपदं । (वैदिकं वेदकल्पमिदं देवीस्तवनमिति सूचयितुं प्रयुक्तमृषिभिः) यद्यपि वित्तं धनमिति पर्यायौ तथाप्युपचाराद्गवाश्वादिकं धनशब्देन विवक्षितं । वित्तर्द्धयश्च विभवाश्च ऐश्वर्याणि तैः सहितं धनं गवादि दारादि पत्न्यादि तेषां संपदः तासाम् ॥ ३२ ॥

( ४ **नागोजीभट्टी** ) तस्येति । वित्तर्द्धिविभवैरिति सहयोगे तृतीया । भवने च साहित्यं वित्तं ज्ञानं तस्य वृद्धिरुपचयः । विभवा ऐश्वर्यादयः । धनदारादीनां संपदः अनुरूपा आत्मभावाः । आदिना पुत्रादिवृद्धये उपचयाय ॥ ३२ ॥

( ५ **जगच्चन्द्रचन्द्रिका** ) तस्य वित्तर्द्धीति ३७ ॥ ३२ ॥

( ६ **दंशोद्धारः** ) यश्चेति । वित्तं वेदनं ज्ञानं । भावे क्तः । ऋद्धिरुपचयः । विभव ऐश्वर्यम् । सहार्थे तृतीया ॥३२॥

## ऋषिरुवाच ।

### इति प्रसादिता देवैर्जगतोऽर्थे तथात्मनः । तथेत्युक्त्वा भद्रकाली बभूवान्तर्हिता नृप ॥ ३३ ॥

( १ **गुप्तवती** ) ॥ ३३ ॥

( २ **चतुर्धरी** ) भद्रं कल्याणं करोतीति भद्रा । भद्रा चासौ काली चेति विग्रहः । भद्रं कालयति वर्धयतीति कर्मण्यणेव । अन्तर्हिता अदृश्या ॥ ३३ ॥

( ३ **शान्तनवी** ) हे नृप हे सुरथ इति प्रागुक्तरीत्या देवैर्जगतोऽर्थे त्रैलोक्यसंरक्षणप्रयोजनाय तथा आत्मनोऽर्थे स्वार्थे देवकार्यविषयेऽर्थे च प्रसादिता प्रसादसुमुखीकृता भद्रकाली भद्रा सर्वमङ्गला काली रुद्रपत्नी । कर्मधारयः । हे देवाः तथास्तु युष्मद्वाञ्छितमस्तु सिध्यत्वित्युक्त्वा अन्तर्हिता बभूव अन्तर्धानमगात् अदृश्या बभूव ॥ ३३ ॥

( ४ **नागोजीभट्टी** ) ऋषिरुवाच । इतीति । तथात्मनः आत्मनश्चार्थे इत्यर्थः । तथेत्युक्त्वा तथास्त्वित्युक्त्वा भद्रं कालयतीति भद्रकाली । अन्तर्हिताऽदृश्या बभूवेत्यन्वयः ॥ ३३ ॥

( ५ **जगच्चन्द्रचन्द्रिका** ) ऋषिरुवाचेति ऋषिरुवाचेत्यपरो मन्त्रः ३८ । श्लोकाश्चत्वारो मनवः परिकीर्तिता इति चत्वारो मन्त्रा भवेयुरित्यर्थः । प्रकीर्तिता उक्ताः । तद्यथा इति प्रसादितेति ३९ ॥ ३३ ॥

( ६ **दंशोद्धारः** ) इतीति । भद्रा चासौ काली चेति विग्रहः । यद्वा भद्रं कारयतीति तथा । कर्मण्यण् । रलयोरभेदः ॥ ३३ ॥

### इत्येतत्कथितं भूप संभूता सा यथा पुरा । देवी देवशरीरेभ्यो जगत्त्रयहितैषिणी ॥ ३४ ॥

( १ **गुप्तवती** ) ॥ ३४ ॥

( २ **चतुर्धरी** ) ॥ ३४ ॥

( ३ **शान्तनवी** ) हे भूप हे सुरथ । जगत्त्रयहितैषिणी सा देवी देवशरीरेभ्यो यथा पुरा पूर्वं तेजोरूपा संभूता महिषासुरवधाय प्रादुरभूत् इत्येतत् सर्वं ते तुभ्यं सुरथाय मया सुमेधसा मुनिना कथितं तथाह्युक्तम् ॥ ३४ ॥

( ४ **नागोजीभट्टी** ) इतीति स्पष्टम् ॥ ३४ ॥

( ५ **जगच्चन्द्रचन्द्रिका** ) इत्येतत्कथितं भूपेति ४० ॥ ३४ ॥

( ६ **दंशोद्धारः** ) ॥ ३४ ॥

### पुनश्च गौरीदेहात्सा[1] समुद्भूता यथाभवत् । वधाय दुष्टदैत्यानां तथा शुम्भनिशुम्भयोः ॥ ३५ ॥

( १ **गुप्तवती** ) गौरीदेहादिति । गौरवर्णशरीरप्रकटनाय नीलवर्णकोशरूपं शरीरं पार्वत्या परित्यक्तमिति वक्ष्यते । देहात्कोशादित्यर्थः ॥ ३५ ॥

( २ **चतुर्धरी** ) इतिहासान्तरं निरूपयति । पुनरिति । गौरी पार्वतीत्यनुषज्यते । देहं शरीरं आसनं आसः अवस्थितिर्यस्याः सा देहासा । गृहीतशरीरेति यावत् । सा गदितमाहात्म्या गौरी पुनर्गृहीतदेहा सती यथा समुद्भूताऽभवदि-

१ 'गौरीदेहा सा' इति चतुर्धरीपाठः ।

त्यन्वयः । अथवा गौर्या देहः शरीरकोश एव देहकारणं यस्याः सा गौरीदेहा । शाकपार्थिवादित्वान्मध्यमपदलोपी समासः । देहग्रहे हेतुमाह । वधायेति । दुष्टदैत्यानां धूम्रलोचनादीनां । ते तुभ्यम् ॥ ३५ ॥

**( ३ शान्तनवी )** इदं श्लोकद्वयमेकक्रियमेकान्वयं द्रष्टव्यं । शृणु स्व इति पदद्वयं । हे स्व हे आत्मीय भूप सुरथ सा प्रसिद्धा देवानामुपकारिणी देवी पुनश्च पुनरपि दुष्टदैत्यानां दुष्टानां देवादिपीडकानां धूम्रलोचनरक्तबीजचण्डमुण्डादीनां दैत्यानां वधाय च तथा शुम्भनिशुम्भयोः वधाय च लोकानां रक्षणाय च प्रयोजनाय यथा गौरीदेहात् गौर्याः देहात्समुद्भूता अभवत् आसीत् तत्सर्वं यथावद्यथार्थं यावत् ते तुभ्यं राज्ञे कथयाम्यहं सुमेधानाम ऋषिः तत् त्वं यथावत् यावत्प्रकारेण ख्यातं मया कथितं शृणु आकर्णय । शृणुष्वेति पाठे 'व्यत्ययो बहुलं' इत्यात्मनेपदं । शुम्भ भाषणे हिंसायां च भ्वादिः । शुम्भति भाषते हिनस्ति वा शुम्भः । दन्त्यादिरयं । तालव्यादिपाठे शुभशुम्भशोभार्थे तुदादिः । शुम्भति शोभते रणेष्विति शुम्भः । यथाप्रकारवत्यथावत् । क्रियाविशेषणम् ॥ ३५ ॥

**( ४ नागोजीभट्टी )** पुनश्चेति । गौरीदेहः कारणं यस्या इत्यर्थः । समुद्भवः यथा तत्र हेतुर्दुष्टवधो देवलोकरक्षणं वा ॥ ३५ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** पुनश्च गौरीति ४१ ॥ ३५ ॥

**( ६ दंशोद्धारः )** इतिहासान्तरं सूचयति । पुनश्चेति । गौरीदेहासा इति पाठे गौरीदेह एव आसनमासः स्थितिरस्याः । शरीरकोशनिःसृतत्वात् । यद्वा गौरीदेहो देहकारणमस्या इति मध्यमपदलोपी समासः ॥ ३५ ॥

**रक्षणाय च लोकानां देवानामुपकारिणी । तच्छृणुष्व मयाख्यातं यथावत्कथयामि ते ॥ ३६ ॥**

## इति श्रीमार्कण्डेयपुराणे शक्रादिकृतदेव्याः स्तुतिर्नाम चतुर्थोऽध्यायः ॥ ४ ॥

**( १ गुप्तवती )** अत्र चण्डीस्तवे देवकृतास्त्रयस्तवास्तत्तदारम्भे देवा ऊचुरित्यपेक्षितं । तथा देवकृतवरप्रार्थनद्वयमपीति तयोरारम्भेऽपि द्विवारमिति पञ्चवारं तन्त्रान्तरे देवोक्तिरस्ति । परं तु स्तवारम्भे प्राक् श्लोकेषु नियमेन तदर्थस्योपनिबद्धत्वेन पौनरुक्त्यापत्त्या स्तवारम्भे त्रितयं नापेक्षितमित्याशयेन यामलपाठे प्रार्थनारम्भ एव द्विवारं देवोक्तिरादृता । प्रकृततन्त्रे त्वर्धजरतीयमेव प्र(थम)कृतस्तवस्य चरमस्तवस्य चारम्भे परिहृत्यैतदुत्तरं स्तवारम्भे प्रार्थनद्वयारम्भे चेति त्रिर्देवोक्तिरङ्गीकारादिति द्रष्टव्यं । अतः प्रथमश्लोकोत्तरं देवा ऊचुरिति न वक्तव्यं । इतरद्यथास्थानं युक्तमेवेति दिक् । पूर्वाध्याये मध्येमध्ये श्लोकान्तराण्यत्र फलश्रुतौ च तानि बहुलान्न प्रदर्शितानि ॥ ३६ ॥ इति श्रीगुप्तवत्यां मन्त्रव्याख्याने शक्रादिस्तुतिवर्णनंनाम चतुर्थोऽध्यायः ॥ ४ ॥

**( २ चतुर्धरी )** ॥ ३६ ॥ इति चतुर्धरीटीकायां शक्रादिभिः कृता देव्याः स्तुतिर्नाम चतुर्थोऽध्यायः ॥ ४ ॥

**( ३ शान्तनवी )** अस्य श्लोकस्य व्याख्या पूर्वश्लोकेन सह कृतास्ति ॥ ३६ ॥ इति श्रीमद्राजाधिराजतोमरान्वयश्रीमदुद्धरणात्मजशन्तनुविरचितायां शान्तनव्यां देवीमाहात्म्यटीकायां शक्रादिस्तुतिश्चतुर्थोऽध्यायः ॥ ४ ॥

**( ४ नागोजीभट्टी )** ननु तेनाप्यस्याः कोर्थस्तदाह । उपकारिणीति । उपकारस्वभावा यत इत्यर्थः । तच्छृणुष्वेत्यार्षस्तङ् । तत्प्रकारं मया मत्तः । निपातोऽयम् । ख्यातं लोकप्रसिद्धम् । एनामुपक्रम्य लक्ष्मीतन्त्रे लक्ष्मीवाक्यम् । 'अभिष्टुता सुरैः साहं महिषं जघ्नुषी क्षणात् । महिषान्तकरीसूक्तं दृष्टं देवैर्महर्षिभिः । उत्पत्तिं युद्धविक्रान्तिः स्तोत्रं चेति सुरेश्वर । कथयन्ति सुविस्तीर्णं ब्राह्मणा वेदपारगाः । लभन्ते च फलं शश्वदाधिपत्यमनश्वरम्' । इति महिषान्तकरीसूक्तं देवैर्महर्षिभिश्च दृष्टम् । देव्या यया ततमिति श्लोकेऽखिलदेवमहर्षिपूज्यत्वविशेषणात् । युष्माभिः स्तुतयो याश्चेति श्लोके ब्रह्मर्षीणां स्तुतिकर्तृत्वप्रतिपादनाच्चेति बोध्यम् ॥ ३६ ॥ इति शिवभट्टसुतसतीगर्भजनागोजीभट्टकृते सप्तशतीव्याख्याने चतुर्थोऽध्यायः ॥ ४ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** रक्षणाय च लोकानामिति ४२ ॥ ३६ ॥ ऋषित्रयं तु देव्यैका एकदेवास्तु पञ्चभिः । उवाचवचनैः श्लोकाः पञ्चत्रिंशत्तु मन्त्रकाः । अर्धश्लोकात्मकं मन्त्रद्वयं भवेदिहेति । इह चतुर्थेऽध्याये तु पुनः ऋषित्रयं ऋषिरुवाचेति त्रयो मन्त्राः । देव्यैका देव्युवाचेत्येको मन्त्रः । एकदेवाः देवा ऊचुरित्येको मन्त्रः । तु पुनः एतैः पञ्चभिरुवाचवचनैः सह पञ्च अधिका त्रिंश एकाः श्लोकरूपा मन्त्रका मन्त्रा इत्यर्थः । अर्धश्लोकरूपं यन्मन्त्रद्वयं मन्त्रयुग्मं द्वौ मन्त्रावित्यर्थः । भवेत् । षोडशश्लोककेऽध्याये चत्वारिंशद्द्वयाधिका । विभज्य गणना कार्या मन्त्राणां हवनादिषु । इति षट्त्रिंशश्लोका यस्मिन्नीदृशेऽध्याये चतुर्थाध्याये द्व्याधिका द्वाभ्यामधिका चत्वारिंशत् भवेदिति शेषः । द्विचत्वारिंशन्मन्त्रा भवन्तीत्यर्थः । मन्त्राणां शक्रादय इत्यादिमन्त्राणां हवनादिषु होमादिषु विभज्य मन्त्रविभागं कृत्वा गणना संख्या कार्या कर्तव्या । मन्त्रवि-

१ 'शृणु स्व' इति शान्तनवीकारादृतः पाठः ।

भागः कर्तव्य इत्यर्थः ॥ ३६ ॥ इति श्रीसप्तशतीमन्त्रहोमकारिकाणां भगीरथविरचिता जगच्चन्द्रचन्द्रिकाख्या चतुर्थाध्यायस्य टीका संपूर्णा ॥ ४ ॥

**( ६ दंशोद्धारः )** ॥ ३६ ॥ इति श्रीदंशोद्धारटीकायां चतुर्थोऽध्यायः ॥ ४ ॥

---

## पञ्चमोऽध्यायः ५

### ऋषिरुवाच ।

**पुरा शुम्भनिशुम्भाभ्यामसुराभ्यां शचीपतेः । त्रैलोक्यं यज्ञभागाश्च हृता मदबलाश्रयात् ॥ १ ॥**

**( १ गुप्तवती )** अथ तन्त्रे सार्धद्वाविंशत्या श्लोकैः पञ्चमाध्यायषट्कगतमन्त्रविभजनपरस्तृतीयः पटलः ॥ ३ ॥ ईश्वर उवाच । ऋषिवाक्यं पुरेत्याद्या विष्णुमायां प्रतुष्टुवुः । इत्यन्ताः श्लोकमन्त्राः षट् देवा ऊचुस्ततः परं । नमो देव्या इति त्रिंशश्लोक्यन्ते नम्रमूर्तिभिः । विष्णुमायादिकास्तेषु भ्रान्त्यन्ता एकविंशतिः । अवतारैः पृथङ्मन्त्रा त्रिषष्ट्याहुतयस्तु ताः । चितिरूपेण मन्त्रेणाप्याहुतित्रयमाचरेत् । एवं मन्त्रा अशीतिः स्युरथो ऋषिरुवाचह । नमो देव्यै महादेव्यै इत्यारभ्य त्रिंशश्लोकी वर्तते । तदन्तिमश्चरणः सर्वापदो भक्तिविनम्रमूर्तिभिरिति पठ्यते तेषां त्रिंशतो मध्ये विष्णुमायेति शब्दितेत्यारभ्य भ्रान्तिरूपेण संस्थितेत्येतद्वितीयचरणवन्तः श्लोका एकविंशतिः सन्ति । इतरचरणत्रयस्य सर्वेषु साधारण्यादसाधारणमध्यमप्रतीकग्रहणं । ते एकरूपा एव भासमाना अपि महाकाली महालक्ष्मी महासरस्वतीरूपचण्डिकावतारैस्त्रिभिः प्रतिपाद्यैरर्थैर्भेदात्पृथगेव मन्त्रा मन्तव्याः । प्रत्येकं त्रित्रिमन्त्ररूपा इति यावत् । ततश्चैतैस्त्रिभिः पुनरुच्चरितैस्तिस्रस्तिस्र आहुतयः कार्या इति संहत्य त्रिषष्टिः । एकविंशतिस्त्रिषष्टिरिति च कथनेन तन्त्रान्तरे लक्ष्म्या उपरि धृतिस्तुष्टेरुपरि पुष्टिश्चेति मन्त्रद्वयमधिकं । स्फूर्तिमेधाद्वयमपि पठ्यमानमेतत्तन्त्रानुसारिभिर्नोपसंहर्तव्यमिति ध्वनितं । चितिरूपेणेति मन्त्रस्यापि त्रिरावृत्तिरिति षट्षष्टिः त्रिंशत्यवशिष्टाः श्लोका अष्टौ पुराशुम्भेत्यादयः पूर्वोक्ताः षडित्येवं चतुर्दशाहुतय इत्यशीतिर्मन्त्रा जाता इत्यर्थः । ऋषिदेववचसोरङ्गमन्त्रमध्ये पार्थक्येन निर्देक्ष्यमाणत्वादिति भावः । मध्ये संख्यापिण्डकथनं तु श्लोकसंख्यातो मन्त्रसंख्याया अत्यन्तविप्रकर्षेण गणकबुद्धिभ्रमनिरासार्थं । ऋषिदेववचसोगणनमध्यायसमाप्तिभ्रमनिरासार्थं । अत्रैकैकश्लोकोद्भवमन्त्रस्यावतारत्रयरूपप्रतिपाद्यभेदेनैव भेदं वदता मन्त्राणां शब्दानुपूर्व्या मिथो वैलक्षण्याभावः सूचितः न्याय्यश्च । नमस्तस्या इत्यक्षरचतुष्टयस्यैकरूपत्वेपि तच्छब्दार्थानां महाकाल्यादिरूपाणां भेदात् सर्वत्र सहस्रनामसु नाम्नां पुनरुक्त्या सहस्रसंख्यान्यूनताप्रसक्तेः पुनरुक्तनाम्नामर्थभेदवर्णनेनैव भगवत्पादादिभिर्भाष्यकारैः परिह्रियमाणताया दर्शनात् । मन्त्राणामनुसंधानार्थत्वेन तद्भेदाद्भेदस्य युक्तत्वाच । पूर्वार्धस्य तु प्रतिमन्त्रं पूर्वभागेऽनुषङ्गः । चरमाक्षरचतुष्टयस्य तु प्रतिमन्त्रमन्तेऽनुषङ्गः । 'या ते अग्ने अयाशया रजाशया हराशया तनूर्वर्षिष्ठा गह्वरेष्ठा उग्रं वचो अपावधीस्त्वेषं वचो अपावधीः' इतिमन्त्रे अयाशयादित्रये प्रत्येकं पूर्वभागे याते अग्ने इत्यस्याग्रे तनुरित्यादेश्च योगेन मन्त्रत्रयस्वरूपस्यानुषङ्गो वाक्यसमाप्तिः सर्वेषु तुल्ययोगित्वादित्यधिकरणे निर्णयदर्शनात् । तेनैव न्यायेन नमकचरममन्त्रस्यैकत्वेन पठितस्यापि होमे विभज्य मन्त्रत्रयकल्पनापेक्षायां ये पृथिव्यामित्यादित्रये नमो रुद्रेभ्य इति पूर्वभागस्यैषवस्तेभ्य इत्यादेरुत्तरभागस्य च पूर्वोत्तरस्थाने प्रत्येकमनुषङ्गेण मन्त्रत्रयस्य सर्वसंमतत्वाच । तेन या देवी सर्वभूतेषु विष्णुमायेति शब्दिता । नमस्तस्यै नमोनम इति चतुर्विंशत्यक्षरोऽष्टाक्षरैस्त्रिभिः पादैरेको गायत्रीछन्दस्को मन्त्रः सिद्धः । अयमेव च त्रिः पठनीयः । देवता तु भिन्नानुसन्धेयेति सिद्धं । एवंसति यत्काण्वेनोक्तं । प्रथमो विंशत्यक्षरो द्वितीयश्चतुरक्षरस्तृतीयोऽष्टाक्षर इति तद्विभजनं केन न्यायेन केन वा वचनेन सिध्यतीति स एव प्रष्टव्यः । ननु नमस्तस्यै इत्येतत्त्रयमेव प्रत्येकं परिपूर्णवाक्यत्वान्मन्त्रत्रयं । तस्मिन्सीदामृत इत्यस्येव तच्छब्दप्रयुक्ताकाङ्क्षायाः पूर्णत्वविघटकत्वाभावादिति त्वयैवोक्तेः । तेनैव न्यायेन या देवीत्यस्य प्रत्येकं मन्त्रत्वप्राप्तौ त्रय एव प्रतिश्लोकं मन्त्रा इति (प्रति)वचनेनाधिक्यासंभवाय यत्र क्वचिदेकवाक्यतयान्यतराकाङ्क्षामात्रेण योगे सिद्धे स्वाव्यवहितेनैव परेण योगः कल्प्यते तावतैव निराकाङ्क्षत्वात् । एवं नमोनम इत्यस्यापि स्वाव्यवहितपूर्वेणेति मध्यस्थस्य न केनापि योगः । अयाशयेत्यादेर्ये पृथिव्यामित्यादेश्च निराकाङ्क्षत्वाभावादुभयाकाङ्क्षया कल्प्यमानो योगो विनिगमनाविरहात्त्रिष्वपि सिध्यतीति वैषम्यं । यत्त्वर्थभेदमात्रेण मन्त्रभेद इति तन्नामार्थकशब्दमात्रोच्छेदापत्त्या ललितासहस्रनामव्याख्याने बौधायनीयसहस्रभोजनखण्डव्याख्याने च त्वयैव निरस्तमिति न तत्साधकं । अतएव 'ऋताषाड़ृतधामाग्निर्गन्धर्वस्तस्यौषधयोऽप्सरस ऊर्जो नाम स इदं ब्रह्म क्षत्रं पातु ता इदं ब्रह्म क्षत्रं पान्तु तस्मै स्वाहा ताभ्यः स्वाहा' इत्येतावन्मात्रस्य परिपूर्णतया ता इदं ब्रह्मेत्यंशस्य योग्यस्याप्यनुषङ्गं परिहृत्यैव मन्त्रत्वं स्वीकृतं । संकर्षं इति चेन्मैवं । वाक्यशेषशेषिणोरानन्तर्यस्याप्रयोजकत्वात् । बहुशेषस्याप्येकत्रैव लाघवाय पठनीयत्वेन यत्र क्वापि पाठे तस्याप्यवर्जनीयत्वादेव । अतएवोक्तं जैमिनिना 'आनन्तर्यमचोदना' इति । अन्यथा 'चित्पतिस्त्वा पुनातु । वाक्पतिस्त्वा पुनातु । देवस्त्वा सविता पुनातु' इति वाक्यत्रयस्यापि प्रत्येकं परिपूर्णत्वेन 'अच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिः' इति शेषस्य स्वाकाङ्क्षामात्रेण

कल्प्यमानो योग एकैनैव कल्पनीयः स्यात् । इष्टश्च तस्य त्रिभिरपि योगो भाष्यकारादेः । कथमन्यथा शतरुद्रीये 'देवानांꣳहृदयेभ्यः' इत्यस्य 'नमो वः किरिकेभ्यः' इत्यव्यवहितपूर्वेणान्वयमात्रेण विश्रान्ताकाङ्क्षस्य 'नमो विक्षीणत्केभ्यः' इत्यादीनां नमस्तस्या इतिवत्पूर्णानामप्याकाङ्क्षोत्थापनेन तस्य पुनःपुनराकर्षणेन महति अमेयातनेन (?) बहुशेषतापादनं सर्वसंमतं युज्यतां । तस्मादन्यतराकाङ्क्षयाप्युत्थाप्यमाना परस्याकाङ्क्षा विनिगमनाविरहात्त्रयाणामपि शेषित्वयोग्यानामुत्थाप्यत इति त्रिभिरप्यावृत्त्या शेषस्याप्यन्वयो वाच्यः । ताभ्यः स्वाहेत्यस्यैव ता इदमित्यस्यापि पूर्णत्वेनान्यतराकाङ्क्षाया अप्यभावेन वाक्यान्तरेण संदर्भ-(पतितयैव)पठिततया च नानुषङ्गप्रसक्तिः । ऋष्यन्तरमतानुसारेण तस्य प्रसक्तौ वा तयैव रीत्या स्वाहेत्यस्यापि अनुषङ्गेणैव सिद्धेर्द्विः पाठवैय्यर्थ्यापत्तिः । तद्वशादेव च तावन्मात्रस्यैव भिन्नमन्त्रत्वज्ञापनान्न दोषः । अथापि यदि य इदं या इदमिति यच्छब्दयोगेन पठ्यते तदानुषङ्गो ब्रह्मणापि न वार्येत । तच्छब्दपाठात्तु द्वयोरपि नैराकाङ्क्ष्यान्नानुषङ्ग इति तु संकर्षस्थ-जैमिनीयाधिकरणाशयः । एतेन तत्र स्वाहाशब्दस्यैव प्रकृते नमःशब्दस्य प्रत्येकं पाठात्तावन्मात्रस्यैव मन्त्रत्वसंभव इत्यपास्तं । शेषस्य या देवीति यच्छब्दघटितत्वेन वचनबलेन स्वतन्त्रमन्त्रत्वायोगेन त्रिष्वप्याकाङ्क्षाया उत्थापनीयत्वात् । पूजायां तु नमोऽन्तिमा इति वचनेनान्त्यभागे एव योजनीयस्य लौकिकनमःशब्दस्यानुषक्तनमोनमःशब्दस्य वा पूजार्थकत्वेन 'स्वाहाकृतस्य समुत्तृप्णुतर्भुवः स्वाहेति' मन्त्रमध्यपठितस्वाहापदस्य हविस्त्यागार्थकताया इव तादृशनमःशब्दस्यापि तदभावेन तत्पुनः पाठमात्रेण तावन्मात्रस्य मन्त्रत्वासिद्धेश्च । अतोऽन्यायाभासमूलक एव त्वत्कल्पितो विभागः । तादृशस्याप्युपादेयतायामिहैवाव्यवस्थापत्तिः । यथा पूर्वार्धमेको मन्त्रः । उत्तरार्धे तु समं स्यादिति न्यायाद्वौ पादौ द्वौ मन्त्रौ । अथवा द्वाविंशत्यक्षरश्चतुरक्षरः षडक्षर इति त्रयः । अथवा विंशत्यक्षरः षडक्षरौ द्वाविति मध्यममन्त्रस्य 'नमो हिरण्यबाहवे' इत्य(स्ये)त्रेवोभयतो नमस्कारत्वसंभवात् । अथवा द्वितीयतृतीयनमःशब्दयोः पूर्वत्र परत्रापि वारद्वयमन्वयः । 'नमो भवाय च रुद्राय च नमः शर्वाय च' इत्यादौ द्वितीयादिनमःशब्दानां काकाक्षिवदुभयत्रावृत्तिस्वीकारेण तेषामुभयतो नमस्कारात्मकत्वपक्षस्यापि स्वीकारात् । तेन द्वाविंशत्यक्षरषडक्षराष्टाक्षरा इति त्रयो मन्त्रा भवन्ति । नमोनम इत्येव वा नम इत्येव वा भिन्नो मन्त्रः । मध्यमः षडक्षरोऽष्टाक्षरो वा दशाक्षरो वा चतुरक्षरो वा इतरांश एकः । वसिष्ठस्मृतौ शूद्रधर्मप्रकरणेऽस्याभ्यनुज्ञातो नमस्कारो मन्त्र इति वाक्यस्य नम इति शब्दमात्रं द्व्यक्षरो मन्त्र इति व्याख्यानदर्शनात् । अतएव नमःशब्दौ द्वावपि वा भिन्नौ मन्त्रावन्यः सर्व एक इत्यादिबहुव्याकुली स्यात् । यद्यप्यर्थभेदेन मन्त्रभेदो निरस्त इति तदपि न । ललितासहस्रनामस्वपुनरुक्तताया एव संभवप्रदर्शनाय तन्निरासात् । सहस्रभोजनेऽप्येकस्यैव ब्राह्मणस्य दिनभेदेन द्विर्भोजननिरासार्थे तथोक्तेः । अलाभे तु तस्याप्यङ्गीकारात् । कथमन्यथा विष्णुसहस्रनामादौ गतिः । नामशब्दस्य प्रातिपदिकपरत्वेनाथवच्छब्दरूपस्य विशिष्टस्य तस्यार्थैक्योऽपि शब्दभेदमात्रेणैव शब्दैक्येप्यर्थभेदमात्रेण भेदस्य विशेष्याभावादिप्रयुक्तविशिष्टाभावरूपस्यापाततोदुर्निवारतायास्तत्रैवास्माभिः समर्थितत्वाच्च । अवतारैः पृथङ्मन्त्रा इति वचनेनैवार्थभेदस्यैव प्रकृते मन्त्रभेदकत्वेन स्पष्टमेव मन्त्राणां साजात्यध्वननाच्च । एकस्यैव त्रिराम्नानेनाभ्यासादपि मन्त्रभेदसिद्धेश्च । कथमन्यथा ऋचां दशसहस्राणी-त्यादिना ऋग्वेदमन्त्राणां समुदितसंख्यापिण्डः कथ्यमानो युज्यतां । कतिपयानामृचामश्वावती गोमतीरित्यादीनां पुनराम्नानात् सावर्णिर्भविता मनुरिति चरमचरणस्य सकृदाम्नातस्यापि त्वन्मतरीत्या द्विरुच्चारणविधानमात्रेण मन्त्रेण मन्त्रान्तरत्वस्वीकारे एकजातीयस्यैव त्रिराम्नाने मन्त्रत्रयत्वस्य कैमुतिकन्यायेनैव सिद्धौ शब्दभेदानावश्यकत्वाच्च । वस्तुतस्तत्र त्रयोदशाध्यायान्तिमश्लोक(द्वय)स्यैव पुनरुच्चारणं विधीयते न चरमचरणमात्रस्येति वक्ष्यते । तेन 'भद्रं नो अपि वातय मनः' इति दशाक्षरस्य ऋगन्तरावयवत्वपार्थक्याभ्यां मन्त्रभेदस्यैव सावर्णिरिति चरणे पूर्वश्लोकशेषत्वस्वातन्त्र्याभ्यां द्वैविध्यस्य स्वीकारेण दृष्टान्तासिद्धावपि न क्षतिः । चरमश्लोकद्वयस्यैव दृष्टान्तत्वसंभवात् । तस्माद्गायत्रीछन्दस्क एक एव मन्त्रोऽवतारभेदानुसंधानेन त्रिस्त्रिः पठनीय इति कृतमतयो मात्सर्यमुत्सार्य विदांकुर्वन्तु । आदावेवं स्तवादि स्यादन्ते कस्मान्न गृह्यते । इति सप्तदशश्लोकमन्त्रा अथ ऋषेर्वचः । निशम्येत्यादयः श्लोका गिरेत्यन्तास्ततस्त्रयः । अथ दूत उवाचेति देवि दैत्येश्वरादयः । व्रजान्ता नव मन्त्राः स्युरथो ऋषिरुवाचह । इत्युक्त्वा सा तदेत्येकः श्लोकमन्त्रः सरस्वती । देव्युवाचाथ चत्वारः श्लोकाः सत्यादयो लघु । दूतोक्तिरवलिप्तासि मैवमित्यादयस्ततः । श्लोका गमिष्यसीत्यन्ताश्चत्वारो देव्युवाच हि । एवमेतद्वली दैत्यः स च युक्तं करोतु यत् । इत्यन्तौ द्वौ मनू श्लोकावङ्कमन्त्राश्च ते नव । इत्यूनत्रिंशदधिकाः शतं मन्त्राः प्रकीर्तिताः । अत्र लघ्विति पदस्य लघ्वन्ता इत्यर्थः । सरस्वतीशब्दो देवीविशेषणं । तृतीयचरित्रे तस्या एव देवतात्वद्योतनार्थं । संख्यापिण्डकथनं त्वध्यायसमाप्तिद्योतकं । ऋष्युक्तिरित्याकर्ण्येति श्लोकाश्चत्वार ईरिताः । पुनर्ऋषिरुवाचेति तेनाज्ञप्ता इति त्रयः । श्लोकात्मकास्ततो मन्त्रा देव्युवाच ततः परं । दैत्येश्वरेण प्रहित इत्येकः श्लोकमन्त्रकः । अथार्षवाक्यमित्युक्तः सोऽभ्यधावदिति ह्यमी । श्लोका द्वादश मन्त्राः स्युः षष्ठेऽध्याये तु संहताः । चतुर्विंशतिसंख्याका देवताहुतयः क्रमात् । ऋष्युक्तिराज्ञप्तेत्याद्यास्त्रयोविंशति मातरः । ऋषिवाक्यं ततस्तावानीतौ द्वौ मातराविति । सप्तविंशतिसंख्याका भवन्त्याहुतयः प्रिये । अत्राध्यायद्वये देवी धूम्राक्षीति प्रकीर्तिता । देवतामन्त्रयोर्भेदान्मातृपदेन मन्त्रा एवोच्यन्ते । ऋषिश्चण्डे च निहते इत्यध्यायावसानकाः । त्रिषष्ट्याहुतयः प्रोक्ता

एकान्नार्धाहुतिर्मता। रक्ताक्षी देवताष्टौ च महाशक्तयः प्रकीर्तिताः । ऋष्याद्या अध्यायसमाप्तिपर्यन्तास्त्रिषष्टिमन्त्रास्तेष्वेकोऽर्ध-श्लोकमन्त्र एक ऋषिरुवाचेति मन्त्र एकषष्टिश्लोकमन्त्राः । अस्याध्यायस्य नव देवताः। तेष्वेका रक्ताक्षी या चण्डिकाया ललाटफलकान्निष्पन्ना । अन्या ब्रह्मेशगुहविष्णुवराहनृसिंहशक्रचण्डिकानां शक्तयोऽष्टावित्यर्थः । 'क्तिचूक्तौ च संज्ञायां' इति शक्तेः क्तिचि 'कृदिकारात्' इति ङीषि शक्त्य इति रूपं । स चार्धश्लोको 'मुखेन काली जगृहे रक्तबीजस्य शोणितं'इति । ततोऽसावाजघानाथेत्याद्युत्तरश्लोकषट्कसामंजस्यस्य तदभावेऽनुपपत्तेः । एतेन मन्त्रार्थगन्धानभिज्ञेनोक्तस्तेषां मातृगण इत्य-र्धमन्त्रत्वेन नोपादेयः । राजा विचित्रमित्यादिश्लोकद्वयमथो ऋषिः । चकार कोपमतुलमित्याद्याः श्लोकरूपकाः। सप्त-त्रिंशच्च विज्ञेया देवतामन्त्ररूपकाः । इत्येकचत्वारिंशत्स्युर्नवमाहुतयः शिवे । देवता भैरवी तारा शृणु गोप्यं वरानने । ऋषि-र्निशुम्भं निहतमिति श्लोकावुभौ मनू। ततो देवी वचः प्रोक्तमेकैवाहमिति द्वयं । देव्युवाच ततश्चाहं विभूत्येत्येकलो मनुः । ऋषिस्ततः प्रववृते सार्धा द्वाविंशतिर्मताः। द्वात्रिंशन्मनवः सर्वे तेष्वेकोऽर्धमनुर्मतः । दशमे सिंहमारूढा शूलपाशविधारिणी । मुख्या चतुर्भुजा बाणचापहस्ता शुभेक्षणा। एकल एकः । तत्रापि सा निराधारा युयुधे तेन चण्डिका। इत्यर्धश्लोको मन्त्रो ननु सर्वान्तिम इति भ्रमितव्यं । नियुद्धं खे तदेत्यादीनामसामञ्जस्यापत्तेः । इति श्रीगुप्तवत्यां कात्यायनीतन्त्रस्थद्वाविंशपटलस्य व्याख्या ॥ ॥ अर्थतत्संग्रहश्लोकाः सार्धत्रयोविंशतिः । अथर्षिवाक्पुरा शुम्भेत्यादयः श्लोककास्तु षट् । देवा ऊचुर्नमो देव्या इत्यादि श्लोकपञ्चकं । ततः श्लोकैकविंशत्या प्रतिश्लोकं त्रिशस्त्रिशः । तद्विभागानुषङ्गाभ्यां त्रिषष्ट्याहुतयो यथा। महाकाल्याद्यर्थभेदान्नमस्तस्या इति त्रयः। मन्त्रात्पूर्वोत्तरौ शेषौ या देव्यर्ध नमोनमः। तेषामाद्यन्तयोर्योज्यौ प्रतिमन्त्र-क्रमेण तु । तेन पर्यवसन्नः स्यादेकैको मन्त्र ईदृशः । या देवीत्यर्धमुच्चार्य नमस्तस्यै नमो नमः । इत्युच्चरेत्रिपाद्वायम्येषा त्वदवसानिकाः। एते पूर्वार्धतुर्याङ्घ्रियोगोऽस्या एकविंशतिः । भवन्ति विष्णुमायादिभ्रान्त्यन्तपदगर्भिताः । प्रथमा विष्णुमा-योक्ता द्वितीया चेतना ततः। बुद्धिर्निद्रा क्षुधा छाया शक्तिस्तृष्णा तथाष्टमी। क्षान्तिर्जातिरथो लज्जा शान्तिः श्रद्धा त्रयोदशी। कान्तिर्लक्ष्मीस्ततो वृत्तिः स्मृतिरूपेण संस्थिता । दया तुष्टिस्त(थामाता)तो माया भ्रान्तिरित्येकविंतिः । स्वस्थानवृत्त्या त्रिःप्रोक्ताः त्रिषष्टिर्मनवः स्मृताः । इन्द्रियाणामिति श्लोक एको मन्त्रस्तदुत्तरः । चितिरूपेण येत्येष प्राग्वन्मन्त्रत्रयात्मकः। स्तुता सुरैरिति श्लोकावृषिरेवंस्तवादिकाः। श्लोकाः सप्तदशाथार्षिर्निशम्येति मनुत्रयं। दूतोक्तिर्देवि दैत्येति नवश्लोका ऋषेर्वचः। इत्युक्त्वा सा तदेत्येकः श्लोको देवीवचस्ततः। सत्यमुक्तमिति श्लोकचतुष्कमथ दूतवाक् । अवलिप्तेति चत्वारः श्लोका दे-व्यास्ततो वचः । एवमेतदिति द्वावित्येकोनत्रिंशदुत्तरं । शतं मन्त्राः पञ्चमे षट्सप्ततिश्लोकमण्डिते । अथर्षिरित्याकर्ण्येति चतुःश्लोकी ऋषेर्वचः । तेनाज्ञप्त इति श्लोकत्रयं देवीवचस्ततः। दैत्येश्वरेणेत्येकोऽथ ऋषिरित्युक्त इत्यमी । द्वादशेति मताः षष्ठे चतुर्विंशतिमन्त्रकाः । अथर्षिवाक्यमाज्ञप्ता इत्याद्याऽयाव्यविंशतिः । ऋषिस्तावित्युभावित्थं सप्तमे सप्तविंशतिः। अथर्षि-वाणी चण्डे चेत्यारभ्याभिजघान तं । इत्यन्ताः पञ्चपञ्चाशच्छ्लोका मन्त्रास्ततः परं । मुखेन काली जगृह इत्यर्धश्लोकम-न्त्रकः । ततोऽसाविति षट् श्लोकास्त्रिषष्टिश्चेत्थमष्टमे । राजा विचित्रमित्यादि श्लोकद्वयमथो ऋषिः । चकार कोपमित्याद्याः सप्तत्रिंशदुदीरिताः । इत्येकचत्वारिंशत्स्युर्नवमाध्यायमन्त्रकाः । ऋषिर्निशुम्भं निहतमिति द्वावम्बिकावचः । एकैवेति द्वयं देवी तत एकोऽहमित्यृषिः । ततः प्रववृते युद्धमिति श्लोकास्त्रयोदश । तत्रापि सा निराधारेत्यर्धश्लोकात्मको मनुः । नि-युद्धं खे तदा दैत्य इत्याद्या मनवो नव ।इत्येवं दशमेऽध्याये द्वाविंशन्मनवो मताः ॥ ॥ अथ मन्त्रव्याख्या । उत्तमचरित्रस्य रुद्र ऋषिः । महासरस्वती देवता । अनुष्टुप्छन्दः । भीमा शक्तिः । भ्रामरी बीजं । सूर्यस्तत्त्वं । महासरस्वतीप्रीत्यर्थे जपे विनियोगः ॥ पुरेति । कश्यपाददित्यामुत्पन्नौ नमुचेर्ज्येष्ठौ शिवदत्तवरौ शुम्भनिशुम्भाविति पुराणान्तरे स्थितं क्वचिद्देशे त्विहाध्याय आदित एव श्लोकत्रयमधिकं पठ्यते । पुरा शुम्भनिशुम्भाख्यावसुरौ घोरदर्शनौ । अप्राप्तयौवनावेव चेरतु-स्तप उत्तमं । वर्षाणामयुतं दिव्यं राजन्विस्मापनप्रदं । निराहारौ यतात्मानौ पुष्करे लोकपावने । ततः प्रसन्नो भगवान्ब्रह्मा लोकपितामहः । मनोभिलषितान्कामांस्तयोः प्रादादनुत्तमान् । ततः शुम्भनिशुम्भाभ्यामसुराभ्यां शचीपतेः । इत्यादि । अन्यत्र शिववरोप्यनयोरुक्तः । ये तु शुम्भशब्दं तालव्यादिं बहवः पठन्ति तच्चिन्त्यं । दक्षिणामूर्तिसंहिताविरोधात् । तत्र हि ज्वालामालिनी नित्याप्रकरणे जातवेदसे सुनवाम सोममित्यृगक्षरादिदेवतानामकथनावसरे जाग्रतीतपिनी वेदगर्भाद-हनरूपिणी सेन्दुखण्डासुम्भहन्त्री नभश्चारिण्यनन्तरमिति पाठात् । अतएव दन्त्यादित्वेनैव द्रविडदेशे पाठः संगच्छते। मदबलाश्रयादिति समाहारः । अनुचिताहरणे मदो हेतुः । सच विद्यामदो धनमद इत्यादिरीत्या बहुविधः । बलं सैन्यं शारीरं तपश्च तदुभयसाधारणो हेतुः। आश्रयः शिवदत्तवररूपः दुर्गस्थानादिवररूपश्च ॥ १ ॥

( **२ चतुर्धरी** ) इदानीं देव्या माहात्म्यान्तरमाचिख्यासुरनन्तराध्यायसूचितमितिहासान्तरमवतारयत् । पुरेति । शुम्भनिशुम्भाभ्यां कश्यपसूनुभ्यां असुराभ्यां दनुजाभ्यां। तथाच वामनपुराणे 'कश्यपस्य दनुर्नाम भार्या सा द्विजसत्तम। तस्याः पुत्रद्वयं जज्ञे सहस्राक्षाद्बलाधिकं । ज्येष्ठः शुम्भ इति ख्यातो निशुम्भश्चापरोऽसुरः । तृतीयो नमुचिर्नाम महाबलपराक्रमः' ॥ १ ॥

**( ३ शान्तनवी )** हेराजन् पुरा पूर्वस्मि(न्कल्पे)न्काले शुम्भनिशुम्भाभ्यां असुराभ्यां द्वाभ्यां कर्तृभ्यां मदबलाश्रयात् मदेन गर्वेण सहितं बलं मदबलं तस्य आश्रयः संश्रयणं तस्माद्धेतोर्मदबलान्वितत्वात् । शचीपतेः इन्द्रस्य इन्द्राद्वा सकाशात् त्रैलोक्यं आहृतं गृहीतं । किंच यज्ञभागाश्च हृताः । यज्ञविधिविहितिद्वारा यज्ञभागा अपि इन्द्रस्य विहृताः । त्रयो लोकास्त्रैलोक्यं यज्ञानां भागाः अंशाः । 'हर्षे गर्वे मदे क्षैब्ये गजदाने च कीर्तितः' । 'स्थौल्यसामर्थ्यसैन्येषु बलं ना काकसीरणोः' । शुम्भ भाषणे हिंसायां च । भ्वादिः परस्मैपदी दन्त्यादिः । शुम्भति भाषते हिनस्ति च शुम्भः । दन्त्यादिरपि शुम्भः । तालव्यादिपाठे तु शुम्भ शोभार्थे । रुधादिः । शुम्भति शोभते रणेष्विति शुम्भः तथा निशुम्भः ॥ १ ॥

**( ४ नागोजीभट्टी )** यथावत्कथयामीति प्रतिज्ञातमितिहासमाह । ऋषिरुवाच । पुरेति । कश्यपात् दन्वामुत्पन्नौ नमुचिज्येष्ठौ शुम्भनिशुम्भाविमौ सतालव्यौ चेति वामनपुराणे । लक्ष्मीतन्त्रेपि 'तामसेत्वन्तरे शक्र महाविद्यां विधाय सा । गौरीदेहात्समुद्भूता कौशिकीति तदा ह्यहम् । वधाय दुष्टदैत्यानां तथा शुम्भनिशुम्भयोः । मदीयाः शक्तयो यास्ता देवश्रेष्ठशरीरगाः । तास्तास्तद्रूपधारिण्यः साहाय्यं विदधुर्मम । ताभिर्निहतदैत्येन्द्राद्धन्तव्यो मे यथातथा । संहृत्यात्मनि ताः सर्वा मदीया विप्रुषोऽखिलाः । अहं निजघ्नुषी पश्चाद्दैत्यौ शुम्भनिशुम्भकाविति । नारायणीस्तुतिर्नाम सूक्तं परमशोभनम् । पुरंदर तदा दृष्टं देवैरग्निपुरोगमैः । एषा संपूजिता भक्त्या सर्वज्ञत्वं प्रयच्छति । कौशिकी सर्वदेवेश सर्वकामप्रदा ह्यहम् । उत्पत्तिर्युद्धविक्रान्तिः स्तुतिश्चेति पुरातनैः । पठ्यते त्रितयं विप्रैर्वेदवेदाङ्गपारगैः । एतासां परमा प्रोक्ता कूटस्था सा महीयसी । महालक्ष्मीर्महाभागा प्रकृतिः परमेश्वरी । अमुष्याः स्तुतये दृष्टं ब्रह्माद्यैः सकलैः सुरैः । नमोदेव्यादिकं देवीसूक्तं सर्वफलप्रदम् । इमां देवीं स्तुवन्नित्यं स्तोत्रेणानेन मामिह । क्लेशानतीत्य सकलानैश्वर्यं महदश्नुते' इति । यज्जप्त्वा वैश्यसुरथौ परां सिद्धिमवापतुरिति अग्निमुखदेवगणदृष्टस्तोत्रं नारायणीसूक्तम् । तत्र नारायणि नमोस्तु त इति बहुधाभ्यासात् नमोदेव्यै इत्यादिकं देवीसूक्तं देवीपदेनोपक्रमादिति बोध्यम् । मदो गर्वः । बलं शक्तिः ॥ १ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** अथ पञ्चमाध्यायस्य सप्तशतीमन्त्रहोमविभाग उच्यते । षट्सप्ततिश्लोकयुक्तेऽध्याये मन्त्रास्तु पञ्चमे । एकोनत्रिंशदधिकं शतं कात्यायनीमतं इति । तु पुनः षडधिका सप्ततिः षडधिका सार्धविंशतित्रयं तावन्तो ये श्लोकास्तैर्युक्ते ईदृशे पञ्चमे पञ्चमाध्याये एकेन ऊना त्रिंशन्नवाधिका विंशतिरित्यर्थः । अधिकं शतं विंशतिपञ्चकं कात्यायनीमते कात्यायनीतन्त्रस्य मते मन्त्राः स्युः । एक ऋषिरुवाचेति । ऋषिरुवाचेति एको मन्त्रः १ । पुरा शुम्भादयश्च षट् । श्लोकमन्त्रा इति । पुरा शुम्भ इति श्लोक आदिर्येषां ते पुराशुम्भादयः पुरा शुम्भनिशुम्भाभ्यामित्यादयः । च पुनः षट्श्लोकमन्त्राः श्लोकरूपाः षट् मन्त्रा वर्तन्ते । तथाहि पुरा शुम्भ इति २ ॥ १ ॥

**( ६ दंशोद्धारः )** पूर्वाध्यायान्ते सूचितमितिहासं प्रस्तुवन्नृषिरुवाच । शुम्भनिशुम्भौ कश्यपसुतौ । यथोक्तं वामने । 'कश्यपस्य दनुर्नाम भार्यासीद्विजसत्तमाः । तस्याः पुत्रत्रयं जज्ञे सहस्राक्षाद्बलाधिकं । ज्येष्ठः शुम्भ इति ख्यातो निशुम्भश्चाऽपरोऽसुरः । तृतीयो नमुचिर्नाम महाबलपराक्रमः' इति । मदो गर्वः । बलं शक्तिः ॥ १ ॥

## तावेव सूर्यतां तद्वदधिकारं तथैन्दवम् । कौबेरमथ याम्यं च चक्राते वरुणस्य च ॥ २ ॥

**( १ गुप्तवती )** सूर्यतां रूपधर्मकालादिपरिच्छेदरूपमधिकारं । त्रैलोक्यपदेन स्वर्गस्यापि क्रोडीकारादितरदिक्पालत्रयमेवाह । कौबेरमिति ॥ २ ॥

**( २ चतुर्धरी )** सूर्यतां सूर्यभावं सूर्यस्याधिकारमित्यर्थः । ऐन्दवं इन्दुसंबन्धिनमधिकारं इतरविलक्षणं क्रियाकलापं तथा कौबेरमथ याम्यं च वा वरुणस्याधिकारमित्यनुषज्यते ॥ २ ॥

**( ३ शान्तनवी )** तावेव शुम्भनिशुम्भावेव कामरूपत्वात् सूर्यरूपतां सूर्यभावं चक्राते विदधाते । सूर्याधिकारहरणात् सूर्यभावमिव । ऐन्दवं इन्दुसंबधिनं अधिकारं आधिपत्यं तावेवासुरौ चक्राते । तथा तावेव कौबेरसंबन्धिनमधिकारं कुबेरपदं चक्राते । अथच तावेव याम्यं यमदैवताकं अधिकारं चक्राते । तथा तावेव वरुणस्य अधिकारं चक्राते । याम्यमिति । 'दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः' इत्यत्र प्राग्दीव्यतीयेष्वर्थेषु यमाच्चेति वक्तव्यमिति ण्यः । सूर्येन्दुकुबेरयमवरुणाधिकारान् तावेवासुरौ द्वावपि अग्रहीष्टामित्यर्थः ॥ २ ॥

**( ४ नागोजीभट्टी )** तावेवेति । सुवति कर्मणि लोकं प्रेरयतीति सूर्यस्तस्य भावः सर्वलोककर्मप्रेरकता । तद्वदैन्दवमधिकारं तथा कैबेरं वरुणस्य चाधिकारमित्यन्वयः ॥ २ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** तावेव सूर्यतामिति ३ ॥ २ ॥

**( ६ दंशोद्धारः )** तावेवेति । सूर्यतां सूर्याधिकारम् ॥ २ ॥

**तावेव पवनर्द्धिं च चक्रतुर्वह्निकर्म च । ततो देवा विनिर्धूता भ्रष्टराज्याः पराजिताः ॥ ३ ॥**

**( १ गुप्तवती )** दैत्यदानवरक्षसामेकयूथ्यत्वेन निर्ऋतेर्वरदायकत्वेनोपजीव्यत्वादीशानस्य च परित्यागेन विदिक्पालद्वयमेवाह । तावेवेति । चकारद्वयेन वा द्वयोर्ग्रहणम् ॥ ३ ॥

**( २ चतुर्धरी )** पवनर्द्धिं वायोरधिकारमित्यन्वयः । ततोऽनन्तरं देवास्तां देवीं स्मरन्तीत्यन्वयः । चिरातीतेऽप्यर्थे वर्तमानतयाऽज्ञेषु ज्ञाप्यते अद्याहं सोनिहन्यते अथाह वर्णानां विदितो महेश्वर इति । विनिर्धूता न्यकृताः ॥ ३ ॥

**( ३ शान्तनवी )** ताविवासुरौ पवनस्य वायोः ऋद्धिं अधिकृतिं (अस्खलितगतिं)ऐश्वर्यं च चक्रतुः । तथा तावेवासुरौ वह्नेः कर्म च अग्निव्यापारं चक्रतुः । तावेवान्येषां दिवौकसां देवानामधिकारानग्रहीष्टां । इदमर्थं क्वाप्येव दृश्यते । ततस्ताभ्यामसुराभ्यां सकाशतः पराजिताः प्राप्तपराभवाः अतएव भ्रष्टराज्याः भ्रष्टाधिकाराः देवाः विनिर्धूताः स्वर्गात् दूरीकृता आसन् । ताभ्यामसुराभ्यां विनिर्धूताः समुज्झितास्त्यक्ता इति भावः ॥ ३ ॥

**( ४ नागोजीभट्टी )** ताविति । पवनः ऋध्यतेऽनेनेति करणे क्तिन् । तेन तदधिकारमित्यर्थः ॥ ३ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** तावेव पवनर्द्धिमिति ४ ॥ ३ ॥

**( ६ दंशोद्धारः )** ॥ ३ ॥

**हृताधिकारास्त्रिदशास्ताभ्यां सर्वे निराकृताः । महासुराभ्यां तां देवीं संस्मरन्त्यपराजिताम् ॥ ४ ॥**

**( १ गुप्तवती )** चतुर्थश्लोकोत्तरार्धस्थाने श्लोकचतुष्टयमधिकं परे पठन्ति । तेषु तेष्वथ धिष्ण्येषु लोकेषु च महीपते । स्वभृत्या प्रथिता दैत्या अधिकारे नियोजिताः । ततो देवाः सहेन्द्रेण विभ्राणा मानुषीं तनुं । विचेरुरवनौ राजन्मनुजैः संगताः कृशाः । एवं निवसतां तत्र देवानाममितौजसां । गतमासीन्महाराज चत्वारिंशच्चतुर्युगं । ततो देवाः सहेन्द्रेण ब्रह्मणा च समेत्य वै । दुर्गां भगवतीं भक्त्या संस्मरन्तोपराजितामिति ॥ ४ ॥

**( २ चतुर्धरी )** त्रिदशाः तिस्रो जन्मयौवननाशलक्षणाः दशा अवस्था येषां देवानां । निराकृता निरासिताः ॥ ४ ॥

**( ३ शान्तनवी )** ताभ्यां शुम्भनिशुम्भाभ्यां हृताधिकाराः अपहृतराज्याः निराकृताः निरस्ताः सर्वे त्रिदशाः देवाः तां प्रसिद्धां अपराजितां कैरप्यपराजितां अपराभूतां अपरैरजितां अपरैरनभिभूतां देवीं स्मरन्ति स्म स्मृतवन्तः । स्मातीतेव्ययं । स्मरन्तीति पाठे स्मेत्यध्याहृत्य 'लट् स्मे' इति भूते लट् प्रयोगो ज्ञेयः । 'प्रत्यादिष्टो निरस्तः स्यात्प्रत्याख्यातो निराकृतः' अपराजितानाम देवी ॥ ४ ॥

**( ४ नागोजीभट्टी)** हृतेति । आत्मसात्कृता इत्यर्थः । अधिकास्त्रिरावृत्ता दश त्रिदशाः अधिकावृत्तरूपान्तभावेनैकार्थाभावः । तेन त्रयस्त्रिंशदित्यर्थः । ते चार्का द्वादश रुद्रा एकादश वसवोऽष्टौ विश्वेदेवौ द्वाविति । एकएव त्रिशब्दस्त्रेणोभयार्थः । निराकृताः स्वर्गादपि निराकृताः निःसारिताः संस्मरन्ति स्मृतवन्तः । वर्तमानसामीप्ये भूते लट् ॥ ४ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** हृताधिकारा इति ५ ॥ ४ ॥

**( ६ दंशोद्धारः )** हृताधिकारा इति । संस्मरन्तीति भूतेपि वर्तमानव्यपदेश उपचारात् । 'अद्य कंसो निहन्यते' इतिवत् ॥ ४ ॥

**तयास्माकं वरो दत्तो यथापत्सु स्मृताखिलाः । भवतां नाशयिष्यामि तत्क्षणात्परमापदः ॥ ५ ॥**

**( १ गुप्तवती )** तयास्माकमिति । यथाशब्द इतिशब्दपर्यायः प्रकारार्थकत्वात् ॥ ५ ॥

**( २ चतुर्धरी )** उत्तमचरितस्य कथं स्मरन्तीत्याह । तथेति । वरस्य कारणमाह । यथेति आपत्सु स्मृता तत्क्षणात् भवतां अखिला आपदः नाशयिष्यामीत्यन्वयः ॥ ५ ॥

**( ३ शान्तनवी )** ताभ्यां निराकृताः देवाः कां बुद्धिमुपेत्य कं देशं गता इत्यत आह । यथा प्रागुक्तप्रकारेण आपत्सु परमापत्तिषु स्मृता सती तत्क्षणादेव भवतां देवानां अखिलाः परमापदः नाशयिष्यामीति तया देव्यास्माकं वरो दत्तोऽस्ति इति मतिं मनसि कृत्वा चेतसि निधाय देवाः हिमवन्तं नगेश्वरं नगाधिराजं जग्मुः ययुः । ततस्तत्र विष्णुमायां महामायां प्रतुष्टुवुः प्रकर्षेण भक्तिश्रद्धापूर्वकं स्तुतवन्तः । विष्णुमाया महामाया इति पर्यायौ । अथवा वेवेष्टि विष्णुः मानं मायः विष्णुर्मायो मानं परिमाणं यस्याः सा तथोक्ता । सर्वव्यापकेत्यर्थः । प्रतुष्टुवुरिति । प्रः आरम्भे । स्तोतुमारब्धवन्त इत्यर्थः ॥५॥

**( ४ नागोजीभट्टी )** तत्रैव हेतुमाह । तयेति । स्मृता सती अखिलाः परमापद इत्यन्वयः ॥ ५ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** तयास्माकमिति ६ ॥ ५ ॥

**( ६ दंशोद्धारः )** स्मरणमाह । तयेत्यादि ॥ ५ ॥

इति कृत्वा मतिं देवा हिमवन्तं नगेश्वरम् । जग्मुस्तत्र ततो देवीं विष्णुमायां प्रतुष्टुवुः ॥ ६ ॥

(१ गुप्तवती) ॥ ६ ॥

(२ चतुर्धरी) तत्र हिमवन्तं प्रति । प्रतुष्टुवुरिति । प्रशब्दो भक्तिश्रद्धातिशयलक्षणं प्रकर्षमाचष्टे ॥ ६ ॥

(३ शान्तनवी) अस्य व्याख्या पूर्वश्लोकेन सह कृतास्ति ॥ ६ ॥

(४ नागोजीभट्टी) इतीति । भवान्या अभिव्यक्तिस्थानत्वाद्धिमवद्गमनं । तत्र हिमवति शुम्भनिशुम्भदमन्याः सरस्वतीत्वेऽपि यथा विष्णुमायात्वं तथोक्तमुपक्रमे ॥ ६ ॥

(५ जगच्चन्द्रचन्द्रिका) इति कृत्वेति ७ ॥ ६ ॥

(६ दंशोद्धारः) इतीति । प्रतुष्टुवुरिति प्रशब्दः श्रद्धातिशयं सूचयति ॥ ६ ॥

## देवा ऊचुः ।

नमो देव्यै महादेव्यै शिवायै सततं नमः । नमः प्रकृत्यै भद्रायै नियताः प्रणताः स्म ताम् ॥७॥

(१ गुप्तवती) नमो देव्या इत्यथर्वशीर्षस्थो मन्त्रः । स्मेत्यव्ययं । प्रार्थनायां वा लोट् ॥ ७ ॥

(२ चतुर्धरी) देव्यै द्योतनशीलायै । महतो ब्रह्मादीनपि देवयति सर्गादिभिर्व्यवहारयतीति महादेवी तस्यै । शिवं कल्याणं तद्धेतुत्वाच्छिवा तस्यै । प्रकृत्यै मूलप्रकृतिरूपायै । सर्वशक्त्यै इत्यर्थः । भद्रमखिलप्राणिगणरक्षणं करोतीति भद्रा स्थितिशक्तिस्तस्यै । नियताः चित्तप्रणिधानभाजः स्म । स्म पादपूरणे ॥ ७ ॥

(३ शान्तनवी) नमो देव्या इति । दीव्यति विजिगीष्यते देवी । तस्यै देव्यै नमोस्तु । महान् देवो महादेवः तस्य स्त्री महादेवी तस्यै महादेव्यै सततं नमः । शिवायै मङ्गलहेतवे भवान्यै सततं नमः । पुंयोगे तु शिवस्य स्त्री शिवा । प्रकृतिर्जगत्कारणं सत्वरजस्तमसां साम्यावस्था । यद्वा अङ्गमन्त्रापेक्षया मूलमन्त्रात्मिका देवता प्रकृतिः । यद्वा प्रत्ययात्पूर्वा प्रकृतिः । यदाहुः । 'प्रकृतिः पार्वती साक्षात्प्रत्ययस्तु महेश्वरः । अर्धनारीश्वरः शब्दः कामधुग्वः प्रसीदतु' इति तस्यै भद्रायै नमः । भद्रा सर्वमङ्गला भद्ररूपेत्यर्थः । तां प्रसिद्धां अस्मद्वरदां अम्बिकां अम्बां नियताः जितेन्द्रियाः प्रणताः नम्रीभवामः । स्मशब्दः पादपूरणेऽव्ययं वा । नियत्यै प्रणतात्मनामिति पाठे भक्तिप्रह्वस्वभावानां पुंसां नियत्यै दिष्ट्यै नमः । भाग्यरूपायै नम इत्यर्थः । 'दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्विधिः' ॥ ७ ॥

(४ नागोजीभट्टी) द्योतितसार्वात्म्येन स्तुतिमाह । देवा ऊचुः । नम इति । देवी द्युत्यात्मिका । महादेवी महतां ब्रह्मादीनामपि स्वर्गादिव्यवहारप्रवर्तयित्री । शिवा कल्याणरूपा तद्धेतुत्वात् । प्रकृत्यै सृष्टिशक्त्यै । भद्रा रक्षणशक्तिः । नियताः समाहितचित्ताः प्रणताः स्म । स्मेति पादपूरणे ॥ ७ ॥

(५ जगच्चन्द्रचन्द्रिका) ततो देवा ऊचुश्चैवाष्टमो मनुरिति । ततः सप्तमन्त्रानन्तरं च पुनः देवा ऊचुः स्वाहेत्येवाष्टमो मनुर्मन्त्रः प्रोक्तः ८ । नमोदेव्यादिकाः श्लोकाः पञ्च मन्त्राः प्रकीर्तिताः । नमोदेवी आदिर्येषां ते नमोदेव्यादिकाः श्लोकाश्लोकरूपाः पञ्च मन्त्रास्तत्संख्याका मन्त्राः प्रकीर्तिता उक्ताः । तथाहि नमोदेव्यै इति ९ ॥ ७ ॥

(६ दंशोद्धारः) नमो देव्यै द्योतनशीलायै । महतो ब्रह्मादीनपि देवयति सृष्ट्यादिरूपेण क्रीडयति इति तथा । शिवं कल्याणं तद्धेतुत्वाच्छिवायै प्रकृत्यै मूलप्रकृतिरूपायै भद्रमखिलरक्षणं तद्धेतुत्वाद्भद्रायै नियताः प्रणिहितचित्ताः स्म । पादपूरणे स्म । अव्ययं वा ॥ ७ ॥

रौद्रायै नमो नित्यायै गौर्यै धात्र्यै नमो नमः । ज्योत्स्नायै चेन्दुरूपिण्यै सुखायै सततं नमः ॥८॥

(१ गुप्तवती) रौद्रो रसविशेषस्तद्वती रौद्रा । मत्वर्थीयोच् । धात्र्यै पोषकत्वादुपमात्रे । सुखायै अभेदेन सुखवत्यै शोभनेन्द्रियायै वा ॥ ८ ॥

(२ चतुर्धरी) रौद्रायै दारुणायै संहृतिशक्त्यै इति । नित्यायै कालानवच्छिन्नायै । गौर्यै गौरवर्णायै । धात्र्यै जगत्पोषिकायै । ज्योत्स्नायै प्रकाशरूपायै । इन्दुरूपिण्यै ज्योतीरूपायै । ज्योत्स्ना इन्दुरुपलक्षणत्वात् । सुखायै परमानन्दमय्यै ॥ ८ ॥

(३ शान्तनवी) रुद्रस्येव रौद्रं उग्रं रूपमस्त्यस्याः सा रौद्री तस्यै रौद्रायै नमः । रौद्रशब्दादर्शआदित्वादच् । 'नेर्ध्रुवे' इत्यप् । नित्यायै कालत्रयावस्थितायै नमः । गुरी उद्यमे तुदादिः अनुदात्तेत् । गुरते गोरः । पचाद्यच् । इगुपधत्वात् को वा । गुर एव गौरः । 'प्रज्ञादिभ्यश्च' इति स्वार्थेण् । 'टिड्ढाणञ्' इति स्त्रियां ङीप् । यद्वा वर्णवाचित्वेन रूढत्वात् 'षिद्गौरादिभ्यश्च' इति निपातनात्साधुत्वे ङीप् । गौर्यै पार्वत्यै नमः । गौरी गौरवर्णयोगात् । यद्वा गुङ् अव्यक्ते शब्दे । अतः उणादौ 'ऋज्रेन्द्राग्र' इत्यादिसूत्रेण रणि वृद्धौ निपातितायां गवते गौरः । गौरोऽरुणे सिते पीते' । धात्र्यै धरण्यै नमोस्तु । धात्र्यै उपमात्रे च नमः ।

'धात्री स्यादुपमातापि क्षितिरप्यामलक्यपि । ज्योतिःशास्त्रविशेषे स्याज्ज्योतिरक्षरतेजसोः । ज्योतिर्ना भास्करे क्लीवमग्नि-खद्योतदृष्टिषु' । ज्योतिरस्त्यस्यां ज्योत्स्ना । तस्यै ज्योत्स्नायै सततं नमः । चदि आह्लादने । चन्दति चन्द्रः । रूप रूपक्रियायां। रूप रूपदर्शने च । चुरादिः । चन्द्रं रूपयति तच्छीला चन्द्ररूपिणी तस्यै चन्द्ररूपिण्यै सततं नमः । चन्द्रस्य रूपं करोति चन्द्र-रूपिणीति च व्युत्पत्तिः । 'सुख दुःख तत्क्रियायां' सुखनं दुःखनं च तत्क्रिया । सुखयतीति सुखा । पचाद्यच् । सुखायै सुखकारिण्यै सततं नमोऽस्तु ॥ ८ ॥

(**४ नागोजीभट्टी**) रौद्रायै इति संहारशक्त्यै । नित्या कालानवच्छिन्ना नित्याख्यशक्तिरूपा च । गौरीति तद्वर-णाद्धात्री जगदाधारा ज्योत्स्ना चन्द्रकिरणा । इन्दुश्चन्द्रः । इदमुपलक्षणम् ज्योतीरूपस्य । सुखा परमानन्दरूपा ॥ ८ ॥

(**५ जगच्चन्द्रचन्द्रिका**) रौद्रायै इति १० ॥ ८ ॥

(**६ दंशोद्धारः**) रौद्रायै इति । संहारशक्त्यै नित्यायै कालानवच्छिन्नायै गौर्यै गौरवर्णायै धात्र्यै पोषिण्यै ज्यो-त्स्नायै प्रकाशकारिण्यै इन्द्ररूपिण्यै ज्योतिःस्वरूपायै सुखायै आनन्दमय्यै ॥ ८ ॥

**कल्याण्यै प्रणता वृद्ध्यै सिद्ध्यै कूर्म्यै नमो नमः । नैर्ऋत्यै भूभृतां लक्ष्म्यै शर्वाण्यै ते नमो नमः॥९**

(**१ गुप्तवती**) प्रणतावृद्ध्यै प्रणतानामावृद्धिरूपा । प्रणतौ सत्याम्वृद्धिरूपेति पदद्वयं वा । कूर्मस्य विष्णोः स्त्री कूर्मी कुः पृथिवी तद्रूपा । ऊर्म्यो वीच्यो यस्यामिति वा । कुर्म इति पाठे प्रणताः सन्तो वयं नमस्कुर्म इत्यन्वय इति केचित् । भूभृतां गिरीणां राज्ञां वा ॥ ९ ॥

(**२ चतुर्धरी**) कल्याण्यै कल्याणकारिण्यै । वृद्ध्यै उपचयकारिण्यै अणिमादिरूपायै नमोनमः कुर्म इत्यन्वयः । नैर्ऋत्यै असुरशक्त्यै नैर्ऋतपदस्यासुरोपलक्षणत्वात् । अन्य आह । निर्ऋतिर्लक्ष्मीः । स्वार्थेण् । भूभृतां लक्ष्म्यै राजश्रियै शर्वाण्यै शिवधर्मिण्यै । ते तुभ्यम् ॥ ९ ॥

(**३ शान्तनवी**) कलासु साधुः कल्या शुभात्मिका वाणी । कल्यामणति कल्यं निरुक्तं वा अणति कथयति कल्याणी तस्यै कल्याण्यै नमः । अण शब्दार्थः । कर्मण्यण् । किंच जगद्भिः ऋध्यै सिध्यै च प्रणतां वन्दितां जगज्जननीं देवीं प्रति नमः नातिं कुर्मः । कुर्मो इति पाठे । प्रणमन्तीति प्रणन्तः तेषां प्रणतामिति षष्ठीबहुवचनान्तं बोध्यं । तथाच प्रणतां प्रणमतां ऋद्ध्यै सिद्ध्यै च नमः इत्यलवेश्वरभट्टः । कूर्म्यै कूर्मजातिशक्त्यै भूभारोद्धरणसमर्थकूर्मशक्त्यै नमः । कौर्म्यै इति पाठे कूर्मसं-बन्धिन्यै शक्त्यै नमः । निष्क्रान्ता ऋतेः सन्मार्गात् निर्ऋतिः अलक्ष्मीः 'अन्यायोपार्जिता लक्ष्मीः स्यादलक्ष्मीस्तु निर्ऋतिः' निर्ऋते रूपमाकृतिर्नैर्ऋती तस्यै नैर्ऋत्यै अलक्ष्मीरूपायै ते तुभ्यं शर्वाण्यै शंभुपत्न्यै नमोनमः । यद्वा निश्चिता ऋतिः सत्यता येन स निर्ऋतिः निर्ऋतेर्दिक्पालस्येयं नैर्ऋती तस्यै नैर्ऋत्यै निर्ऋत्युपार्जितलक्ष्मीरूपायै ते तुभ्यं नमः । अथच भुवं बिभ्रतीति भूभृतः आदिमण्डूकादय कूर्मादिनागादिकुलपर्वतादिमनुप्रभृतिराजानः तेषां भूभृतां लक्ष्म्यै लक्ष्मीरूपायै ते तुभ्यं शम्भु-पत्न्यै शर्वाण्यै नमोनमः । शर्वस्य स्त्री शर्वाणी । 'इन्द्रवरुण' इत्यादिना पुंयोगे ङीषानुकौ ॥ ९ ॥

(**४ नागोजीभट्टी**) कल्याणी तत्कर्त्री । शर्वाणी शिवशक्तिः ॥ ९ ॥

(**५ जगच्चन्द्रचन्द्रिका**) कल्याण्यै इति ११ ॥ ९ ॥

(**६ दंशोद्धारः**) कल्याण्यै कल्याणरूपायै वृध्यै उपचयरूपिण्यै सिद्ध्यै अणिमादिरूपायै नमः कुर्म इत्यन्वयः । कूर्म्यै इति पाठे कूर्मशक्त्यै नैर्ऋत्यै असुरशक्त्यै यद्वा अलक्ष्म्यै । 'स्यादलक्ष्मीस्तु निर्ऋतिः' इत्यमरः । स्वार्थेऽण् । भूभृतां लक्ष्म्यै राजलक्ष्म्यै । शर्वाण्यै शिवगृहिण्यै ॥ ९ ॥

**दुर्गायै दुर्गपारायै सारायै सर्वकारिण्यै । ख्यात्यै तथैव कृष्णायै धूम्रायै सततं नमः ॥ १० ॥**

(**१ गुप्तवती**) दुर्गाया इति चरणत्रयं वक्त्रवृत्तस्य । चतुर्थचरणः पथ्यायाः । पथ्यायुज्योजिति पिङ्गलसूत्रे युक्प-दस्य जातिव्यक्तिपक्षभेदेन द्वेधा हलायुधेन व्याख्यातस्य छन्दोभाष्यराजेऽस्माभिः समर्थनात् । अतो न वृत्तभङ्ग इति भ्रमितव्यम् ॥ १० ॥

(**२ चतुर्धरी**) दुर्गायै दुरधिगमायै । गत्यर्थानां ज्ञानार्थत्वात् दुर्गे संकटे पारयति पालयतीति दुर्गा । पारः प-रिच्छेदोऽस्या इति वा । देशकालानवच्छिन्नेति यावत् । दुर्गात्संसारात्पारयति पारं करोतीति वा तस्यै । सारायै सारो बलं तद्योगिन्यै सर्वकारिण्यै समस्तवस्तुजातस्वतन्त्रायै । ख्यातिर्यथानुभूतिः सत्वपुरुषान्यथाभेदज्ञानं ख्यातिरित्यन्यस्तद्रूपायै । कृष्णायै कृष्णधूम्रवर्णयोगिन्यै ॥ १० ॥

---

१ 'प्रणतां वृद्ध्यै' इति पाठः । २ 'सिद्ध्यै कुर्मो' इति वा पाठः ।

**( ३ शान्तनवी )** हे सर्वकारिणि देवि तुभ्यं दुर्गायै सततं नमः । दुःखेन गम्यते दुर्गा । यद्वा दुःखेन गच्छत्यस्यां सा दुर्गा । 'सुदुरोरधिकरणे' इति वक्तव्यं । गमेर्डः । तथा हे सर्वकारिणि देवि तुभ्यं, दुर्गपारायै सततं नमः । दुर्गं पारं यस्याः महामायाख्यसिन्धोः सा दुर्गपरा । यद्वा 'पारतीर कर्मसमाप्तौ' पारयति पारा । दुर्गाणां कार्याणां पारा दुर्गपारा । यद्वा दुर्गाः पाराः पारयन्तो गणाः यस्याः सा दुर्गपारा नाम देवी । हे सर्वकारिणि हे देवि तुभ्यं सारायै संसारसारायै वरायै श्रेष्ठायै सततं नमोस्तु । हे सर्वकारिणि देवि तुभ्यं ख्यात्यै विख्यातरूपायै सततं मनः । हे सर्वकारिणि देवि तुभ्यं कृष्णायै कृष्णवर्णायै कालरात्र्यै सततं नमः । तथैव हे सर्वकारिणि देवि तुभ्यं धूम्रायै धूम्रवर्णायै सततं नमः । सर्वं करोति इति सर्वकारिणी तत्र संबुद्धिः हे सर्वकारिणि । सर्वकारिण्यै इति पाठे सर्वकारिण्यै देव्यै सततं नम इत्यनुसंधेयम् ॥ १० ॥

**( ४ नागोजीभट्टी )** दुर्गायै इति । दुःखज्ञेयायै । दुर्गो दुरधिगमः परिच्छेदो यस्यास्तस्यै । दुर्गात्संसारात्पारं करोतीति च सारो बलं तद्वत्यै सर्वकारिण्यै सर्वजनने स्वतन्त्रायै । प्रकृतिपुरुषयोर्भेदज्ञानं ख्यातिस्तद्रूपायै प्रसिद्धै च । कृष्णा तद्वर्णा कृष्णशक्तिश्च । धूम्रा तद्वर्णा ॥ १० ॥

**( ५ जगच्चन्द्रचन्द्रिका )** दुर्गायै इति १२ ॥ १० ॥

**( ६ दंशोद्धारः )** दुर्गायै इति । दुर्गायै दुर्ज्ञानायै दुर्गे संकटे पारयति पालयति दुर्गपारा तस्यै । यद्वा दुर्गः पारोऽस्याः । देशकालाद्यनवच्छिन्नायै इत्यर्थः । दुर्गात्संसारात्पारयति पारं नयति इति वा । सारायै बलवत्यै । ख्यात्यै कीर्तिरूपायै । कृष्णायै कृष्णवर्णायै । धूम्रायै धूम्रवर्णायै ॥ १० ॥

## अतिसौम्यातिरौद्रायै नतास्तस्यै नमो नमः । नमो जगत्प्रतिष्ठायै देव्यै कृत्यै नमो नमः ॥११॥

**( १ गुप्तवती )** सौम्यान् रौद्रांश्चातिक्रान्ताऽतिसौम्यातिरौद्रा । कृत्यै यत्नरूपार्थभावनायै । वेदोक्तधर्मरूपेणेति यावत् । अतएव जगत्प्रतिष्ठेति विशेषणं । 'धर्मो विश्वस्य जगतः प्रतिष्ठा' इति श्रुतेः ॥ ११ ॥

**( २ चतुर्धरी )** अतिसौम्यायै विद्याभावेन संसारतापोच्छेदहेतुत्वात् । अतिरौद्रायै अविद्याभावेन संस्कारकारणत्वात् । जगत्प्रतिष्ठायै जगदधिष्ठानरूपायै । देव्यै देवशक्त्यै क्रियात्मिकायै ॥ ११ ॥

**( ३ शान्तनवी )** सोमाट्टयण् । सौम्यं सोमदैवताकं सुन्दरं मनोहरं च रूपं । अत्यर्थं सौम्यं यस्याः सा अतिसौम्या । रुद्रदैवतकं रुद्रसंबन्धि वा रूपं रौद्रं अत्यर्थं रौद्रं यस्याः सा अतिरौद्रा । ततश्च भजतामभजतां च यथाक्रमादतिसौम्या चासावतिरौद्रा चेति कर्मधारणः । तस्यै अतिसौम्यातिरौद्रायै वाग्बोमारूपायै त्रिशक्त्यात्मिकायै देव्यै नमोनमः । इति शक्तित्रयापेक्षं नमस्त्रयं । सोमस्य भावः सौम्यं । भावे ष्यञ् । रुद्रस्य भावः रौद्रं । युवादित्वाद्भावे अण् । अतिक्रान्तं सौम्यं यया सा अतिसौम्या । अतिक्रान्तं रौद्रं यया सा अतिरौद्रा । ततः कर्मधारये सति तस्यै नम इत्यप्यनुसंधेयं । जगतां प्राणभृतां प्रतिष्ठा आसदमाधारशक्तिस्थानं तस्यै जगत्प्रतिष्ठायै जगत्प्रतिष्ठारूपायै नमोनमः । प्राणिनां प्राणधारणाय प्राणधारणार्थं यत्स्थानं मूलाधारसंज्ञं तत्प्रतिष्ठेत्युच्यते । 'आसदं प्रतिष्ठायां' इत्यासदशब्दस्य पर्यायः प्रतिष्ठाशब्दः । दिवु क्रीडादौ । दीव्यतीति देवी तस्यै क्रीडाविजिगीषाद्यर्थक्रियाकारिण्यै देव्यै नमः । करणं कृतिः प्रयत्नः । सर्गस्थितिप्रत्यवहारविषयः प्रयत्नोऽत्र विवक्षितः । तस्यै कृत्यै कृतिरूपायै प्रयत्नरूपायै नमः । नमस्यानां त्रित्वादिह नमस्त्रित्वं । कर्त्र्यै इति पाठे तृन्नन्तत्वात् जगदिति कर्म विवक्षितं । जगत्कारणशीलायै देव्यै नम इत्यर्थः ॥ ११ ॥

**( ४ नागोजीभट्टी )** अतीति । विद्यात्वेन संसारशामकत्वादतिसौम्या । अविद्यारूपेण संसारहेतुत्वादतिरौद्रा । नमोनमः इत्येतदुक्तिपूर्वकं नताः नम्रा इत्यर्थः । जगत्प्रतिष्ठा जगदुपादानकारणम् । देव्यै देवशक्त्यै । कृतिः क्रिया ॥ ११ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** अतिसौम्येति १३ ॥ ११ ॥

**( ६ दंशोद्धारः )** अतिसौम्येति । अतिसौम्यातिरौद्रायै भक्ताभक्तयोः । जगति प्रतिष्ठा यस्याः चिच्छक्तिरूपत्वात् । देव्यै देवशक्त्यै । कृत्यै क्रियात्मिकायै ॥ ११ ॥

## या देवी सर्वभूतेषु विष्णुमायेति शब्दिता । नमस्तस्यै नमस्तस्यै नमस्तस्यै नमोनमः ॥ १२ ॥

**( १ गुप्तवती )** विष्णुमायेति वराहपुराणे मेघवृष्टिशस्योत्पत्त्यादीनि बहूनि कार्याणि विष्णुमायात्मकत्वेन महता ग्रन्थेन प्रदर्शितानि । कालिकापुराणे तु 'अव्यक्तं व्यक्तरूपेण रजःसत्वतमोगुणैः । विभज्य यार्थं कुरुते विष्णुमायेति सोच्यते' इति संक्षिप्य सएवार्थः कथितः । इह लक्ष्म्या उत्तरं धृतिस्तुष्टयुत्तरं पुष्टिश्चेति द्वयं तन्त्रान्तरसंमतं । येतु कीर्तिप्रज्ञामेधाश्रुतिस्फूर्तिप्रभृतयो बहवो मन्त्राः पठ्यन्ते तेतु तन्त्रत्रयस्यासंमताः । स्फूर्तिमेधे संमते एवेत्यन्ये । प्रकृततन्त्रे त्वेकविंशतिरेवेति वेद्यम् ॥ १२ ॥

**( २ चतुर्धरी )** सर्वभूतेष्वशेषप्राणिषु या प्रसिद्धा विष्णुमूलाविद्या । इतिशब्द उपपददर्शने । शब्दिता सर्वागमेषु

प्रतिपादिता तस्यै देव्यै नमो नम इत्यन्वयः। विष्णुमाया हि सात्विकराजसतामसतया त्रिधा वियत इति तत्परामर्शकं तस्यैपदं त्रिरभ्यस्यते। नमःपदं तु प्रसादने संभ्रमे वा। तदुक्तं। 'विषादे विस्मये हर्षे खेदे दैन्येऽवधारणे। प्रसादने संभ्रमेऽपि द्विस्त्रिरुक्तं न दुष्यति'। इत्यन्य आह। त्रिः प्रणमने महत्कुलमित्येकस्यात्रिनमस्कारो यथा त्रिस्त्रिः प्रदक्षिणमिति अन्य आह। पदत्रयेण कायिकवाचिकमानसिकनमस्कारत्रयं दर्शितं। एवमितरत्रापि। अयं चानुक्रमः। विष्णुमाया १ चेतना २ बुद्धि ३ निद्रे ४ क्षुधे ५ छाये ६ शक्ति ७ तृष्णे ८ तथान्या ख्याति ९ जाति १० लज्जा ११ या सह शान्तिः १२ श्रद्धा १३ कान्ति १४ स्याच्च लक्ष्मी १५ संवृत्ति १६ अथोधृतिः १७ स्मृति १८ दया तथा १९ तुष्टी २० के ततो मातृ २१ भ्रान्ति २२ स्मृती २३ इह मात्रानुक्रमः। धृतिपुष्टी त्वनार्षे इति कस्यापि संमतः। निःप्रमाणताहेतोरेतदन्यौ न मृष्यन्ति। संप्रदायप्रमाणं चेत् परः किमपराध्यति। आर्षत्वेऽपि हि सास्त्येव क्वचिदित्यार्षता स्थितिः ॥ १२ ॥

**( ३ गुप्तवती )** या देवी वाङ्मोमात्मिका सर्वभूतेषु कालत्रयात्मिका सर्वेषु भूतेषु भूतात्मिका अनात्मन्यात्मबुद्धिं जनयन्ती आत्मनि चानात्मबुद्धिं जनयन्तीसती ममतावशंवदान् लोकान् प्रसूयमाना सर्वजननी महाभगवती विष्णुमायेति शब्दिता कथिता तस्यै त्रिरूपायै सात्विक्यै राजस्यै तामस्यै च प्रत्येकं कायवाङ्मनोभिः एकस्यै चैव वा देव्यै। भक्तिश्रद्धातिशयद्योतनाय नमःशब्दो नमस्येन च सहाम्रेडितः। 'आम्रेडितं द्विस्त्रिरुक्तं'। चापले द्विर्वचनं। संभ्रमेण वृत्तिश्चापलं। इत्थं हि न पौनरुक्त्यं दोषावहं। यदुक्तं। 'प्रकर्षकोपहर्षेषु स्वप्नदैन्यभयेषु च। स्तुत्यभ्यासानुवादेषु पौन्यरुक्त्यं न दुष्यति' सर्वाणि पृथिव्यादीनि भूतानि येषामारम्भकत्वेन सन्ति तानि सर्वभूतानि देहानि इति प्रथमा देवी विष्णुमाया ॥ १२ ॥

**( ४ नागोजीभट्टी )** येति। विष्णुमाया मूलशाब्दविद्येति शब्दिता सर्वागमेषु प्रतिपादिता नमस्तस्यै इति त्रिकेण। एवमग्रेपि ॥ १२ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** त्रयोदशैवं मन्त्रास्त्विति। एवं प्रकारेण तु पुनः त्रयोदश मन्त्रा विज्ञेयाः। या देवीत्यादयोऽपि च। एकविंशतिकाः श्लोका भ्रान्त्यन्ता इति। या देवीति आदिर्येषां ते यादेवीत्यादयः। या देवी सर्वभूतेषु विष्णुमायेति शब्दिता इत्यादयोऽपि। च पुनः एकअधिका विंशतिकाः श्लोकाः। भ्रान्तिरन्ते येषां ते भ्रान्त्यन्ताः वर्तन्ते इति शेषः। भ्रान्तिरूपेण संस्थिता एतत्पर्यन्ताः तेषु मन्त्रकाः प्रतिश्लोकं त्रयो मन्त्रा ज्ञेया इति। तेषु एकविंशतिश्लोकेषु प्रतिश्लोकं त्रयो मन्त्रा ज्ञेया ज्ञातव्याः। तत्र श्लोकेषु तिस्रोऽधिकाः षष्टिकास्त्रिषष्टिकाः। त्रिभिरधिकं विंशतित्रयमित्यर्थः। तथाहि। या देवी सर्वभूतेषु विष्णुमायेति शब्दिता। नमस्तस्यै स्वाहेत्येको मन्त्रः १४। नमस्तस्यै स्वाहेति द्वितीयो मन्त्रश्चतुरक्षरः १५। नमस्तस्यै नमोनमः स्वाहेति अष्टाक्षरकस्तृतीयः १६ ॥ १२ ॥

**( ६ दंशोद्धारः )** या देवीति। विष्णुमाया मूलाऽविद्या तस्यै नमः। त्रिरुक्तिस्तु प्रसादने। उक्तंच 'विशदे विस्मये हर्षे खेदे दैन्येऽवधारणे। प्रसादने संभ्रमे च द्विस्त्रिरुक्तं न दुष्यति'। यद्वा कायिकवाचिकमानसिकनमस्कारसूचनाय त्रिरुक्तिः। तस्यैपदस्यापि विष्णुमायादीनां सात्विकादिभेदेन त्रिविधत्वात्। एवमुत्तरत्रापि ॥ १२ ॥

**या देवी सर्वभूतेषु चेतनेत्यभिधीयते। नमस्तस्यै नमस्तस्यै नमस्तस्यै नमोनमः ॥ १३ ॥**

**( १ गुप्तवती )** चेतना जीवनाडी ॥ १३ ॥

**( २ चतुर्धरी )** चेतना अन्तःकरणवृत्तिः ॥ १३ ॥

**( ३ शान्तनवी )** अभिधीयते कथ्यते। चुरादावात्मनेपदी। चित संचेतने संवेदने वा। चेतनं चेतना। ननु चेतनेयं बुद्धिरेवेति कथं पौनरुक्त्यं। सत्यं। यद्यपि वैशेषिकादौ दर्शने चेतना बुद्धिरेव तथापि सांख्ये बुद्धिधर्मश्चित्तवृत्तिविशेषविजृम्भितशक्तिश्चेतनेत्याश्रयणादपौनरुक्त्यं। अन्येतु चेतना चित्तवृत्तिविशेषशक्तिः संज्ञानं वा। बुद्धिस्तु स्वप्रकाशनज्ञानस्वभावेत्याहुः। अन्येतु निर्विकल्पकज्ञानं चेतना। बुद्धिस्तद्विशेषावगतिः सविकल्पकज्ञानमित्यस्ति तयोर्भेद इत्याहुः। द्वितीया देवी चेतना॥ १३॥

**( ४ नागोजीभट्टी )** चेतना निर्विकल्पा या चिच्छक्तिरियुच्यते ॥ १३ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** एवं प्रतिमन्त्रं या देवीत्येवमादिषु एकविंशतिश्लोकेषु प्रत्येकं त्रयो मन्त्रा भवन्ति। तथाहि। चेतनेति १७,१८,१९ ॥ १३ ॥

**( ६ दंशोद्धारः )** चेतना। चिच्छक्तिः ॥ १३ ॥

**या देवी सर्वभूतेषु बुद्धिरूपेण संस्थिता। नमस्तस्यै नमस्तस्यै नमस्तस्यै नमोनमः ॥ १४ ॥**

**( १ गुप्तवती )** बुद्धिरध्यवसायः ॥ १४ ॥

**( २ चतुर्धरी )** बुद्धिः अन्तःकरणम् ॥ १४ ॥

( ३ शान्तनवी ) बुद्धिरित्येवंरूपेण स्वरूपेण संस्थिता सम्यगवस्थिता । यदभ्यधुः । 'संस्थाधारे स्थितौ मृतौ' । तृतीया देवी बुद्धिः ॥ १४ ॥

( ४ नागोजीभट्टी ) बुद्धिः सविकल्पकज्ञानम् ॥ १४ ॥

( ५ जगच्चन्द्रचन्द्रिका ) बुद्धिरिति २०,२१,२२ ॥ १४ ॥

( ६ दंशोद्धारः ) बुद्धिरध्यवसायकार्यन्तःकरणम् ॥ १४ ॥

**या देवी सर्वभूतेषु निद्रारूपेण संस्थिता । नमस्तस्यै नमस्तस्यै नमस्तस्यै नमोनमः ॥ १५ ॥**

( १ गुप्तवती ) निद्रा बाह्येन्द्रियव्यापारोपरमानुकूलविकारः ॥ १५ ॥

( २ चतुर्धरी ) निद्रा निरिन्द्रियप्रदेशे मनोलयः ॥ १५ ॥

( ३ शान्तनवी ) निद्रेति रूपं तेन निद्रा । द्रा कुत्सायां । नियतं द्रान्त्यस्यां निद्रा संवेशः । भुक्तान्नादिपरिपाकादिहेतु-निरिन्द्रियप्रदेशे मनसोऽवस्थानं निद्रा । सर्वेन्द्रियव्यापारविरतौ प्राणनं सुखनं निद्रेत्यन्ये । चतुर्थी देवी निद्रा ॥ १५ ॥

( ४ नागोजीभट्टी ) निद्रा सुषुप्तिः स्वप्नावस्था वा ॥ १५ ॥

( ५ जगच्चन्द्रचन्द्रिका ) निद्रा रूपेणेति २३,२४,२५ ॥ १५ ॥

( ६ दंशोद्धारः ) निद्रा इन्द्रियमनसोः क्रमेण लयात्मिकाऽवस्था ॥ १५ ॥

**या देवी सर्वभूतेषु क्षुधारूपेण संस्थिता । नमस्तस्यै नमस्तस्यै नमस्तस्यै नमोनमः ॥ १६ ॥**

( १ गुप्तवती ) क्षुधा बुभुक्षोत्पादकौदर्याग्निविकारः ॥ १६ ॥

( २ चतुर्धरी ) क्षुधा पार्थिवधातुक्षयकृतोऽवसादः ॥ १६ ॥

( ३ शान्तनवी ) क्षुध बुभुक्षायां । संपदादित्वाद्भावे स्त्रियां क्विप् । क्षुध् प्रादिपदिकं । भोक्तुमिच्छा क्षुत् । अशनाया बुभुक्षा क्षुत् तया क्षुधा । रूपेणेति पृथक्पदं । यद्वा 'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः । हलन्तादपि टापं च यथा वाचा निशा दिशा' ततश्च क्षुधेति रूपं स्वरूपं तेन क्षुधारूपेण क्षुधां विना प्राणिनां शरीरभृतां सुखं नास्ति । इति पञ्चमीदेवी क्षुधा ॥ १६ ॥

( ४ नागोजीभट्टी ) क्षुधा अभ्यवजिहीर्षा ॥ १६ ॥

( ५ जगच्चन्द्रचन्द्रिका ) क्षुधेति २६,२७,२८, ॥ १६ ॥

( ६ दंशोद्धारः ) क्षुधा पार्थिवधातुक्षयकृतोऽवसादः ॥ १६ ॥

**या देवी सर्वभूतेषु छायारूपेण संस्थिता । नमस्तस्यै नमस्तस्यै नमस्तस्यै नमोनमः ॥ १७ ॥**

( १ गुप्तवती ) छाया प्रतिवस्तुविद्यमाना तत्समानाऽनातपवती ॥ १७ ॥

( २ चतुर्धरी ) छाया वर्णप्रसादः आतपसंतापहरणादतिशीतलेति वा ॥ १७ ॥

( ३ शान्तनवी ) छाया प्रतिबिम्बरूपा सर्वभूतेषु तिष्ठति । नष्टच्छायो मध्याह्न इत्यत्र तु आतपभावाभावो विवक्षितः । 'छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमनातपः' । प्रतिबिम्बे यथा संक्रान्तछाय आदर्शः । छ्यति छिनत्ति संतापं छाया । इति षष्ठीदेवी छाया ॥ १७ ॥

( ४ नागोजीभट्टी ) छाया संसारतापाभावः वर्णसादृश्यं च ॥ १७ ॥

( ५ जगच्चन्द्रचन्द्रिका ) छायेति २९,३०,३१ ॥ १७ ॥

( ६ दंशोद्धारः ) छाया वर्णप्रसादः ॥ १७ ॥

**या देवी सर्वभूतेषु शक्तिरूपेण संस्थिता । नमस्तस्यै नमस्तस्यै नमस्तस्यै नमोनमः ॥ १८ ॥**

( १ गुप्तवती ) शक्तिः सामर्थ्यम् ॥ १८ ॥

( २ चतुर्धरी ) शक्तिः सामर्थ्यमुत्साहो वा शिवस्यार्धस्वरूपा शक्तिर्वा ॥ १८ ॥

( ३ शान्तनवी ) शक्लृ शक्तौ । शकनं शक्तिः सामर्थ्यं । वस्तुगतः स्वभावसिद्धो धर्मः शक्तिरिति रूपं । तेन शक्तिः प्रतिवस्तु प्रतिनियतार्थक्रियाकारित्वं वस्तुधर्म इत्येके । वस्तुस्वरूपमेव शक्तिर्नतु वस्तुनोऽन्यो धर्मः शक्तिरित्यन्येभ्युपजग्मुः । इह तु सर्वभूतेष्वित्याधाराधेयभावानुवादाच्छक्तिर्वस्तुधर्म इत्येष पक्षोऽभ्युपगतः । इति सप्तमीदेवी शक्तिः ॥ १८ ॥

( ४ नागोजीभट्टी ) शक्तिः कार्यजननसामर्थ्यम् ॥ १८ ॥

(५ जगच्चन्द्रचन्द्रिका) शक्तिः ३२,३३,३४ ॥ १८ ॥
(६ दंशोद्धारः) शक्तिः सामर्थ्यमुत्साहो वा ॥ १८ ॥

**या देवी सर्वभूतेषु तृष्णारूपेण संस्थिता। नमस्तस्यै नमस्तस्यै नमस्तस्यै नमोनमः ॥ १९ ॥**

(१ गुप्तवती) तृष्णा लोभः ॥ १९ ॥
(२ चतुर्धरी) तृष्णा अनात्मीयस्वीकारेच्छा ॥ १९ ॥
(३ शान्तनवी) सर्वाणि भूतानि पृथिव्यादीनि येषां देहानामारम्भकत्वेन सन्ति तानि सर्वभूतानि देहास्तेषु। ञितृषा पिपासायां। 'तृषिशुषिरसिभ्यः कित्' इति नः। तृष्णा उपभोगनिमित्तकोऽभिलाषः। 'तृष्णाभिलषणं भोगे तृष्णा वनपिशाचिका' 'तृष्णे स्पृहापिपासे द्वे तद्रूपेहाम्बिका स्मृता'। तर्षणं तृष्णा स्पृहा। निरूढलक्षणत्वात्। इत्यष्टमीदेवी तृष्णा ॥ १९ ॥
(४ नागोजीभट्टी) तृष्णा अनात्मीयस्वीकारेच्छा ॥ १९ ॥
(५ जगच्चन्द्रचन्द्रिका) तृष्णेति ३५, ३६, ३७ ॥ १९ ॥
(६ दंशोद्धारः) तृष्णा अनात्मीयजिघृक्षा ॥ १९ ॥

**या देवी सर्वभूतेषु क्षान्तिरूपेण संस्थिता। नमस्तस्यै नमस्तस्यै नमस्तस्यै नमोनमः ॥ २० ॥**

(१ गुप्तवती) क्षान्तिः क्षमा ॥ २० ॥
(२ चतुर्धरी) क्षान्तिरपकारिण्यप्यनपकारचिकीर्षा ॥ २० ॥
(३ शान्तनवी) क्षमूष् सहने। षित्वात्स्त्रियां क्षमा। बाहुलकात्तु क्तिनि क्षान्तिः। 'अनुनासिकस्य क्विझलोः क्ङिति' इति दीर्घः। 'क्षान्तिः क्षमा तितिक्षा च मर्षश्च सहनार्थकाः'। क्षान्तिस्तृष्णापरिपन्थिनी परप्रयुक्तापकारं प्रत्युपेक्षा प्रतिकूलवेदनां प्रत्युपेक्षा च। इति नवमी देवी क्षान्तिः ॥ २० ॥
(४ नागोजीभट्टी) क्षान्तिः सत्यपि सामर्थ्येऽपकाराचिकीर्षा ॥ २० ॥
(५ जगच्चन्द्रचन्द्रिका) क्षान्तिरिति ३८, ३९, ४० ॥ २० ॥
(६ दंशोद्धारः) क्षान्तिरपकारिण्यनपकारः ॥ २० ॥

**या देवी सर्वभूतेषु जातिरूपेण संस्थिता। नमस्तस्यै नमस्तस्यै नमस्तस्यै नमोनमः ॥ २१ ॥**

(१ गुप्तवती) जातिर्जन्म ब्रह्मसत्ता वा ॥ २१ ॥
(२ चतुर्धरी) जातिरनेकेष्वेकाकारव्यवहारसाधनम् ॥ २१ ॥
(३ शान्तनवी) नित्यैकानुगतप्रत्ययहेतुरनेकसमवायिनी जातिः। यथा मनुष्येषु मनुष्यत्वं गोषु गोत्वं। 'जातिः सामान्यजन्मनोः'। जायतेऽनया भिन्नेष्वभिन्नाभिधानप्रयोगो जातिः। इति जातिः दशमी देवी ॥ २१ ॥
(४ नागोजीभट्टी) जातिः गोत्वादिः ॥ २१ ॥
(५ जगच्चन्द्रचन्द्रिका) जातिरिति ४१, ४२, ४३ ॥ २१ ॥
(६ दंशोद्धारः) जातिरनेकेष्वेकाकारप्रत्यायिका ॥ २१ ॥

**या देवी सर्वभूतेषु लज्जारूपेण संस्थिता। नमस्तस्यै नमस्तस्यै नमस्तस्यै नमोनमः ॥ २२ ॥**

(१ गुप्तवती) लज्जा त्रपा ॥ २२ ॥
(२ चतुर्धरी) लज्जा स्वकार्यविषयान्यज्ञानभीः ॥ २२ ॥
(३ शान्तनवी) ओलस्जी व्रीडायां। स्त्रियां 'गुरोश्च हलः' इत्यप्रत्ययः। 'झलां जश्झशि' इति दः श्चुत्वं। स्त्रियां 'अजाद्यतष्टाप्'। कर्तव्याकरणनिमित्तं अकार्यकरणनिमित्तमन्यतः स्वतो वा जनितं लज्जनं संकोचनं मनुष्यादिचित्तेषु लज्जेत्युच्यते। इत्येकादशी लज्जा ॥ २२ ॥
(४ नागोजीभट्टी) लज्जा स्वकार्यविषयान्यज्ञानभिन्ना ॥ २२ ॥
(५ जगच्चन्द्रचन्द्रिका) लज्जेति ४४, ४५, ४६ ॥ २२ ॥
(६ दंशोद्धारः) लज्जा चिकीर्षितविषये लोकभीः ॥ २२ ॥

**या देवी सर्वभूतेषु शान्तिरूपेण संस्थिता । नमस्तस्यै नमस्तस्यै नमस्तस्यै नमोनमः ॥ २३ ॥**

**( १ गुप्तवती )** शान्तिः शमः ॥ २३ ॥

**( २ चतुर्धरी )** शान्तिर्विषयोपरमः ॥ २३ ॥

**( ३ शान्तनवी )** शम उपशमे । स्त्रियां क्तिन् । क्षान्तिवद्दीर्घः । 'शमथुस्तु शमः शान्तिः' । शान्तिः कामक्रोधाभावः । विकृतेन्द्रियनिवृत्तिः शान्तिरित्यन्ये । विषयव्यावृत्तात्मता शान्तिरित्यपरे । इति शान्तिर्द्वादशी देवी ॥ २३ ॥

**( ४ नागोजीभट्टी )** शान्तिरिन्द्रियसंयमः विषयोपरतिरूपः ॥ २३ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** शान्तिरिति ४७, ४८, ४९ ॥ २३ ॥

**( ६ दंशोद्धारः )** शान्तिर्मनसो विषयेभ्यो विरामः ॥ २३ ॥

**या देवी सर्वभूतेषु श्रद्धारूपेण संस्थिता । नमस्तस्यै नमस्तस्यै नमस्तस्यै नमोनमः ॥ २४ ॥**

**( १ गुप्तवती )** श्रद्धा फलावश्यंभावनिश्चयः ॥ २४ ॥

**( २ चतुर्धरी )** श्रद्धा आगमार्थसंप्रत्ययः ॥ २४ ॥

**( ३ शान्तनवी )** डुधाञ् धारणपोषणयोः । 'श्रच्छब्दस्योपसंख्यानं' इत्युपसर्गसंज्ञा । 'आतश्चोपसर्गे' इति कः । स्त्रियां टाप् । श्रद्धनं श्रद्धा । 'श्रद्धा संप्रत्ययः स्पृहा' । संप्रत्ययो भक्त्यतिशयः । 'श्रद्धया परयोपेता' इतिवत् । शास्त्रोक्तेऽर्थे विपरीतबुद्धिः श्रद्धेत्यन्ये । आदरेणानुसरणं भक्तिः । श्रद्धात्वास्तिक्यबुद्धिरित्यपरे । इति श्रद्धा त्रयोदशी देवी ॥ २४ ॥

**( ४ नागोजीभट्टी )** श्रद्धा श्रुत्याद्युक्तेर्थे आस्तिकत्वम् ॥ २४ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** श्रद्धेति ५०, ५१, ५२ ॥ २४ ॥

**( ६ दंशोद्धारः )** श्रद्धा आस्तिक्यबुद्धिः ॥ २४ ॥

**या देवी सर्वभूतेषु कान्तिरूपेण संस्थिता । नमस्तस्यै नमस्तस्यै नमस्तस्यै नमोनमः ॥ २५ ॥**

**( १ गुप्तवती )** कान्तिर्लावण्यमिच्छा वा ॥ २५ ॥

**( २ चतुर्धरी )** कान्तिः शोभा कमनीयता च ॥ २५ ॥

**( ३ शान्तनवी )** कमु कान्तौ । कमेर्णिङ् । 'आयादय आर्धधातुके वा' । स्त्रियां क्तिन् । 'अनुनासिकस्य क्विझलोः क्ङिति' इति दीर्घः । 'शोभा कान्तिर्द्युतिश्छविः' कामनं कान्तिः । काम्यते वा कान्तिः । कान्तिः शोभेच्छयोः स्त्रियां । अन्ये तु कान्तिर्ज्योतिः स्वरूपे ज्वलतेत्याहुः । इति कान्तिश्चतुर्दशी देवी ॥ २५ ॥

**( ४ नागोजीभट्टी )** कान्तिः शोभा ॥ २५ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** कान्तीति ५३, ५४, ५५ ॥ २५ ॥

**( ६ दंशोद्धारः )** कान्तिः शोभा ॥ २५ ॥

**या देवी सर्वभूतेषु लक्ष्मीरूपेण संस्थिता । नमस्तस्यै नमस्तस्यै नमस्तस्यै नमोनमः ॥ २६ ॥**

**( १ गुप्तवती )** लक्ष्मीः संपत्तिः ॥ २६ ॥

**( २ चतुर्धरी )** लक्ष्मीर्धनादिसंपत् ॥ २६ ॥

**( ३ शान्तनवी )** 'लक्ष दर्शनाङ्कनयोः' चुरादिः । 'लक्षेर्मुट् च' इति तस्य मुडागमः । 'नेड्वशि कृति' । 'णेरनिटि' इति णिलोपः । 'लक्ष्मीः पद्मा विभूतिश्च कायशोभा च कीर्तिता' । इति लक्ष्मीः पञ्चदशी देवी ॥ २६ ॥

**( ४ नागोजीभट्टी )** लक्ष्मीर्धनादिसंपत् ॥ २६ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** लक्ष्मीरिति ५६ ५७ ५८ ॥ २६ ॥

**( ६ दंशोद्धारः )** लक्ष्मीः संपत् ॥ २६ ॥

**या देवी सर्वभूतेषु वृत्तिरूपेण[१] संस्थिता । नमस्तस्यै नमस्तस्यै नमस्तस्यै नमोनमः ॥ २७ ॥**

**( १ गुप्तवती )** वृत्तिर्जीविका मानता वा ॥ २७ ॥

---

१ 'धृतिरूपेण' इति क्वचित्पाठः ।

( २ चतुर्धरी ) वृत्तिर्जीवनं प्रवृत्तिर्वा । धृतिरवसादप्राप्तावप्यनवसादः ॥ २७ ॥

( ३ शान्तनवी ) धृञ् धारणे । भ्वादिः । स्त्रियां क्तिन् । 'धृतिः स्याद्धारणे धैर्ये सौख्यसंतोषयोरपि' । इति धृतिः षोडशी देवी । वृतु वर्तने । स्त्रियां क्तिन् । वर्तनं वृत्तिः । यद्वा वर्ततेऽनया वृत्तिः । 'आजीवो जीविका वार्ता वृत्तिर्वर्तनजीवने' । वृत्तिर्जीवनोपायः । 'युक्ते क्ष्मादावृते भूतं प्राण्यतीते समे त्रिषु' 'भूतं क्लिबे ग्रहे युक्ते पृथिव्यादावृतेऽपि च' 'त्रिषु प्राप्तावतीते च प्राणिन्यपि समेषु च' । सर्वभूताः प्राणिनः । इति वृत्तिः सप्तदशी देवी ॥ २७ ॥

( ४ नागोजीभट्टी ) वृत्तिर्जीविका वृत्तिश्च ॥ २७ ॥

( ५ जगच्चन्द्रचन्द्रिका ) वृत्तिरिति ५९, ६०, ६१ ॥ २७ ॥

( ६ दंशोद्धारः ) वृत्तिर्जीवनं प्रवृत्तिर्वा । एतदग्रे धृतिरूपेणेति क्वचित्पठ्यते । तत्र धृतिश्चित्तावसादकालेऽप्यनवसादः । किंतु वक्ष्यमाणकात्यायनीतन्त्रोक्तमन्त्रगणने पठितत्वादसांप्रदायिकः पाठः । एवमग्रे पुष्टिरूपेणेत्यपि । पुष्टिः सामर्थ्यम् ॥२७॥

**या देवी सर्वभूतेषु स्मृतिरूपेण संस्थिता । नमस्तस्यै नमस्तस्यै नमस्तस्यै नमोनमः ॥ २८ ॥**

( १ गुप्तवती ) स्मृतिः संस्कारजन्यं ज्ञानम् ॥ २८ ॥

( २ चतुर्धरी ) स्मृतिरनुभूतविषयज्ञानम् ॥ २८ ॥

( ३ शान्तनवी ) 'स्याच्चिन्ता स्मृतिराध्यानं' । अनुभूतस्य भावनाख्यसंस्कारहेतुको ज्ञानविशेषः स्मृतिः । इत्यष्टादशी देवी स्मृतिः ॥ २८ ॥

( ४ नागोजीभट्टी ) स्मृतिरनुभूतविषयज्ञानम् ॥ २८ ॥

( ५ जगच्चन्द्रचन्द्रिका ) स्मृतिरिति ६२, ६३, ६४ ॥ २८ ॥

( ६ दंशोद्धारः ) स्मृतिरनुभूतस्य कालान्तरे प्रतिसंधानम् ॥ २८ ॥

**या देवी सर्वभूतेषु दयारूपेण संस्थिता । नमस्तस्यै नमस्तस्यै नमस्तस्यै नमोनमः ॥ २९ ॥**

( १ गुप्तवती ) दया निरुपधिकपरदुःखप्रहाणेच्छा ॥ २९ ॥

( २ चतुर्धरी ) दया अन्यदुःखपरिहाणेच्छा ॥ २९ ॥

( ३ शान्तनवी ) दय क्षरणे । 'षिद्भिदादिभ्योऽङ्' । दयन्तेऽनया दया । 'कृपा दयानुकम्पा स्यात्' । परदुःखप्रहाणेच्छा परदुःखसमभाक्त्वं वा दया । इत्येकोनविंशी दयादेवी ॥ २९ ॥

( ४ नागोजीभट्टी ) दया परदुःखप्रहाणेच्छा ॥ २९ ॥

( ५ जगच्चन्द्रचन्द्रिका ) दयेति ६५, ६६, ६७ ॥ २९ ॥

( ६ दंशोद्धारः ) दयाऽन्यदुःखपरिहारेच्छा ॥ २९ ॥

**या देवी सर्वभूतेषु तुष्टिरूपेण संस्थिता । नमस्तस्यै नमस्तस्यै नमस्तस्यै नमोनमः ॥ ३० ॥**

( १ गुप्तवती ) तुष्टिः संतोषः ॥ ३० ॥

( २ चतुर्धरी ) तुष्टिः समस्तवस्तुष्वनाकाङ्क्षा । (अनधिगताभिलाषः) । पुष्टिः पुरुषार्थसाधनसामर्थ्यम् ॥ ३० ॥

( ३ शान्तनवी ) नीतिर्नयः[1] । इति विंशी देवी नीतिः । तुष प्रीतौ । प्रीतिरानन्दः । तुष्टिः विषयोपभोगमवाप्य तदभिलाषादुपरमस्तुष्टिरित्यपरे । अन्ये तुष्टिर्विषयोपभोगं प्राप्य पुनस्तदभिलाषास्तदवाप्त्यावाप्तं परमं सुखमित्याहुः । इति एकविंशी देवी तुष्टिः ॥ ३० ॥

( ४ नागोजीभट्टी ) तुष्टिरधिगताधिकानभिलाषः ॥ ३० ॥

( ५ जगच्चन्द्रचन्द्रिका ) तुष्टिरिति ६८ ६९ ७० ॥ ३० ॥

( ६ दंशोद्धारः ) तुष्टिर्यथालाभसंतोषः ॥ ३० ॥

**या देवी सर्वभूतेषु मातृरूपेण संस्थिता । नमस्तस्यै नमस्तस्यै नमस्तस्यै नमोनमः ॥ ३१ ॥**

( १ गुप्तवती ) माता प्रमाता ॥ ३१ ॥

( २ चतुर्धरी ) माता देहाधिष्ठात्री वर्णाभिमानी देवता मातैव वा ॥ ३१ ॥

( ३ शान्तनवी ) पुष पुष्टौ । पुष्टिरवयवोपनिर्मितिरित्यपरे । इति द्वाविंशी पुष्टिर्देवी सर्वेषु भूतेषु जनयितव्येषु जनयितुं

---

१ 'नीतिरिति' शान्तनवीस्थोऽधिकः पाठः ।

योग्येषु विषयेषु या देवी मातृरूपेण कारणरूपेण प्रकृतिरूपेण सम्यगवतिष्ठति । नमस्तस्यै । मात्यस्यां गर्भ इति माता । 'जनयित्री प्रसूर्माता' । यद्वा मान पूजायां । मान्यते पूज्यते माता । उणादौ 'नप्तृनेष्टृत्वष्टृ' आदिसूत्रेण निपात्यते । यद्वा अष्टौ मातृनाम्न्य आद्याः शक्तयो याश्च विना भूतसृष्टिरेव न घटते । 'ब्राह्मी माहेश्वरी चैन्द्री वाराहि वैष्णवी तथा । कौमारी चर्ममुण्डा च काली संकर्षणीति च' इति त्रयोविंशी देवी माता ॥ ३१ ॥

**( ४ नागोजीभट्टी )** माता पालयित्री मातृकाधिष्ठात्री देवता च ॥ ३१ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** मातेति ७१,७२,७३ ॥ ३१ ॥

**( ६ दंशोद्धारः )** माता मातृका ब्राह्म्यादिः वर्णदेवता वा जननी वा ॥ ३१ ॥

## या देवी सर्वभूतेषु भ्रान्तिरूपेण संस्थिता । नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ ३२ ॥

**( १ गुप्तवती )** भ्रान्तिरप्रमा ॥ ३२ ॥

**( २ चतुर्धरी )** भ्रान्तिरनुभवसंप्रमोषः । अतस्मिंस्तदिति प्रत्ययो वा ॥ ३२ ॥

**( ३ शान्तनवी )** 'भ्रान्तिर्मिथ्यामतिर्भ्रमः' अतस्मिंस्तदिति ज्ञानं भ्रान्तिः । तद्रूपेण । इति चतुर्विंशी देवी भ्रान्तिः । तदित्थं विष्णुमायादिमूर्तयो देव्याः सर्वभूतेषु वर्तमाना भ्रान्त्यन्ताश्चतुर्विंशतिः प्रदर्शिताः ॥ ३२ ॥

**( ४ नागोजीभट्टी )** भ्रान्तिरतद्वति तद्वत्प्रत्ययः ॥ ३२ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** भ्रान्तिरिति ७४,७५,७६ ॥ ३२ ॥

**( ६ दंशोद्धारः )** भ्रान्तिरतद्वति तत्प्रकारकं ज्ञानम् ॥ ३२ ॥

## इन्द्रियाणामधिष्ठात्री भूतानामखिलेषु[1] या । भूतेषु सततं तस्यै व्याप्त्यै देव्यै नमो नमः ॥ ३३ ॥

**( १ गुप्तवती )** भूतानां पृथिव्यादीनां । भूतेषु प्राणिषु ॥ ३३ ॥

**( २ चतुर्धरी )** अखिलेषु अशेषेषु भूतेषु प्राणिषु इन्द्रियाणां बुद्धिकर्मात्मकानां एकादशानां भूतानां पृथिव्यादीनां पञ्चानां अधिष्ठात्री प्रवृत्ति(निवृत्ति)कारणं तस्यै व्याप्त्यै । देव्यै विभवैकस्वभावायै ब्रह्मशक्त्यै इति यावत् ॥ ३३ ॥

**( ३ शान्तनवी )** या देवी भूतानां पृथिव्यादीनां पञ्चानां अधिष्ठात्री आधारशक्तिः स्वामिनी ईश्वरी व्यापिनी । या च देवी अपरेष्वखिलेषु विशिष्टेषु भूतेषु प्राणिषु वर्तमानानां भूतानां प्राणिनामिन्द्रियाणां मनोनेत्ररसनघ्राणत्वक्श्रवणानां अधिष्ठात्री आधारशक्तिः तस्यै व्याप्त्यै व्याप्तिरूपायै सततं नमो नमः । एतेन सर्वगत्वं उक्तं देव्याः ॥ ३३ ॥

**( ४ नागोजीभट्टी )** इन्द्रियेति । याखिलेषु भूतेषु अन्तर्या विषया स्थिता इन्द्रियाणां ज्ञानकरणानां ज्ञानविषयाणां सूक्ष्मस्थूलानां अधिष्ठात्री प्रवर्तिका च तस्यै व्याप्त्यै देव्यै व्यापिकायै इत्यर्थः ॥ ३३ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** पुनः श्लोकात्मको मन्त्र इति । पुनः श्लोकरूपो मन्त्रः । तथाहि इन्द्रियाणामिति ७७॥३३॥

**( ६ दंशोद्धारः )** इन्द्रियाणामिति । अखिलेषु प्राणिषु इन्द्रियाणां ज्ञानक्रियात्मकानां पृथिव्यादीनां व्याप्तिदेव्यै ब्रह्मशक्त्यै तस्याः सत्वादिगुणसंबन्धाभावात्तस्या इति नाम्रेडितम् ॥ ३३ ॥

## चितिरूपेण[2] या कृत्स्नमेतद्व्याप्य स्थिता जगत् । नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ ३४ ॥

**( १ गुप्तवती )** चितिर्निर्विषयकसंवित् ॥ ३४ ॥

**( २ चतुर्धरी )** अत्र च तस्यैपदानामभ्यासे ब्रह्मशक्तेर्गुणातीतत्वमाह । चितिः प्रकृतिः (प्रत्येक)चैतन्यं तद्रूपेण जीवभावेनेत्यर्थः । अन्ये तु विष्णुमायादिपञ्चविंशतिपदैः पञ्चविंशतितत्त्वान्यभिदधति । संख्यासाम्यान्न तत्समीचीनमतिप्रसङ्गात् ॥ ३४ ॥

**( ३ शान्तनवी )** चिञ् चयने । चयनं चितिरविकारता कूटरूपता तद्रूपेण । यद्वा चिती संज्ञाने । स्त्रियां 'इक्कृष्यादिभ्यः' इति इक्प्रत्ययः । चेतनं चितिः । संज्ञानरूपेण या देवी एतत् कृत्स्नं अखिलं जगत् व्याप्य स्थिता अविचलिता नमस्तस्यै । पुनःपुनर्नतेरनेककर्तृकत्वादनेकस्तोतृकत्वाच्च न पौनरुक्त्यमार्थं शाब्दं वा शङ्कनीयम् ॥ ३४ ॥

**( ४ नागोजीभट्टी )** चितिः चिच्छक्तिः ॥ ३४ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** त्रिमन्त्रश्लोककं पुनरिति । पुनः मन्त्रत्रयात्मक एकः श्लोकः । तथाहि चित्तिरूपेण या कृत्स्नमेतद्व्याप्य स्थिता जगत् । नमस्तस्यै स्वाहेति एको मन्त्रः ७८ ॥ ३४ ॥

**( ६ दंशोद्धारः )** चितिर्जीवचैतन्यम् ॥ ३४ ॥

---

१ 'भूतानामखिलेषु' इति पाठः । २ 'चित्तिरूपेण' इति पाठः ।

**स्तुता सुरैः पूर्वमभीष्टसंश्रयात्तथा सुरेन्द्रेण दिनेषु सेविता।**
**करोतु सा नः शुभहेतुरीश्वरी शुभानि भद्राण्यभिहन्तु चापदः ॥ ३५ ॥**

**( १ गुप्तवती )** पूर्वं महिषासुरकाले । दिनेषु प्रतिदिनम् ॥ ३५ ॥

**( २ चतुर्धरी )** सुरैर्देवैः पूर्वं महिषासुरवधकाले अभीष्टसंश्रयादभिमतलाभाद्धेतोः । दिनेषु प्रतिदिनं वा नोऽस्माकं शुभानि मङ्गलानि भद्राणि सुखानि अतिशयकल्याणानि वा ॥ ३५ ॥

**( ३ शान्तनवी )** पूर्वं पुराकल्पे सुरैः स्तुता तथा अभीष्टसंश्रयात् अभीष्टस्य वस्तुनः संश्रयात्कारणात् सुरेन्द्रेण दिनेषु सेविता । सुरेन्द्रः शक्रः ईशः शंकरः दिनेशः सूर्यः तैः सेविता आश्रिता । अतएव भद्रमणति भद्राणी । अस्तु भद्रमिति कथयती अतएव शुभहेतुः सा ईश्वरी ईश्वरपत्नी नः अस्माकं देवानां शुभानि मङ्गलानि करोतु जनयतु । किंच नः अस्माकं आपदश्च विरोधिजनितदुःखानि चाभिहन्तु विहन्तु । सुरेन्द्रेण दिनेषु सेविता इति पाठे सुरेन्द्रेण शक्रेण दिनेषु प्रत्यहं अभीष्टसंश्रयाद्धेतोः सेवितेत्यर्थः । शुभानि भद्राणि इति छेदे यानि नः शुभानि जगद्धितानि कर्माणि प्रार्थनीयानि तानि भद्राणि अनुकूलानि अबाधितानि अविघ्नानि करोत्वित्यर्थः । ईश्वरीति । 'अश्नोतेराशुकर्मणि वरट् चेचोपधायाः' इत्यपि व्युत्पत्त्यन्तरमनुसंधेयं । अभीष्टसंश्रयेतिपाठे अभीष्टः वाञ्छितः संश्रीयमाणः संश्रयोऽर्थो वा यस्याः सकाशात् भवति सा अभीष्टसंश्रया देवी ॥ ३५ ॥

**( ४ नागोजीभट्टी )** अत्रायं संग्रहः । 'विष्णुमाया चेतना च बुद्धिर्निद्रे क्षुधा तथा । छाया शक्तिश्च तृष्णा च क्षान्तिर्जातिस्ततः परम् । लज्जा शान्तिस्ततः श्रद्धा कान्तिर्लक्ष्मीस्ततः परम् । वृत्तिः स्मृतिर्दया चैव तुष्टिर्माता ततः परम् । भ्रान्तिर्व्याप्तिश्चितिश्चैव त्रयोविंशतिसंख्यकाः । इतोऽधिकमनार्षं स्यात्तन्त्रे कात्यायने स्फुटम्' । नवार्णपीठपूजाविधावेता एव त्रयोविंशतिः तत्कथनं व्याप्तिचित्योः त्यागश्च । तदयुक्तम् । कात्यायनीतन्त्रविरोधात् । स्तुतेति या शुभहेतुरीश्वरी सुरैर्ब्रह्मादिभिः पूर्वं स्तुता तथा इन्द्रेण च महिषवधे सत्यभीष्टस्य संश्रयात् दिनेषु प्रतिदिनं सेविता सा नः शुभानि भद्राणि अतिशयितशुभानि करोतु आपदश्च हन्त्वित्यन्वयः ॥ ३५ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** नमस्तस्यै स्वाहेति द्वितीयः ७९ । नमस्तस्यै नमो नमः स्वाहेति तृतीयः ८० । त्रयोविंशतिश्लोककेषु मन्त्रा वै सप्तषष्टिका इति । त्रयोविंशा ये श्लोककास्तेषु वै निश्चयेन सप्तभिरधिकाः षष्टिका मन्त्रा ज्ञेयाः । एवं द्वाविंशतिश्लोके ज्ञेयं मन्त्रत्रयं बुधैरिति । एवं गणनप्रकारेण द्वाभ्यामधिका विंशतिश्लोका या देवीत्येवमादिकास्तत्र बुधैः कात्यायनीतन्त्रज्ञैः पण्डितैः मन्त्रत्रयं मन्त्राणां त्रयं प्रतिश्लोकं ज्ञेयं बोध्यं । एक इन्द्रियाणामिति । पूर्वैस्त्रयोदशमन्त्रैः सहाशीतिरुदाहृता इति पूर्वैर्ऋषिरुवाच पुरा शुम्भनिशुम्भाभ्यामित्यादिभिः त्रयोदशैर्मन्त्रैः सहाशीतिर्विंशतिचतुष्टयमुदाहृताः कथिताः । आदौ त्रयोदशमन्त्राः सप्तषष्ट्यां देवीत्यादिमन्त्राः । एतैः सर्वैर्मिलित्वा अशीतिमन्त्रा जाता इत्यर्थः । स्तुता सुरेति च श्लोकद्वयं चेति तथाहि । स्तुता सुरैः पूर्वमभीष्टसंश्रयादिति ८१ ॥ ३५ ॥

**( ६ दंशोद्धारः )** स्तुतेति अभीष्टसंश्रयादभीष्टार्थलाभात् दिनेषु समयेषु शुभानि मङ्गलानि भद्राणि सुखानि निरतिशयकल्याणानि वा ॥ ३५ ॥

**या सांप्रतं चोद्धतदैत्यतापितैरस्माभिरीशा च सुरैर्नमस्यते।**
**या च स्मृता तत्क्षणमेव हन्ति नः सर्वापदो भक्तिविनम्रमूर्तिभिः ॥ ३६ ॥**

**( १ गुप्तवती )** ॥ ३६ ॥

**( २ चतुर्धरी )** सांप्रतं चेदानीमपि ॥ ३६ ॥

**( ३ शान्तनवी )** या सुरैः स्तुता देवी नः शुभहेतुरित्युक्तं सा का इत्याह । या देवी सांप्रतं इदानीं उद्धतदैत्यतापितैः उद्धतैर्निर्मर्यादैः बलोल्बणैः दैत्यैः शुम्भनिशुम्भादिभिस्तापितैः संतापितैरस्माभिः सुरैः ईशा स्वामिनी नमस्यते सेव्यते । या च देवी भक्तिविनम्रमूर्तिभिः सुरैः स्मृता च स्मृतैव सती तत्क्षणमेव स्मृतिकालएव नोऽस्माकं सुराणां सर्वापदो हन्ति । यद्वा सर्वापदो यतः स्युस्ते सर्वापदः शत्रवः तान् । सांप्रतमव्ययं । ईष्टे ईशा पचाद्यच् । 'इगुपधज्ञाप्रीकिरः कः' वा । भक्त्या विनम्रा मूर्तयः काया येषां ते तथोक्ताः तैर्नमस्यते इति 'नमोवरिवश्चित्रङः क्यच्' नमसः पूजायां । भावकर्मणोः सार्वधातुके यक् । 'यस्य हलः' 'क्यस्य विभाषा' इति यलोपः ॥ ३६ ॥

**( ४ नागोजीभट्टी )** येति । सांप्रतं च या ईशा सुरैरस्माभिः उद्धतदैत्यतापितैः पीडितैः नमस्यते स्तूयते च करोतु सा न इत्यनेनान्वयः ॥ ३६ ॥

---

१ 'अभीष्टसंश्रया तथा' इति पाठः । २ 'सुरेन्द्रेशदिनेश' इति शान्तनवीपाठः ।

**( ५ जगच्चन्द्रचन्द्रिका )** या सांप्रतं चोद्धतदैत्यतापितैरिति च द्वयं द्वौ मन्त्रौ वा ८२। अत्र रेफलोपश्चिन्त्यः ॥३६॥

**( ६ दंशोद्धारः )** ॥ ३६ ॥

## ऋषिरुवाच ।

## एवं स्तवादियुक्तानां देवानां तत्र पार्वती । स्नातुमभ्याययौ तोये जाह्नव्या नृपनन्दन ॥ ३७ ॥

**( १ गुप्तवती )** ॥ ३७ ॥

**( २ चतुर्धरी )** एवमुक्तरीत्या स्तवादौ युक्तानां देवानामिति सप्तम्यर्थे षष्ठी संबन्धे। देवानामपि अभिमुखं। अनादरे वा षष्ठी । देवान् अनादृत्य ययौ इत्यर्थः । जाह्नव्या गङ्गाया इत्यर्थः ॥ ३७ ॥

**( ३ शान्तनवी )** हे नृपनन्दन हे सुरथ एवमित्थं देव्याः स्तवाभियुक्तानां स्तुतिप्रवणचित्तानां देवानां अग्रतः तत्र हिमाद्रौ पार्वती देवी गौरी जाह्नव्या गङ्गायाः तोये पाथसि जलक्रीडां कर्तुं अभ्याययौ देवानामग्रतोऽभ्यागमत् ॥ ३७ ॥

**( ४ नागोजीभट्टी )** ऋषिरुवाच । एवमिति । तत्र देवसन्निहिते । हे राजन् पार्वती जाह्नव्यास्तोये स्नातुमिव स्वीयस्तवादियुक्तानामभि संमुखं ययावित्यर्थः ॥ ३७ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** एवं पुनर्ऋषिरिति । एवंप्रकारेण ऋषिरुवाचेत्ययं मन्त्रः ८३ । पुनः सप्तदशश्लोका इति । पुनः सप्तभिरधिका दश सप्तदश तत्संख्याकाः श्लोकाः श्लोकरूपा मन्त्राः । तथाहि एवं स्तवेति ८४ ॥ ३७ ॥

**( ६ दंशोद्धारः )** एवमिति । देवानामित्यनादरे षष्ठी । स्तुवतो देवाननादृत्य स्नातुं ययावित्यर्थः । पुरत इति शेषो वा ॥ ३७ ॥

## साब्रवीत्तान्सुरान्सुभ्रूर्भवद्भिः स्तूयतेऽत्र का । शरीरकोशतश्चास्याः समुद्भूताब्रवीच्छिवा ॥३८॥

**( १ गुप्तवती )** शरीरकोशतश्चेति । पुरा किल पार्वत्याः संबोधनं कालीति पदेन शिवः कदाचित् कृतवान् । तच्छ्रुत्वा स्वीयं नैल्यं मर्मस्थलेनोद्घाटितमिति धिया 'भूयसी च तवाप्रीतिरगौरमिति मे वपुः । क्रीडोक्तिरपि कालीति घटेत कथमन्यथा' इत्यादिकमुक्त्वा कुपिता पार्वती शिवेन यथाकथंचित्समाहितापि स्वकीयनीलरूपकोशनिरसनेच्छया शिवाज्ञयैव गौतमाश्रमं प्राप्य तत्र तपस्तप्त्वा भुजङ्गीकञ्चुकमिव कृष्णवर्णं कोशमुत्सृज्य गौरवर्णयुक्तशरीरेण गौरीति प्रसिद्धिं प्राप्य पुनः शिवसमीपं प्राप्ता । उत्सृष्टात्कोशादतिसुन्दरी नीलवर्णा काचित्पार्वत्या विभूतिरेव कन्यका प्रादुर्भूता । सेयं पार्वत्या सहैव संचरन्ती प्रत्युत्तरमाहेत्यर्थः । ननु सांप्रतमेव सा प्रादुर्भूतेति मन्तव्यं । शिवपुराणे वायुसंहितायामीदृशस्यैव कथानकस्याम्नानात् । 'दैत्यौ शुम्भनिशुम्भाख्यौ भ्रातरौ संबभूवतुः । ताभ्यां तपोबलाल्लब्धं ब्रह्मणः परमेष्ठिनः । अवध्यत्वं जगत्यस्मिन्पुरुषैरखिलैरपि । अयोनिजा तु या कन्या ह्यङ्गकोशसमुद्भवा । अजातपुंस्पर्शरतिरविलङ्घ्यपराक्रमा । तया तु नौ वधः संख्ये तस्यां कामाभिभूतयोः । इति चाभ्यर्थितो ब्रह्मा ताभ्यां प्राह तथास्त्विति' इत्यादिना । तथा तत्रैव का सा कौशिकीति शिवेन पृष्टा देव्युवाच । 'किं देवेन न सा दृष्टा या सृष्टा कौशिकी मया । तादृशी कन्यका लोके न भूता न भविष्यति । तस्या वीर्यं बलं विद्धि नित्यं विजयं तथा । शुम्भस्य च निशुम्भस्य मरणं च तथा रणे । प्रत्यक्षफलदानं च लोकाय भजते सदा । देवानां रक्षणेनैव ब्रह्मा विज्ञापयिष्यति' इत्याद्युक्तम् ॥ ३८ ॥

**( २ चतुर्धरी )** तस्याः पार्वत्याः शरीरकोशतो देहावरणकाच्चर्मण इति यावत् । शरीरसमुदायादित्यन्ये ॥ ३८ ॥

**( ३ शान्तनवी )** सा देवानामग्रतः किं कृतवतीत्याह । सा सुभ्रूः पार्वती तान्स्तुत्यभियुक्तान्सुरान् अब्रवीत् पृष्टवती । किमिति । हे सुराः अत्र हिमवति पर्वते भवद्भिः का स्तूयते इति । शोभने भ्रुवौ यस्याः सा सुभ्रूः । इह भवद्भिः का देवता स्तूयतेनाम इति देवान्पृष्टवती पार्वती । ततस्तां पार्वतीं प्रति तावद्देवैरेवोत्तरं दातुमुचितं । किंतु ततः प्रागेव किल तस्याः पार्वत्याः शरीरात्सकाशात् विनिर्गत्य शिवानामाद्या देवी पार्वतीं प्रति वाक्यमब्रवीत् । इयंहि सा भवत्तेजसां शिवा इति वचनात् ब्रह्मविष्णुमहेश्वरादिसर्वतेजोमयी शिवानामाद्या शक्तिरवसेया । एतदेव दर्शयति । अस्याः पार्वत्याः शरीरकोशतः शरीरकोश इव शरीरकोशः । 'कोशोऽस्त्री कुड्मले खड्गे पिधानेर्थौघदिव्ययोः' ततः शरीकोशतः । ज्ञानार्थनिधित्वेन सर्वजगन्निधित्वेन पार्वतीशरीरं कोशेनोपमीयते । परमानन्दनिधित्वेनेव कोशः । ततः उद्भूता शिवा देवी पार्वतीं प्रत्यब्रवीत् ॥ ३८ ॥

**( ४ नागोजीभट्टी )** तथापि तेषामज्ञानं दृष्ट्वा का स्तूयत इति पृच्छति । सेति । का मदन्या स्तूयते यन्मां नाभि॰

---

१ 'स्तवाभियुक्तानां' इति शान्तनवी ।

भाषथ मदन्याया अभावः । ततोऽप्यज्ञानमेव दृष्ट्वा तेषां दयया स्वयमब्रवीत् । अस्या इत्युक्तिः राजानं प्रति ऋषेः शरीररूपात्कोशतो गृहात् समुद्भूता सत्वप्रधानांशेन प्रादुर्भूताऽत एव शिवा अब्रवीदित्यर्थः ॥ ३८ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** साब्रवीदिति ८५ ॥ ३८ ॥

**( ६ दंशोद्धारः )** ॥ ३८ ॥

## स्तोत्रं ममैतत्क्रियते शुम्भदैत्यनिराकृतैः । देवैः समेतैः समरे निशुम्भेन पराजितैः ॥ ३९ ॥

**( १ गुप्तवती )** ॥ ३९ ॥

**( २ चतुर्धरी )** समस्तैः समुदितैः । समेतैरिति वा पाठः । समरे रणे ॥ ३९ ॥

**( ३ शान्तनवी )** किमित्यब्रवीत्तत्राह । स्तोत्रं ममैतत्क्रियते । समरे निशुम्भेन पराजितैरभिभूतैः शुम्भदैत्यनिराकृतैः शुम्भेन प्रत्यादिष्टैः समस्तैर्देवैः मम शिवायाः सर्वदेवतेजोमय्याः एतत्स्तोत्रं क्रियते इत्यब्रवीत् ॥ ३९ ॥

**( ४ नागोजीभट्टी )** किमब्रवीत्तदाह । स्तोत्रमिति । समेतैः मिलितैः रणे निशुम्भेन पराजितैः अतएव शुम्भेन निराकृतैः स्वर्गादिति शेषः ॥ ३९ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** स्तोत्रं ममेति ८६ ॥ ३९ ॥

**( ६ दंशोद्धारः )** ॥ ३९ ॥

## शरीरकोशाद्यत्तस्याः पार्वत्या निःसृताम्बिका । कौशिकीति समस्तेषु ततो लोकेषु गीयते ॥४०

**( १ गुप्तवती )** ॥ ४० ॥

**( २ चतुर्धरी )** यद्यस्मात्कौशिकी तालव्यशकारवती । कोशात् कौशिकदन्दशूकछिन्नशूक इति(?)शब्दभेददर्शनात् पृषोदरादित्वात्साधुत्वम् ॥ ४० ॥

**( ३ शान्तनवी )** यद्यस्मात्तस्याः पार्वत्याः शरीरकोशात् शरीरात् अम्बिका निःसृता निवृत्ता ततः कारणात् सा समस्तेषु लोकेषु कौशिकीति गीयते कथ्यते । पार्वत्याः शरीरकोशतः निःसृतासती शिवा कौशिकीति प्रख्यायते । कोशेन दीव्यति कोशतो निर्गमात् कौशिकी । 'तेन दीव्यति' इति ठक् । यद्वा कोशात् या निर्गता सा कोशेन निर्वृत्तैवेति । 'निर्वृत्तेऽक्षद्यूतादिभ्यः' इति ठक् ॥ ४० ॥

**( ४ नागोजीभट्टी )** शरीरेति । यत् निर्गता तत् कौशिकीति गीयते इत्यन्वयः । कौशिकीति पृषोदरादित्वात्साधु। तालव्यमिदम् ॥ ४० ॥

**( ५ जगच्चन्द्रचन्द्रिका )** शरीरकोशादिति ८७ ॥ ४० ॥

**( ६ दंशोद्धारः )** शरीरकोशादिति । कोशे भवा कौशिकी । अध्यात्मादित्वाट्ठञ् ॥ ४० ॥

## तस्यां विनिर्गतायां तु कृष्णाभूत्सापि पार्वती । कालिकेति समाख्याता हिमाचलकृताश्रया ४१

**( १ गुप्तवती )** तस्यां विनिर्गता या त्विति[1] । तस्या इति पञ्चमी । यात्विति तु तच्छब्दापेक्षया यच्छब्दः प्रथमान्तः । परदेवतासकाशाद्या तु विनिर्गता कौशिकी सापि पार्वत्येव परं तु कृष्णाभूदतः कालिकेत्याख्याता सती हिमाचल एव निखिलदेवप्रार्थितस्थाने तिष्ठति । न पुनः स्नानाद्यर्थं ततो निर्गत्य गतेत्यर्थः । देवेषु स्तुवत्सुसत्सु तं स्तवमङ्गीकृतवत्याः कौशिक्यास्तानुपेक्ष्यान्यत्र गमनस्यानुचितत्वादिति भावः । परदेवता तु तां तत्रैवावस्थाप्य स्नानार्थं गतेति त्वर्थाल्लभ्यते । तदुक्तं वायुसंहितायाम् । 'तत्कोशं सहसोत्सृज्य गौरी सा समजायत । तत्कोशादात्मनोत्सृष्टात्कौशिकी नाम नामतः । काली कालाम्बुदप्रख्या कन्यका समपद्यत' इत्यादिना । यदा तु प्रकृतश्लोके तस्यामिति विनिर्गतायामिति च पदद्वयं सप्तम्यन्तमेव बहुपुस्तकेषूपलम्भात्प्रामाणिकमित्याग्रहस्तदा तस्यामिति पदं परदेवतापरं कृत्वा गौर्यां स्नातुं वा स्नात्वा कैलासं वा विनिर्गतायां सत्यां कृष्णा या कालिका पार्वत्यभूत्सा हिमाचल एव कालिकानाम्नी उवासेति कौशिक्या एव कार्ष्ण्यवासौ व्याख्येयौ । शिवपुराणकालिकापुराणादिषु कौशिकीनिर्गमनोत्तरं परदेवताया गौरवर्णप्राप्तेः कथिताया विरोधेन परदेवतापि कृष्णा जातेति व्याख्याया अनुचितत्वादित्यवधेयम् ॥ ४१ ॥

**( २ चतुर्धरी )** ॥ ४१ ॥

**( ३ शान्तनवी )** सा भगवती पार्वत्यपि स्वात् शरीरकोशात्तस्यां सर्वदेवतेजोमय्यां कौशिक्यां भगवत्यां विनिर्गतायां सत्यां कृष्णा अभूत् कृष्णवर्णा समजनिष्ट । ततश्च सा पार्वती कालिकेति समाख्याता सती हिमाचलकृताश्रया हिमाद्रौ कृत-

---

[1] 'विनिर्गता या तु' इति गुप्तवतीसंमतः पाठः ।

निलयाभूत् । कृष्णवर्णार्थात् कालशब्दात् तद्वति वर्तमानात्संज्ञायां जनपदसूत्रेण ङीप् । संज्ञायां कन् । 'केणः' इति ह्रस्वः । 'काली हैमवतीश्वरी' । इह महामाया देवकार्यार्थं विष्णुयोगनिद्राभूत् । ततः सर्वदेवतेजोमयी शिवाभूत् । ततः पार्वत्यभूत् । ततः कौशिक्यभूत् देवकृतस्तुतिमङ्गीकर्तुं ततः कालिका अभूत् । सैवाम्बिका नामेत्याह ॥ ४१ ॥

**( ४ नागोजीभट्टी )** तस्यामिति । कृष्णसहोदरीत्वात्तमःप्रधानशिवशक्तित्वाच्च कृष्णवर्णत्वं सरस्वत्याः प्रादुर्भूतत्वाच्च शिवशक्तेस्तत एव पुनः सरस्वत्या निर्गम इति बोध्यम् । तदारभ्य शिवः कालीपतिरिति बोध्यम् । आश्रयः स्थानं । तदुक्तं वैकृतिकरहस्ये । 'गौरीदेहात्समुद्भूता या सत्त्वैकगुणाश्रया । साक्षात्सरस्वती प्रोक्ता शुम्भासुरनिबर्हिणी । दधौ चाष्टभुजा बाणमुसले शूलचक्रभृत् । शङ्खं घण्टां लाङ्गलं च कार्मुकं वसुधाधिप । एषा संपूजिता भक्त्या सर्वज्ञत्वं प्रयच्छति' । शिवपुराणसंहितायां । 'दैत्यौ शुम्भनिशुम्भाख्यौ भ्रातरौ संबभूवतुः । याचितं तपसा ताभ्यां ब्रह्मणः परमेष्ठिनः । अवध्यत्वं जगत्यस्मिन्पुरुषैरखिलैरपि । अयोनिजा तु या कन्या त्र्यङ्गकोशसमुद्भवा । अजातपुंस्पर्शरतिरविलङ्घ्यपराक्रमा । तस्या वध्यावुभौ संख्ये तस्यां कामाभिभूतये । इति चाभ्यर्थितो ब्रह्मा ताभ्यां प्राह तथास्त्विति' । (ततस्ताभ्यां जगति उपद्रुते ।) तयोर्लयाय देवेशं ब्रह्मा प्रार्थितवाञ्शिवम् । विनिन्द्यापि रहस्यं वां क्रोधयित्वा यथातथा । तद्वर्णकोशजां शक्तिमकामां कन्यकात्मिकाम् । निशुम्भशुम्भयोर्हन्त्रीं देवेभ्यो दातुमर्हसि । एवमभ्यर्थितो धात्रा भगवान्नीललोहितः । कालीत्याह रहस्यं वा' इत्युक्तं । क्रुद्धां तां दृष्ट्वा क्रीडार्थं कालीत्युक्तमिति शिवस्योक्तेः ।) 'भूयसी च तवा प्रीतिरगौरमिति मे वपुः । क्रीडोक्तिरपि कालीति घटते कथमन्यथा' इति देवीवचनमुपन्यस्य कथंचिद्देवी देवाज्ञया गौतमाश्रमं प्राप्य तपश्चरित्वा रजोगुणाधिकात् ब्रह्मणो गौररूपं प्राप्य नीलकोशमुत्सृष्टवती । ततः कोशादुद्भूता कौशिकीत्युक्तम् । 'तत्कोशं सहसोत्सृज्य गौरी सा समजायत । सा तु मायात्मिका शक्तिर्योगनिद्रा हरेः स्मृता' इति ततः प्रत्यागतया देव्या देवं प्रति कौशिकीमहिमा कथितः । 'किं देवेन न सा दृष्टा या सृष्टा कौशिकी मया । तादृशी कन्यका लोके न भूता न भविष्यति । अजातपुंस्पर्शरतिरधृष्या चातिसुन्दरी' इति ॥ ४१ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** तस्यां विनिर्गतायामिति ८८ ॥ ४१ ॥

**( ६ दंशोद्धारः )** ॥ ४१ ॥

## ततोऽम्बिकां परं रूपं बिभ्राणां सुमनोहरम् । ददर्श चण्डो मुण्डश्च भृत्यौ शुम्भनिशुम्भयोः ४२

**( १ गुप्तवती )** परं रूपमिति । रूपान्तरं कौशिकीनामकमित्यर्थः । उत्कृष्टं लावण्यं वा । स्थूलं सूक्ष्मं परं चेति त्रिविधदेवतारूपश्लेषाच्चरमरूपमित्यर्थः । तत्पक्षे सुमनोहरं 'सर्वे देवा यत्रैकं भवन्ति' इति श्रुतिसिद्धसर्वदेवतातादात्म्यवत् । चण्ड इति तु चण्डीपतिरिति रहस्यं । इतरत्प्रकटार्थमेव ॥ ४२ ॥

**( २ चतुर्धरी )** ततो हेतोः परं प्रकृष्टं रूपं सौन्दर्यं बिभ्राणां धारयन्तीम् ॥ ४२ ॥

**( ३ शान्तनवी )** ततोऽनन्तरं । यद्वा । ततस्तत्र हिमवति गिरौ आद्यादित्वात्तसिः । शुम्भनिशुम्भयोः भृत्यौ सेवकौ चण्डो मुण्डश्च परं अतितरां सुमनोहरं रूपं बिभ्राणां दधानां अम्बिकां कालिकाख्यां पार्वतीं ददर्श अद्राक्षीत् । सुमनोहरामिति पाठे देवीविशेषणं । परं रूपं बिभ्रतीं सुमनोहरां देवीं ददर्शेत्यर्थः । चडि कोपे । चण्डते चण्डः । मुडि खण्डने । मुण्डति मुण्ड्यति वा मुण्डः ॥ ४२ ॥

**( ४ नागोजीभट्टी )** ततोऽम्बिकामिति । परमुत्कृष्टम् ॥ ४२ ॥

**( ५ जगच्चन्द्रचन्द्रिका)** ततोऽम्बिकामिति ८९ ॥ ४२ ॥

**( ६ दंशोद्धारः )** ॥ ४२ ॥

## ताभ्यां शुम्भाय चाख्याता सातीव सुमनोहरा । काप्यास्ते स्त्री महाराज भासयन्ती हिमाचलम् ४३

**( १ गुप्तवती )** ॥ ४३ ॥

**( २ चतुर्धरी )** शुम्भायेति क्रियायोगे चतुर्थी । भासयन्ती दीपयन्ती ॥ ४३ ॥

**( ३ शान्तनवी )** सा रूपवती कालिका देवी ताभ्यां चण्डमुण्डाभ्यां शुम्भाय महासुराय आख्याता च शुम्भसमक्षमुक्ता । किमिति । हे महाराज हे शुम्भ दैत्येश्वर समधिगतसर्वैश्वर्य सावधानो भव । अतीव सुमनोहरा कापि स्त्री आस्ते । किं कुर्वती । हिमाचलं हिमाद्रिं भासयन्ती स्वयं श्यामा श्यामाभिः शोभाभिः अदभ्रशुभ्रं शोभाढ्यं हिमाद्रिं भासोभिर्भासयन्ती पार्वती आस्ते । आख्याता अतीवेत्यत्र वाक्ये वैवक्षितं संधिकार्यं । शुम्भायेति क्रियाग्रहणं कर्तव्यमिति संप्रदानत्वं पत्ये शेते इतिवत् । 'बलवत्सुष्ठु किमुत स्वत्यतीव च निर्भरे' अतिवेति छेदः । सुष्ठु मनो हरति सुमनोहरा । 'हरतेरनुद्यमनेऽच्' । यद्वा

इः कामः वसु धनं येषां ते इवसवः कामधनाः तेषां मनः इवसुमनः तत् हरति इति इवसुमनोहरा । अत्यर्थं इवसुमनोहरा अतीवसुमनोहरा इत्यम्बिकां प्रत्यनिष्टोऽर्थः । तस्याः पातिव्रत्यभङ्गप्रसङ्गात् । इष्टोऽर्थस्त्वेषः । शोभनं मनो यस्य स सुमनाः शंभुस्तं रहस्यर्धाङ्गहरत्वात्सुमनोहरा । अतितरां सुमनोहरा अतीवसुमनोहरा । यद्वा पै ओवै षोशणे । इं कामं वायति शोषयति इवः शिवः । यद्वा इं कामं वाति गच्छति इवः शिवः । आतोऽनुपसर्गे कः । इवस्य सुमनोहरा इवसुमनोहरा । अत्यधिकं इवसुमनोहरा अतीवसुमनोहरा । यद्वा इः कामः ईः लक्ष्मीः वसवश्चाष्टौ प्रसिद्धाः ध्रुवादयः इवसवः अतिक्रान्ता इवसून् अतीवसुः शंभुः अतीवसोः शंभोः मनोहरा अतीवसुमनोहरा । 'ध्रुवो धरश्च सोमश्च ह्यापश्चैवानिलोऽनलः । प्रत्यूषश्च प्रभावश्च वसवोऽष्टौ ध्रुवादयः' ॥ ४३ ॥

**( ४ नागोजीभट्टी )** ताभ्यामिति ।। शुम्भायेति क्रियायोगे चतुर्थी । कापि अनिर्वाच्या ॥ ४३ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** ताभ्यां शुम्भायेति ९० ॥ ४३ ॥

**( ६ दंशोद्धारः )** ताभ्यामिति । आख्याता कथिता । अतीवेति । संहिताया अविवक्षणान्न संधिः । भासयन्ती दीपयन्ती ॥ ४३ ॥

## नैव तादृक् कचिद्रूपं दृष्टं केनचिदुत्तमम् । ज्ञायतां काप्यसौ देवी गृह्यतां चासुरेश्वर ॥ ४४ ॥

**( १ गुप्तवती )** ॥ ४४ ॥

**( २ चतुर्धरी )** ॥ ४४ ॥

**( ३ शान्तनवी )** हे असुरेश्वर हे शुम्भ क्वचिदपि भुवने केनचिदपि पुंसा तादृक् तादृशं उत्तमं अतिसुन्दरं रूपं आकारः नैव दृष्टं नैवालोकि । हे शुम्भ असौ कापि देवी देवस्त्री । यद्वा कापि कृताभिषेका राज्ञी इति त्वया ज्ञायतामवगम्यतां । अथ त्वया गृह्यतां उपादीयतां इत्यम्बिकां प्रत्यनिष्टोऽन्वयः । इष्टस्त्वेषः । हे असुरेश्वर हे शुम्भ तादृगुत्तमं क्वचिद्रूपं ज्ञानरूपं क्वापि केनचित् दृष्टं किं । न क्वापि न केनापि । तस्मादसौ देवी कापि परदेवता इति त्वया ज्ञायतां । असौ कापि एका स्त्री अबलास्तीति नैव ज्ञायतां । अपि त्वसौ देवी । गृह्यतां चात्मसंरक्षणार्थमाश्रीयतामिति हितोपदेशः शुम्भं प्रति ताटस्थ्येन ॥ ४४ ॥

**( ४ नागोजीभट्टी )** नैवेति । असौ देवी कापि अतो ज्ञायतां मनुष्यद्वारा तत्स्वरूपं विचार्यतां गृह्यतां च अङ्गीक्रियतां च ॥ ४४ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** नैव तादृगिति ९१ ॥ ४४ ॥

**( ६ दंशोद्धारः )** ॥ ४४ ॥

## स्त्रीरत्नमतिचार्वङ्गी द्योतयन्ती दिशस्त्विषा । सा तु तिष्ठति दैत्येन्द्र तां भवान्द्रष्टुमर्हति ॥ ४५ ॥

**( १ गुप्तवती )** ॥ ४५ ॥

**( २ चतुर्धरी )** स्त्रीरत्नमुत्तमस्त्री । अजहल्लिङ्गत्वान्नपुंसकत्वम् ॥ ४५ ॥

**( ३ शान्तनवी )** हे दैत्येन्द्र हे शुम्भ त्विषा दीप्त्या दिशः दशापि ककुभः द्योतयन्ती अङ्गकान्त्या भासयन्ती अतिचार्वङ्गी अत्यन्तं चारु मनोहरं अङ्गं यस्याः सा तथोक्ता स्त्रीनाम रत्नं । रत्नं हि मनोहरत्वेनोत्कृष्टं सा पुनरुत्कृष्टा तिष्ठति तां भवान् द्रष्टुमर्हति इत्ययमम्बिकां प्रत्यनिष्टोऽन्वयः । इष्टस्त्वेषः । हे दैत्येन्द्र हे शुम्भ सा नूनं स्त्रीरत्नं सा नूनं अति चार्वङ्गी सा नूनं त्विषा दिशो द्योतयन्ती तिष्ठति किं तया ते कृतं स्यात् । तां भवान्द्रष्टुमर्हति । यस्तां दोषबुद्ध्या पश्येन्नश्येत्स तदैव । तस्मात्तां द्रष्टुं भवान् मा यततामिति शुम्भं प्रति ताटस्थ्येन हितोपदेशः । रमन्ते यस्मिन् रत्नं रत्नमिति प्रख्यातमणावेव न केवलं । 'जातौ जातौ यदुत्कृष्टं तद्रत्नमभिधीयते' ॥ ४५ ॥

**( ४ नागोजीभट्टी )** ननु किमर्थमङ्गीकारस्तस्या इत्यत आह । स्त्रीरत्नमिति । उत्तमा स्त्रीत्यर्थः । भवान् तां द्रष्टुमर्हति सा तव दर्शनयोग्या । अतोऽङ्गीक्रियतामिति भावस्तु हेतौ ॥ ४५ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** स्त्रीरत्नमतीति ९२ ॥ ४५ ॥

**( ६ दंशोद्धारः )** स्त्रीरत्नमिति । स्त्रीरत्नमिव स्त्रीरत्नम् ॥ ४५ ॥

## यानि रत्नानि मणयो गजाश्वादीनि वै प्रभो । त्रैलोक्ये तु समस्तानि सांप्रतं भान्ति ते गृहे ४६

**( १ गुप्तवती )** ॥ ४६ ॥

**( २ चतुर्धरी )** रत्नानि स्वजातिश्रेष्ठानि । 'यद्यच्छ्रेष्ठतमं जातौ तद्रत्नमभिधीयते' इत्यभिधानात् । मणयो रत्नादयः । भान्ति दीप्यन्ते । विद्यन्त इत्यर्थः ॥ ४६ ॥

( ३ शान्तनवी ) हे प्रभो हे त्रैलोक्येश्वर शुम्भ यानि यान्येव त्रैलोक्ये गजाश्वादीनि तत्तज्जातिप्रधानान्युत्कृष्टानि रत्नानि तथा देदीप्यमानानि पद्मरागादयो मणयश्च रत्नानि तानि समस्तानि सर्वाणि सांप्रतं अधुना ते तव गृहे वर्तन्ते । वै प्रसिद्धमेवैतत् । ताटस्थ्येपि प्रायेणैषोन्वयः । हे प्रभो शुम्भ त्वं दूतवचनात्तामानयितुं यतेथाः चेत्तर्हि यानि त्रैलोक्ये गजाश्वादीनि रत्नानि वै प्रसिद्धानि मणयश्च रत्नानि तानि समस्तानि ते गृहे सांप्रतं तु संप्रत्यधुनैव वर्तन्ते । त्वद्दर्शनोत्तरकालं तु न स्युः । किंतु त्रैलोक्ये एव तानि यथास्थानं स्युरिति शुम्भं प्रति हितोपदेशः ॥ ४६ ॥

( ४ नागोजीभट्टी ) यदि सा रत्नभूता कथमस्माकं स्यादत आह । यानीति । यानि गजाश्वादीनि रत्नानि स्वजातिश्रेष्ठानि । तुः हेतौ । एवं च समस्तानि समस्तरत्नानि यतस्तव गृहे अत इयमपि तव भविष्यतीति भावः ॥ ४६ ॥

( ५ जगच्चन्द्रचन्द्रिका ) यानि रत्नानीति ९३ ॥ ४६ ॥

( ६ दंशोद्धारः ) यानीति । गजआदीनि रत्नानि । 'रत्नं स्वजातिश्रेष्ठं स्यात्' इति मेदिनी । भान्ति दीप्यन्ते ॥४६॥

**ऐरावतः समानीतो गजरत्नं पुरंदरात् । पारिजाततरुश्चायं तथैवोच्चैःश्रवा हयः ॥ ४७ ॥**

( १ गुप्तवती ) ॥ ४७ ॥

( २ चतुर्धरी ) ॥ ४७ ॥

( ३ शान्तनवी ) गजाश्वादिशब्दविवक्षितरत्नजातानि नामतो निर्देष्टुमाह । गजो रत्नमितिपाठ उत्तरत्र रत्नप्राधान्यसूचनार्थं । गजरत्नमिति पठे रत्नानीति वक्ष्यमाणरत्नोपसंहारवशात्सर्वत्र रत्नोपक्रमोप्यवगन्तव्यः । यः पुरंदरात् ऐरावतो नाम गजः समानीतः तत् गजरत्नं गृहे ते वर्तते । निर्दिश्यमानप्रतिनिर्दिश्यमानयोरेकत्वमापादयन्ति सर्वनामानि विपर्ययेण तल्लिङ्गभाञ्जि भवन्ति । एति भ्राम्यति अनया इरा तद्वान् इरावान् सुरोदः सुरासमुद्रः तत्र जातः ऐरावतः । पुराण्यरीणां दारयति पुरंदरः । गज इति रत्नं गजरत्नं । हे प्रभो अयं च यः पुरंदरात्पारिजाततरुः समानीतः तत्तरुरत्नं ते गृहे वर्तते । पारिणः पारवतोऽब्धेर्जातः पारिजाताख्यस्तरुः । हे प्रभो तथा पुरन्दरादेव उच्चैःश्रवाः हयः समानीतः तद्धयरत्नं ते गृहे वर्तते । उच्चैः श्रवसी यस्य स उच्चैःश्रवाः ॥ ४७ ॥

( ४ नागोजीभट्टी ) तदेव विवृणोति । ऐरावत इति ॥ ४७ ॥

( ५ जगच्चन्द्रचन्द्रिका ) ऐरावत इति ९४ ॥ ४७ ॥

( ६ दंशोद्धारः ) ॥ ४७ ॥

**विमानं हंससंयुक्तमेतत्तिष्ठति तेऽङ्गणे । रत्नभूतमिहानीतं यदासीद्वेधसोऽद्भुतम् ॥ ४८ ॥**

( १ गुप्तवती ) ॥ ४८ ॥

( २ चतुर्धरी ) विमानं हंससंयुक्तं देवयानं यत् वेधसो ब्रह्मण असीत् तत् इहानीतं ते तवाङ्गणे चत्वरे तिष्ठतीत्यन्वयः । अद्भुतमाश्चर्यहेतुकं विमानविशेषणं । यद्वा अद्भुतमाश्चर्यमेतत् । यस्माद्वरप्राप्तस्यैव विमानमानीतमिति ॥ ४८ ॥

( ३ शान्तनवी ) हे प्रभो यत् वेधसः ब्रह्मणोऽपि स्रष्टुरपि अद्भुतं आश्चर्यकारि विमानमासीत् तत् हंससंयुक्तं रत्नभूतं रत्नत्वं प्राप्तं विमानं यानरत्नं देवयानं इहानीतं तत्ते गृहे तेऽङ्गणे तिष्ठति । विविक्तं मान्ति वर्तन्तेऽस्मिन् देवाः विमानं देवयानं । 'देवयानं विमानोऽस्त्री' ॥ ४८ ॥

( ४ नागोजीभट्टी ) विमानमिति । वेधसो वरप्रदस्यापि यद्विमानमानीतं तदद्भुतम् । एवं च द्योवर्तिसकलाजय्यत्वं सूचितम् । बलान्न तु दत्तं । दत्तवरत्वाच तेनोपेक्षितं इति हृदयम् ॥ ४८ ॥

( ५ जगच्चन्द्रचन्द्रिका ) विमानमिति ९२ ॥ ४८ ॥

( ६ दंशोद्धारः ) विमानमिति । अद्भुतं आश्चर्यहेतुकं विमानं । यद्वा यस्माद्वेधसो वरः प्राप्तस्तथैव विमानमानीतमित्यद्भुतम् ॥ ४८ ॥

**निधिरेष महापद्मः समानीतो धनेश्वरात् । किंजल्किनीं ददौ चाब्धिर्मालामम्लानपङ्कजाम् ॥४९**

( १ गुप्तवती ) ॥ ४९ ॥

( २ चतुर्धरी ) महापद्मनामा । किञ्जल्किनीनाम्नी अगणितकेसरात्मिका वा ते तव गृहे तिष्ठतीत्यन्वयः ॥ ४९ ॥

( ३ शान्तनवी ) हे प्रभो धनेश्वरात् कुबेरात् य एष महापद्मो नाम निधिः समानीतः तदेव निधिरत्नं ते गृहे वर्तते । महांश्चासौ पद्मश्च महापद्मः । यद्वा महान्तः पद्मा निधिभेदाः यस्माद्भवन्त्युत्पद्यन्ते स महापद्मः । हे प्रभो तुभ्यं अब्धिः समुद्रः किंजल्किनीं किंजल्काः केसराः तद्युक्तामविशीर्णकेसरां । अवयवगतधर्मः केसरवत्त्वं मालायापि अपङ्कजारब्धत्वादवय-

वाक्यव्यभेदोपचारात्प्राप्नुवन्ति कर्णस्थकुण्डलेन कुण्डलीदेवदत्त इतिवत् किंजल्किनीत्युक्तं । अथ सर्वदा अम्लानपङ्कजां अविशुष्ककमलां मालां स्रजं ददौ स्रग्रत्नं ददौ । पङ्कजरत्नं वा उपचारतः किंचिज्जलति जडीभवति किंजल्कः ॥ ४९ ॥

( ४ नागोजीभट्टी ) निधिरिति । किंजल्किनीं तन्नामिकां ददावित्यस्य भयादिति शेषः ॥ ४९ ॥

( ५ जगच्चन्द्रचन्द्रिका ) निधिरेष इति ९६ ॥ ४९ ॥

( ६ दंशोद्धारः ) ॥ ४९ ॥

**छत्रं ते वारुणं गेहे काञ्चनस्रावि तिष्ठति । तथायं स्यन्दनवरो यः पुरासीत्प्रजापतेः ॥ ५० ॥**

**( १ गुप्तवती )** ॥ ५० ॥

**( २ चतुर्धरी )** ते तव गेहे तिष्ठतीत्यन्वयः । स्यन्दनवरो रथमुख्यः प्रजापतेर्ब्रह्मणः ॥ ५० ॥

**( ३ शान्तनवी )** हे प्रभो यत् वारुणं वरुणसंबन्धि काञ्चनस्रावि छत्रं तत् छत्ररत्नं ते तव गृहे तिष्ठति नान्यत्र । काञ्चनं सुवर्णं स्रवति वर्षति काञ्चनस्रावीति व्याख्यानं उत्कर्षाभावादुपेक्षणीयं प्रेक्षावद्भिः । यस्य गृहे महापद्मादयो निधयः सन्ति तस्य छत्रस्रावितस्वर्णेन किं स्यात् । कस्तर्हि विग्रहः कान्त्या काञ्चनं स्रवति वर्षति इति काञ्चनस्रावि । यद्वा कान्त्या काञ्चनस्रावि काञ्चनवर्षी कल्पवृक्षः । यद्वा काञ्चनकान्तिमिव कान्तिं स्रवति काञ्चनस्रावि । यद्वा काञ्चनस्येव कान्तिं स्रवति काञ्चनस्रावि । पृषोदरादित्वादीप्सितशब्दसिध्या कान्तिशब्दलोपः । यद्वा कचि दीप्तिबन्धनयोः काञ्चनं दीप्तिः प्रभा । काञ्चनमेव काञ्चनं । 'अन्येषामपि दृश्यते' इति दीर्घः पूरुषवत् । काञ्चनं दिप्तिं छविं स्रवति वर्षति तच्छीलं काञ्चनस्रावि लावण्यस्रावि मुखमितिवदुत्प्रेक्षितमेतत् । काञ्चनंनाम वैदिकनिघण्टुतः स्वार्णीकमम्भः स्रवतीति काञ्चनस्रावि इति तु व्याख्यानं कुशकाशावलम्बनं । अथ द्वितीयोऽन्वयः । हे प्रभो हे शुम्भ यत् वारुणं वरुणसंबन्धि छत्रं तत् छत्ररत्नं ते तव काञ्चनस्रावि गेहे तिष्ठति काञ्चनस्रावि इति सप्तम्येकवचनान्तं गृहे इत्यस्य विशेषणं । स्रु गतौ । 'हेतुमतिच' इति णिच् ण्यन्तात् क्विप् । 'ण्यल्लोपावियङ्यणगुणवृद्धिदीर्घेभ्यः पूर्वविप्रतिषेधेन इति अकृत्वावृध्यावादेशौ णिलोपः । ततः 'प्रत्ययलोपे प्रत्ययलक्षणं' इति वृद्धिः । अवादेशस्तु वर्णाल्यत्वात् प्रत्ययलक्षणेन न भवति । गवे हितं गोहितं इत्यवादेशवत् । वर्णाश्रयविधौ प्रत्ययलक्षणं नेष्यते । पुंसि काञ्चनानां स्रौः काञ्चनस्रौः काञ्चनानां प्रापयिता । नपुंसके तु 'ह्रस्वो नपुंसके प्रातिपदिकस्य' 'एच इग्घ्रस्वादेशे' । काञ्चनस्य तु त्रपुशब्दवद्रूपं । 'तृतीयादिषु भाषितपुंस्कं पुवद्गालवस्य' इति ङौ ह्रस्वश्च नुम् च न भवति अवादेशः । काञ्चनस्रावि । पक्षे काञ्चनस्रुणि गृहे । हे प्रभो अयं स्यन्दनवरः । अयमितिको नु । यः पुराकल्पे प्रजापतेः ब्रह्मणः आसीत् तदिदं नाम रथरत्नं तथा त्वया समानीतं समानायितमिति वाक्यशेषः । स्यन्दनेषु वरः श्रेष्ठः । 'याने चक्रिणि युद्धार्थे शताङ्गः स्यन्दनो रथः' ॥ ५० ॥

**( ४ नागोजीभट्टी )** छत्रमिति । काञ्चनस्रावि स्वर्णवर्षणशीलं प्रजापतेर्दक्षस्य अयं रिपूणामजेयः ॥ ५० ॥

**( ५ जगच्चन्द्रचन्द्रिका )** छत्रं त इति ९७ ॥ ५० ॥

**( ६ दंशोद्धारः )** छत्रमिति । प्रजापतेः दक्षस्य । कश्चित्तु ब्रह्मण इत्याह तन्न । वेधसो विमानमानीतमित्युक्तत्वात् ५०

**मृत्योरुत्क्रान्तिदानाम शक्तिरीश त्वया हृता । पाशः सलिलराजस्य भ्रातुस्तव परिग्रहे ॥ ५१ ॥**

**( १ गुप्तवती )** ॥ ५१ ॥

**( २ चतुर्धरी )** अन्य आहन्ति मरणं ददातीत्युत्क्रान्तिदा । उत्क्रान्तौ मरणकाले द्यति खण्डयतीति वा हेऽइश परिग्रहे विषयेसद्मनि इत्यर्थः । यद्वा परिगृह्यतेऽनेनेति परिग्रहो हस्तः तिष्ठतीति शेषः ॥ ५१ ॥

**( ३ शान्तनवी )** हे ईश स्वामिन् मृत्योरन्तकस्य संहारकालस्य या शक्तिः सा उत्क्रान्तिदा नाम प्रसिद्धा सा त्वया हृता गृहीता । 'भुजिमृङ्भ्यां युक्त्युकौ' 'मृत्युः स्त्रीपुंसयोरन्ते' । मृयन्तेस्मिन्नुपस्थितेन्ते प्राणिन इति मृत्युः । प्राणिनामायुषोन्ते या प्राणाकर्षणकारिणी शक्तिः सोत्क्रान्तिदोत्क्रान्तिलिङ्गकायविनिर्वृतिः । उत्क्रमणमुत्क्रान्तिस्तां ददाति उत्क्रान्तिदा 'कासूसामर्थ्ययोः शक्तिर्देवतायामृषावपि' । हे प्रभो हे शुम्भ तव भ्रातुः निशुम्भस्य परिग्रहे परिजने विषये सलिलराजस्य अपांपतेः वरुणस्य पाशः आयुधं वर्तते । 'पत्नीपरिजनादानमूलपाशाः परिग्रहाः' । 'पाशो बन्धनशस्त्रयोः' ॥ ५१ ॥

**( ४ नागोजीभट्टी )** मृत्योरिति । उत्क्रान्तिर्मरणं । परिग्रहे परिजने करणव्युत्पत्त्या हस्ते वा ॥ ५१ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** मृत्योरुत्क्रान्तिदेति ९८ ॥ ५१ ॥

**( ६ दंशोद्धारः )** मृत्योरिति । उत्क्रान्तिर्मरणं तां ददातीत्युत्क्रान्तिदा । परिग्रहे सद्मनि । यद्वा परिगृह्यतेऽनेनेति परिग्रहो हस्तः । 'पुंसि संज्ञायां' इति घः । तस्मिन् तिष्ठतीति शेषः ॥ ५१ ॥

**निशुम्भस्याब्धिजाताश्च समस्ता रत्नजातयः । वह्निश्चापि[1] ददौ तुभ्यमग्निशौचे[2] च वाससी ॥५२॥**

**( १ गुप्तवती )** अग्निशौचे इति सदैवाग्निवन्निर्मले अग्निप्रक्षेपापनेयमले वा ॥ ५२ ॥

**( २ चतुर्धरी )** वाससी अन्तरीयोत्तरीये । अग्निशौचे अग्निरेव शौचं नैर्मल्यकरणं ययोस्ते । अग्नौ क्षिप्ते निर्मले भवतः । अग्निरेव शौचं निर्मलं ययोरिति वा ॥ ५२ ॥

**( ३ शान्तनवी )** किंच हे प्रभो ते तव भ्रातुर्निशुम्भस्य गृहे अब्धिजाताः रत्नाकरसमुद्भूताः समस्ताः सकलाः रत्नजातयश्च उत्तमरत्नप्रकारास्तिष्ठन्ति । 'जातिः सामान्यजन्मनोः' । मुक्ताफलविद्रुमहरिन्मणिवज्रपद्मरागाद्याः रत्नजातयः । 'रत्नं रत्नमिति प्रख्या मणिष्वेव न केवलं । 'जातौ जातौ यदुत्कृष्टं तद्रत्नमभिधीयते' । हे प्रभो तुभ्यं वह्निश्चापि वैश्वानरो देवोपि अग्निशौचे नाम वाससी वसने ददौ दत्तवान् । अग्नौ निक्षेपतः शौचं निर्मलीकरणं ययोस्ते अग्निशौचेयवाससी । कल्पवृक्षोपकल्पितं स्वर्णमयमग्निदेवताकमग्निनिक्षेपेण विमलात्मकं वासोयुग्ममग्निशौचमाहुः ॥ ५२ ॥

**( ४ नागोजीभट्टी )** निशुम्भस्येति । अब्धिजाता रत्नजातयश्च निशुम्भस्य परिग्रह इत्यर्थः । अग्निशौचे अग्निरेव नैर्मल्यकरणं ययोरित्यर्थः । कल्पवृक्षोपकल्पितं अग्निप्रक्षेपान्नैर्मल्यं वासोयुग्मं अग्निशौचाख्यमाहुः ॥ ५२ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** निशुम्भस्येति ९९ ॥ ५२ ॥

**( ६ दंशोद्धारः )** निशुम्भस्येति । अग्नौ शौचं नैर्मल्यं ययोः । अग्निप्रक्षेपेणैव निर्मले भवत इत्यर्थः । यद्वा अग्निरिव शौचं ययोर्मलसंसर्गाभावादित्यर्थः ॥ ५२ ॥

**एवं दैत्येन्द्र रत्नानि समस्तान्याहृतानि ते । स्त्रीरत्नमेषा कल्याणी त्वया कस्मान्न गृह्यते ॥५३॥**

**( १ गुप्तवती )** ॥ ५३ ॥

**( २ चतुर्धरी )** तेन त्वया क्रमभेदाधिकारात् तृतीयायास्ते निपातः ॥ ५३ ॥

**( ३ शान्तनवी )** एवमित्थमुक्तरीत्या ऐरावतः समानीत इत्याद्यया हे दैत्यन्द्र । यद्वा हे दैत्य हे शुम्भ इन्द्ररत्नानि इन्द्रादीनां देवानां ऐरावतादीनि रत्नानि समस्तानि ते तव तुभ्यं आहृतानि उपढौकितानि उपहारीकृतानि । एषा च कल्याणी अम्बिका स्त्रीरत्नं वर्तते । तत् स्त्रीरत्नं त्वया शुम्भेन कस्मात् कारणान्न गृह्यते । अग्रहणे न किंचित्कारणमिति तस्मात्तत् गृह्यतामित्यर्थः । अयं त्वम्बिकां प्रत्यनिष्टोऽर्थः । अयं लिष्टोऽर्थः तटस्थोक्तिसमाधिना । हे दैत्येन्द्र हे शुम्भ यद्यप्येवमुक्तरीत्या ऐरावतादीनि समस्तानि रत्नानि ते तुभ्यं शुम्भाय आहृतानि देवैरुपहारीकृतानि तथाप्येषा स्त्रीरत्नं अम्बिका ते तव शुम्भस्य कल्याणी शुभकारिणी न । यतः एषा भगवती । त्वं अन्यं यातीति त्वया । 'आतोऽनुपसर्गे कः' अन्यगामिनीति गृह्यते ज्ञायते । त्वशब्दोऽन्यवाची सर्वादिषु पठ्यते । त्वं अन्यं महेश्वरं याति त्वया । यतः एषा अन्यया अन्यपत्नी महेश्वरपत्नी दैत्योपसंहारकारिणी । अतः शुम्भस्य शुभकारिणी न । तस्मात्तच्चिन्तां त्यजेति हितोपदेशोऽयम् ॥ ५३॥

**( ४ नागोजीभट्टी )** एवमिति । ते इति कर्तुः शेषत्वविवक्षायां षष्ठी ॥ ५३ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** एवं दैत्येन्द्रेति १०० ॥ ५३ ॥

**( ६ दंशोद्धारः )** एवमिति । ते त्वया । विभक्तिप्रतिरूपकमव्ययम् ॥ ५३ ॥

### ऋषिरुवाच ।

**निशम्येति वचः शुम्भः स तदा चण्डमुण्डयोः । प्रेषयामास सुग्रीवं दूतं देव्या महासुरम्[3] ॥५४॥**

**( १ गुप्तवती )** ॥ ५४ ॥

**( २ चतुर्धरी )** ॥ ५४ ॥

**( ३ शान्तनवी )** महासुरः शुम्भः तदा चण्डमुण्डयोः प्रति प्रागुक्तमुपन्यस्तं वचनं निशम्य श्रुत्वा सुग्रीवं नाम दूतं संदेशहरं देव्याः देवीमुद्दिश्य प्रेषयामास प्रस्थापयामास । शाम्यतिर्निपूर्वः श्रवणार्थः । इष गतौ प्रपूर्वः । आद्गुणः । देव्याः इति कर्मणि ल्यब्लोपे पञ्चमी । महासुरः इति शुम्भस्य विशेषणं । दूत इति दूयतेऽनेन यथोक्तवादित्वात्परिताप्यते पर इति दूतः ॥ ५४ ॥

**( ४ नागोजीभट्टी )** ऋषिरुवाच । निशम्येति । सुग्रीवं तन्नामानम् ॥ ५४ ॥

---

१ 'वह्निरपि' इति पाठः । २ 'अग्निशौचेय' इति पाठः । ३ 'महासुरः' इति शान्तनवीस्थः पाठः ।

**( ५ जगच्चन्द्रचन्द्रिका )** ऋषिरुवाचेति । ऋषिरुवाच स्वाहेति १०१ । एकाधिकशतं मन्त्रा जाता इत्यर्थः । श्लोकत्रयं तत इति । ततोऽनन्तरं श्लोकत्रयं श्लोकत्रयात्मकास्त्रयो मन्त्राः । तथाहि निशम्येति १०२ ॥ ५४ ॥

**( ६ दंशोद्धारः )** ॥ ५४ ॥

**इति चेति च वक्तव्या सा गत्वा वचनान्मम । यथा चाभ्येति संप्रीत्या तथा कार्यं त्वया लघु ५५**

**( १ गुप्तवती )** इति चेति चेति स्वोक्तानुनयनैष्ठुर्यवचसोऽभिनीय प्रदर्शनं लघु क्षिप्रमभ्येतीत्यनेनान्वेति । तेनोत्कण्ठातिशयध्वनिः ॥ ५५ ॥

**( २ चतुर्धरी )** इतीदृशं इति चेति चण्डमुण्डवचनानुवादः । कार्यं करणीयं । लघु शीघ्रम् ॥ ५५ ॥

**( ३ शान्तनवी )** हे सुग्रीव हे दूत त्वया तत्र गत्वा सा स्त्री मम शुम्भस्य वचनात् इतिच इत्थंचेत्थंच साम्ना भेदेन चोपायेन वक्तव्या कथनीया । अपिच यथाच सा संप्रीत्या हर्षेण लघु क्षिप्रं अविलम्बं अभ्येति आभिमुख्येन आगच्छति तथा कार्यं त्वया तथा विधेयं । अयं त्वम्बिकायामनिष्टोऽर्थः । इष्टस्त्वयं । अत्रापरेण मन्त्रबुद्धिसमाधिनाख्यायतेत्यर्थः । हे दूत तत्र गत्वा त्वया लघु क्षिप्रं अतथा कार्यं मदभिप्रायादन्यथात्वेन कर्तव्यं । तत्कथं । यथा अम्बिका शुम्भे निशुम्भे च विषये अभ्येति योद्धुमभ्यागच्छति । कथंभूता अम्बिका । अवचनात् अविद्यमानं वचनं श्रौतस्मार्तं च येषां ते अवचना असुराः तान् अत्ति उपसंहरतीति अवचनात् । अवचनात् असुरसंहारकारिणीत्यर्थः । पुनः कथंभूता अम्बिका । एति गच्छति विनश्यति इत् तस्मिन् इति शुम्भे निशुम्भे च विषये वक्तव्यासा वक्तव्यप्रतिक्षेपा । असु क्षेपणे । असनमासः वक्तव्यो वचनीय आसः प्रतिक्षेपो न्यक्कारो ययासौ वक्तव्या सा । पुनः कथंभूता अम्बिका । मम । ममेत्यव्ययं । ममशब्दोऽत्र मायावचनः । निर्ममो योगी सममः संसरीतिवत् । मायारूपाम्बिकेत्यर्थः । पुनः कथंभूताम्बिका । संप्रीत्या । प्रीङ् प्रीतौ दिवादिः । प्रीतिः प्रीः । स्त्रियां संपदादित्वाद्भावे क्विप् । समीचीना प्रीः प्रीतिर्येषां ते संप्रयो विबुधाः । ईयते वश्यं प्राप्यते तपोभिरुपासकैरिति इत्या । 'एतुस्तुशास्वृदृजुषः क्यप्' । सम्यक्प्रकर्षेणोपासकैः इत्या संप्रीत्या । आदन्तं रूपम् ॥ ५५ ॥

**( ४ नागोजीभट्टी )** इति चेति चेति । इदं चेत्यर्थः । वक्ष्यमाणस्य परामर्शः । अनेन शुम्भनिशुम्भयो रजोगुणमयत्वं सूचयति । अतएव तद्वधार्थं सत्वगुणप्रधानोऽवतार इति बोध्यम् । लघु शीघ्रम् ॥ ५५ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** इति चेति चेति १०३ ॥ ५५ ॥

**( ६ दंशोद्धारः )** इतीति । इति पूर्वोक्तं इतिच चण्डमुण्डवाक्यानुकारि च । लघु शीघ्रम् ॥ ५५ ॥

**स तत्र गत्वा यत्रास्ते शैलोद्देशेऽतिशोभने । सा देवी तां ततः प्राह श्लक्ष्णं मधुरया गिरा ॥५६॥**

**( १ गुप्तवती )** ॥ ५६ ॥

**( २ चतुर्धरी )** स सुग्रीवः सा यत्रास्ते इत्यन्वयः । देवीति प्रथमान्तपाठे पूर्वेणैवान्वयः । श्लक्ष्णं अनुत्कटं । मधुरया कोमलया (मृद्व्या) ॥ ५६ ॥

**( ३ शान्तनवी )** स सुग्रीवो नाम दूतः यत्र यस्मिन् अतिशोभने अतिमनोहरे शैलोद्देशे पर्वतप्रदेशे असौ देवी आस्ते तिष्ठति तत्र तस्मिन् पर्वतप्रदेशे गत्वा ततस्तदनन्तरं तां देवीं अम्बिकां श्लक्ष्णं समुचितं संगतं सुकुमारं यथा स्यात्तथा मधुरया श्राव्याक्षरपदया गिरा वाचा प्राहच शुम्भोदितसंदेशाभिप्रायगर्भं संदर्भमकथयच्च । प्राहेति प्रशब्द उपसर्गप्रतिरूपको निपातः । आहेति तिङन्तप्रतिरूपकमव्ययं कालसामान्यवृत्ति । श्लक्ष्णमिति श्लिष आलिङ्गने 'श्लिषेरचोपधायाः' इति क्स्नः कत्वत्वे ॥५६॥

**( ४ नागोजीभट्टी)** स इति । सः दूतः ततः शुम्भात्सकाशात् यत्र शैलोद्देशे सा देवी आस्ते तत्र गत्वा श्लक्ष्णमनुत्कटं मधुरया कोमलया गिरा प्राहेत्यन्वयः ॥ ५६ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** स तत्र गत्वेति १०४ ॥ ५६ ॥

**( ६ दंशोद्धारः )** स तत्रेति । सा देवी यत्रास्ते तत्र गत्वेत्यन्वयः । श्लक्ष्णमनुत्कटम् ॥ ५६ ॥

## दूत उवाच ।

**देवि दैत्येश्वरः शुम्भस्त्रैलोक्ये परमेश्वरः । दूतोऽहं प्रेषितस्तेन त्वत्सकाशमिहागतः ॥ ५७ ॥**

**( १ गुप्तवती )** देवीति । राजा भट्टारको देवस्तस्य स्त्रीति सिद्धवत्काराभिप्रायेण संबोधनम् ॥ ५७ ॥

**( २ चतुर्धरी )** त्वत्सकाशं त्वत्समीपम् ॥ ५७ ॥

**( ३ शान्तनवी )** हे देवि सावधाना भव । अस्ति खलु दैत्येश्वरः महासुरः शुम्भो नाम त्रैलोक्ये परमेश्वरः लोकत्रये

परमः उत्कृष्टः ईश्वरः स्वामी तेन शुम्भेन त्वत्सकाशं प्रति प्रेषितः प्रहितः दूतः संदेशहरोऽहं इहागतोऽस्मि । दैत्यग्रहणं जातिख्यापनाय । ईश्वर इति जातिप्राधान्यसूचनार्थं । त्रैलोक्यग्रहणं देव्याः प्ररोचनाय । त्रैलोक्यपरमेश्वर इति एकपदपक्षे त्रैलोक्यं कामं पाति त्रैलोक्यपः सचासौ रमेश्वरश्च । लक्ष्मीवान् इत्यर्थः । अनेन देवीं प्रति दूतप्रेषणप्रयोजनं सूचितं । दूतग्रहणं तन्निग्रहपरिहाराय । 'दूतोक्तं सदसद्वापि श्रुत्वा कार्यं हिताहितं । दूतो नहि निहन्तव्य इति नीतिविदो विदुः' । आदौ देवी इत्युक्तत्वाद्देव्या एव जयः सूच्यते । यतः दीव्यति विजगीषते देवी । हे देवि तेन शुम्भेन दूतः प्रेषितः त्वत् देवीतः स शुम्भः काशं तृणं गतः स्यात् ननु जयमित्यपि देवीपार्षदोक्तिलेशोऽनुसंधेयः ॥ ५७ ॥

**( ४ नागोजीभट्टी )** दूत उवाच । देवीति न केवलं दैत्येश्वर एव किंतु त्रैलोक्यस्य परमेश्वर इत्यर्थः । सकाशं समीपम् ॥ ५७ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** दूतश्चेति । च पुनः दूत उवाच स्वाहेत्ययं मन्त्रः १०५ । एवं नवश्लोका इति । एवं प्रकारेण नवश्लोकाः नवसंख्याकाः प्रत्येकं श्लोकरूपामन्त्राः । तथाहि देवि दैत्येश्वरः शुम्भ इति १०६ ॥ ५७ ॥

**( ६ दंशोद्धारः )** ॥ ५७ ॥

## अव्याहताज्ञः सर्वासु यः सदा देवयोनिषु । निर्जिताखिलदैत्यारिः स यदाह शृणुष्व तत् ॥५८॥

**( १ गुप्तवती )** ॥ ५८ ॥

**( २ चतुर्धरी )** अव्याहता आज्ञा यस्य सः देवयोनिषु विद्याधरादिषु सर्वास्विति व्यत्ययात्स्त्रीलिङ्गत्वं । निर्जिता अखिलदैत्यारयो देवा येन ॥ ५८ ॥

**( ३ शान्तनवी )** हे देवि यः सदा सर्वासु देवयोनिषु विषयेषु अव्याहताज्ञः अप्रतिहतशासनः निर्जिताखिलदैत्यारिः निर्जिता अभिभूता अखिलाः दैत्यारयः असुरशत्रवो देवाः येन स तथोक्तः शुम्भः स शुम्भः यत् आह अवोचत् तद्वचनं मे शृणुष्व आकर्णय । 'व्यत्ययो बहुलं' इत्यात्मनेपदं । अथो शृण्विति स्यात् । आहेति कालसामान्ये तिङन्तप्रतिरूपकमव्ययं । व्येञ् संवरणे । संवरणमाच्छादनं क्विप् । अं विष्णुं व्ययति संवृणोति आच्छादयति व्याप्नोति अविद्यात्वेनेति अविर्विष्णुमाया तया अव्यया मायया देव्या आहता आज्ञा यस्य शुम्भस्य सः अव्याहताज्ञो भविष्यति । 'निर्निश्चयनिषेधयोः' । निर्जिताः अखिला दैत्यारयो देवाः येन सः तथोक्तो भविष्यति इत्यपि देवीपार्षदोक्तिलेशोऽप्यनुसंधेयः ॥ ५८ ॥

**( ४ नागोजीभट्टी )** तदेवोपपादयति । अव्याहतेति । देवयोनिषु देवतासु । देवाश्च ते जगद्योनयश्चेत्यर्थात् ॥ ५८ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** अव्याहताज्ञ इति १०७ ॥ ५८ ॥

**( ६ दंशोद्धारः )** अव्याहताज्ञ इति । योनिशब्दस्य पुंस्त्वात्सर्वास्विति व्यत्ययात्स्त्रीलिङ्गतेति चतुर्भुजमिश्राः तन्न । 'भगं योनिर्द्वयोः' इत्यमरात् ॥ ५८ ॥

## मम त्रैलोक्यमखिलं मम देवा वशानुगाः । यज्ञभागानहं सर्वानुपाश्नामि पृथक्पृथक् ॥ ५९ ॥

**( १ गुप्तवती )** पृथक् पृथक् एकोपि तत्तद्देवाधिकाररूपोपाधिभेदेन ॥ ५९ ॥

**( २ चतुर्धरी )** वशानुगा इच्छानुविधायिनः । वशा आयत्ता अनुगाश्च । कर्मधारयो वा । पृथगिन्द्राद्यधिकारभेदेन ॥ ५९ ॥

**( ३ शान्तनवी )** शुम्भ आहेदं । पटैकदेशे दग्धे पटो दग्ध इति अवयव एकदेशेऽप्यवी समुदायो वर्तते । क्वचिदवयवावयविनोरभेदोपचारात्प्रयोगेषु । तद्वत्त्रैलोक्यं मम स्वं वर्तते इत्युक्तं किं त्रैलोक्यमेकदेशवृत्त्या विवक्षितमिहेति कस्यचिच्छङ्का स्यात् अतस्तामपनेतुमखिलमिति । अखिलमित्येवोक्ते एकैकोऽपि लोकोऽखिलो भवत्यखण्डवृत्तित्वाद्भुवनस्येत्यतस्त्रैलोक्यमित्युक्तं । इह ममेति विभक्तिप्रतिरूपकमव्ययं मायावाचि । निर्ममो योगीतिवत् । मम मायायाः देव्यास्त्रैलोक्यं अखिलं स्वं वर्तते तत्कुतः शुम्भस्येत्यपि देवीपार्षदोक्तिलेशोऽनुसंधेयः । देवाः मम शुम्भस्य वशानुगाः । वश कान्तौ । कान्तिरिच्छा । तदनुसारिणो देवा वर्तन्ते इत्यर्थः । ममेति मायावाच्यव्ययं । निर्ममो योगीतिवत् । मम मायाया देव्याः वशानुगाः वशवर्तिनो देवाः वर्तन्ते इत्यपि देवीपार्षदोक्तिलेशोऽनुसंधेयः । तत्र देवतोद्देशेन पृथक्पृथक् विहितास्तान् सर्वान् यज्ञभागान् आहुतिरूपान् यज्ञांशान् अहमेव शुम्भः पृथक्पृथक् इन्द्रादितत्तद्देवताकारकायव्यूहमुपाश्रित्य उपाश्नामि उपभुञ्जे । अश भोजने क्र्यादिः । अहमिति विभक्तिप्रतिरूपकमव्ययमविद्यावाचि । अविद्यावाऽतस्मिंस्तद्बुद्धिः । देव्येव भगवती यज्ञभागानुपाश्नातीति कुतः शुम्भस्य यज्ञभागोपभोग इत्यपि देवीपार्षदोक्तिलेशोऽनुसंधेयः ॥ ५९ ॥

**( ४ नागोजीभट्टी )** तदुक्तिमाह । ममेति ॥ ५९ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** मम त्रैलोक्यमिति १०८ ॥ ५९ ॥

(६ दंशोद्धारः) ममेति। वशानुगा इच्छानुगाः। यद्वा वशा अधीनाश्च तेऽनुगाश्चेति कर्मधारयः ॥ ५९ ॥

**त्रैलोक्यवररत्नानि मम वश्यान्यशेषतः। तथैव गजरत्नं च हृतं देवेन्द्रवाहनम् ॥ ६० ॥**

(१ गुप्तवती) ॥ ६० ॥

(२ चतुर्धरी) अशेषतोऽशेषाणि गजरत्नानि नानादिग्देशप्रसिद्धानि मम वश्यानीत्यनुषज्यते। तदेवाश्वरत्नं हृत्वा समानीयामरैर्मम समर्पितं इत्यर्थः ॥ ६० ॥

(३ शान्तनवी) त्रिष्वपि लोकेषु वराणि श्रेष्ठान्युत्कृष्टानि रत्नानि स्त्रीरत्नानि उर्वशीप्रमुखानि अशेषतः सामस्त्येन मम वश्यानि विधेयानि प्रणेयानि च संगतान्यभूवन्। हृतं गृहितं। 'वाहनमाहितात्' इति णत्वं नात्र भवति। आहितस्याविवक्षितत्वात्। अत्रहि देवेन्द्रस्य वाहनमित्येतस्य स्वस्वामिभावसंबन्धमात्रं विवक्षितं नत्वाहितत्वं। यद्वाहने आरोपितं उत्तोलितं तदाहितमुच्यते। इक्षुवाहणमित्यत्र इक्षवो वाहने आरोपिता इति कृत्वा णत्वं भवति। ममेति विभक्तिप्रतिरूपकमव्ययं मायावाचि। निर्ममो योगीतिवत्। ततश्च मम मायायाः देव्याः त्रैलोक्ये अशेषतो रत्नानि वश्यानि वशंगतानि नतु शुम्भस्य। तथैव गजरत्नं च मायया हृतं देव्या त्रैलोक्येऽवस्थापितं नतु शुम्भेन हृतं शुम्भस्त्वाहोपुरुषिकामात्र इत्यपि देवीपार्षदोक्तिलेशोऽनुसंधेयः। 'आहोपुरुषिका दर्पाद्या स्यात्संभावनात्मनि' ॥ ६० ॥

(४ नागोजीभट्टी) अशेषतः अशेषाणि हृतमित्यन्वयि ॥ ६० ॥

(५ जगच्चन्द्रचन्द्रिका) त्रैलोक्यवरेति १०९ ॥ ६० ॥

(६ दंशोद्धारः) ॥ ६० ॥

**क्षीरोदमथनोद्भूतमश्वरत्नं ममामरैः। उच्चैःश्रवससंज्ञं तत्प्रणिपत्य समर्पितम् ॥ ६१ ॥**

(१ गुप्तवती) ॥ ६१ ॥

(२ चतुर्धरी) उच्चैःश्रवससंज्ञमिति नैरुक्तो वर्णागमः। यद्वा राज्ञो देवाकृतित्वात्पाक्षिकोऽन्। यथा हरिवंशे 'आकाशस्थैर्दिवौकसैः' इति ॥ ६१ ॥

(३ शान्तनवी) क्षीराण्युदकानि यस्य स क्षीरोदः क्षीराब्धिः। उत्तरपदे 'उदकस्योदः संज्ञायम्' इत्यत्र संज्ञायामुत्तरपदस्योदकशब्दस्योदादेशो वक्तव्यः। क्षीरोदस्य मथनं विलोडनं तत उद्भूतं उच्चैःश्रवससंज्ञं। श्रु गतौ। श्रु श्रवणे। उच्चैः शृणोति गच्छति आकर्णयति उच्चैःश्रवाः। पचाद्यच्। सह संज्ञया चेतनया नाम्ना वा वर्तते ससंज्ञः। 'सहस्य सः संज्ञायां' 'वोपसर्जनस्य' इत्यतः कर्मधारयः। उच्चैःश्रवश्चासौ ससंज्ञश्च उच्चैःश्रवससंज्ञः। अश्वविशेषणत्वे पुंलिङ्गः। अश्वरत्नविशेषणे तु नपुंसकलिङ्ग उच्चैःश्रवःसंज्ञं। अथवा प्रशस्ते श्रवसी यस्य सः श्रवसः। मत्वर्थे अर्शआदित्वादच्। जवेन मानेन च उत्कृष्टत्वादुच्चैरित्युच्यते। उच्चैश्चासौ श्रवसश्च उच्चैश्रवसः। उच्चैःश्रवस इति संज्ञा यस्य सः उच्चैश्रवससंज्ञः। अश्वरत्नविशेषणत्वे तु उच्चैःश्रवससंज्ञं अश्वरत्नं तु मद्भीतैः अमरैः प्रणिपत्य मत्पादपद्मे निपत्य अर्पितं उपढौकितं उपायनीकृतं। 'उपायनमुपग्राह्य उपहारस्तथोपदा'। अत्रापि मायावाचि ममेत्यव्ययं। मायायाः भगवत्याः अमरैः भक्तिनम्रैः उच्चैःश्रवससंज्ञमश्वरत्नं प्रणिपत्य समर्पितं। तत् त्रैलोक्ये गृहे तस्याः यत्र क्वाप्यस्तु। अयं तु शुम्भो मदीयं ममेदमिति उक्त्वाभिमन्यते इति देवीपार्षदोक्तिलेशोऽप्यनुसंधेयः ॥ ६१ ॥

(४ नागोजीभट्टी) क्षीरोदेति। तदश्वरत्नं हृत्वा इन्द्राद्बलात्कारेण गृहीत्वा अमरैः प्रणिपत्य समर्पितमित्यर्थः। उच्चैःश्रवसेत्यत्रापि अजिति योगविभागादच् समासान्तः ॥ ६१ ॥

(५ जगच्चन्द्रचन्द्रिका) क्षीरोदेति ११० ॥ ६१ ॥

(६ दंशोद्धारः) क्षीरोदेति। उच्चैःश्रवसेत्यकारश्छान्दसः। 'आकाशस्थैर्दिवौकसैः' इति हरिवंशवत् ॥ ६१ ॥

**यानि चान्यानि देवेषु गन्धर्वेषूरगेषु च। रत्नभूतानि भूतानि तानि मय्येव शोभने ॥ ६२ ॥**

(१ गुप्तवती) ॥ ६२ ॥

(२ चतुर्धरी) भूतानि प्राप्तानि स्थितानि वा। शोभने शोभनदेहे ॥ ६२ ॥

(३ शान्तनवी) हे देवि हे शोभने देवेषु वा गन्धर्वेषु देवगायकेषु वा उरगेषु वा नागेषु वा यानि चान्यानि रत्नभूतानि रत्नत्वमुत्कृष्टतां प्राप्तानि भूतानि शरीरभाञ्जि मनोहराणि स्त्रीरूपाणि सन्ति तानि सर्वाणि मय्येव शुम्भविषये वर्तन्ते। आः सखि शोभने गर्वस्थोसावित्थमभूतवादी शुम्भः शाम्भवीयं देव्येव भूतमयी भूतमिदमित्थमिष्टमाचष्ट। यानि देवेषु गन्धर्वेषु उरगेषु च रत्नभूतानि रत्नतां प्राप्तानि भूतानि यानि सत्यानि तथ्यानि सन्ति तानि मय्येव देव्यामेव वर्तन्ते नान्यत्र।

अथवा इतोऽन्यानि च यानि रत्नभूतानि पृथिव्यादीनि सन्ति यानि च रत्नभूतानि प्राणभृति स्त्रीरत्नानि पुरुषरत्नानि च तानि सर्वाणि विश्वरूपत्वेन विश्वमातृत्वेन च मय्येव देव्यामेव वर्तन्ते न शुम्भे नापि निशुम्भे इति देवीसखीजनोक्तिलेशोप्यनुसंधेयः । 'युक्ते क्ष्मादावृते भूतं प्राण्यतीते समे त्रिषु' ॥ ६२ ॥

**( ४ नागोजीभट्टी )** यानि चेति । रत्नभूतानि भूतानि रत्नरूपाणि स्थितानीत्यर्थः ॥ ६२ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** यानि चान्यानीति ॥ १११ ॥ ६२ ॥

**( ६ दंशोद्धारः )** यानीति । मय्येव भूतानि प्राप्तानि । भू प्राप्तौ ॥ ६२ ॥

**स्त्रीरत्नभूतां त्वां देवि लोके मन्यामहे वयम् । सा त्वमस्मानुपागच्छ यतो रत्नभुजो वयम् ॥६३॥**

**( १ गुप्तवती )** ॥ ६३ ॥

**( २ चतुर्धरी )** ॥ ६३ ॥

**( ३ शान्तनवी )** हे देवि लोके अस्मिन्भूलोके हिमाचलवासिनीं मानिनीं त्वां स्त्रीरत्नभूतां स्त्रीजात्युत्कृष्टतां प्राप्तवतीं वयं शुम्भनामानो मन्यामहे । सा एवंविधा स्त्रीरत्नभूता त्वं अस्मानुपागच्छ शुम्भनाम्नो भूभुजः प्रति प्राप्नुहि । कुत इत्यत आह । यतो रत्नभुजो वयं राजानः । यतस्त्वं च स्त्रीरत्नं स्त्रीरत्नभूता अतः त्वमस्मानुपागच्छ प्राप्नुहि । यदुक्तं 'स्वराष्ट्रमन्यतो रक्षत्यन्यदीयं क्षिणोति च । वर्धेतोपायवान्नित्यं रत्नहारी च पार्थिवः' । देवीष्टार्थस्त्वेषः । उपागच्छेत्यत्र उ पाः गच्छेति छेदः । तत्र 'उ संबुद्धौ रुषोक्तौ च शिववाचि त्वनव्ययं' । पाने पिबतिः रक्षायां पातिः पायतिः शोषणे । पैओवै शोषणे । क्विप् । पायति शत्रून् शोषयतीति पाः उरिव रुद्र इव उपाः । हे देवि कालाग्निरुद्र इव पायन्ती शत्रून् शोषयन्ती सती अस्मानिति शुम्भादीन् त्वामाकारयमाणान् शत्रून् शोषयितुं गच्छ याहि. इति देवीपार्षदोक्तिलेशोप्यनुसंधेयः । यद्वा असु क्षेपणे दिवादिः क्विप् । अस्यत्यरीन् क्षिपति अधिक्षिपति न्यक्करोति अः । 'अत्वसन्तस्य च' इति उपधादीर्घस्त्वधातोरिति प्रतिषेधान्न भवति । पैओवै शोषणे । भ्वादिः । पायन्ति शोषयन्ति सन्तापयन्ति लोकानिति पाः । तेषां पां शुम्भादीनां दैत्यानां अः आसिका क्षेपिका अधिक्षेपिका न्यक्कारिका इति पाः । पां अः पाः उ इति संबुद्धावव्ययं । उ इति हे देवि त्वं अस्मानुपागच्छेति शुम्भादिभिः रत्नभुग्भिः दैत्यैराकारितासि । सा त्वं पाः सती गच्छ । पायतो जगन्ति शोषयतः संतापयन्तः तान् शुम्भादीन् दैत्यान् अस्यन्ती अधिक्षिपन्ती न्यक्कुर्वतीसती गच्छ याहि । कुत इत्यत आह । यतस्ते रत्नभुजः । भुजो कौटिल्ये रुधादिः क्विप् । भुजन्ति कौटिल्येन वर्तन्ते भुजः । रत्नेषु तेषु तेषूत्कृष्टेषु विषयेषु भुजः कौटिल्येन अन्यायेन वर्तमानाः रत्नभुजः अतस्ते पां शुम्भादीनां कुटिलानां दैत्यानां न्यक्करणाय गमनयुक्तमुत्पश्याम इति देवीपार्षदोक्तिलेशाभिप्रायोऽप्यनुसंधेयः ॥ ६३ ॥

**( ४ नागोजीभट्टी )** स्त्रीति । वयमित्यात्मगौरवार्थं बहुवचनम् ॥ ६३ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** स्त्रीरत्नेति ११२ ॥ ६३ ॥

**( ६ दंशोद्धारः )** ॥ ६३ ॥

**मां वा ममानुजं वापि निशुम्भमुरुविक्रमम् । भज त्वं चञ्चलापाङ्गि रत्नभूतासि वै यतः ॥६४॥**

**( १ गुप्तवती )** ॥ ६४ ॥

**( २ चतुर्धरी )** उरुविक्रमं विक्रमातिशयभाजं भज आश्रय । चञ्चलौ चपलस्वभावौ अपाङ्गौ नेत्रान्तौ यस्याः । वै प्रसिद्धौ ॥ ६४ ॥

**( ३ शान्तनवी)** 'चलाचलः स्यात्तरलश्चञ्चलश्चपलश्चलः' । चञ्चलौ नेत्रान्तनिरीक्षणेन तरलौ अपाङ्गौ नेत्रान्तौ यस्याः सा चञ्चलापाङ्गी तत्संबुद्धौ हे चञ्चलापाङ्गि हे वरारोहे त्वं यतः रत्नभूतासि सौन्दर्येण उत्कृष्टतां प्राप्तासि ततः वै अनु नीयसे । 'न रत्नमन्विष्यति मृग्यते हि तत्' इति न्यायतः प्रार्थ्यसे । ततश्च मां निशुम्भं वा भज आश्रय । उरुविक्रमं उरुर्विपुलः महान् विक्रमः शौर्यलक्षणो यस्य स तथोक्तः तं मम अनुजं कनिष्ठं भ्रातरं निशुम्भं वापि भज संश्रय । त्वंहि रत्नं रत्नभाजश्च राजान एव वयं । तस्मात्त्वमस्मानेव भज नान्यानिति शुम्भानुकूलोऽभिप्रायोयं । 'वै स्यात्संबोधने पादपूरणे त्वनुनयेपि च' देव्यनुकूलोऽर्थस्त्वेषः । 'सप्तम्यां जनेर्डः' 'अन्येष्वपि दृश्यते' इत्यत्र सूत्रे अपिशब्दः सर्वोपाधिव्यभिचारार्थः । तेन धात्वन्तरादपि डो भवति कारकान्तरेपूपपदे चेति वचनात् पिष्लृसंचूर्णने इत्यस्मादाङ्पूर्वाच्चञ्चलोपपदात् डः टिलोपः । सा चञ्चलान्यायादपभ्रष्टान् दुष्टान्दैत्यान् आ समन्तादभिव्याप्य पिनष्टि संचूर्णयति हिनस्तीति चञ्चलपं अङ्गं गात्रं यस्याः. सा चञ्चलापाङ्गी । अङ्गगात्रकण्ठेभ्यश्चोपसंख्यानाद्वा ङीप् । तत्संबुद्धौ हे चञ्चलापाङ्गि हे दुष्टदैत्योपसंचूर्णनसंनद्धगात्रे एवंविधा त्वं शुम्भेन आकारितासि । किमिति मां शुम्भं भज अनुजं वापि निशुम्भं भजेति आहूतासि । यतश्च त्वं रत्नभूतासि वै अनुनीयसे प्रा-

र्थ्यसे च । ततः त्वं मां वेति शुम्भं अम गच्छ याहि अनुजं वापि इति शुम्भानुजं निशुम्भं अम गच्छ याहि । अम इत्येतदम गतावित्यतो भ्वादेर्लोटि रूपं । तच्च मां वा अममा अनुजं इति पदच्छेदाल्लभ्यते । किंविशिष्टा त्वं मा । 'मः शिवे मा रमायां च मा निषेधेऽव्ययं मतं' । मं शिवं शंभुं असति गच्छति शंभुमादत्ते शंभुना सह दीव्यति चेति विगृह्य । अस गतिदीप्त्यादानेष्वित्यसतेः पूर्ववदपिशब्दविहितो डः डितिटेरसृशब्दस्य लोपः । स्त्रियां मा इति रूपं । ततश्च तादृशी शांभवी चञ्चलापाङ्गी दुष्टदैत्यसंहारे सन्नाङ्गी सती त्वं उरु विपुलं यथा स्यात्तथा शुम्भनिशुम्भादिदैत्येषु हेतुषु विक्रमं भज शौर्यं समाश्रय पराक्रमं दर्शयेति देवीपार्षदोक्तिलेशोऽनुसंधेयः । यद्वा चञ्चलापाङ्गी रत्नभूतासि वा ऐ यतः इति छेदः । 'ऐकार उच्यते विष्णुरैकारः स्यान्महेश्वरः' । ममेति मयावाच्यव्ययं । जीवन्मुक्तोऽसि निर्मम इतिवत् । यती प्रयत्ने । यतनं यत् । स्त्रियां भावे संपदादित्वात् वा क्विप् । ऐ महेश्वरस्येव कालाग्निरुद्रस्येव यत् यतं यत्नं प्राप्यत्यर्थे कर्मणि क्यब्लोपे पञ्चमी । ये यन्तः कालाग्निरुद्रस्य यतं यत्नं प्राप्य हे मम हे माये देवि त्वं चञ्चलापाङ्गी रत्नभूतासि वा सती मां वेति परामृष्टं शुम्भानुजं निशुम्भं च हन्तुं उरु महान्तं विक्रमं पादविक्षेपं पराक्रमं शौर्यं च भज उपाश्रयेति देवीपार्षदोक्तिलेशाभिप्रायोऽनुसंधेयः । चञ्चलान् तरलान् न्यायादपभ्रष्टान् दैत्यान् अपकर्तुं हिंसितुं अङ्गति प्राप्नोति तच्छीला चञ्चलापाङ्गी । अगिर्गत्यर्थः । रत्नतां प्राप्तवान् रत्नभूतः रत्नभूतश्चासावसिश्चेति रत्नभूतासिः चञ्चलापाङ्गी चासौ रत्नभूतासिश्चेति चञ्चलापाङ्गीरत्नभूतासि । तं चन्द्रहासं खड्गरत्नं रिपून् हन्तुं वा तिष्ठति त्वं चञ्चलापाङ्गीरत्नभूतासि । वा गतिगन्धनयोः । 'आतोऽनुपसर्गे कः' ॥ ६४ ॥

**( ४ नागोजीभट्टी )** मां वेति । उरुविक्रमं महाविक्रमम् । वै प्रसिद्धौ ॥ ६४ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** मां वा ममेति ११३ ॥ ६४ ॥

**( ६ दंशोद्धारः )** ॥ ६४ ॥

**परमैश्वर्यमतुलं प्राप्स्यसे मत्परिग्रहात् । एतद्बुद्ध्या समालोच्य मत्परिग्रहतां व्रज ॥ ६५ ॥**

**( १ गुप्तवती )** ॥ ६५ ॥

**( २ चतुर्धरी )** मत्परिग्रहात् मदाश्रयात् । मत्परिग्रहतां मत्पत्नीत्वम् ॥ ६५ ॥

**( ३ शान्तनवी )** शुम्भो वक्ति । हे देवि त्वं मत्परिग्रहात् मम शुम्भस्य परिग्रहात्पत्नीत्वेन स्वीकारात् मत्स्वीकारात् अतुलं अनुपमं परं श्रेष्ठं ऐश्वर्यं ईश्वरत्वं परमेषु श्रेष्ठेषु स्वामितां च प्राप्स्यसे प्राप्स्यसि गमिष्यसि । व्यत्ययेनात्मनेपदं । यद्वा मया शुम्भेन त्वं परमैश्वर्यं प्राप्स्यसे । प्रापयतेः कर्मणि लटि थासः से रूपं । हे देवि त्वं एतत्समस्तं प्रागुक्तं शुम्भाभिप्रायगर्भसंदर्भं बुद्ध्वा आत्मना समालोच्य विचार्य मत्परिग्रहतां मम शुम्भस्य परिग्रहतां पत्नीत्वं व्रज मत्पत्नीभावं प्राप्नुहि । 'परिग्रहः परिजने पत्न्यां स्वीकारमूलयोः' । यदाहुः । 'पत्नीपरिजनादानमूलशापाः परिग्रहाः' इति शुम्भानुकूलोऽर्थः । देव्यनुकूलोऽर्थस्तु देवी सखीजनेनाविक्रियते यथा । हे देवि त्वं परमा सर्वोत्कृष्टा । यद्वा परा उत्कृष्टा मा लक्ष्मीस्त्वमेव । अतुलमैश्वर्यं प्राप्स्यसीति यत् सत्यमेवैतत् स्वतःसिद्धमिति किं चित्रमेतत् । किंच मत्परिग्रहान्मदीयहर्षो वृद्धिं प्राप्नोति । मदी हर्षे माद्यति मद् क्विप् । यः मद् माद्यन् परिग्रहः मातृमुख्यः परिवारः परिजनः तं प्राप्य त्वं परमैश्वर्यं प्राप्ससे इत्येतदपि सिद्धमेवैतत् । मत्परिग्रहादिति कर्मणि ल्यब्लोपे पञ्चमी । हे देवि त्वं एतद्बुद्ध्वा समालोच्य माद्यत्परिग्रहो माद्यत्परिजनोस्ति देव्या मया देव्या इति एतत् बुद्ध्वा समालोच्य विचार्य मत्परिग्रहतां व्रज । मत् माद्यन् परिग्रहो मातृमुख्यः परिजनो यस्यां सा मत्परिग्रहा । यस्य भावः मत्परिग्रहता तां व्रज संप्राप्नुहि । यः खल्विमाश्चित्रा गावो मे सन्तीत्यादौ बुद्ध्वा समालोच्यते स एव खलु चित्रगुतां प्राप्नोति । तद्वदियमपि देवी आत्मनो मन्माद्यन्परिग्रहोऽस्तीति बुद्ध्वा समालोच्य पश्चान्माद्यत्परिग्रहतां व्रजतीति देवीपार्षदोक्तिः । 'त्वतलोर्गुणवचनस्य पुंवद्भावो वक्तव्यः' ॥ ६५ ॥

**( ४ नागोजीभट्टी )** परमेति । प्राप्स्यस इति छान्दसस्तङ् । मत्परिग्रहात् मदाश्रयात् । समालोच्य विचार्य । मत्परिग्रहतां मत्पत्नीत्वम् ॥ ६५ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** परमैश्वर्यमिति ११४ ॥ ६५ ॥

**( ६ दंशोद्धारः )** परमैश्वर्यमिति । मत्परिग्रहान्मदाश्रयणात् । मत्परिग्रहतां मत्पत्नीत्वम् ॥ ६५ ॥

ऋषिरुवाच ।

**इत्युक्ता सा तदा देवी गम्भीरान्तःस्मिता जगौ । दुर्गा भगवती भद्रा ययेदं धार्यते जगत् ॥ ६६ ॥**

**( १ गुप्तवती )** ॥ ६६ ॥

**( २ चतुर्धरी )** गम्भीरं अन्तरे अभ्यन्तरे स्मितं यस्याः । जगौ उक्तवती । भगवती अचिन्त्यमाहात्म्या ॥ ६६ ॥

**( ३ शान्तनवी )** तदा संदेशश्रवणसमये इत्येवं शुम्भेन दूतद्वारा उक्ता कथिता सा देवी गम्भीरा अगाधाभिप्रायो

गूढाभिप्राया दैत्यान् हन्तुकामा अत एव अन्तःस्मिता शुम्भो दुरात्मासौ मांप्रति देवतामित्थमाहेति सोत्प्रासमन्तस्तम्भित-हासा तं हन्तुमनाः सती जगौ दूतं प्रतिवाचमकथयत्। सा देवी कीदृशी। दुर्गा दुर्गमा दुःखप्राप्या भगवती समग्रैश्वर्ययशःश्री-वैराग्यमोक्षा भद्रा क्षेमरूपा यया इदं जगत् धार्यते सा ईदृग्लक्षणा देवी दूतं प्रति उक्तवतीत्यर्थः। गै शब्दे। 'आत औ णलः'। अयं भावः इति दूतेन व्यभिचारिभावेनोक्तापि देवी न सा असा तादृशी नाभूत्। पतिव्रतात्वात् दूतवचनपरा सती शुम्भादिभिः सह रन्तुकामा नाभवत्। किंतु अतदा कालान्तरेण शुम्भादीन् हन्तुकामैवाभूदिति ॥ ६६ ॥

**( ४ नागोजीभट्टी )** ऋषिरुवाच। इत्युक्तेति। अन्तःस्मितत्वेन सावहेलमुत्तरं सूचितम् ॥ ६६ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** ऋषिरिति। ऋषिरुवाच स्वाहेत्यपरो मन्त्रः ११५। एक इति एकश्लोकरूपो मन्त्रः। त-थाहि इत्युक्त्वेति ११६ ॥ ६६ ॥

**( ६ दंशोद्धारः )** ॥ ६६ ॥

## देव्युवाच ।

## सत्यमुक्तं त्वया नात्र मिथ्या किंचित्त्वयोदितम्। त्रैलोक्याधिपतिः शुम्भो निशुम्भश्चापि तादृशः ६७

**( १ गुप्तवती )** ॥ ६७ ॥

**( २ चतुर्धरी )** सत्यमिति ॥ ६७ ॥

**( ३ शान्तनवी )** हे दूत त्वया अत्र शुम्भे निशुम्भे च विषये सत्यमुक्तं। अत्र त्वया मिथ्यापदं किंचिन्नोदितं। तथाहि शुम्भस्त्रैलोक्याधिपतिर्भवति। निशुम्भोपि च तादृशः त्रैलोक्याधिपतित्वेन शुम्भसदृश एव। मिथ्येत्यव्ययं। इदं हि सोल्लुण्ठनं वचः। अनति जीवति अनः। पचाद्यच्। अयेन शुभावहेन विधिना अनः अयानः तत्संबुद्धौ हे अयान हे दूत त्वया अत्र अस्यां पतिव्रतायां देव्यां विषये यत् असंभावितं किंचित् मिथ्योदितं अवद्यमुक्तं शुम्भं वा निशुम्भं वा भजेति तत्तु सत्यमुक्तं सत्येन मुक्तं ऋतेन हीनं। त्रैलोक्याधिपतिः शुम्भो निशुम्भश्चापि तादृशः इतिहि यत् एतत्सत्यं। यत् शुम्भः त्रैलोक्यस्याधेर्मानसपीडायाः पतिः उत्पादकत्वेन स्वामी। यतश्च स तादृश एव निशुम्भोपि शुम्भवदेव निशुम्भोपि त्रैलोक्यस्य आधिपतिः आधेर्मानसपीडाया उत्पादकत्वेन पतिर्भवति। 'पुंस्याधिर्मानसी व्यथा'। त्रैलोक्यस्य त्वधिपतिरियं देव्येवेति देवीपार्षदोक्तिलेशाभिप्रायतः सोत्प्रासतावसेया ॥ ६७ ॥

**( ४ नागोजीभट्टी )** देव्युवाच। सत्यमिति। अत्र शुम्भविषये। त्रैलोक्याधिपतिरिति समत्वम् ॥ ६७ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** अम्बिका इति। ततोऽनन्तरं अम्बिका देव्युवाचेत्ययं मन्त्रः ११७। चतुःश्लोक इति-चत्वारः श्लोकाः प्रत्येकं मन्त्ररूपा इत्यर्थः। तथाहि सत्यमुक्तमिति ११८ ॥ ६७ ॥

**( ६ दंशोद्धारः )** ॥ ६७ ॥

## किं त्वत्र यत्प्रतिज्ञातं मिथ्या तत्क्रियते कथम्। श्रूयतामल्पबुद्धित्वात्प्रतिज्ञा या कृता पुरा ६८

**( १ गुप्तवती )** प्रतिज्ञातं संकल्पितं। अल्पबुद्धित्वात्स्वस्वरूपापेक्षया मनोवृत्तिरूपाया बुद्धेरल्पत्वस्य स्वाभाविक-त्वादेव ॥ ६८ ॥

**( २ चतुर्धरी )** ॥ ६८ ॥

**( ३ शान्तनवी )** त्रैलोक्याधिपतिः शुम्भः इति पूर्ववाक्यार्थापेक्षया। किंत्विति। 'किं वितर्के परिप्रश्ने क्षेपे निन्दाप्र-कारयोः। किमव्ययं वितर्के तु तुस्याद्भेदेऽवधारणे'। शुम्भस्त्रैलोक्याधिपतिः सत्यं। किंतु अत्रास्मिन् शुम्भे पत्यावाश्रयितव्ये विषये कश्चिन्मम देव्याः विचारोस्ति पृथक् प्रतिनियतः। मया यत् प्राक्प्रतिज्ञातं प्रतिज्ञा या कृता सा त्वया दूतेन श्रूयतां। पुराशब्दमपनीय मयेति केचित्पठन्ति। कृतेत्यनेन भूतकालगता। अन्यथा मयेति अध्याहार्यं स्यात्। अत सातत्यगमने। अल्पबुद्धित्वं अतति सन्ततं गच्छति सदाप्नोति इति अल्पबुद्धित्वात्। किपि रूपं तत्संबुद्धौ हे अल्पबुद्धित्वात् हे स्वल्पधिषण हे दूत त्वयोक्तं शुम्भं निशुम्भं वा भजेति तत्र मया देव्या प्रतिज्ञा भर्तरि विषये कृता सा श्रूयतां आकर्ण्यतां। सा चेत् घटेत तर्हि मे भर्ता अन्यथा यन्मया प्रतिज्ञातं तन्मिथ्याभूतं कथं क्रियते इति देवीपार्षदोक्तिलेशाभिप्रायोप्यवसेयः। 'अङ्गीकृत-परित्यागादनङ्गीकृतसंश्रयात्। मानिनो निरयं यान्ति यावदाभूतसंप्लवं' ॥ ६८ ॥

**( ४ नागोजीभट्टी )** किंत्विति। अत्र परिग्रहत्वविषये अल्पबुद्धित्वादिति संभवाय प्रतिज्ञाहानौ च महान्दोषः। पापं च पुरुषपरिग्रहे ॥ ६८ ॥

( ५ जगच्चन्द्रचन्द्रिका ) किं त्वत्र यदिति ११९ ॥ ६८ ॥

( ६ दंशोद्धारः ) ॥ ६८ ॥

**यो मां जयति संग्रामे यो मे दर्पं व्यपोहति । यो मे प्रतिबलो लोके स मे भर्ता भविष्यति॥६९॥**

**( १ गुप्तवती )** पुरुषत्वं प्राप्तायाः स्वस्या एव रूपं पाठान्तरेण वर्णयति । यो मां जयतीति। सृष्टिकृत्योपधिकः परशिवो भव इत्युच्यते। तद्वदाचरिष्यन् भविष्यन् लोको जनः शिव एव । तस्मिन् तत्सङ्घमध्ये 'असंख्याताः सहस्राणि ये रुद्रा' इति श्रुत्यां तेषां बहुत्वात्तेष्वन्यतमो भर्तास्तीत्यर्थः । संग्रामदर्पशब्दौ ग्राम्यधर्मकंदर्पव्यञ्जकौ। ग्रामे सम्यक्कृत्य तद्धर्मस्यैव पौष्कल्यात्मकत्वात् । ग्रामशब्दोऽयं बह्वर्थ इति महाभाष्यात्सांग्रहणीं निर्वपेद्ग्रामकाम इति वशीकारार्थे प्रयोगात्तस्य च परस्परसामरस्य एव पर्यवसानात् । 'कन्दर्पो दर्पकोऽनङ्गः' इति कोशात् । प्रतिबलः प्रत्यगात्मा ॥ ६९ ॥

**( २ चतुर्धरी )** जयति रणे बलेनाभिभवति । दर्पं बलवत्ताभिमानं व्यपोहति शमयति । प्रतिबलः समानसामर्थ्यः। पूर्वपूर्वाभिभवे सतीति भावः ॥ ६९ ॥

**( ३ शान्तनवी )** कासौ प्रतिज्ञा । संग्रामे युधि यः मां देवीं जयति अभिभवति न्यक्करोति । जि अभिभवे । जिजये इत्ययं त्वकर्मकः । यो मे देव्याः दर्पं गर्वं व्यपोहति द्रावयति दूरीकरोति । दृप हर्षणमोहनयोः । मोहनं गर्वः । 'गर्वोऽभिमानोऽहंकारो दर्पो हंकारसूर्ययोः' । ऊह वितर्के आत्मनेपदी । उपसर्गादस्यत्यूह्योर्वावचनमिति वा परस्मैपदं । यः मे देव्याः प्रतिबलो लोके अधिबलः सबलः स्यात् प्रतिबलः विपक्षः प्रतियोगी वा स्यात्स मे भर्ता भविष्यति इति प्रतिज्ञास्वरूपं । लोके जयन्ती अभिभवित्री शक्तिरियमेव नैनां कोपि जेतुं अभिभवितुं शक्नोति । लोके दर्पात्मा गर्वात्मा अहंकाररूपा शक्तिरियमेव नैनां कोपि बलस्वरूपत्वात् प्रच्यावयितुं शक्नोति इत्यभिप्रायेण प्रतिज्ञातमित्थं देव्या । यः संग्रामे संग्रामतुल्ये संसारग्रामे संसारचक्रे मां लक्ष्मीं संपदं जयति परमवैराग्ययोगादभिभवति । यः अमे अलक्ष्मीके दुर्गते दैत्यवर्गविषये दर्पं हर्षं गर्वं च व्यपोहति अपनयति । यः लोके मे देव्याः अप्रतिबलः अप्रतिपक्षः अनुकूलः स महेश्वरो मे भर्ता धारकः पोषकश्च नान्य इति देव्याः परमोऽभिप्रायोऽयं देवीपार्षदैः सहृदयैरूहितः ॥ ६९ ॥

**( ४ नागोजीभट्टी )** प्रतिज्ञातमाह । यो मामिति । जयति संग्रामातिरिक्तेनापि प्रकारेण संग्रामे यो मे दर्पं बलत्वाभिमानं व्यपोहति यश्च मे प्रतिबलः समानबलः पूर्वपूर्वाभावे उत्तरः तादृशश्च तत्त्वज्ञ एवेति गूढ आशयः ॥ ६९ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** यो मां जयतीति १२० ॥ ६९ ॥

**( ६ दंशोद्धारः )** यो मामिति । जयति अभिभवति । दर्पं बलवत्त्वाभिमानं व्यपोहति शमयति । प्रतिबलः समसामर्थ्यः । पूर्वपूर्वाभिभव इत्यर्थः ॥ ६९ ॥

**तदागच्छतु शुम्भोऽत्र निशुम्भो वा महासुरः । मां जित्वा किं चिरेऽणात्र पाणिं गृह्णातु मे लघु ७०**

**( १ गुप्तवती )** पाणिं गृह्णातु मद्धस्तचपेटां स्वीकरोत्विति ध्वनिः । लघुपदेन हननोत्कण्ठातिशयध्वनिः ॥ ७० ॥

**( २ चतुर्धरी )** तत्तस्मात्पाणिं गृह्णातु विवाहं करोतु ॥ ७० ॥

**( ३ शान्तनवी )** तत्तस्मात्प्रतिज्ञाकारणात् अत्र मजये साधयितव्ये विषये महासुरः महान् असुरः शुम्भो वा आगच्छतु आयातु निशुम्भो वा आगच्छतु । करोतु मया सार्धं संग्रामं । मां देवीं जित्वा विजित्य लघु क्षिप्रं अवलम्बितं यथा स्यात्तथा मे पाणिं गृह्णातु पाणिग्रहणं करोतु । तयोरन्यतरः अत्र मत्प्रतिज्ञाप्रतिपालने विषये चिरेण कालेन किं साध्यं किं विलम्बेन कृतं स्यात् । संग्रामे मां जित्वा क्षिप्रं पाणिग्रहणं विधेयं । अत्र विलम्बेन कालक्षेपेण 'आदानस्य प्रदानस्य कर्तव्यस्य च कर्मणः । क्षिप्रमक्रियमाणस्य कालः पिबति तद्रसं' । मत्पाणौ शत्रुस्तत्फलं द्रक्ष्यति स इति देव्याश्रितनीत्याशयः । तत्तस्मात्प्रतिज्ञातः कारणात् शुम्भो वा निशुम्भो वा आगच्छतु । शुम्भनिशुम्भागमने किं स्यात् । तदनादृत्य जित्वा जेता त्रैलोक्यविजयी महानसुरः महासुरः महादेवः महेश्वरः मां देवीं गृह्णातु । अत्र अस्मिन् मद्ग्रहणे प्रस्तुते किं चिरेणेति मे मम देव्याः पाणिं गृह्णातु महादेवः । अपितु लघु क्षिप्रं एव पाणिपीडनं करोतु इति देव्याः परमाभिप्रायं देवीसख्यः सस्वचेतःसुः ऊहते । जित्वा इति जि अभिभवे । 'अन्येभ्योऽपि दृश्यन्ते' इति क्वनिपि ह्रस्वस्य पिति कृति तुगागमः । नातः । चिरेणेति कालेन । अव्ययं चानव्ययं चेदम् ॥ ७० ॥

**( ४ नागोजीभट्टी )** तदिति । पाणिग्रहणात्पूर्वं मम गमनमनुचितमिति भावः ॥ ७० ॥

**( ५ जगच्चन्द्रचन्द्रिका )** तदागच्छत्विति १२१ ॥ ७० ॥

**( ६ दंशोद्धारः )** ॥ ७० ॥

## दूत उवाच ।

**अवलिप्तासि मैवं त्वं देवि ब्रूहि ममाग्रतः । त्रैलोक्ये कः पुमांस्तिष्ठेदग्रे शुम्भनिशुम्भयोः ॥७१॥**

**( १ गुप्तवती )** अवलिप्तासि गर्वेण विवेकहीनासि ॥ ७१ ॥

**( २ चतुर्धरी )** अवलिप्ता स्तब्धा ॥ ७१ ॥

**( ३ शान्तनवी )** लिप उपदेहे । उपदेह उपचयः । अवपूर्वस्तु लिपिर्गर्वे वर्तते । मतङ्गशापादवलेपमूलादितिवत् । यदभ्यधुः । 'गर्वोऽभिमानोऽहंकारो मानश्चित्तसमुन्नतिः । दर्पोऽऽवलेपोऽहंता च' । हे देवि त्वं अवलिप्तासि अहं युद्धे बलवती मया सार्धं योद्धुं कोपि न शक्त इति युद्धे मत्समः कोपि नास्तीति गर्वितासि सगर्वासि । मैवंभूः एवं गर्विता मा त्वं भूः । हे देवि त्वं ममाग्रतः एवं यदवोचः 'यो मां जयति संग्रामे' इति यच्चावोचः 'तदागच्छतु शुम्भोऽत्र निशुम्भो वा महासुरः । मां जित्वा किं चिरेणात्र पाणिं गृह्णातु मे लघु' इति प्रतिज्ञाव्याजेन खलु त्वं केवलमहमहमिकामवोचो मैवं ब्रूहि । कुतइत्यत आह । त्रैलोक्ये त्रिषु लोकेषु शुम्भनिशुम्भयोरग्रे योद्धुकामः कः पुमान् तिष्ठेत् । न कोपि तयोरग्रे योद्धुकामः त्रैलोक्येपि स्थातुं न शक्नोति । अबला त्वं योत्स्यसे इति का कथा इति शुम्भानुकूलोऽभिप्रायः । देव्यनुकूलस्तु अवलिप्तान् गर्वितान् सदर्पान् अस्यति अधिक्षिपत्यपास्यतीति अवलिप्तासि । असु क्षेपणे कर्मण्यणि टिड्ढाणञ्सूत्रेण ङीपि रूपं । तत्संबुद्धौ हे अवलिप्तासि हेमदोद्धतमर्दनि देवि यतस्त्वं मा लक्ष्मीः अतः ममाग्रतः सखीजनस्य पुरतः एवं ब्रूहि यो मां जयति संग्रामे इत्यादिकं ब्रूहि । कुतइत्याह त्रैलोक्ये लोकत्रयमध्ये अग्रे पुरोभाविनि संग्रामे शुम्भनिशुम्भयोर्मध्ये कः पुमान् त्वया समं योद्धुं तिष्ठेत् अपितु न कोपि इति यदा तदग्रे शुम्भनिशुम्भयोः संबन्धी कः पुमान्योद्धुकामः तिष्ठेन्न कोपि इति देव्याः सखीजनाशयोऽनुसंधेयः ॥ ७१ ॥

**( ४ नागोजीभट्टी )** दूत उवाच । अवलिप्तासि । अवलेपो गर्वः । एवं प्रागुक्तं यदग्रे पुमान् अपि न तिष्ठेत् तदग्रे स्त्री न तिष्ठेदेवेति भावः ॥ ७१ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** पुनर्दूत इति । पुनर्दूत उवाचेत्ययं मन्त्रः १२२ । चतुःश्लोकीति चतुर्णां श्लोकानां समाहारश्चतुःश्लोकी । चत्वारः श्लोकाः प्रत्येकं मन्त्राः । तथाहि अवलिप्तासीति १२३ ॥ ७१ ॥

**( ६ दंशोद्धारः )** अवलिप्तेति । अवलिप्ता स्तब्धा ॥ ७१ ॥

**अन्येषामपि दैत्यानां सर्वे देवा न वै युधि । तिष्ठन्ति संमुखे देवि किं पुनः स्त्री त्वमेकिका ॥७२॥**

**( १ गुप्तवती )** ॥ ७२ ॥

**( २ चतुर्धरी )** एकिकेति कुत्सायां कः ॥ ७२ ॥

**( ३ शान्तनवी )** हे देवि हे भव्ये अन्येषामपि शुम्भनिशुम्भव्यतिरिक्तानां दैत्यानां धूम्रलोचनप्रभृतीनां युधि सर्वे देवाः योद्धुकामाः सन्मुखाः न तिष्ठन्ति किं पुनः त्वमेकिका स्त्री दैत्यानां पुरतः योद्धुमक्षमेति किं पुनः वक्तव्यमिति शुम्भादिदैत्यानुकूलोऽभिप्रायः । वै हे देवि अन्येषामपि दैत्यानां संमुखं युधि सर्वे देवाः न तिष्ठन्ति चेत् ते मा तिष्ठन्तु । त्वं पुनः त्वं तु स्त्रीसत्यपि समस्तवाक्याधिदेवतारूपा एकिकैव एकाकिन्येव असहायशूरा योद्धुं अन्येषां दैत्यानां संमुखी किं न तिष्ठसि । अपितु योद्धुं संमुखी तिष्ठस्येवेति देवीसखीजनाभिप्रायोप्यनुसंधेयः । 'वै स्यात् संबोधने पादपूरणेऽनुनयेपि च' 'एकाकी त्वेक एककः' । 'प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुपः' ॥ ७२ ॥

**( ४ नागोजीभट्टी )** नन्वहं देवीत्यतः स्थास्यामीत्यत आह । अन्येषामपीति द्वाभ्याम् । एकिकेति कुत्सायां कन् ॥ ७२ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** अन्येषामपीति १२४ ॥ ७२ ॥

**( ६ दंशोद्धारः )** अन्येषामिति । एकिकेति कुत्सार्थे कः ॥ ७२ ॥

**इन्द्राद्याः सकला देवास्तस्थुर्येषां न संयुगे । शुम्भादीनां कथं तेषां स्त्री प्रयास्यसि संमुखम् ॥७३॥**

**( १ गुप्तवती )** ॥ ७३ ॥

**( २ चतुर्धरी )** संयुगे रणे ॥ ७३ ॥

**( ३ शान्तनवी )** हे देवि येषां शुम्भादीनां दैत्यानां संयुगे संग्रामे इन्द्राद्याः सकलाः देवाः न तस्थुः योद्धुं न स्थितवन्तः तेषां शुम्भादीनां दैत्यानां संमुखं अभिमुखं त्वं स्त्री अबला योद्धुं कथं प्रयास्यसि गमिष्यसि । विवाहनिमित्तप्रतिज्ञा-

प्रतिपालनाय शुम्भादिभिर्दैत्यैः समं स्त्रियास्तव युद्धं न घटते अपितु युद्धमन्तरेणैव शुम्भेनाहूता त्वं तं भज व्रजेति शुम्भानुकूलोऽभिप्रायः । देव्याः सखीजनाभिप्रायोऽन्यएव । तथाहि हे देवि त्वं इन्द्राद्याः । आस उपवेशने कर्तरि क्विप् । आस्ते आः सान्तः । इन्द्रादिषु आः आसीनाः इन्द्राद्या इन्द्रादिभिर्देवैः ध्याता सती तेष्वासीनासि । हे देवि त्वं सकला कलाभिः सहवर्तमानासि । हे देवि त्वं देवाः सान्तं । दिवु क्रीडाविजिगीषादौ । 'सर्वधातुभ्योऽसुन्' । दीव्यति देवः 'अत्वसन्तस्य' इति उपधादीर्घः । देवाः विजिगीषमाणासि । पुनः कथंभूता त्वं । येषां शुम्भादीना संयुगे इन्द्राद्याः न तस्थुः तेषां दैत्यानां स्त्री प्रयासि असि स्त्रीः प्रयासन्ती भर्तृविनाशजनितदुखाः कुर्वती । यसू प्रयत्ने षिच् । कर्मण्यण् ङीप् । एवंविधासि । ईदृशी त्वं तेषां संयुगे संमुखं कथं न यास्यसि । अपितु योद्धुं प्रयास्यसि इति देवीसखीजनाभिप्रायः । 'संभवत्येकवाक्यत्वे वाक्यभेदस्तु नेष्यते । अर्थान्तरविवक्षायां वाक्यभेदो न दुष्यति' । यद्वा हे देवि इन्द्राद्याः सकलाः देवाः तेषां शुम्भादीनां संयुगे संमुखं न तस्थुः युद्धाय स्थातुं न शेकुः । एतावता तेषां शुम्भादीनां संयुगे संमुखं योद्धुं विजेतुं त्वं कथं न प्रयास्यसि । अपितु योद्धुं प्रयास्यस्येव इति देवीसखीजनाभिप्रायः । यद्वा तस्थुः या ईषां इति छेदः । इष गतिहिंसादर्शनेषु । भ्वादिः आत्मनेपदी । कर्तरि क्विप् । इषन्ते हिंसन्ति ईषः हिंसकाः तेषां ईषां हिंसकानां दैत्यानां संयुगे संग्रामे इन्द्राद्याः सकलाः देवाः न तस्थुः न स्थितवन्तः ते खलु भीरवो मैव तस्थुः । हे देवि या त्वं रुयपि सर्वशक्तिरूपावतीर्णासि सा भगवती तेषामेषां हिंसकानां शुम्भादीनां संयुगे संमुखं यथा स्यात्तथा कथं न प्रयास्यसि अपितु प्रयास्यसीवेति देवीसखीजनाभिप्रायः ॥ ७३ ॥

**( ४ नागोजीभट्टी )** ॥ ७३ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** इन्द्राद्या इति १२५ ॥ ७३ ॥

**( ६ दंशोद्धारः )** ॥ ७३ ॥

**सा त्वं गच्छ मयैवोक्ता पार्श्वं शुम्भनिशुम्भयोः । केशाकर्षणनिर्धूतगौरवा मागमिष्यसि ॥७४॥**

**( १ गुप्तवती )** ॥ ७४ ॥

**( २ चतुर्धरी )** केशाकर्षणेन निर्धूतं तिरस्कृतं गौरवं यस्याः सा ॥ ७४ ॥

**( ३ शान्तनवी )** हे देवि सा त्वं प्रागुक्तप्रतिज्ञापालने पटीयसी विवोढुमनास्त्वं मया दूतेन उक्ता कथितैव सती । यद्वा त्वद्गौरवाभिवांछिना मया दूतेन उपदिष्टैव सती प्रतिज्ञाभङ्गभयं परित्यज्याऽनपत्रपा सती शुम्भनिशुम्भयोः पार्श्वं गच्छ याहि । अतस्त्वं इत्थं सदुपदेशमाश्रयन्ती केशाकर्षणनिर्धूतगौरवा सती मागमिष्यसि । मा इत्यङिदव्ययं निषेधार्थकं । अन्यथा माङि लुङ् स्यात् । केशानां शिरोरुहाणां आकर्षणेन निर्धूतं कम्पितं अपास्तं अपनीतं गौरवं गुरुत्वं बहुमान्यत्वं यस्याः सा तथोक्ता । इत्थंभूतासती नागमिष्यसि अन्यथा त्वं मदुपदेशपराङ्मुखी सती प्रतिज्ञां प्रतिपालयितुं संग्रामं कर्तुकामापि तमलभमानात्रैवासीना केशपाशाकर्षणापाकृतं बहुमान्या सती बलादाकृष्यमाणा शुम्भनिशुम्भयोः पार्श्वं गमिष्यसि । इति शुम्भानुकूलोऽर्थः । देवीसखीविवक्षितोऽर्थस्त्वन्यएव यथा । हे देवि सा त्वं दुरात्मना दूतेनेत्थमुक्ता अतएव संजातक्रोधा सती मया सख्या सह शुम्भनिशुम्भयोः पार्श्वं गच्छ । ततः तयोः केशाकर्षणनिर्धूतगौरवा तयोः शुम्भनिशुम्भयोः केशानां मूर्धजानां आकर्षणेन निर्धूतं निरस्तं विनाशितं अपनीतं गौरवं गुरुत्वं दैत्येश्वरत्वं यया सा केशाकर्षणनिर्धूतगौरवा । तृतीयार्थेन बहुव्रीहिः । एवंविधा त्वं पुनरपि अमा सखीजनस्य समीपं आगमिष्यसि इत्येष देवीसखीजनाभिप्रायः । 'अमा सहसमीपे च' 'त्यक्तं हीनं विधुतं समुज्झितं धूतमुत्सृष्टे' । केशाकर्षणनिर्धूतगौरवान्नागमिष्यसि इति पाठेतु हे देवि सा त्वं मया त्वद्गौरववांच्छिना दूतेनैवोक्ता उपदिष्टा सती शुम्भनिशुम्भयोः पार्श्वं समीपभागं गच्छ याहि । मत्पार्श्वे इति पाठे द्वितीयाद्विवचनान्तं । हे देवि मद्वचनाच्चेन्न गच्छेः तर्हि गौरवात् बहुमानात् नागमिष्यसि किंतु केशाकर्षणनिर्धूता सती तयोः शुम्भनिशुम्भयोः पार्श्वं आगमिष्यसि । 'निर्निश्चयनिषेधयोः' । केशाकर्षणनिर्धूता केशाकर्षणेन निर्धूता अत्यक्ता बद्धा गृहीता बन्दीकृता सती अपमानादागमिष्यसि गौरवात्तु नागमिष्यसि इति शुम्भानुकूलोऽर्थः । देव्यनुकूलोऽर्थस्त्वेषः । हे देवि सा त्वं कृतप्रतिज्ञा सती तेन दुरात्मना शुम्भदैत्यदूतेन इत्थं शुम्भं भजेत्युक्ता सती अतः सक्रोधा मया सख्या सह शुम्भनिशुम्भयोः पार्श्वं हननाय गच्छ याहि । ततश्च तयोः शुम्भनिशुम्भयोः केशाकर्षणनिर्धूता निर्धूतमत्यक्तं निगृहीतं केशाकर्षणं मूर्धजाकर्षणं यया सा केशाकर्षणनिर्धूता । आहिताग्न्यादित्वात् अङ्ग्याहित इतिवन्निष्ठान्तस्य परनिपातः । निर्धूतशत्रुकेशाकर्षणा सती अत्यक्तशत्रुकेशाकर्षणा सती अगौरवान्नागमिष्यसि अपमानान्नागमिष्यसि । किंतु गौरवादेव सन्मानादेव निजस्थानं पुनरप्यागमिष्यसि इति देवीसखीजनाभिप्रायः । केशाकर्षणनिर्धूतगौरवादागमिष्यसि इति पाठे तु हे देवि सा त्वं मया त्वद्गौरवकारिणा दूतेनैवोक्ता सती शुम्भनिशुम्भयोः पार्श्वं गच्छ याहि । हे देवि मद्वचनाच्चेन्न गच्छेस्तर्हि केशार्षणनिर्धूता असंत्यक्ता गृहीता बद्धा सती अगौरवादपमानादागमिष्यसि नतु सन्मानादिति शुम्भानुकूलोऽर्थः । देव्यनुकूलोर्थस्त्वेषः । हे देवि दुरात्मना शुम्भदूतेन

शुम्भं भजेत्युक्ता सा त्वं सक्रोधा सती मया सखीवर्गेण सह शुम्भनिशुम्भयोः पार्श्वे हन्तुं गच्छ याहि । ततश्च तयोः शुम्भनिशुम्भयोः केशाकर्षणनिर्धूता निर्धूतकेशाकर्षणा निर्धूतं अत्यक्तं निगृहीतं केशाकर्षणं शत्रुमूर्धजाकर्षणं यया सा केशाकर्षणनिर्धूता । पूर्ववदभ्याहित इतिवन्निष्ठान्तस्य परनिपाते निर्धूतकेशाकर्षणा सती अत्यक्तशत्रुकेशाकर्षणा सती गौरवात्सन्मानादागमिष्यसि पुनः स्वस्थानमायास्यसीति देवीसखीवर्गाभीष्टोर्थः । केशाकर्षणनिर्धूता गौरवाद्वागमिष्यसि इति पाठे तु हे देवि सा तथाविधा प्रतिज्ञा त्वं प्रतिज्ञां परित्यज्य मया दूतेनैवोक्ता आहूता सती शुम्भनिशुम्भयोः पार्श्वे गच्छ याहि । अथ न गच्छेस्तर्हि केशाकर्षणनिर्धूता केशाकर्षणकम्पिता सती अगौरवाद्वा अगौरवादेव अपमानादेव आगमिष्यसि । धूतं कम्पितं त्यक्तं उज्झितं इति यावत् । निर्निषेधे न धूतं निर्धूतं दैत्यैरनुज्झितं अत्यक्तं गृहीतं केशानां मूर्धजानां आकर्षणं यस्याः सा केशाकर्षणनिर्धूता । निर्धूतकेशाकर्षणा इतियावत् । अभ्याहितवन्निष्ठान्तस्य परयोगो विकल्पितः । दैत्यैर्गृहीतकेशा सती शुम्भपार्श्वे आगमिष्यसि इति शुम्भानुकूलोऽर्थः । 'वा स्याद्विकल्पोपमयोरेवार्थेच समुच्चये' । देव्यनुकूलोर्थस्त्वेषः । यथा देवी सा पतिदेवता त्वं तेन दुरात्मना शुम्भदूतेन शुम्भं भजेति उक्ता सक्रोधा सती मया सखीवर्गेण सह शुम्भनिशुम्भयोः पार्श्वे गच्छ याहि । ततश्च केशाकर्षणनिर्धूतगौरवाद्वा इत्येकपदं । कश्च ब्रह्मा अश्च विष्णुः ईशश्च महेश्वरः केशाः ब्रह्मविष्णुमहेश्वराः तेषामाकर्षणं ध्यानेन वशीकरणं हृद्यवस्थापनं केशाकर्षणं धूतं त्यक्तं उज्झितं । निर्निषेधे निर्धूतं अत्यक्तं केशाकर्षणं यैः ऋषिभिः ते निर्धूतकेशाकर्षणाः ऋषयः केशाकर्षणनिर्धूताः । पूर्ववदभ्याहितवत् निष्ठान्तस्य परप्रयोगः । अत्यक्तकेशाकर्षणाः अनुज्झितब्रह्मविष्णुमहेश्वराकर्षणाः ऋषयः तेषां केशाकर्षणनिर्धूतानां ऋषीणां आसमन्तादभिव्याप्य वर्तमानं गौरवं मान्यत्वं तत् अदन्ति नाशयन्ति ये दैत्यास्ते केशाकर्षणनिर्धूताः गौरवादः दैत्याः । पैओवै शोषणे । तान् केशाकर्षणनिर्धूतगौरवादो दैत्यान् वायति शोषयति केशाकर्षणनिर्धूतगौरवाद्वा । आतोऽनुपसर्गे कः । एवंविधा सती आगमिष्यसि अनुस्यूतब्रह्मविष्णुमहेश्वराणां ऋषीणां आसमन्तादभिव्याप्य गौरवादो दैत्याः । अद भक्षेण क्विप् । तान् दैत्यान् वायन्ती शोषयन्ती सत्यायास्यति स्वस्थानमिति देवीसखीजनाभीष्टाभिप्रायः ॥ ७४ ॥

( ४ नागोजीभट्टी ) उपसंहरति । सात्वमिति । मयैवेत्यनेनागमनेन तेषां सर्वेषां दुष्टतया गौरवं न । न तिष्ठेदित्यर्थः । तदेव विपक्षे बाधकमाह । केशाकर्षणेन निर्धूतं खण्डितं गौरवं यस्यास्तादृशी मागमिष्यसि । अडितृमानजोर्थः (?) सकाकुश्च ७४

( ५ जगच्चन्द्रचन्द्रिका ) सा त्वं गच्छेति २२६ ॥ ७४ ॥

( ६ दंशोद्धारः ) ॥ ७४ ॥

## देव्युवाच ।

## एवमेतद्बली शुम्भो निशुम्भश्चातिवीर्यवान् । किं करोमि प्रतिज्ञा मे यदनालोचिता पुरा ॥७५॥

( १ गुप्तवती ) शुम्भो निशुम्भश्च बली उपहारयोग्यावेवेति तु श्लिष्टं । मया तवात्रोपहृताविति सामयिकश्लोकेऽस्यार्थस्य सष्टवेदनात् । षड्त्वप्रयुक्ताभक्ष्यत्वेन बलिपूजानर्हत्वस्य पाणिग्रहणयोग्यत्वस्य च निरासं बोद्धव्यभेदेन ध्वनयितुमाह । अतिवीर्यवानिति ध्वननार्थमेव त्वतिशौर्यवानिति नोक्तं । पुरानालोचिता सद्य एव . कृता । बलिभक्षणस्य तुच्छत्वेन पूर्वालोचनानपेक्षत्वादिति भावः ॥ ७५ ॥

( २ चतुर्धरी ) एवमेतदित्यादिप्रहासोक्तिः । मे मया ॥ ७५ ॥

( ३ शान्तनवी ) हे दूत त्वया यदुक्तं शुम्भो बली अतिवीर्यवान् निशुम्भश्च बली अतिवीर्यवानिति एतत् एवं अन्यथा न । अहं तु किं करोमि । यद्यस्मात् मे मम प्रतिज्ञा इयमस्ति । पुरा प्रागेव मयानालोचिता विचारिता नाभूत् । 'संभावितं प्रतिज्ञाय निर्वोढव्यं मनीषिभिः । प्रतिज्ञयाप्यसंभाव्यं निर्वोढव्यं कथं नु तैः । निर्वोढव्यं प्रतिज्ञातं तर्कितं वाप्यतर्कितं । प्रतिज्ञातपरित्यक्तेः प्राणत्यक्तिर्वरं नृणां । वीरकर्म तदेतच्च वीर्यमित्यभिधीयते' । 'स्थौल्यसामर्थ्यसैन्येषु बलं ना काकसीरिणोः' । 'वीर्यं बलं प्रभावश्च वीर्यं कर्म च रेतसः' । 'इवेत्थमर्थयोरेवं' 'यत्तद्यतस्ततो हेतौ' । यद्यस्मात्कारणान्मया पुरा अनालोचिताप्यविचारिता यद्यपि मे देव्याः प्रतिज्ञा ईदृश्यभूत् । अतश्चाहं किं करोमि । युद्धादन्यत्किं करोमि । किंतु युद्धमेव किंचित्करोमि । किंच बली शुम्भो निशुम्भश्चातिवीर्यवान् । इति दूतेन तयोर्गर्वं उक्तस्तमगर्वमपि गर्वमगर्वं करोमि । एवमेतत् इदमित्थमेवेति देव्याः परमोऽभिप्रायः ॥ ७५ ॥

( ४ नागोजीभट्टी ) देव्युवाच । एवमेतदिति सोपहासं । यत् यतः प्रतिज्ञेत्यस्य कृतेति शेषः ॥ ७५ ॥

( ५ जगच्चन्द्रचन्द्रिका ) पुनः शिवा इति । पुनः शिवा देव्युवाचेत्यपरो मन्त्रः १२७ । श्लोकद्वयमिति । द्वौ श्लोकौ अपरौ मन्त्रौ । तथाहि एवमेतदिति १२८ ॥ ७५ ॥

( ६ दंशोद्धारः ) एवमिति । एवमित्यादि सहासोक्तिः ॥ ७५ ॥

**स त्वं गच्छ मयैवोक्तं यदेतत्सर्वमादृतः । तदाचक्ष्वासुरेन्द्राय स च युक्तं करोतु यत् ॥ ७६ ॥**

**इति श्रीमार्कण्डेयपुराणे देवीदूतसंवादे पञ्चमोऽध्यायः ॥ ५ ॥**

**( १ गुप्तवती )** इह कौशिकीवाक्योत्तरं तत्पदनिर्वचनारम्भे ऋषिरुवाचेत्यपेक्षितमपि समीपे तस्य सत्वान्नोक्तं । इतिचेतिचेत्यारम्भे शुम्भ उवाचेत्यस्याभावादेव पूर्वश्लोके उक्त्वा प्रेषयामासेति शेषपूरणं । तत्रोत्तरश्लोकार्थः कर्म । अत एव तदुत्तरं पुनर्ऋषिरुवाचेति नापेक्षितं । तेन क्वचित्पुस्तके दृश्यमानमप्यृषिवचनं तन्त्रत्रयेप्यभावादप्रमाणमेव । तस्मादिह नवैवोवाचमन्त्रा यथास्थानं सन्त्येव ॥ ७६ ॥ इति श्रीगुप्तवत्यां मन्त्रव्याख्याने पञ्चमोऽध्यायः ॥ ५ ॥

**( २ चतुर्धरी )** यत् यस्मात् । आदृतः सयत्नः । मया यदुक्तं तत् आचक्ष्व । स च यत् युक्तं तत्करोतु इत्यन्वयः ॥ ॥ ७६ ॥ इति श्रीचतुर्धरीटीकायां दूतवाक्यं नाम पञ्चमोऽध्यायः ॥ ५ ॥

**( ३ शान्तनवी )** हे दूत स त्वं यथासदृशवादी त्वं गच्छ निजस्थानं याहि । मया देव्या यदेतदुक्तं प्रतिज्ञाप्रमुखं वचनं तदेव सर्वं आदृतः आकलितवान्सन् असुरेन्द्राय शुम्भाय आचक्ष्व आख्याहि कथय । सच सएव शुम्भः यद्युक्तं उचितं यचायुक्तं यदनुचितं तत्करोतु । यदेतत्सर्वमादितः इति पाठे हे दूत स त्वं गच्छ मया यदेतदुक्तं तदेव अविकलं आदित आरभ्य असुरेन्द्राय आचक्ष्व । चक्षिङो लोटि रूपं । सच यत् युक्तमुचितं तत्करोतु ॥ ७६ ॥ इति श्रीमद्राजाधिराज० श्रीदेवीदूतसंवादे देवीविध्युपलक्षितः पञ्चमोऽध्यायः ॥ ५ ॥

**( ४ नागोजीभट्टी )** स त्वमिति । मया यदेतदुक्तं तत्सर्वमादृतः सन् तस्मै आचक्ष्व सः युक्तं तत्करोतु चेत्यन्वयः। आदृत इत्यनेनान्यूनानतिरिक्तं वदेति सूच्यते ॥ ७६ ॥ इति शिवभट्टसुतसतीगर्भजनागोजीभट्टकृते सप्तशतीव्याख्याने पञ्चमोऽध्यायः ॥ ५ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** सा त्वं गच्छ मयेति १२९ ॥ मिलित्वा तु चत्वारिंशद्द्वयाधिकाः । श्लोका इति सर्वे मिलित्वा द्व्याधिकाश्चत्वारिंशत् मन्त्राः स्युर्द्वाचत्वारिंशन्मन्त्रा इत्यर्थः । सप्तोवाचवाक्यमिति । सप्त तत् संख्या उवाचवाक्यं उवाचवचनं द्वाभ्यां मिलित्वा एकोनपंचाशत् एकोनार्धशतं सह अशीत्यपि च संयोगे एकोनत्रिंशताधिकं । शतमेकं तु विज्ञेयमाहुतीनां च पञ्चमे इति । एकेन ऊनं अर्धशतं । एकोनपञ्चाशदित्यर्थः । अशीत्या सह विंशतिचतुष्टयेन सह च पुनः संयोगेपि एकेन ऊनं त्रिंशत् तथा अधिकं शतं एकशतं तु पुनः पञ्चमाध्याये च आहुतीनां विज्ञेयं ज्ञातव्यं । ऋषिचतुष्टयं प्रोक्तमिति ऋषिरुवाचेति चत्वारो मन्त्राः प्रोक्ताः । देवा ऊचुरिति सकृत्पुनरिति । पुनः देवा ऊचुरित्येको मन्त्रः । दूतउवाच द्वयमिति । दूत उवाच इति द्वौ मन्त्रौ देवीउवाच । द्वितीयं तथेति तथा तेन प्रकारेण देवी उवाचेति द्वौ मन्त्रौ स्तः । नवोवाचेति सर्वैर्मिलित्वा नव तत्संख्याकानि उवाचवचनानि भवन्ति । चतुःपञ्चाशत् श्लोकाहुतयः तथेति । तथा तेनैव प्रकारेण चतुर्भिरधिका पञ्चाशत् श्लोकानां तद्रूपमन्त्राणां आहुतयो भवन्ति । द्वाविंशत्याहुतिश्लोके षट्षष्ठ्याहुतयो मता इति । द्वाविंशत्येकोयं आहुतिश्लोकस्तत्र षडधिका षष्टिः तत्संख्याका या आहुतयस्ता मताः संमताः ॥ ७६ ॥ इति श्रीभगीरथविरचिता कण्वगोविन्दकृतकारिकाणां जगच्चन्द्रचन्द्रिकाख्यटीका सप्तशतीपञ्चमाध्यायस्य संपूर्णा ॥ ५ ॥

**( ६ दंशोद्धारः )** इति श्रीमद्बुल्लोप० पञ्चमोऽध्यायः ॥ ५ ॥

---

## षष्ठोऽध्यायः ६

### ऋषिरुवाच ।

**इत्याकर्ण्य वचो देव्याः स दूतोऽमर्षपूरितः । समाचष्ट समागम्य दैत्यराजाय विस्तरात् ॥ १ ॥**

**( १ गुप्तवती )** इत्याकर्ण्येति ॥ १ ॥

**( २ चतुर्धरी )** अमर्षः क्रोधः तेन पूरितः कोपव्याप्तः । समाचष्ट कथितवान् ॥ १ ॥

**( ३ शान्तनवी )** हे सुरथ इति प्रागुक्तं देव्याः वचः आकर्ण्य निशम्य श्रुत्वा अमर्षपूरितः अमर्षेण क्रोधेन पूरितः पूर्णः स दूतः समागम्य देवीशैलात्सकाशात् आगत्य दैत्यराजाय शुम्भाय विस्तरात् शब्दप्रपञ्चनात् समाचष्ट अकथयत् । चक्षिङो लङि रूपम् ॥ १ ॥

**( ४ नागोजीभट्टी )** ऋषिरुवाच । इतीति । अमर्षः कोपः । समाचष्ट उक्तवान् ॥ १ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** अथ षष्ठाध्यायस्य सप्तशतीमन्त्रहोमविभाग उच्यते । विंशतिश्लोकयुक्ते षष्ठाध्याये प्रकीर्तिताः । सर्वे श्लोका मन्त्ररूपा इति विंशतिः ये श्लोकास्तैर्युक्ते षष्ठेऽध्याये सर्वे श्लोकाश्चतुःपादात्मका इत्यर्थः । मन्त्ररूपा

मन्त्रस्वरूपाः प्रकीर्तिता उक्ताः । देव्येकेति । देव्युवाचेति एको मन्त्रः । अथ ऋषित्रयमिति । ऋषिरुवाचेति त्रयो ये मन्त्राः चतुर्विंशतिमन्त्राणामित्येवं परिकीर्तिता इति चतुर्विंशतिः मन्त्रास्तेषां इत्यनेन प्रकारेण परिकीर्तिता उक्ताः । तथाहि ऋषिरुवाच स्वाहा १ । इत्याकर्ण्येति २ ॥ १ ॥

**( ६ दंशोद्धारः )** ॥ १ ॥

## तस्य दूतस्य तद्वाक्यमाकर्ण्यासुरराट् ततः । सक्रोधः प्राह दैत्यानामधिपं धूम्रलोचनम् ॥ २ ॥

**( १ गुप्तवती )** ॥ २ ॥

**( २ चतुर्धरी )** दैत्यानामधिपं असुराणां सेनानाथम् ॥ २ ॥

**( ३ शान्तनवी )** असुराणां राट् दैत्यराजः शुम्भः तस्य दूतस्य मुखात् तत् वाक्यं । यद्वा तस्याः देव्याः वाक्यं प्रतिकूलं आकर्ण्य श्रुत्वा ततोसौ सक्रोधः सन् दैत्यानामधिपं धूम्रलोचनं नाम महासुरं प्राह प्रकथयामास । प्रइति उपसर्गप्रतिरूपकमाहेति च तिङन्तप्रतिरूपकमव्ययं । हे शुम्भ त्वत्पार्श्वे देवी नायाति त्वया सह योद्धुमिच्छति । तां जेतुमुद्युङ्क्ष्व इति दूतवचः श्रुत्वा देव्यानयनाय शुम्भो धूम्रलोचनं प्रस्थापयामास ॥ २ ॥

**( ४ नागोजीभट्टी )** तस्येति । दैत्यानामधिपं सेनापतिम् ॥ २ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** तस्य दूतस्येति ३ ॥ २ ॥

**( ६ दंशोद्धारः )** ॥ २ ॥

## हे धूम्रलोचनाशु त्वं स्वसैन्यपरिवारितः । तामानय बलाद्दुष्टां केशाकर्षणविह्वलाम् ॥ ३ ॥

**( १ गुप्तवती )** ॥ ३ ॥

**( २ चतुर्धरी )** दुष्टां दुःशीलां । केशाकर्षणविह्वलां केशाकर्षणेन आकुलीकृताम् ॥ ३ ॥

**( ३ शान्तनवी )** हे धूम्रलोचन त्वं स्वसैन्यपरिवारितः सन् दुष्टां केशाकर्षणविह्वलां केशानामाकर्षणेन विह्वलां विवशां तां नितम्बिनीमाशु क्षिप्रं बलात् आनय प्रापय । मां शुम्भमिति शेषः । णी प्रापणे द्विकर्मकः । इत्थं शुम्भस्याचरणं समन्त्रशक्तिरहितं च तमिदमनीतिकमालोच्य शुम्भहितकारी नीतिविशारदोऽमात्यः कश्चिद्धूम्रलोचनं प्रस्थातुमुद्युक्तमुद्दिश्योपदिशति । कथं तामानय बलाद्दुष्टामित्यत्र तन्त्रेण श्वेतो धावतीतिवदर्थान्तरसृष्टौ पदान्तरसृष्टिरिष्टैवेति तां अ आनय इति पदच्छेदः क्रियते । तथाहि अनेकार्थस्य सकृदुच्चरणं तन्त्रमाहुः । तत्र अ इति निषेधोऽवक्तव्यः । 'अमानोनाः प्रतिषेधेऽव्याख्याः' इति वचनात् । अतश्च हे धूम्रलोचन त्वं स्वसैन्यपरिवारितः सन् तां देवीं आशु क्षिप्रं बलात् बलमाश्रित्य बलात्कारेण आ आनय नआनय । कीदृशीं तां पूर्ववत्तन्त्रेण आनय बलाद्दुष्टां इत्येकं पदं । अविद्यमानः नयो नीतिर्येषां ते अनयाः पुरुषाः शुम्भादयः तेषां इमानि बलानि आनयानि च तानि बलानि च आनयबलानि अतन्ति सततं गच्छन्ति भजन्ति आनयबलातः । अत सातत्यगमने । क्विप् । तेषु आनयबलात्सु आनयसंबन्धिबलभाक्षु पुरुषेषु दुष्टा विरुद्धा क्रूरा तामानयबलाद्दुष्टां इत्येकं पदं । यद्वा दुष्टां देवीं एवं आनयबलाद्दुष्टामित्येव पदं । पुनः कीदृशीं तां । केशाकर्षणविह्वलां कश्च ब्रह्मा अश्च विष्णुः ईशश्च महेश्वरः केशाः तेषामात्मशक्तेरात्ममहामाया केशात्सकाशात् जगदुत्पत्तिस्थितिलयकारिणी । तत्तदवसरेषु चित्तेष्वाकर्षणं केशाकर्षणं ब्रह्मविष्णुमहेश्वराकर्षणं स्वमायाबलेन ब्रह्मादिप्रकटीकरणं ब्रह्मविष्णुमहेश्वराह्वानं तत्र विषये विशेषेण ह्वलति चलति विजृम्भते चेष्टते वा केशाकर्षणविह्वला तां देवीं । ह्वल चलने । पचाद्यच् । ब्रह्मविष्णुमहेश्वराणां स्वशक्तितः स्वमायातः प्रकाशीकरणे व्यग्रोयममादिमे शक्तिमानय इति देव्यभीष्टार्थप्रतिपत्तिपरव्याख्यानतो दैत्यकुलविध्वंसो न भविष्यतीति नीतिविदमात्याभिप्रायः ॥ ३ ॥

**( ४ नागोजीभट्टी )** हे इति । दुष्टां दुर्वचनाम् । विह्वलामाकुलाम् ॥ ३ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** हे धूम्रलोचनेति ४ ॥ ३ ॥

**( ६ दंशोद्धारः )** ॥ ३ ॥

## तत्परित्राणदः कश्चिद्यदिवोत्तिष्ठते परः । स हन्तव्योऽमरो वापि यक्षो गन्धर्व एव वा ॥ ४ ॥

**( १ गुप्तवती )** ॥ ४ ॥

**( २ चतुर्धरी )** उत्तिष्ठते समीहते । 'उदोऽनूर्ध्वकर्मणि' इत्यात्मनेपदम् ॥ ४ ॥

**( ३ शान्तनवी )** हे धूम्रलोचन तत्परित्राणदः तत्परित्राणं तस्या देव्याः परित्राणं रक्षणं तत् ददातीति तत्परित्राणदः तस्याः परित्राणं दातुं क्षमः तत्परित्राणदः । 'अतोऽनुपसर्गे कः' । यः कश्चित्परो मर्त्यो वा अमरो देवो वा यक्षो वापि गन्धर्वो

वापि परः शत्रुः अपरः तां जिघृक्षुः अन्यः चकारात् नागादिर्वा विपक्षत्वेन उत्तिष्ठते उद्युङ्क्ते यदि स हन्तव्य एव न स्थापनीयः । 'उदोऽनूर्ध्वकर्मणि' इत्यात्मनेपदं । यक्षः कुबेरादिः । गन्धर्वस्तुम्बुरुप्रभृतिः । पक्षान्तरे यदि अयं हि शुम्भो नीतिरहितो यदा इत्थमादिक्षत् परस्त्रियमानयेति तत्र नीतिपरोऽमात्यस्त्वाह । हे धूम्रलोचन तत्परित्राणदः तस्या देव्याः सकाशात् त्राणं संरक्षणं येषां ते तत्परित्राणदास्तद्भक्तास्तदेकशरणा देवादयः । दो अवखण्डने । तत्परित्राणान् देवादीन् द्यति खण्डयति हिनस्ति इति तत्परित्राणदः तद्भक्तहिंसापरः शत्रुर्यः कश्चित् मरो मानुषो मर्त्यो वा अमरो देवो वा यक्षः कुबेरादिर्वा गन्धर्वस्तुम्बुरुप्रभृतिर्वा । चकारात् दैत्यो वान्यस्तद्द्वेषी वा राक्षसो वा लङ्कानिवासिनागो वा काद्रवेयः विद्याधरो वा जीमूतवाहनादिकिन्नरो वा अश्वादिमुख्यभूतो वा बालग्रहादिः वा उत्तिष्ठिते हिंसितुमुद्युङ्क्ते घटते स हन्तव्यो देव्यैव हन्तव्य एव न स्थापनीय इति । तस्मात्तां नानय । आनयसि चेत्तामापदमेवानयसि । दैत्यकुलविध्वंसिनी सेति नीतिविदमात्योक्तिसमाधिना देवीष्टार्थसिद्धिः ॥ ४ ॥

**( ४ नागोजीभट्टी )** ॥ ४ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** तत्परित्राणद इति ५ ॥ ४ ॥

**( ६ दंशोद्धारः )** तत्परित्राणद इति । उत्तिष्ठते । 'उदोनूर्ध्व' इत्यात्मनेपदम् ॥ ४ ॥

### ऋषिरुवाच ।

## तेनाज्ञप्तस्ततः शीघ्रं स दैत्यो धूम्रलोचनः । वृतः षष्ट्या सहस्राणामसुराणां द्रुतं ययौ ॥ ५ ॥

**( १ गुप्तवती )** ॥ ५ ॥

**( २ चतुर्धरी )** असुराणां सहस्राणां षष्ट्या वृत इत्यन्वयः । द्रुतं सत्वरम् ॥ ५ ॥

**( ३ शान्तनवी )** ततः तेन शुम्भेन शीघ्रं गच्छ तावानयेत्याज्ञप्तः आदिष्टः नियोजितः अनुज्ञापितः स धूम्रलोचनः दैत्यः षष्ट्या गुणितानां षष्टित्वसंख्यया गुणितानां सहस्राणां संख्येयानां असुराणां संघेन वृतः द्रुतं क्षिप्रं ययौ । सहस्राणां असुराणां षष्ट्या वृतः असुरषष्टिसहस्रवृतो ययौ असुराणां संबन्धीनि सहस्राणि तेषां संबन्धिनी या षष्टिः तया वृतो द्रुतं ययौ आज्ञप्त इति ण्यप् । मारणतोषणनिशामनेषु मिचेतिचुरादिः । कर्मणि क्तः । वादान्तसूत्रे ज्ञप्त इति निपातनात् वा इट्प्रतिषेधो णिलुग्लोपधाया ह्रस्वता च । ज्ञा नियोजने चुरादिरेव । अतो निष्ठायामाज्ञप्त इत्येव ॥ ५ ॥

**( ४ नागोजीभट्टी )** ऋषिरुवाच । तेनेति । सहस्राणामसुराणां षष्ट्या वृत इत्यन्वयः ॥ ५ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** ऋषिरुवाचेति । तेनाज्ञप्त इति ७ ॥ ५ ॥

**( ६ दंशोद्धारः )** ॥ ५ ॥

## स दृष्ट्वा तां ततो देवीं तुहिनाचलसंस्थिताम् । जगादोच्चैः प्रयाहीति मूलं शुम्भनिशुम्भयोः ६

**( १ गुप्तवती )** जगादोच्चैरित्यनेनानुनयाभावो ध्वनितः ॥ ६ ॥

**( २ चतुर्धरी )** तुहिनाचलो हिमवान् । मूलं समीपं । मूलमाद्यन्तिकश्रेष्ठे(शिफास्थिनि)ष्विति नामलिङ्गानुशासनात् ॥ ६ ॥

**( ३ शान्तनवी )** ततः शुम्भनिदेशानन्तरं स धूम्रलोचनः दैत्यः तुहिनाचलसंस्थितां हिमाचलमास्थितां देवीं दृष्ट्वा वीक्ष्य इति उच्चैः जगाद अत्युच्चैरुवाच । किमिति । हे देवि त्वं शुम्भनिशुम्भयोः मूलं अन्तिकं समीपं प्रयाहि गच्छेति । 'मूलमाद्ये शिफायां स्यादङ्के निकुञ्जेन्तिकेऽपि च' इति शुम्भानुकूलोऽर्थः । देव्यनुकूलोर्थस्त्वेषः । हे देवि त्वं । मूल प्रतिष्ठायां भ्वादिः । मूलनं मूलः । भावे घञ् । तं मूलं प्रतिष्ठां प्रभुतां याहि प्राप्नुहि इति स देवीसखीजनः तुहिनाचलसंस्थितां तां दृष्ट्वा उच्चैर्जगाद उक्तवान् । कीदृशी देवी । शुम्भनिशुम्भयोः । शुम्भ भासनहिंसनयोः । भ्वादिः परस्मैपदी । शुम्भति रणे भासते हिनस्ति चेति शुम्भो दैत्यः । पचाद्यच् । नितरां शुम्भनं हिंसनं निशुम्भः । भावे घञ् । शुम्भस्य दैत्यस्य निशुम्भः हिंसनं शुम्भनिशुम्भः शुम्भदैत्यकर्म हिंसनं तस्मिन् शुम्भनिशुम्भविषये शुम्भहिंसनविषये यतमाना शुम्भनिशुम्भया शुम्भस्य हिंसने विषये यतमानेत्यर्थः । यती प्रयत्ने । भ्वादिरात्मनेपदी । 'सप्तम्यां जनेर्डः' । 'अन्येष्वपि दृश्यते' इत्यत्र अपिशब्दः सर्वोपाधिव्यभिचारार्थं इतिवचनात् । धात्वन्तरे कारकान्तरेऽपि च डो भवति डित्वभस्यापि टिलोपः । स्त्रियां टाप् । अवति रक्षति पापेभ्य ऊः उवौ उवः । शुम्भनिशुम्भया चासौ ऊश्चेति विगृह्य कर्मधारये आद्गुणे च शुम्भनिशुम्भयोः । यद्वा शुम्भनिशुम्भया देवी । पुनः कीदृशी त्वं । ऊ इति पदच्छेदः । अव रक्षणे क्विप् । 'ज्वरत्वरस्रिव्यविमवामुपधायाश्च' इति वकारस्य अकारस्य च ऊठादेशद्वये सवर्णदीर्घत्वे ऊः रक्षिका इति देव्यभीष्टार्थो देवीसखीजनेन वर्णितः । संस्थितां सम्यगवस्थितां । 'संस्थाधारे स्थितौ मृतौ' ॥ ६ ॥

**( ४ नागोजीभट्टी )** स दृष्ट्वेति । तुहिनं हिमम् । मूलं समीपम् ॥ ६ ॥

**( ५ जगच्चन्द्रचन्द्रिका)** स दृष्ट्वा तामिति ८ ॥ ६ ॥

**( ६ दंशोद्धारः )** स दृष्ट्वेति । तुहिनाचलो हिमाचलः । मूलं समीपम् । 'मूलमाद्ये शिफायां स्याद्भे निकुञ्जेन्तिकेऽपि च' इति विश्वः ॥ ६ ॥

## न चेत्प्रीत्याद्य भवती मद्भर्तारमुपैष्यति । ततो बलान्नयाम्यद्य केशाकर्षणविह्वलाम् ॥ ७ ॥

**( १ गुप्तवती )** ॥ ७ ॥

**( २ चतुर्धरी )** चेत् यदि ॥ ७ ॥

**( ३ शान्तनवी )** हे देवि अद्य अस्मिन्नहनि भवती प्रीत्या स्नेहेन स्वरुच्या मद्भर्तारं मम धूम्रलोचनस्य भर्तारं पोषकं स्वामिनं शुम्भं नोपैष्यतिचेत् ततस्तर्हि अगमनादपराधतः एषोऽहं धूम्रलोचनः अद्याधुनैव बलाद्बलात्कारेणैव केशाकर्षणविह्वलां केशानामाकर्षणादाक्लथनात् विह्वलां विवशां विकलां विहस्तां व्याकुलां भवतीं देवीं मद्भर्तारं प्रापयामि । स्वामिनं शुम्भं नयामि प्रापयामि । वर्तमानसामीप्ये भविष्यति लट् । उपैष्यतीति भवच्छब्दयोगे प्रथमपुरुष एव । एत्येधत्यूठ्सु वृद्धिः । इति शुम्भानुकूलोऽर्थः । देव्यनुकूलोऽर्थस्त्वेषः । हे देवि अद्य भवती मत् मां सखीजनं आप्तवर्गं प्राप्य । कर्मणि ल्यब्लोपे पञ्चमी अबलात् अबलात्कारेण स्वतएव प्रीत्या हर्षेण भर्तारं शिवं न उपैष्यति चेत् उपगमिष्यति चेत् । द्वौ प्रतिषेधौ प्रकृतमर्थं गमयतः । ततः एषोऽहं सखीजनः त्वां केशाकर्षणविह्वलां यामि प्राप्नोमि भजामि । कश्च ब्रह्मा अश्च विष्णुः तौ कौ तयोः ब्रह्मविष्ण्वोश्च ईशः स्वामी शिवः केशः तस्य केशस्य शिवस्य आकर्षणं आह्वानं तस्मिन्विषये विह्वलां लज्जितत्वादाकुलां त्वा त्वां यामि भजामीति देव्यभीष्टार्थो[१] देवीसखीजनेन प्रस्तुतः । अथ प्रकारान्तरं यथा उपैष्यतीत्यत्र उप एष्यति इति छेदः । नचेत्प्रीत्या इत्येकं पदं । 'उ संबुद्धौ रुषोक्तौ च शिववाचि त्वनव्ययं' । धूम्रलोचन आह । उ देवि हे देवि अद्य मद्भर्तारं मत्स्वामिनं शुम्भं एष्यति प्राप्स्यति । किंविशिष्टा सती भवती एष्यति । पा रक्षणे । पान्ति रक्षन्ति निवारयन्ति पाः । कर्तरि क्विपि जसि रूपं । अज गतिक्षेपणयोः । पो रक्षकान् शुम्भस्य परिवारान् अजति क्षिपति न्यक्करोति अधः करोति दूरीकरोति इति पा देवी । 'सप्तम्यां जनेर्डः' 'अन्येष्वपि दृश्यते' इत्यत्र अपिशब्दः सर्वोपाधिव्यभिचारार्थ इति वचनात् धात्वन्तरादपि कारकान्तरेऽपि च डो भवति । डित्वभस्यापीति अजराशब्दस्य टेर्लोपः । स्त्रियामजाद्यतष्टाप् । हल्ङ्यादिलोपे सति पा इति रूपं । पा शुम्भरक्षकक्षेपिका देवी एवंविधा सती शुम्भं हन्तुं एष्यतीत्यर्थः । पुनः किंविशिष्टा सती भगवती शुम्भं हन्तुं एष्यतीत्यर्थः । किंविशिष्टासती भगवती शुम्भं हन्तुं एष्यति न चेत्प्रीत्या । अकारान्तमेतत् । चिती संज्ञाने चेतन्ति केचन तानन्ये प्रयुञ्जते इति 'हेतुमति च' इति णिच् ततः क्विप् । 'णेरनिटि' 'वेरपृक्तस्य' लोपः । अप्रत्ययलक्षणेन गुणः । चेतः देवर्ष्यादयः तेषु चेत्सु बोधयितृषु वैदिकधर्मप्रवर्तयितृषु देवर्ष्यादिषु विद्वत्सु प्रीतिः स्नेहः चेत्प्रीतिः । न इति नञोऽन्यएव निषेधार्थो निपातः न विद्यमाना चेत्प्रीतिर्येषां दैत्यानां ते नचेत्प्रीतयो दैत्याः । 'नलोपो नञः' इति वास्ति नतु नशब्दस्याप्यननुबन्धकस्य । उज्झ उत्सर्गे । नचेत्प्रीतीन् अविद्यमानविबुधप्रीतीन् दैत्यान् उज्झति उत्सृजति परिवर्जयति हिनस्तीति पूर्ववत् डप्रत्यये डित्वभस्यापि टेर्लोपः । सच उज्झेरेव । स्त्रियां डान्तादाप् । 'इको यणचि' हल्ङ्यादिलोपः । नचेत्प्रीत्या देवी दैत्यान् विबुधविद्वेषिणः उज्झन्तीत्यर्थः । यत ईदृशी भवन्ती देवी शुम्भं प्रति तत्पक्षिकसैनिकविद्राविका च विबुधविद्वेषिहन्त्री च सती एष्यति ततः अद्य अधुनाहं धूम्रलोचनः सन् भवती देवी बलात् बलं सैन्यं प्राप्य । कर्मणि ल्यब्लोपे पञ्चमी । न यामि न गच्छामि मद्भर्तारं च न गच्छामीत्यर्थः । कीदृशीं भवतीं एषकेशाकर्षणविह्वलां इत्येकं पदं । इष गतिहिंसादर्शनेषु । भ्वादिरात्मनेपदी आङ्पूर्वः । आसमन्तादीषन्ते हिंसति एषः पचाद्यच् । एषाणां हिंसकानां दैत्यानां केशाः मूर्धजाः तेषामाकर्षणं निग्रहणं तस्मिन् विषये विशेषेण ह्वला । ह्वल चलने ह्वलति चलति पतते चेष्टते इति पचाद्यच् । एषकेशाकर्षणविह्वलां तां दैत्यकेशाकर्षणसज्जचेष्टामित्ययं देवीष्टार्थः ॥ ७ ॥

**( ४ नागोजीभट्टी )** विपक्षे बाधकमाह । नचेदिति । तर्हीत्यर्थः ॥ ७ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** नचेत्प्रीत्येति ९ ॥ ७ ॥

**( ६ दंशोद्धारः )** ॥ ७ ॥

---

१ 'नयाम्येष्य' इति पाठः ।

## देव्युवाच ।

**दैत्येश्वरेण प्रहितो बलवान्बलसंवृतः । बलान्नयसि मामेवं ततः किं ते करोम्यहम् ॥ ८ ॥**

**( १ गुप्तवती )** बलवान् रूपवान् । बलसंवृतः काकैरावृतः । बलाच्छरीरस्थौल्यमात्रात् । किं ते करोम्यहं तवाहंकारं कुत्सितं करोमि । 'बलं गन्धे रसे रूपे स्थेमनि स्थौल्यसेनयोः । बलो हलायुधे दैत्यभेदे बलिनि वायसे' इति विश्वः ॥ ८ ॥

**( २ चतुर्धरी )** बलवान् सामर्थ्यवान् इति सोल्लुण्ठं । बलसंवृतः करोमि कर्तुं शक्नोमि ॥ ८ ॥

**( ३ शान्तनवी )** हे धूम्रलोचन त्वं बलवान् सामर्थ्ययुक्तः वीर्योपेतः बलसंवृतः बलेन सैन्येन संवृतो वेष्टितः संगतः अथच दैत्येश्वरेण शुम्भेन प्रहितः प्रस्थापितः बलात् बलात्कारेण एवं केशाकर्षणविह्वलां मूर्धजाच्छन्नविवशां मामबलां नयसि ततोऽहं ते तव किं करोमि । त्वां प्रति किमप्यहं स्त्रीत्वात् युद्धादिकं कर्तुमक्षमोस्मीति शुम्भानुकूलोऽर्थोयं । देव्यनुमतोऽर्थश्लेषः । हे धूम्रलोचन त्वं बलवान् बलसंवृतश्चेति दैत्येश्वरेण शुम्भेन प्रहितः प्रस्थापितोऽसि ततो मां नयसि । एवंसति त्वामहं पृच्छामि । बलमत्ति बलात् अहं बलाद् मां देवीतो धूम्रलोचनस्य संबन्धि वस्तु किं नयसि किं यापयसि । नयतेर्द्विकर्मकत्वादजां ग्रामं नयतीतिवत्प्रधानमप्रधानं चेति कर्मद्वयं वक्तव्यं । तत्र बलादं मां देवीं प्रधानं कर्म द्वितीयं किं स्यात् तद्ब्रूहि । अथेह प्रकृतत्वात्प्रसक्तत्वात् बलादं मां देवीं शुम्भं च चेन्नयसि तर्हि बलादमितिकृत्वा तस्य सामर्थ्यमत्स्यामि संहरिष्यामि । अथ बलादं मां देवीं त्वमेवात्मानं नयसि तर्हि त्वामेव धूम्रलोचनमत्स्यामि संहरिष्यामि । अथ बलादं मां देवीं त्वत्संबन्धीयं सैन्यं नयसि तर्हि सुतरां तदेवात्स्यामि संहरिष्यामि । ततः ते किं करोमि किमस्ति ते यत्करोम्यहं । हे धूम्रलोचन समस्तं ते यत् किंचिदस्ति तद्ब्रूहि तदपि विनष्टं करोमीति क्रोधावेशोत्थो देव्यभिप्रायः ॥ ८ ॥

**( ४ नागोजीभट्टी )** देव्युवाच । दैत्येश्वरेणेति । एवं केशाकर्षणविह्वलां बलात् सामर्थ्यसत्ता अवशता च । सावष्टम्भोक्तिरेषा ॥ ८ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** देव्युवाचेति १० । दैत्येश्वरेणेति ११ ॥ ८ ॥

**( ६ दंशोद्धारः )** दैत्यो बलवान् समर्थः । बलसंवृतः सेनापरिवृतः । करोमि कर्तुं शक्नोमि ॥ ८ ॥

## ऋषिरुवाच ।

**इत्युक्तः सोऽभ्यधावत्तामसुरो धूम्रलोचनः । हुंकारेणैव तं भस्म सा चकाराम्बिका ततः ९**

**( १ गुप्तवती )** ॥ ९ ॥

**( २ चतुर्धरी )** सा अम्बिका तं भस्म भस्मसात् चकार इत्यन्वयः । भस्मसात् भस्मस्वरूपमिति वा पाठार्थौ ॥ ९ ॥

**( ३ शान्तनवी )** इत्येवं देव्याउक्तः स धूम्रलोचनः असुरः तां देवीं अभ्यधावत् वेगेन अभ्यद्रवत् । सृ गतौ । सर्तेर्वेगितायां गतौ धावादेशो वक्तव्यः । यद्वा धावु गतिशुद्ध्योः । उभयपदी । ततोऽनन्तरं साम्बिका देवी तं धूम्रलोचनं क्रोधानलज्वालागर्भेण हुंकारेणैव भस्म चकार भस्मीचकार । 'हुं वितर्के परिप्रश्ने भित्सायां भर्त्सने भये । क्रोधे दुःखे विकारेऽपि मन्त्रभेदेपि चाव्ययं' । क्वचिच्च भस्मसाचकारेतिवा पाठः । 'विभाषा सातिकार्त्स्न्ये' इति अभूततद्भावे कृभ्वस्तियोगे संपद्यकर्तरि च्विरित्यस्मिन्विषये स्कृत्स्नतायां मन्यमानायां सातिप्रत्ययः । अभस्म भस्म चकार कार्त्स्न्येन भस्मसाच्चकार । धूम्रलोचनशरीरं कृत्स्नमपि भस्मीचकारेत्यर्थः । अन्तर्वर्तिविभक्त्याश्रितेन पदत्वेन न लोपवत् । पादान्तयतिश्छान्दसत्वेन वा । सानावाश्रिता । हुं इत्यस्य कारणं हुंकारः हुंकृतिरित्यर्थः ॥ ९ ॥

**( ४ नागोजीभट्टी )** ऋषिरुवाच । इतीति । तं सा भस्मचकारेत्यन्वयः ॥ ९ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** ऋषिरुवाचेति १२ । इत्युक्त इति १३ ॥ ९ ॥

**( ६ दंशोद्धारः )** इत्युक्त इति । भस्मसादिति पाठः ॥ ९ ॥

**अथ क्रुद्धं महासैन्यमसुराणां तथाम्बिका । ववर्ष सायकैस्तीक्ष्णैस्तथा शक्तिपरश्वधैः ॥ १० ॥**

**( १ गुप्तवती )** ॥ १० ॥

**( २ चतुर्धरी )** महासैन्यं सेनासमुदायः । सायकैः शरैः । परश्वधैः कुठारैः ॥ १० ॥

**( ३ शान्तनवी )** अथ धूम्रलोचने भस्मीकृते तथा क्रुद्धं असुराणां सैन्यं कर्तृ तीक्ष्णैः सायकैः तथा शक्तिसहितैः परश्वधैः शक्तिसहितैः परशुभिश्च आयुधैः कुठारैरम्बिकां देवीं ववर्ष शरसंपातेन शक्तिपातेन परशुपातेन च देवीं संछादयामास । असुरसेनामित्यर्थः । शक्तिपरश्वधैरिति मध्यमपदलोपी समासः । द्वन्द्वे तु सेनाङ्गत्वादेकवद्भावः स्यात् । 'परशुश्च परश्वधः' ।

इह असुरमहासैन्यं कर्तृ। अम्बिकामायुधैर्ववर्ष संछादयामास। ततोऽनन्तरं सिंह एव असुरसेनया युयुधे नैवाम्बिकेति कस्यचिदाशङ्का स्यात् किमम्बिका असुरशरसंपाततो मृता न जीवति सेति। यद्यप्युत्तरत्र सा समानीयतां लब्विति तदमृततोपत्स्यते। तथापि सा महासुरसंपाततः संमूर्च्छिता सती पुनरुत्थाय योद्धुमक्षमाभूत्। अन्यथा युध्यतैव किंनेति वीरकर्मण्यपकर्षः स्यात्। अतः सोपि युयुधे। तद्यथा तत्रैव श्लोके अम्बिका अम् भवति इति पदच्छेदः। अम्बिका कर्त्री। महासैन्यं कर्म। 'उप्रश्नेऽङ्गीकृतौ रोष आम् स्मृतौ चावधारणे'। अथ धूम्रलोचनः संग्रामे देव्या भस्मीकृत इति अम् इति मनसा स्मृत्वा क्रुद्धं क्रोधाविष्टं असुराणां महासैन्यं कर्म। अम्बिकापि क्रुद्धा सती तथा तद्वदेव तीक्ष्णैरेव सायकैः शक्तिपरश्वधैश्च शक्तिभिः सहितैः कुठारैश्च ववर्ष असुरसेनां संछादयामास। यद्वा अमित्यवधारणे। अथ तथा क्रुद्धमसुराणां महासैन्यं कर्म। अम्बिका आम् अम्बिकैव देव्येव तीक्ष्णैः सायकैः तथा शक्तिपरश्वधैश्च ववर्ष। नत्वसुरमहासेनां अम्बिका इति अम्बिकाया एव वीरकर्मण्युत्कर्षः ॥ १० ॥

(४ **नागोजीभट्टी**) अथेति। अम्बिका कर्त्री। अतएव तथा स्वारस्यम् ॥ १० ॥

(५ **जगच्चन्द्रचन्द्रिका**) अथ क्रुद्धमिति १४ ॥ १० ॥

(६ **दंशोद्धारः**) ॥ १० ॥

## ततो धुतसटः कोपात्कृत्वा नादं सुभैरवम्। पपातासुरसेनायां सिंहो देव्याः स्ववाहनः ॥ ११॥

(१ **गुप्तवती**) धुतसटः कम्पितकेसरः ॥ ११ ॥

(२ **चतुर्धरी**) धुतसटः कम्पितकेसरः। पपात प्राविशत्। अर्शआदिपाठात् स्ववाहन इति बहुवचनात् कर्मणि ल्युः। सोऽनन्यसाधारणो निजभूतो वाहनः ॥ ११ ॥

(३ **शान्तनवी**) ततः कोपात् धुतसटः कम्पितस्कन्धकेसरः स सिंहो देव्याः वाहनो वाहनीभूतो देव्याः सिंहः सुभैरवं अतिभयंकरं नादं सिंहनादं कण्ठगर्जनं कृत्वा असुरसेनायां हिंसितुं पपात। उत्प्लुत्य निपपात। स्ववाहनमिति पाठे अनन्यसाधारणं वाहनं देव्या एव सिंहो वाहनं नान्यस्येति स इति पाठे प्रसिद्धः सिंहो भीरोरयं त्रासकारी भैरवः त्रिलिङ्गः 'वाहनमाहितात्' इति निर्देशाद्वाहनशब्दो नपुंसकलिङ्गः ॥ ११ ॥

(४ **नागोजीभट्टी**) निर्नीयकसैन्ये देव्याः प्रयासो व्यर्थ इति मत्वा सिंहो युयुधे। तत इति तत्र हेतुगर्भविशेषणम्। स्ववाहन इति। अर्धर्चादित्वात्पुंस्त्वं। स्वीयवाहन इत्यर्थः। पपात प्राविशत् ॥ ११ ॥

(५ **जगच्चन्द्रचन्द्रिका**) ततो धुतसट इति ॥ १५ ॥ ११ ॥

(६ **दंशोद्धारः**) तत इति। धुतसटः कम्पितकेसरः। वाहयतीति वाहनः। कर्तरि बाहुलकाल्ल्युट्। सः प्रसिद्धः। स्ववाहन इति पाठे स्वस्या वाहनः। सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः। आर्षत्वाद्ध्रस्वत्वमिति चतुर्भुजोक्तिस्त्वसाध्व्येव ॥ ११ ॥

## कांश्चित्करप्रहारेण दैत्यानास्येन चापरान्। आक्रान्त्या चाधरेणान्याञ्जघान स महासुरान् १२

(१ **गुप्तवती**) ॥ १२ ॥

(२ **चतुर्धरी**) आक्रम्यातिक्रम्य। आक्रान्त्येतिपाठे आक्रान्त्या भयेन ॥ १२ ॥

(३ **शान्तनवी**) असुरसेनायां निपत्य सिंहः किमकार्षीत्तत्राह। स सिंहः पञ्चास्यः करप्रहारेण कांश्चिद्दैत्यान् जघान। स सिंहः आस्येन अपरांश्च दैत्यान् मुखेन जघान। स सिंहः चरणेनाक्रम्य अन्यान् महासुरान् जघान जिहिंस। स सिंहः खलु पञ्चास्यः एकं आस्यं वक्त्रं आस्यवत् घातकत्वात्करद्वयं चरणद्वयं चास्यचतुष्टयं। पञ्चास्यानि युद्धसाधनानि यस्य स पञ्चास्यः। आक्रम्य चाधरेणान्यान् इत्यपि पाठे अधरेण चरणभागेनाक्रम्यान्यान् महासुरान् जघानेत्येवार्थः। अन्यथा अधरेणौष्ठेन महासुराणामाक्रमणं न संभवति। अथ देवीप्रभावात्संभवेत्। तस्याप्यास्येन चापरान् जघानेत्यास्यग्रहणेनैवाधरस्यापि युद्धसाधनत्वेन ग्रहणस्य सिद्धत्वात्पुनरधरेणेति केयं वाचोयुक्तिरुक्तिमतां। यद्वा अधरेण ओष्ठेन स्फुरितेन प्रकटीकृतः कोपाध इत्युपचर्यते। अधरेण कोपेनाक्रम्य। यद्वा अधस्तादुपचारतः शरीरसाधस्तादधोभागेन उरोदेशेनाक्रम्य। यद्वा अविद्यमाना धरा भूर्यत्र सोऽधरः आकाशदेशः तेन अन्तरिक्षेणाक्रम्य निरुध्य ॥ १२ ॥

(४ **नागोजीभट्टी**) कांश्चिदिति। स सिंहः। आक्रान्तिराक्रमणं तेन च अधरेण अधरकायेनाधरोष्ठेन च अन्यान्महासुरान्दैत्याञ्जघानेत्यन्वयः ॥ १२ ॥

(५ **जगच्चन्द्रचन्द्रिका**) कांश्चित्करेति १६ ॥ १२ ॥

(६ **दंशोद्धारः**) ॥ १२ ॥

---

१ 'आक्रम्य चा' इति चतुर्धरीपाठः।

**केषांचित्पाटयामास नखैः कोष्ठानि केसरी। तथा तलप्रहारेण शिरांसि कृतवान्पृथक् ॥ १३ ॥**

**( १ गुप्तवती )** ॥ १३ ॥

**( २ चतुर्धरी )** कोष्ठानि हृदयानि । केसरी सिंहः । तलो विस्तृताङ्गुलिपाणिः ॥ १३ ॥

**( ३ शान्तनवी )** स केसरी सिंहः केषांचिद्दैत्यानां कोष्ठान् जठराभ्यन्तरदेशान् नखैः नखरैः उत्पाटयामास विदारयामास। पट भाषार्थश्चुरादिः । धातूनेकार्थत्वेन प्रयोगतो विदारणार्थः । 'असाकल्ये तु चिचन' 'पुंसि कोष्ठोऽन्तर्जठरं कुसूलोन्तर्गृहं तथा' । कोष्ठानि केसरीति तु पाठे व्यत्ययेन छान्दसं नपुंसकत्वं । यद्वा कोष्ठान् इकेसरी इति छेदः । इः कामः । इना कामेन चरति इचारी इकेसरी । अनिवारितप्रसरः केसरीत्यर्थः। मध्यमपदलोपी समासः । तथा तलप्रहारेण हस्तस्य तलघातेन चपेटेन चपेटया चपेटाघातेन केषांचिद्दैत्यानां शरीरेभ्यः शिरांसि मस्तकानि पृथक् पृथग्भूतानि कृतवान् । करनखपञ्जरेण शिरांसि छित्त्वा भुवि पातयामासेत्यर्थः । 'पाणौ चपेटप्रतलप्रहस्ताविस्तृताङ्गुलौ' केचिदाहुः तलाभ्यां द्वाभ्यां प्रवर्तितेन प्रहारेण शिरांसि पृथक् कृतवानिति । युक्तमेतत् । यदभ्यधुः । 'द्वौ संहतौ सिंहतलौ प्रतलौ वामदक्षिणौ' । द्वौ प्रतलौ संहतौ वामदक्षिणाख्यौ मिलितौ सिंहतलौ सिंहतलाख्यौ कथ्येते । सिंहो हि मिलिताभ्यां चपेटाभ्यां हन्ति ॥ १३ ॥

**( ४ नागोजीभट्टी )** केषामिति । कोष्ठानि तु उदरमध्यानि ततो । विस्तृताङ्गुलिः पाणिः ॥ १३ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** केषांचिदिति १७ ॥ १३ ॥

**( ६ दंशोद्धारः )** ॥ १३ ॥

**विच्छिन्नबाहुशिरसः कृतास्तेन तथापरे। पपौ च रुधिरं कोष्ठादन्येषां धुतकेसरः ॥ १४ ॥**

**( १ गुप्तवती )** ॥ १४ ॥

**( २ चतुर्धरी )** ॥ १४ ॥

**( ३ शान्तनवी )** तथा शौर्यभाजा तेन सिंहेन अपरे शत्रवः महासुराः विच्छिन्नबाहुशिरसः कृताः । बाहवश्च शिरांसि च मस्तकानि बाहुशिरः । प्राण्यङ्गत्वादेकवद्भावः । तथा विच्छिन्नं शिरो येषां ते । अथच तथा शौर्यशाली धुतकेसरः स केसरी सिंहः अन्येषां महासुराणां कोष्ठात् अन्तर्जठरात् जठराभ्यन्तरदेशात् कोष्ठं विदार्य । कर्मणि ल्यब्लोपे पञ्चमी । रुधिरं पपौ पा पाने । एतेन सिंहस्यापि वीरपानौचिती सूचिता । 'वीरपानं तु यत्पानं वृत्ते भविनि वा रणे' । 'पुंसि कोष्ठोऽन्तर्जठरं कुसूलोऽन्तर्गृहं तथा' ॥ १४ ॥

**( ४ नागोजीभट्टी )** ॥ १४ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** विच्छिन्नेति १८ ॥ १४ ॥

**( ६ दंशोद्धारः )** ॥ १४ ॥

**क्षणेन तद्बलं सर्वं क्षयं नीतं महात्मना। तेन केसरिणा देव्या वाहनेनातिकोपिना ॥ १५ ॥**

**( १ गुप्तवती )** ॥ १५ ॥

**( २ चतुर्धरी )** महात्मना महोत्साहेन ॥ १५ ॥

**( ३ शान्तनवी)** तेन केसरिणा सिंहेन देव्याः वाहनेनातिकोपिना । अतएव क्षणेनैव तत् प्रसिद्धं बलं सैन्यं । यद्वा तस्य धूम्रलोचनस्य बलं सैन्यं क्षयं नीतं नाशं प्रापितं । 'निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षणः' । 'निलयापचयौ क्षयौ' । 'आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्मवर्ष्म च' । अतितरां कोपिना ॥ १५ ॥

**( ४ नागोजीभट्टी )** ॥ १५ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** क्षणेन तद्बलमिति १९ ॥ १५ ॥

**( ६ दंशोद्धारः )** ॥ १५ ॥

**श्रुत्वा तमसुरं देव्या निहतं धूम्रलोचनम्। बलं च क्षयितं[1] कृत्स्नं देवीकेसरिणा ततः ॥ १६ ॥**

**( १ गुप्तवती )** ॥ १६ ॥

**( २ चतुर्धरी )** क्षयितं क्षययुक्तं । तारकादित्वादितच् वा क्षयशब्दात्तत्करोतीति णिजन्तान्निष्ठा ॥ १६ ॥

**( ३ शान्तनवी )** इह श्रवणाकोपनाज्ञापनाक्रियात्रयापेक्षैककर्तृकत्वेन श्लोकयुग्मस्यैकोऽन्वयो ज्ञेयः । देव्या तत्प्रसिद्धं

---

१ 'क्षपितं' इति शान्तनवीसंमतः पाठः ।

धूम्रलोचनं असुरं निहितं भस्मितं श्रुत्वा आकर्ण्य ततः देवीकेसरिणा देव्याः सिंहेन तस्य धूम्रलोचनस्य कृत्स्नं बलं सैन्यं क्षयितं नाशितं च श्रुत्वा दैत्याधिपतिः शुम्भः कोपतः स्फुरिताधरः संरम्भकम्पितोष्ठः सन् चुकोप चुक्रोध । अथ तौ प्रसिद्धौ प्राग्दृष्टदेवीकौ चण्डमुण्डौ महासुरौ कर्मभूतौ आज्ञापयामास च निजभृत्यौ नियुयुजे । क्षपितमिति । क्षिप प्रेरणे चुरादिः अदन्तः । प्रेरितं दूरीकृतं । विनाशितमिति यावत् । क्षयितमिति पाठः । क्षयः संजातोऽस्येति तारकादित्वादितच् । आज्ञापयामास । ज्ञा नियोजने चुरादिः । स्वार्थे णिच् ॥ १६ ॥

**( ४ नागोजीभट्टी )** श्रुत्वेति । क्षयितमिति क्षयशब्दादाख्यातसन्नन्तात् क्तः । कृतक्षयमिति ॥ १६ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** श्रुत्वा तमसुरमिति २० ॥ १६ ॥

**( ६ दंशोद्धारः )** श्रुत्वेति । क्षयितं क्षयं प्रापितं । तारकादित्वादितच् । क्षयनमिति पाठे क्षिधातोर्ण्यन्तात् क्तः ॥१६

## चुकोप दैत्याधिपतिः शुम्भः प्रस्फुरिताधरः । आज्ञापयामास च तौ चण्डमुण्डौ महासुरौ ॥१७॥

**( १ गुप्तवती )** ॥ १७ ॥

**( २ चतुर्धरी )** तौ पूर्वोक्तौ ॥ १७ ॥

**( ३ शान्तनवी )** अस्यार्थः स्फुटत्वान्न विवृतः ॥ १७ ॥

**( ४ नागोजीभट्टी )** तौ पूर्वौ ॥ १७ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** चुकोप दैत्येति २१ ॥ १७ ॥

**( ६ दंशोद्धारः )** ॥ १७ ॥

## हे चण्ड हे मुण्ड बलैर्बहुभिः परिवारितौ । तत्र गच्छत गत्वा च सा समानीयतां लघु ॥ १८ ॥

**( १ गुप्तवती )** तत्र गच्छत । तकारे बिन्दुलोपश्छन्दोनुरोधात् । सैनिकहिताभिप्रायकं बहुवचनं वा । उत्तरश्लोके वा इति दर्शनात् । उत्तराध्याये आज्ञप्तास्त इत्युक्तेश्च १८ ॥

**( २ चतुर्धरी )** गच्छतेति छन्दोनुरोधात् बिन्दुलोपो (बाहुल्यात्) व्यत्ययात् । द्वयोरेव वा बहुवचनं गौरवोक्त्या प्रत्येकं वा । एवंच उत्तरत्रापि गच्छतमित्येव पाठः ॥ १८ ॥

**( ३ शान्तनवी )** हे चण्ड हे मुण्ड युवां बहुभिर्बलैः सैन्यैः परिवारितौ परिवेष्टितौ संतौ तत्र गच्छतं । कुत्र यत्र सा देवी वर्तते । गत्वाच गत्वैव क्षिप्रं लघु आशु सा देवी समानीयतां । युवाभ्यामिति शेषः । गच्छतमिति गमेर्लोण्मध्यमपुरुषस्य द्विवचनस्य थसस्तम् । लोटो लङ्वदिति निर्देशात् । गच्छतेति पाठे चण्डमुण्ड तद्बलेषु बहुषु विवक्षितेषु । बहुवचनस्य पूर्ववदतिदेशात् थस्य तः । हे चण्ड हे मुण्ड युवां बहुबलपरिवारितौ मुख्यौ द्वौ बहुभिर्बलानि च ते सर्वे यूयं मिलित्वा यत्र सा देव्यवर्तत तत्र गच्छत यात । गत्वा तु लघु शीघ्रं सा समानीयतां । सा इत्यभिहितं कर्म । तामिति द्वितीयमनभिहितं अजां ग्रामं नीयतामितिवदनुसंधेयं । प्रधानं कर्माभिहितं नाप्रधानं । गच्छतेति वर्गापेक्षया बहुवचनं । अत एवाग्रे वक्ष्यति बहुवचनं यदि वः संशयो युधीति । शुम्भानुकूलोऽयमर्थः । देव्यनुकूलोऽर्थस्त्वेषः । तथाहि गच्छतं तत्र गत्वा तु सा आसं आनीयतां लघु इति पदच्छेदः । असु क्षेपणे भावे घञ् । असनमासः । क्षेपोऽधःकारो न्यकारः । 'आस्तु स्यात्कोपपीडयोः' । ततश्चण्डमुण्डाद्यागमनं दृष्ट्वा सखीवर्गो देवीमाचष्ट । हे देवि त्वं आः कोपेन तत्र गच्छ । कुत्र यत्र चण्डो मुण्डश्च बहुभिर्बलैः सैन्यैः परिवारितौ स्तः । गत्वा तु पुनः तं चण्डं मुण्डं च आह्वयस्व । हे चण्ड हे मुण्ड योद्धुमागच्छेति स्पर्धया तमाकारय । किंच तु पुनः तया देव्या लघु शीघ्रं सा चण्डमुण्डसंबन्धिनी सेना आसं क्षेपं न्यक्कारं विनाशं च नीयतां योज्यतां इति सखीवर्गोक्तोऽयं देव्यनुकूलोऽर्थोऽधिगन्तव्यः ॥ १८ ॥

**( ४ नागोजीभट्टी )** हे चण्डेति बहुलैर्बहुभिरित्यर्थः । गच्छत गच्छतं । छन्दोनुरोधाद्बिन्दुलोपः । लघु शीघ्रम् ॥१८॥

**( ५ जगच्चन्द्रचन्द्रिका)** हे चण्डमुण्डेति २२ ॥ १८ ॥

**( ६ दंशोद्धारः )** हे चण्डेति । गच्छतमिति वक्तव्ये मकारलोप आर्षः । बलवत्त्वेन द्वयोरपि बहुत्वविवक्षया गौरवेण प्रत्येकं वा ॥ १८ ॥

## केशेष्वाकृष्य बध्वा वा यदि वः संशयो युधि । तदाशेषायुधैः सर्वैरसुरैर्विनिहन्यताम् ॥ १९ ॥

**( १ गुप्तवती )** ॥ १९ ॥

**( २ चतुर्धरी )** यदीत्यादि । शीघ्रमागम्यतामित्यन्तेन देव्या हननपक्षमनु(ग्रतम)ज्ञाप्य प्राचीनानयनपक्षं मुख्यतया निर्धारयन्ननुवदति बध्वेति । अथवा यदि वः संशयस्तदेत्यर्थः । तामम्बिकां च बध्वा गृहीत्वेत्यर्थः ॥ १९ ॥

१ 'बहुलैः' इति नागोजीभट्टीस्थः पाठः ।

**( ३ शान्तनवी )** हे चण्ड हे मुण्ड बलानि च युष्माभिः सा देवी केशेषु मूर्धजेषु आकृष्य आच्छिला वध्वा वा रज्जुभिः सा समानीयतां । केशाकर्षणे बन्धने च वा वः युष्माकं यदि पक्षान्तरे संशयः स्यात् तदा युधि संग्रामे अशेषायुधैः साधनैस्त्वद्युक्तैर्वा सर्वैरसुरैर्युष्माभिः सा देवी विनिहन्यतां निघ्निता निजाधीना कर्तव्या । यद्वा विशेषेण निहन्तव्या निघ्ना आयत्ता वश्या कर्तव्येति शुम्भानुकूलोऽर्थः । देव्यनुकूलोऽर्थस्त्वेषः । देवी स्ववर्गानादिक्षत् । हे मदीयाः गणाः युष्माभिः स चण्डो मुण्डश्च केशेषु मूर्धजेषु आकृष्य बध्वा वा विनिहन्यतां । हे मदीयाः गणाः यदि वः युष्माकं केशाकर्षणे बन्धने च संशयः स्यात् तदा युधि संयुगे अशेषायुधैः सर्वैर्युष्माभिः स चण्डो मुण्डश्च विनिहन्यतां । किंविशिष्टैर्युष्माभिः । असुरैः असून् दैत्यप्राणान् रान्ति गृह्णन्ति असुराः । 'आतोऽनुपसर्गे कः' । तैः दैत्यप्राणापहारिभिः इति देव्यभीष्टोऽर्थः । अन्यथा देव्याः पराभिभववचःश्रवणादपकर्षः शङ्कितः स्यात् । अथवा केशेषु आकृष्य बध्वा अव यदि वः संशय इति पदच्छेदः । कः ब्रह्मा अः विष्णुः इः रुद्रः तेषामिव इषवो बाणा यस्याः सा केशेषुः तया देव्या केषेष्वा आकृष्य बध्वा दैत्यान् अव रक्ष । कान् अयदिवः अयेन शुभावहविधिना लब्धा द्यौर्यैस्ते अयदिवो देवाः तान् अयदिवः संभृताः आभरणीकृताः शयवः चक्रमण्डलाख्याः सर्पा यया सा संशयुः कालिका देवी तत्संबुद्धौ हे संशये । तस्या युधः युद्धस्य संबन्धिन्यः आशा दिशस्तदाशाः तदाशासु प्रयुद्धाशासु प्रयुक्तानि ईषाः लाङ्गलदण्डा एव आयुधानि यैस्ते तदाशेषायुधाः दैत्याः तैः अस्य विग्रहान्तरं त्वग्रे वक्ष्य इति तत्पदविवक्षितविग्रहा । अत्रान्वयः । सखीभिर्देवी प्रार्थ्यते । हे संशयाहे संभृतशयाहे संभृतचक्रमण्डल्याख्यसर्पाभरणे हे कालिके देवि त्वं अयदिवः अयेन लब्धस्वर्गान्देवान् अव रक्ष । अव रक्षणे । हे देवि केशेष्वा । तृतीयान्तमेतत् । ब्रह्मविष्णुरुद्रसदृक्षबाणया त्वया देवपाशेन दैत्यान् आकृष्य आच्छिला बध्वा वा युधि युद्धे तदाशेषायुधैः युद्धदिक्प्रयुक्तैरायुधैः सर्वैरसुरैः स चण्डः मुण्डश्च दैत्यौ विनिहन्यतां इति देव्यभीष्टोर्थः । द्वितीयः इषुर्बाणः केशेष्वा देव्या अव रक्ष अयदिवः देवान् हे संशये हे संभृतसर्पाभरणे तदाशेषायुधैः तस्यां युधि विषये आसमंतात् आशाः अश्नुवानाः ईषा लाङ्गलदण्डाः आयुधानि येषां ते तदाशेषायुधाः दैत्याः तैः स विनिहन्यतां चण्डमुण्डैश्चेत्युक्ते देव्या अपि विनिहन्यतां इति गम्यते । यथा पुत्रेण सह पिता भुङ्क्ते इत्यत्र पुत्रोपि भुङ्क्ते इति गम्यते ॥ १९ ॥

**( ४ नागोजीभट्टी )** आनयने प्रकारद्वयमाह । केशेष्विति । आकर्षणमात्रादनागमने बन्धनं च इति गौरवाद्बहुवचनं । तृतीया सहार्थे । युधि युद्धे प्रसक्ते यदि तथा नयने संदेहस्तदा सर्वैर्दैत्यैः सकलायुधैः सा विशेषेण निहन्यतां । मार्यतामित्यर्थः ॥ १९ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** केशेष्वाकृष्येति २३ ॥१९ ॥

**( ६ दंशोद्धारः )** केशेष्विति । यदीत्यादिशीघ्रमागम्यतामित्यन्तेन हननपक्षमनूद्य प्राचीनं बध्वानयनपक्षं निर्धारयति । बध्वेत्यादि । यद्वा यदि वो युधि संशयस्तर्हि हन्यताम् । यदि संशयो न तर्हि बध्वा गृहीत्वा आगम्यतामित्यर्थः । यद्वा अशेषायुधैर्विनिहन्यतां ताड्यतां । पुनः सिंहे निपातिते तस्यां हतायां । भूमौ गतायां इत्यर्थः ॥ १९ ॥

**तस्यां हतायां दुष्टायां सिंहे च विनिपातिते । शीघ्रमागम्यतां बध्वा गृहीत्वा तामथाम्बिकाम् २०**

**इति श्रीमार्कण्डेयपुराणे सावर्णिके मन्वन्तरे देवीमाहात्म्ये धूम्रलोचनवधे षष्ठोऽध्यायः॥६॥**

**( १ गुप्तवती )** अथाम्बिकामिति । अथवा अम्बिकां जीवन्तीमेव बध्वा गृहीत्वा आगम्यतामित्यर्थः । अथ हननानन्तरं बध्वा शवमेव बध्वेत्यर्थः इति केचित् । इह चत्वार उवाचमन्त्राः ॥ २० ॥ इति श्रीगुप्तवत्यां मन्त्रव्याख्याने षष्ठोऽध्यायः ॥६॥

**( २ चतुर्धरी )** अपर आह । तस्यां हतायां बलक्षतायां । अपर आह । सिंहे विनिपतिते सति तस्यां हतायां भूमौ गतायां । अत्र पक्षे हननं गत्यर्थः । हन हिंसागत्योः । गत्यर्थाः प्राप्त्यर्थाः । यद्वा दुष्टायां सेनायां दुष्टा सेना वरूथिनी । शीघ्रमागम्यतामिति काकाक्षिवत्संबन्धः ॥ २० ॥ इति चतुर्धरीटीकायां धूम्रलोचनवधोनाम षष्ठोऽध्यायः ॥ ६ ॥

**( ३ शान्तनवी )** हे चण्ड हे मुण्ड हे बलानि च युष्माभिः सर्वैः दैत्यैः दुष्टायां दैत्यद्वेषिण्यां तस्यां देव्यां हतायां ताडितायां सत्यां परासूकृतायां तदीये सिंहे विनिपातिते व्यसूकृते वा शीघ्रमागम्यतां निजस्थानं प्राप्यतां । अथ सा जीवती आनेतुं शक्या चेत्तर्हि तामम्बिकां गृहीत्वा बध्वा शीघ्रमागम्यतां । तद्दर्शने ममाभिलाषोऽस्तीत्यभिप्रायः । तस्यां हतायां इति अतिकोपेन प्रज्वलितात्मनां अतिकोपिना पुंसा प्रबलशत्रौ मृधे मृतोपि द्रष्टुं इष्यते । अथवा क्रोधज्वलितेन व्याकुलचेतसा तस्यां हतायां समागम्यतामिति तावदुक्तं । ततः पुनरप्युक्तं बध्वा तु तां जीवतीमेव अम्बिकां शीघ्रं गृहीत्वा युष्माभिरागम्यतामित्युक्तं । ननुतामम्बिकाशब्दो मातृवाचीति शुभः कथं ब्रूयात् । तामम्बिकामेवाभिगन्तुकामः । अत्राहुः शुम्भादन्येषां साम्बिकैवेति तस्यां चण्डमुण्डादीनां रमणाभिलाषो न कर्तव्यः । इयं हि युष्माकमम्बैवेति सूचयितुं अम्बिकामित्युक्तं । मातृगमनं हि पशुपक्षीतरेषु स्वत एव गर्हितं इति शुम्भानुकूलोऽर्थः । देव्यनुकूलोऽर्थस्त्वेषः । तस्यां हतायां दुष्टायां सिंहे च विनिपा आतिते शीघ्रं । आगम्यतां बध्वा गृहीत्वा तामथाम्बिकां इति पदच्छेदः । हतायामिति हन्तेर्गत्यर्थे क(र्मणि)

तेरि क्तः । विनिपा इति पैओवै शोषणे । कर्तरि क्विप् । विशेषेण नितरां पायति शत्रून् शोषयति विनिपाः तया विनिपा देव्या आतिते इति । अत सातत्यगमने । अतनं आतः । भावे घञ् । आतः संजातोऽस्याः सा आतिता तत्संबुद्धौ हे आतिते हे देवि अम्बिकामिति अम्बिकाशब्देन देवीहननं विवक्षितं । तर्हि अबि रवि लवि अवस्रंसने इत्यतः कर्तरि ण्वुलि वोरकारादेशे इत्वे च अम्बते लम्बते शत्रूणां गलेष्विति अम्बिका या रज्जुर्विवाहकृता इति विवक्षितपदविग्रहः । अत्रायं देव्यनुकूलोऽन्वय उच्यते । हे सिंहे च अन्यत्र च आतिते हे जगद्रक्षणाय संजातसततगते हे देवि तस्यां दुष्टायां देवद्वेषिण्यां दैत्यसेनायां हतायां गतायां उपस्थितायां सत्यां अथानन्तरं विनिपा विशेषेण नितरां पायन्त्या शत्रून् शोषयन्त्या त्वया देव्या अम्बिकां शत्रुगलेषु लम्बिकां पाशरज्जुं गृहीत्वा तां दैत्यसेनां बध्वा शीघ्रं आगम्यतां इति सखीभिः देवी निगदितेति देव्यभीष्टार्थसिद्धिः ॥ २० ॥ इति श्रीमद्राजाधिराजश्रीतोमरान्वयश्रीमदुद्धरणात्मजश्रीशंतनुचक्रवर्तिविरचितायां शान्तनव्यां चण्डिकामाहात्म्यटीकायां धूम्रलोचनवधविध्युपलक्षितः षष्ठोऽध्यायः ॥ ६ ॥

**( ४ नागोजीभट्टी )** उपसंहरति । आगम्यतामित्यन्तेन । सर्वथा ग्रहीतुमशक्या चेदेवं हन्तव्या नान्यथेत्याह । बध्वेति । अथेति पक्षान्तरे । यदा शक्यते तर्हि बध्वा तां गृहीत्वैवागन्तव्यमित्यर्थः ॥ २० ॥ इति शिवभट्टसुतसतीगर्भजनागोजीभट्टकृते सप्तशतीव्याख्याने षष्ठोऽध्यायः ॥ ६ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** तस्यां हतायामिति २४ ॥ २० ॥ इति श्रीभगीरथविरचिताकण्वगोविन्दकृतसप्तशतीमन्त्रहोमविभागकारिकाणां जगच्चन्द्रचन्द्रिकाख्यटीका संपूर्णा ॥ ६ ॥

**( ६ दंशोद्धारः )** इति श्रीदंशोद्धारटीकायां षष्ठोऽध्यायः ॥ ६ ॥



## सप्तमोऽध्यायः ७

### ऋषिरुवाच ।

**आज्ञप्तास्ते ततो दैत्याश्चण्डमुण्डपुरोगमाः । चतुरङ्गबलोपेता ययुरभ्युद्यतायुधाः ॥ १ ॥**

**( १ गुप्तवती )** ॥ १ ॥

**( २ चतुर्धरी )** चण्डमुण्डौ पुरोगमौ येषां ते ॥ १ ॥

**( ३ शान्तनवी )** ततो धूम्रलोचनवधानन्तरं शुम्भेन आज्ञप्ताः आदिष्टाः नियुक्ताः चण्डमुण्डपुरोगमाः चण्डमुण्डपुरःसराः ते दैत्याः चतुरङ्गबलोपेता हस्त्यश्वरथपादातसमेताः अभ्युद्यतायुधाः सन्नद्धबद्धोन्मुखायुधाः संतो ययुः जग्मुः । आज्ञप्ता इति वादान्तसूत्रेण निपातितः । 'पुरोगमः पुरोगामी' । पुरो गच्छतः पुरोगमौ । चण्डमुण्डौ पुरोगमौ येषां ते तथोक्ताः । 'हस्त्यश्वरथपादातं सेनाङ्गं स्याच्चतुष्टयं' चत्वारि अङ्गानि यत्र तत् चतुरङ्गबलं सैन्यं तेन उपेताः संगताः ययुरेव । न पुनरायाता इति भावः ॥ १ ॥

**( ४ नागोजीभट्टी )** ऋषिरुवाच । आज्ञप्ता इति । शैलेन्द्रशृङ्गे हिमाचलशृङ्गे सिंहस्योपरीति स्थितमित्यन्वयः ॥१॥

**( ५ जगच्चन्द्रचन्द्रिका )** अथ सप्तशतीसप्तमाध्यायस्य मन्त्रहोमविभाग उच्यते । एवं विंशश्लोकयुक्तेऽध्याये मन्त्रास्तु सप्तमे । सर्वे मन्त्राः श्लोकरूपा इति पञ्चअधिका ये विंशतिश्लोकास्तैर्युक्ते सप्तमेऽध्याये तु पुनः सर्वे मन्त्राः श्लोकरूपाः वर्तन्ते । ऋषिरुवाचद्वयं ततः ऋषिरुवाचेति द्वौ मन्त्रौ । ततः षष्ठाध्यायानन्तरं । अत्र रेफलोपश्चिन्त्यः । सप्तविंशतिरेवं तु मन्त्रसंख्या प्रकीर्तिता इति तु पुनः एवंप्रकारेण सप्तअधिका विंशतिः मन्त्रसंख्या प्रकीर्तिता उक्ता । तथाहि ऋषिरुवाचस्वाहा १ । आज्ञप्ता इति २ ॥ १ ॥

**( ६ दंशोद्धारः )** ॥ १ ॥

**ददृशुस्ते ततो देवीमीषद्धासां व्यवस्थिताम् । सिंहस्योपरि शैलेन्द्रशृङ्गे महति काञ्चने ॥ २ ॥**

**( १ गुप्तवती )** ॥ २ ॥

**( २ चतुर्धरी )** शैलेन्द्रस्य हिमवतः शृङ्गे । सिंहस्योपरि व्यवस्थितामित्यन्वयः । काञ्चने सौवर्णे ॥ २ ॥

**( ३ शान्तनवी )** ततः आगताः चण्डादयो दैत्याः महति उच्चे काञ्चने काञ्चनमये सौवर्णे शैलेन्द्रशृङ्गे हिमाद्रिशिखरे स्थितस्य सिंहस्य उपरि व्यवस्थितां विशेषेण अवस्थितां सिंहं आरूढवतीं ईषदल्पो हासो यस्याः सा ईषद्धासा तां देवीं ददृशुः अद्राक्षुः । कचि दीप्तिबन्धनयोः । भावे ल्युट् । कंचनस्य पीतदीधितिरूपस्येदमधिकरणत्वेन काञ्चनं शृङ्गं तस्मिन्निति व्युत्पाद्यते रूपं । अतिशुभ्रो हेमाद्रिः तस्य यत्सौवर्णं शृङ्गं तदतिपीतवर्णं तस्योपरि स्थितो यः सिंहः सोऽत्यदभ्रः तस्योपरि भ्राजमाना या देवी सा कालिका देव्यतिकालिमेति विविधवर्णसान्निध्याद्वर्णोत्कर्षो देव्या वर्णितः । शत्रूणां तु विरुद्धवर्णदर्श-

नाद्विवर्णमुखता सूच्यते । देवीमीषद्धासामद्राक्षुरिति यत्नेन यथा प्राग्धूम्रलोचनदर्शनस्य फलं ससैन्यः प्राप तथा असावपि चण्डमुण्डादिरवाप्स्यतादिति देव्याः सोत्प्रासो हासो वर्णितः ॥ २ ॥

**( ४ नागोजीभट्टी )** ॥ २ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** ददृशुस्ते इति ३ ॥ २ ॥

**( ६ दंशोद्धारः )** ददृशुरिति । शैलेन्द्रस्य हिमवतः शृङ्गे सिंहस्योपरि व्यवस्थितामित्यर्थः ॥ २ ॥

## ते दृष्ट्वा तां समादातुमुद्यमं चक्रुरुद्यताः। आकृष्टचापासिधरास्तथान्ये तत्समीपगाः ॥ ३ ॥

**( १ गुप्तवती )** ॥ ३ ॥

**( २ चतुर्धरी )** ते दैत्याः समादातुं गृहीतुं उद्यमं उत्साहं उद्योगं । उद्यता उत्साहिताः ॥ ३ ॥

**( ३ शान्तनवी )** ततः उद्यताः उद्युक्तास्ते चण्डादयो महासुराः तां देवीं दृष्ट्वा समादातुमुद्यमं चक्रुः । तथा अन्ये तत्समीपगाः तयोः चण्डमुण्डयोः समीपवर्तिनः असुराः आकृष्टचापासिधराः सन्तः तां समादातुमुद्यमं चक्रुः । हन्तुं वा तत्समीप आसन् । तस्याः देव्याः समीपभागमगमन् । आकृष्टा आच्छिताश्चापा यैस्ते च असीनां खड्गानां धराः धारकाः असिधराश्चेति द्वन्द्वः । आच्छि आयामे । आच्छिताः ॥ ३ ॥

**( ४ नागोजीभट्टी )** ते इति । चण्डादयः समप्रधानाः समादातुं गृहीतुं उद्यमं उद्योगं । उद्यताः उत्साहवन्तः । आकृष्टं आकर्णान्तकृष्टं चापं यैस्ते कोशोद्धृतासयश्च तत्समीपगाः । गृहीतुमुद्यतानां रक्षणार्थं समीपगा इत्यर्थः ॥ ३ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** ते दृष्ट्वा तामिति ४ ॥ ३ ॥

**( ६ दंशोद्धारः )** ॥ ३ ॥

## ततः कोपं चकारोच्चैरम्बिका तानरीन्प्रति । कोपेन चास्या वदनं मषीवर्णमभूत्तदा ॥ ४ ॥

**( १ गुप्तवती )** ॥ ४ ॥

**( २ चतुर्धरी )** उच्चैरत्यर्थं । मषी लिपिद्रव्यं तद्वर्णं । कृष्णतरमित्यर्थः । 'लाक्षा लिक्षावगण्डस्य गृध्रसी चमसी मसी' । इत्यमरः ॥ ४ ॥

**( ३ शान्तनवी )** ततो दैत्यानुपसंहर्तुं अम्बिका देवी तानागतान् अरीन् दैत्यान् प्रति उच्चैरतितरां कोपं चकार । तदा कोपेन अस्या देव्या वदनं मुखं मष्या इव वर्णः कृष्णो यस्य तत् मषीवर्णं कृष्णमभूत् ॥ ४ ॥

**( ४ नागोजीभट्टी )** अनेन चण्डादीनामतितामसत्वं सूचितम् । अतस्तद्वधार्थं तामसीप्रादुर्भावमाह । तत इति । मषी लिपिसाधनद्रव्यं तद्वत् श्यामवर्णं निःसरमाणकालीप्रतिविम्बादिति भावः ॥ ४ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** ततः कोपमिति ५ ॥ ४ ॥

**( ६ दंशोद्धारः )** मषीवर्णमिति । श्यामं देव्याः कृष्णत्वेन कोपादतिश्यामत्वमुचितमेव । केचित्तु मषीबालाऽर्कमण्डलमित्याहुस्तन्न । कोशानुपलम्भात् । कालीजनकत्वेन मषीवर्णत्वस्यैवोचितत्वात् ॥ ४ ॥

## भ्रुकुटीकुटिलात्तस्या ललाटफलकाद्द्रुतम् । काली करालवदना विनिष्क्रान्तासिपाशिनी ॥ ५ ॥

**( १ गुप्तवती )** ॥ ५ ॥

**( २ चतुर्धरी )** ललाटफलकात् भालपरिसरात् काली कृष्णवर्णा करालमतिभीषणं वदनं मुखं यस्याः । असिपाशौ विद्येते यस्याः सा तथा ॥ ५ ॥

**( ३ शान्तनवी )** यदम्बिकामुखं कोपात्कृष्णवर्णमभूल्ललाटात्सा काली नामदेवी दैत्यान्विनाशयितुं जातेत्याह । शत्रुषु कुप्यन्त्यास्तस्याः अम्बिकायाः देव्याः भ्रुकुटीकुटिलात् भ्रुवौ कुटी इव भ्रुकुटी । 'इको ह्रस्वोङ्यो गालवस्य' इति वा औत्तरपदिकं ह्रस्वत्वं वा आत्वं च भ्रुकुट्यादीनां तेन उभयविकल्पे त्रैरूप्यं भ्रुकुटी भ्रकुटी भृकुटी चेति भ्रकुट्याः भ्रूभङ्गात् कुटिलं भुग्नं तस्मात् भ्रूभङ्गात्कुटिलात् ललाटफलकात् ललाटं फलकमिव विशालत्वेन ललाटफलकं तस्मात् सकाशाद्द्रुतं शीघ्रं करालवदना करालं भयंकरं दन्तुरं तुङ्गं वदनं वक्त्रं यस्याः सा तथोक्ता दंष्ट्राकरालवक्त्रा । असिः खड्गः परशुश्चायुधमाकर्षणसाधनं तद्वती । असिपाशिनी खड्गपाशपाणिः सती कालीनाम शक्तिः कापि अपरा देवी निष्क्रान्ता निरगात् ॥ ५ ॥

**( ४ नागोजीभट्टी )** भ्रुकुटीति । तस्याः कुपितदेव्याः विनिष्क्रान्ता निःसृता ॥ ५ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** भ्रुकुटीति ६ ॥ ५ ॥

**( ६ दंशोद्धारः )** भ्रुकुटीति । ललाटफलकाद्भालपरिसरात् ॥ ५ ॥

**विचित्रखट्वाङ्गधरा नरमालाविभूषणा । द्वीपिचर्मपरीधाना शुष्कमांसातिभैरवा ॥ ६ ॥**

**( १ गुप्तवती )** खट्वाङ्गदण्डारोपितनरशिरस्कं खट्वापाद एव वा । द्वीपिचर्म वैयाघ्रकृत्तिः ॥ ६ ॥

**( २ चतुर्धरी )** खट्वाङ्गं खुरः । यद्वा खट्वाङ्गं नरमञ्जरी नरमाला नरमुण्डमाला विभूषणं यस्याः सा । 'नरेन्द्रमूर्ध्नां स्रजमुद्वहन्तीति वामनपुराणदर्शनात् । द्वीपी चित्रव्याघ्रः । शुष्कमांसा निर्मांसदेहा ॥ ६ ॥

**( ३ शान्तनवी )** कीदृशी काली । धरति बिभर्ति धरा । विविधानि चित्राणि यस्य तत् विचित्रं । खट्वाया अङ्गं खट्वाङ्गं विचित्रं च तत् खट्वाङ्गं च विचित्रखट्वाङ्गं तस्य धरा विचित्रखट्वाङ्गधरा । यद्वा विचित्रखट्वासुरस्य अङ्गं शरीरारम्भकास्थिपञ्जरः कङ्कालाख्योऽत्र गृह्यते । तद्धरा विचित्रखट्वाङ्गधरा । प्रेतनरखट्वाङ्गधरेति चाहुः । नराणां प्रेतानां शिरसां माला नरमाला स्रक् विभूषणं यस्याः नरमालाविभूषणा नरमुण्डमालाविभूषणा । मध्यमपदलोपी समासः । द्विधागता आपो यस्मिन् तत् द्वीपं ततस्तस्य निवासत्वेन द्वीपी व्याघ्रः तस्य चर्म परिधानं वासो यस्याः सा । शुष्कमांसा निर्मांसा अस्थिचर्ममात्रशरीरा अतएव अतितरां भैरवी अतिभैरवी अतिभयंकररूपा अतिक्रान्ता भैरवी अतिभैरवी । अतिभयंकररूपा अतिक्रान्ता भैरवान् भयंकरान्पुरुषान् अतिभैरवी इति च पाठः ॥ ६ ॥

**( ४ नागोजीभट्टी )** विचित्रेति । खट्वाङ्गं पदिका कंकालपञ्जरस्थं वा । नरमालेत्यत्र नरशब्दस्तन्मुण्डं लाक्षणिकः । द्वीपी व्याघ्रः शुष्कमांसा निर्मांसदेहा । अतएवातिभैरवा ॥ ६ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** विचित्रखट्वाङ्गेति ७ ॥ ६ ॥

**( ६ दंशोद्धारः )** ॥ ६ ॥

**अतिविस्तारवदना जिह्वाललनभीषणा । निमग्ना रक्तनयना नादापूरितदिङ्मुखा ॥ ७ ॥**

**( १ गुप्तवती )** ॥ ७ ॥

**( २ चतुर्धरी )** जिह्वाया ललनं चालनं तेन अवलेहनेन वा भीषणा । निमग्नानि कोटरीभूतानि आरक्तानि च नयनानि यस्याः सा ॥ ७ ॥

**( ३ शान्तनवी )** पुनः कीदृशी काली । अतिक्रान्तं विस्तारं अतिविस्तारं अधिको विस्तारो यस्य वा तत् अतिविस्तारं वदनं यस्याः सा अतिविस्तारवदना । लल ईप्सायां चुरादिराकुस्मीय आत्मनेपदी । णिचि भावे ल्युटि लालनं । ललनं त्वनित्यण्यन्तत्वपक्षे ज्ञेयं । जिह्वाया ललनं चालनं अवलेढुमिच्छा तेन भीषणा भयानका जिह्वाललनभीषणा । निमग्ने नितरामन्तर्लीने अन्तर्गते आरक्ते आसमंतात् लोहिते नयने यस्याः सा निमग्नारक्तनयना । नादेन सिंहनादेन कण्ठगर्जनेन आसमन्तात्पूरितानि दिशामाशानामपि मुखानि द्वाराण्यन्तरालानि यया सा नादापूरितदिङ्मुखा । स्वाङ्गाच्चोपसर्जनादसंयोगोपधाद्वा ङीप् । दिक्पूर्वपदान्ङीब्वा टाप् । तेन ङीषोऽपवादेन ङीपामुक्ते टाबेव । यद्वेह प्रागादिदिक्शब्दपूर्वत्वाभावान्ङीपामुक्ते टाबेव ॥ ७ ॥

**( ४ नागोजीभट्टी )** अतीति । अतिशयितो विस्तारो यस्य तादृशं वदनं यस्या इत्यर्थः । ललनं चालनं निमग्नानि निम्नप्रविष्टानि आरक्तानि नयनानि यस्यास्त्रिनेत्रत्वात् ॥ ७ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** अतिविस्तारेति ८ ॥ ७ ॥

**( ६ दंशोद्धारः )** अतिविस्तारेति । जिह्वाया ललनेन चाननेन अवलेहनेन वा भीषणानि मग्नानि कोटरीभूतानि आरक्तानि नयनान्यस्याः ॥ ७ ॥

**सा वेगेनाभिपतिता घातयन्ती महासुरान् । सैन्ये तत्र सुरारीणामभक्षयत तद्बलम् ॥ ८ ॥**

**( १ गुप्तवती )** ॥ ८ ॥

**( २ चतुर्धरी )** ॥ ८ ॥

**( ३ शान्तनवी )** अम्बिकाललाटोद्भूता सा काली देवी वेगेन जवेन अभिपतिता अभियाता महासुरान् प्रतिघातयन्ती घातं कुर्वन्ती ताडयन्तीसती तत्र सैन्ये सुरारीणां सुराणां अरयः तेषां देवद्विषां तत् प्रसिद्धं बलं सैन्यं कर्म । अभक्षयत् अखादत् । भक्ष अदने चुरादिः । 'णिचश्च' इत्यात्मनेपदं । घातयन्ती । घातशब्दात् 'तत्करोति' इति णिच् । महासुरान् प्रति घातं कुर्वन्ती । ताडयन्तीत्यर्थः । अन्यथा घ्नतः प्रयुंक्ते घातयन्तीत्युक्ते घ्नन्तु मामसुरा इति प्रयुक्तवतीत्यर्थः । घ्नतः गच्छत पलायमानान् पलायध्वमिति प्रयुञ्जाना घातयन्तीत्युच्यते । अथ गच्छतः पुरुषवान् गच्छतेति प्रयुञ्जाना गमयन्तीत्युच्यते । यथा गच्छतः पुरुषान् गच्छतेति प्रयुञ्जाना गमयन्तीत्युच्यते । यद्वा महासुरान् घातयन्ती घ्नन्तीत्यर्थः । स्वार्थे शिष्टप्रयोगतो

णिच् । 'निवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थे णिजिष्यते । धात्वर्थानुप्रवेशोऽपि बुद्ध्यारोपाण्णिचं विना' इति वचनात् । वेगः प्रवाहजवयोः ॥ ८ ॥

(४ नागोजीभट्टी) ॥ ८ ॥

(५ जगच्चन्द्रचन्द्रिका) सा वेगेनेति ९ ॥ ८ ॥

(६ दंशोद्धारः) ॥ ८ ॥

**पार्ष्णिग्राहाङ्कुशग्राही योधघण्टासमन्वितान् । समादायैकहस्तेन मुखे चिक्षेप वारणान् ॥ ९ ॥**

(१ गुप्तवती) ॥ ९ ॥

(२ चतुर्धरी) पार्ष्णिग्राहो गजस्य पश्चाद्भागस्थः पृष्ठरक्षकः । अङ्कुशग्राही पूर्वभागस्थः ॥ ९ ॥

(३ शान्तनवी) 'पुमान्पार्ष्णिस्तयोरधः' तयोः गुल्फयोः अधः पश्चाद्भागः पार्ष्णिः । इहोपमानात् पार्ष्णिमिव पार्ष्णि गृह्णन्ति अवष्टभ्नन्ते । 'पार्ष्णिग्राहस्तु पृष्ठतः'। गजानां पार्ष्णिग्राहाः शिक्षकाः पृष्ठगाः । 'अङ्कुशोऽस्त्री सृणिः स्त्रियां' अङ्कुशान्गृह्णन्ति अङ्कुशग्राहाः । कर्मण्यण् । युध्यन्ते संप्रहरन्ति योधाः । पचाद्यच् । योद्धारः । घण्टाः गजानां पार्श्वलम्बिन्यः निद्रालस्यवारिण्योऽलंकारार्थाश्च तत्समन्वितान् वारयन्त्यरीन्वारणा गजाः । नन्द्यादित्वाल्ल्युः तान् । एकहस्तेन समादाय संक्षिप्य मुखे वक्त्रे चिक्षेप सा काली देवीति संबन्धः । पार्ष्णिग्राहादिभिर्घण्टान्तैः सहितान्गजान् चखादेत्यर्थः ॥ ९ ॥

(४ नागोजीभट्टी) पार्ष्णीति । पार्ष्णिग्राहो गजपार्ष्णिरक्षकः । अङ्कुशग्राही महामात्रः । योधो गजारूढो वीरः ९

(५ जगच्चन्द्रचन्द्रिका) पार्ष्णिग्राहानिति १० ॥ ९ ॥

(६ दंशोद्धारः) पार्ष्णिग्राही गजपृष्ठरक्षकः । अङ्कुशग्राही पूर्वभागस्थः । योधो मध्यभागस्थः ॥ ९ ॥

**तथैव योधं तुरगै रथं सारथिना सह । निक्षिप्य वक्त्रे दशनैश्चर्वयन्त्यतिभैरवम् ॥ १० ॥**

(१ गुप्तवती) ॥ १० ॥

(२ चतुर्धरी) योधो मध्यभागस्थः इयं च चर्वयन्ती दन्तैः पेषयन्ती । अतिभैरवमिति क्रियाविशेषणम् ॥१०॥

(३ शान्तनवी) किं कुर्वन्ती सा काली । तथैव गजानिव योधं योद्धारं अश्वारोहं । जात्यैकवचनं । योधान् योद्धॄन् अश्वारोहान् तुरगैः सह अश्वैः समं वक्त्रे निक्षिप्य दशनैर्दन्तैः साधनैः अतिभैरवं भयंकरं अतिभयंकरं मृत्युं माता काली योधान् तुरगांश्च चर्वयन्ती अतिभैवरं मृत्युं चर्वेति प्रयुञ्जाना चर्वयन्तीत्युच्यते । गतिबुद्धिप्रत्यवसानार्थेतिसूत्रेण अण्यन्तावस्थायां यः कर्ता सः ण्यन्ते कर्म भवति । तथैव रथं सारथिना सह । अत्रापि जात्यैकवचनं । रथान् सारथिभिः सह वक्त्रे निक्षिप्य दशनैः साधनैः अतिभैरवं अतिभयंकरं मृत्युं चर्वयन्ती चर्वन्तं चर्वेति प्रयुञ्जाना भुङ्क्ष्वेति प्रेरयन्ती चर्वयन्तीत्युच्यते । अत्र योधास्तुरगाः रथाः सारथयश्च चर्व्याः भक्ष्याः । चर्वको अतिभैरवो मृत्युः पात्रं वक्त्रं परिवेषिका काली सैव चर्वयन्ती माता पुत्रमिवेति समाधिः । अत्राश्वारोहाः अयोद्धारः चर्वयन्तीति शप्श्यनोर्नित्यं नुम् । चर्वयतीति पाठेपि लिङ्विषये काले 'व्यत्ययो बहुलं' इति लट् ॥ १० ॥

(४ नागोजीभट्टी) तथैवेति । योधमिति जातावेकवचनम् । एवं रथमपरमन्यमित्यादानम् । चर्वयन्तीति वर्तमानसामीप्ये भूते लट् । अतिभैरवमिति क्रियाविशेषणम् ॥ १० ॥

(५ जगच्चन्द्रचन्द्रिका) तथैव योधमिति ११ ॥ १० ॥

(६ दंशोद्धारः) तथैवेति । योधं अश्ववाहम् ॥ १० ॥

**एकं जग्राह केशेषु ग्रीवायामथ चापरम् । पादेनाक्रम्य चैवान्यमुरसान्यमपोथयत् ॥ ११ ॥**

(१ गुप्तवती) ॥ ११ ॥

(२ चतुर्धरी) अपोथयत् आलोडितवती ॥ ११ ॥

(३ शान्तनवी) हस्त्यश्वरथविध्वंसनानन्तरं पदातिरूपसैन्यं विध्वंसयितुमाह । सा काली एकमसुरं ताडयितुं केशेषु करेण जग्राह । अथ सा काली अपरं च दानवं ताडयितुं ग्रीवायां शिरोधरायां जग्राह । अथच सा काली अन्यं दानवं पादेनैव आक्रम्य अपोथयत् हिंसितवती । यद्यपि युद्धत्युधति हिंसार्थे भासार्थेऽपोथयेदिति अभिधानात् चुरादौ पुथ भासार्थ इति दृश्यते । तथापि धात्वनेकार्थत्वेन पुथ हिंसार्थ इत्यपि ज्ञेयः । अथवा अपोटयदिति पाठः । पुट संचूर्णने चुरादिः । चूर्णीचकार । यद्वा अपुट्टयदिति पाठः । पुट्ट हिंसायां चुरादिः । तथा सा काली अन्यं दानवं उरसा आक्रम्य अपोथयत् हिंसितवती । अपुट्टयदित्यर्थः ॥ ११ ॥

**( ४ नागोजीभट्टी )** एकमिति । अपोथयत् अवधीत् ॥ ११ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** एकं जग्राहेति १२ ॥ ११ ॥

**( ६ दंशोद्धारः )** एकमिति । अपोथयत् आलोडितवती ॥ ११ ॥

**तैर्मुक्तानि च शस्त्राणि महास्त्राणि तथासुरैः । मुखेन जग्राह रुषा दशनैर्मथितान्यपि ॥ १२ ॥**

**( १ गुप्तवती )** ॥ १२ ॥

**( २ चतुर्धरी )** रुषा क्रोधेन ॥ १२ ॥

**( ३ शान्तनवी )** सा काली देवी तैश्चण्डमुण्डादिभिरसुरैर्मुक्तानि प्रयुक्तानि शस्त्राणि खड्गादीनि हस्तस्थशस्त्राणि तथा महास्त्राणि महान्ति बाणादीनि अन्येन चापादिना मोक्षणीयानि क्षेप्याणि आग्नेयवायव्यादीनि मुखे जग्राह गृहीतवती । अपिच तानि तानि शस्त्राणि महास्त्राणि च तथा रुषा मुखेन गृहीत्वा दशनैः साधनैस्तया काल्या देव्या मथितान्यपि । मथितानि विलोडितानि । मथे विलोडने । चर्वितानि चूर्णितानि । शस्त्रमस्त्रमायुधमिति आयुधत्वेन एकत्वेपि तत्तज्जात्याकारप्रयोगभेदेन भेदोऽस्त्येव तयोरित्याहुः । देवीशक्तिर्विचित्रा तेन घटत एवायमर्थः ॥ १२ ॥

**( ४ नागोजीभट्टी )** तैरिति । मथितान्यपि मथितानि चकारेत्यन्वयः ॥ १२ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** तैर्मुक्तानीति १३ ॥ १२ ॥

**( ६ दंशोद्धारः )** ॥ १२ ॥

**बलिनां तद्बलं सर्वमसुराणां महात्मनाम् । ममर्दाभक्षयच्चान्यानन्यांश्चाताडयत्तथा ॥ १३ ॥**

**( १ गुप्तवती )** ॥ १३ ॥

**( २ चतुर्धरी )** महान्त आत्मानो देहा येषां ते ॥ १३ ॥

**( ३ शान्तनवी )** सा काली देवी दुरात्मनां दुष्टाशयानां बलिनां बलवतां असुराणां चण्डादीनां तत्प्रसिद्धं सर्वं चतुर्विधं हस्त्यश्वरथपादातलक्षणं बलं सैन्यं ममर्द । मृदस्तितिक्षायां क्र्यादिः लिट् । चुक्षोद पिपेष चूर्णीचकार । अन्यान् दैत्यान् अभक्षयत् अखादच्च । तथा अन्यान् दैत्यान् अताडयच्च अतीतडत् । तड आघाते चुरादिः ॥ १३ ॥

**( ४ नागोजीभट्टी )** बलिनामिति । महात्मनां महादेहानाम् ॥ १३ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** बलिनां तद्बलमिति १४ ॥ १३ ॥

**( ६ दंशोद्धारः )** ॥ १३ ॥

**असिना निहताः केचित्केचित्खट्वाङ्गताडिताः । जग्मुर्विनाशमसुरा दन्ताग्राभिहतास्तथा १४**

**( १ गुप्तवती )** ॥ १४ ॥

**( २ चतुर्धरी )** ॥ १४ ॥

**( ३ शान्तनवी )** तया काल्या देव्या केचिदसुराः असिना मण्डलाग्रेण निहतास्ताडिताः सन्तः विनाशं जग्मुः । तथा केचिदसुराः तया काल्या देव्या खट्वाङ्गताडिताः संतो विनाशं जग्मुः । तथा केचिदसुराः तया काल्या देव्या दन्ताग्राभिहताः संतो विनाशं जग्मुः । असाकल्येन । खट्वाया अङ्गं अङ्गिः तेन ताडिताः । खट्वेह पितृभूमिष्ठा श्मशानसिद्धिलब्धिदा देवता तद्दत्तमङ्गमायुधमप्रतिहतशक्तिकमसाध्यसाधकं । अन्ये त्वाहुः । खट्वा असुरशरीरपञ्जरः खट्वाख्यमङ्गं खट्वाङ्गमिति । अन्ये तु प्रेतनरशरीरकीकसपञ्जरः कङ्कालः खट्वाङ्गमाहुः । दन्तानामग्राः भागाः दन्ताग्राः दन्तेषु वा अग्रास्तैरभिहताः ॥ १४ ॥

**( ४ नागोजीभट्टी )** ॥ १४ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** असिना निहता इति १५ ॥ १४ ॥

**( ६ दंशोद्धारः )** ॥ १४ ॥

**क्षणेन तद्बलं सर्वमसुराणां निपातितम् । दृष्ट्वा चण्डोऽभिदुद्राव तां कालीमतिभीषणाम् ॥१५॥**

**( १ गुप्तवती )** ॥ १५ ॥

**( २ चतुर्धरी )** अभिदुद्राव अभिमुखं गतवान् ॥ १५ ॥

**( ३ शान्तनवी )** तया काल्या देव्या क्षणेन क्षणमात्रेण कालेन । यद्वा क्षणेन रणोत्सवेन तत्प्रसिद्धं । हस्त्यश्वर-

थपादातलक्षणं च चतुर्विधं महत् बहुलं चण्डादीनां असुराणां बलं सैन्यं निपातितं रणभूमौ दृष्ट्वा अवलोक्य प्रचण्डविक्रमश्चण्डो दैत्यः तामतिभीषणां अतिभयंकररूपविक्रमां कालीं देवीं अभिदुद्राव आभिमुख्येनोपद्रोढुमाढुढौके । क्षणेन तद्बलं सर्वमसुराणां इति पाठेपि स एवार्थः । अतिभीषणं इति पाठे तु क्रियाविशेषणमेतत् । द्रु गतौ लिटि अभिदुद्राव । अतिभीषयते अतिभीषणा । नन्द्यादित्वाल्ल्युः ॥ १५ ॥

**( ४ नागोजीभट्टी )** ॥ १५ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** क्षणेन तद्बलमिति १६ ॥ १५ ॥

**( ६ दंशोद्धारः )** ॥ १५ ॥

**शरवर्षैर्महाभीमैर्भीमाक्षीं तां महासुरः । छादयामास चक्रैश्च मुण्ड क्षिप्तैः सहस्रशः ॥ १६ ॥**

**( १ गुप्तवती )** ॥ १६ ॥

**( २ चतुर्धरी )** क्षिप्तैः प्रेषितैः चक्रैर्मुण्डस्तां छादयामासेत्यन्वयः ॥ १६ ॥

**( ३ शान्तनवी )** चण्डस्तामभिद्रुत्य किमकार्षीत्तत्राह । शराणां वर्षाणि संपाताः तैः महान्ति बहुलानि अतिभीमानि घोराणि तैः भीमे भयंकरे अक्षिणी यस्याः सा तां । 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्' समासान्तः । महान् असुरः । मुण्डानि मस्तकानि क्षिप्तानि अपनीतानि रणान्तरे यैस्तानि मुण्डक्षिप्तानि क्षिप्तमुण्डानि क्षिप्तमस्तकानि । वाहिताग्न्यादिष्विति निष्ठान्तस्याक्षिप्तशब्दस्य परनिपातः । सहस्रेण सहस्रेण सहस्रशः । 'संख्यैकवचनाच्च वीप्सायां' शस् । कुर्वन्त्यनेनेति चक्रं । घञर्थे कविधानं । कृञादीनां च द्वे भवत इति वक्तव्यं । अथान्वयः । महासुरश्चण्डः महाभीमैः अतिभयंकरैः घोरैः शरवर्षैः बाणसंपातैः भीमाक्षीं भयंकरदृष्टिं तां कालीं दैत्यबलमर्दिनीं देवीं छादयामास आवृतां चकार । छद संवरणे चुरादिः । किंच स एव महासुरश्चण्डः सहस्रेण आयुधैः तां कालीं छादयामास । कथंभूतैश्चक्रैः । मुण्डक्षिप्तैः मुण्डानि क्षिप्तानि रणान्तरे मुण्डानि मस्तकानि क्षिप्तानि अपनीतानि चूर्णितानि यैस्तानि मुण्डक्षिप्तानि क्षिप्तमुण्डानि अपनीतमस्तकानि तैः । अपरे त्वाहुः । चण्डः शरवर्षैः तां कालीं छादयामास । मुण्डश्च मुण्डस्तु क्षिप्तैस्तैः प्रेरितैश्चक्रायुधैः तां कालीं छादयामासेति । तत्र उत्तरत्र अथ मुण्डोऽभ्यधावत्तामिति प्राधान्येन पृथक् मुण्डस्य युद्धारम्भेण विरोत्स्यते । तस्माच्चण्ड एव शरवर्षैरुक्तप्रकारैश्चक्रैश्च तां छादयामासेति युक्तं वक्तुं । ततश्च मुण्डः क्षिप्तैरिति सविसर्गो मुण्डशब्दो न पठ्यतां किंतु निर्विसर्ग एव कृतसमासश्च ॥ १६ ॥

**( ४ नागोजीभट्टी )** शरवर्षैरिति । चण्डः शरवर्षैः मुण्डः सहस्रशः क्षिप्तैश्चक्रैः छादयामास इत्यन्वयः । एवं पूर्वश्लोके चण्डग्रहणं मुण्डस्याप्युपलक्षणम् ॥ १६ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** शरवर्षैरिति १७ ॥ १६ ॥

**( ६ दंशोद्धारः )** ॥ १६ ॥

**तानि चक्राण्यनेकानि विशमानानि तन्मुखम् । बभुर्यथार्कबिम्बानि सुबहूनि घनोदरम् ॥ १७ ॥**

**( १ गुप्तवती )** ॥ १७ ॥

**( २ चतुर्धरी )** तस्या देव्या मुखं तन्मुखं विशमानानि सन्ति बभुः शुशुभिरे । घनोदरं मेघान्तरं । अभूतोपमेयम् ॥ १७ ॥

**( ३ शान्तनवी )** तानि चण्डेन दैत्येन प्रयुक्तानि अनेकानि असंख्यातानि चक्राणि कर्तॄणि तन्मुखं तस्याः काल्या देव्याः मुखं कर्म विशमानानि प्रवेशनशीलानि बभुः । भा दीप्तौ । शुशुभिरे । कानीव अर्कबिम्बानीव । यथा सुबहून्यर्कस्य रवेर्बिम्बानि मण्डलानि घनोदरं घनस्य कृष्णस्य मेघस्य उदरं जठरं अभ्यन्तरं प्रविशमानानि प्रवेशनस्वभावानि भान्ति शोभन्ते तथेमान्यपि चक्राणि इति । 'नेर्विशः' इत्यात्मनेपदविधौ निरुपसर्गस्याश्रयणादिह न शानच् । कस्तर्हि ताच्छील्यवयोवचनशक्तिषु चानश्प्रत्ययो नादेशो लटः 'नलोकाव्यय' इत्यादौ षष्ठीप्रतिषेधविधौ तृन्निति लटः शतृ इति तृशब्दमारभ्य तृनो नकारेण प्रत्याहृत्याश्रयणात् चानश्योगे(कृद्योगे) षष्ठीं बाधित्वा द्वितीया। 'व्यत्ययो बहुलं' इत्यात्मनेपदे तु लटः शानचि लादेशयोगे षष्ठीप्रतिषेधाद्द्वितीया । विश प्रवेशने सकर्मकः । 'उपदा विविशुस्तस्य नोत्सेकाः कोसलेश्वरं' इतिवत् । उत्पातादौ बहून्यर्कबिम्बानि भवेयुः । अभूतं वौपम्यं द्रष्टव्यं । 'अर्कः स्फटिकसूर्ययोः' 'चक्रं राष्ट्रे रथाङ्गे च सैन्ये शस्त्रे च कीर्तितं' 'घनो मेघे मूर्तिगुणे त्रिषु मूर्ते निरन्तरे' ॥ १७ ॥

**( ४ नागोजीभट्टी )** तानीति । मुखं विशमानानि च घनोदरं विशनामान्यर्कबिम्बानीव बभुः । शानच् छान्दसः ॥ १७ ॥

---

१ 'मुण्डक्षिप्तैः' इति पाठः शान्तनवीनागोजीभट्टीसंमतः ।

**( ५ जगच्चन्द्रचन्द्रिका )** तानि चक्राणीति १८ ॥ १७ ॥

**( ६ दंशोद्धारः )** अर्कबिम्बानीत्याद्यभूतोपमा ॥ १७ ॥

**ततो जहासातिरुषा भीमं भैरवनादिनी । काली करालवक्त्रान्तर्दुर्दर्शदशनोज्ज्वला ॥ १८ ॥**

**( १ गुप्तवती )** ॥ १८ ॥

**( २ चतुर्धरी )** भीमं भयंकरं यथा स्यात् ॥ १८ ॥

**( ३ शान्तनवी )** ततो रणोत्सवोल्लासतः काली देवी अतिरुषा क्रुधा भीमं भयंकरं यथास्यात्तथा जहास हसितवती । हसे हसने । कीदृशी काली । भैरवं भयंकरं यथास्यात्तथा नदती भैरवनादिनी । यद्वा भैरवः कालाग्निरुद्रः तद्वन्नदति गर्जति भैरवनादिनी । भैरवं नादयति नादोपेतं करोति दानवपशुबलिभागोत्सवतः कृतशृङ्गनादं कृतवती भैरवनादिनी । पुनः कीदृशी काली । करालवक्त्रा करालं भयकृद्रूपं दन्तुरं तुङ्गमद्भुतं वक्त्रं यस्याः तथोक्ता । यद्वा उत्तरार्धमेकं पदं । कालीपदं विहाय करालवक्त्रं तस्याभ्यन्तरं तत्र दुर्दर्शाः दुःखेन दृश्यमाना द्रष्टुमशक्या ये दशनाः दंष्ट्रास्तैरुज्वला करालवक्त्रान्तर्दुर्दर्शदशनोज्वला । हासः शुभ्रः तेन कालीकृष्णापि सती उज्वलाभूदिति वर्णोत्कर्षोक्तिः ॥ १८ ॥

**( ४ नागोजीभट्टी )** तत इति । भीममिति क्रियाविशेषणम् । वक्रान्ते वक्रमध्ये विकटदन्तत्वात् दुर्दर्शाः ये दशनाः तेषां तेजसा उज्वला तेजोमयी ॥ १८ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** ततो जहासेति १९ ॥ १८ ॥

**( ६ दंशोद्धारः )** ॥ १८ ॥

**उत्थाय च महासिंहं देवी चण्डमधावत । गृहीत्वा चास्य केशेषु शिरस्तेनासिनाच्छिनत् ॥ १९ ॥**

**( १ गुप्तवती )** उत्थाय चेति । उत्थाप्येत्यर्थः । महासिं महाखड्गं । हं इति कोपोक्तिः । एतच्छ्लोकोत्तरं ।

'छिन्ने[१] शिरसि दैत्येन्द्रश्चक्रे नादं सुभैरवं । तेन नादेन महाता त्रासितं भुवनत्रयं' ॥ २० ॥

इत्येकः श्लोकोऽधिकः क्वचित्पठ्यते ॥ १९ ॥

**( २ चतुर्धरी )** महासिं महाखड्गं उत्थाय उद्यम्य । हमिति रोषोक्त्यनुकारः । कश्चिदाह हन्तुमित्यस्य निरुक्तो वर्णनाशः । अपर आह महासिंहं उत्थाय आरुह्य इति । एतदसंगतं । काल्या सिंहवाहनत्वाभावात् । उत्तरत्र तेनासिनेति दर्शनाच्च । अस्य चण्डस्य तेन पूर्वोद्यतेन संगतः ॥ १९ ॥

**( ३ शान्तनवी )** सा काली देवी विजिगीषुः सती महासिं महान्तं खड्गं उत्थाय उत्थाप्य सज्जीकृत्य ऊर्ध्वीकृत्य । अन्तर्भावितण्यर्थोऽत्र तिष्ठतिः । यद्वा उत्थाय उद्यम्य ऊर्ध्वीकृत्य । उत्पूर्वस्तिष्ठतिः क्वचित् प्रयोगतो गतिवचनः सकर्मकः । यद्वा उत्ताय्येति पाठः । तय गतौ णिच् । महासिमुत्तायमानं प्रयुज्य ऊर्ध्वं कृत्वा चण्डमधावत । धावु गतिशुद्ध्योः भ्वादिः स्वरितेत्त्वादात्मनेपदं । चण्डदैत्यमुपाद्रोद्धुमाढौकत् । ततः किं । गृहीत्वेत्यादि । अस्यासुरस्य चण्डस्य केशेषु मूर्धजेषु गृहीत्वा आकृष्य तेन प्रसिद्धेन असिना शिरो मस्तकमच्छिनत् अच्छिदत् । उत्थाय च महासिंहं देवीति पाठे महान्तं केसरिणं सिंहं उत्थाय आरुह्य देवी चण्डमधावतेति संबन्धः । अथवा महासिं हं देवी इति पदच्छेदः । 'रुषोक्तौ तु हमव्ययं' । तुल उन्माने चुरादिः । देवी महासिं महान्तं खड्गं उत्थाय उत्तोल्य उच्चाल्य उत्थाप्य इत्याद्यर्थाश्रयणं शिष्टप्रयोगतो धात्वनेकार्थतया घटते । यद्वा उत्थाय च महासिं हं देवी चण्डमधावतेति पाठः । 'सुपिस्थः' इति कः । उच्चैस्तिष्ठति उत्था । अय गतौ आङ्पूर्वः क्त्वो ल्यप् । आसमन्तादयित्वा आय्य । देवी उत्था उत्थिता सती महासिंहं च आय्य आगत्य प्राप्य चण्डमधावतेत्यन्वयः । अत्रैव च पाठे अर्थान्तरं यथा देवी हं इति रुषा उथा उथिता सती महासिं महाखड्गं च आय्य आगत्य प्राप्य चण्डमधावतेत्युत्तरार्धान्वयस्तु पूर्ववत् ।

'छिन्ने[१] शिरसि दैत्येन्द्रश्चक्रे नादं सुभैरवं । तेन नादेन महता त्रासितं भुवनत्रयम् ॥ २० ॥

दैत्येन्द्रश्चण्डः महासुरः तस्यैवं शिरसि देव्या छिन्ने सति शिरश्छेदसमय एव पशुवत् सुभैरवं सुष्ठु भयंकरं नादं सिंहनादं मुखेन ध्वनिं चक्रे कृतवान् । तेन महता नादेन शब्देन भुवनत्रयं त्रासितं । त्रसि उद्वेगे णिच् कर्मणि क्तः । उद्वेगं प्रापितं । यद्वा त्रसनं त्रासः । 'तदस्य संजातं तारकादिभ्य इतच्' । किमसौ चण्डः छिन्नशिरा अपि मायावित्वं पुनरुत्थितो योद्धुं अन्यथा कथमयं नादस्तस्येति तेन नादेन भयंकरेण त्रासितं संजातत्रासमभूद्भुवनत्रयम् ॥ १९ ॥

**( ४ नागोजीभट्टी )** उत्थाय चेति । महासिं महाखड्गं उत्थाय उत्थाप्य उद्यमं सकोपवारणं यथा स्यात्तथा हमित्युक्त्वा देवी चण्डमधावत । अस्य चण्डस्य तेनोद्यतेन ॥ १९ ॥

---

१ अयं श्लोकः गुप्तवतीटीकायां शान्तनव्यां च गृहीतो नान्यटीकासु पाठकर्तृष्वपि दृश्यते ।

( ५ जगच्चन्द्रचन्द्रिका ) उत्थाय चेति २० ॥ १९ ॥

( ६ दंशोद्धारः ) उत्थायेति । महासिं हं महाखड्गं उत्थाय उद्यम्याधावत् । धातूनामनेकार्थत्वात् हं इति रोषावेशसूचकं शब्दं कृत्वेत्यध्याहार्यं । यद्वा हन्तुमिति वक्तव्ये आर्षत्वंशब्दलोपः । यद्वा हन्तीति हंस्तं महासिमित्यन्वयः । अन्येष्वपीति दृशिग्रहणाड्डः । कश्चित्तु महासिंहं उत्थाय आरुह्येति व्याचख्यौ तन्न । काल्याः सिंहवाहनत्वाभावात् । तेनासिनेत्युत्तरग्रन्थास्वरसाच्च । अस्य चण्डस्य । यद्वा अस्य केशेषु श्मश्रुष्वित्यर्थः । एतेन गर्वेण श्मश्रुस्पृशि चण्डे देव्याः कोपातिशयो ध्वनितः । तेन पूर्वोद्यतेन ॥ १९ ॥

**अथ मुण्डोऽभ्यधावत्तां दृष्ट्वा चण्डं निपातितम् । तमप्यपातयद्भूमौ सा खड्गाभिहतं रुषा ॥२०॥**

( १ गुप्तवती ) ॥ २० ॥

( २ चतुर्धरी ) ॥ २० ॥

( ३ शान्तनवी ) अथ मुण्डो महासुरः तया काल्या देव्या निपातितं भ्रंशितं चण्डं दृष्ट्वा तां कालीं अभ्यधावत् उपरोद्धुमढौकत् । सृ गतौ सर्तेर्वेगितायां गतौ धावादेश इष्यते । यद्वा धावु गतिशुद्ध्योः स्वरितेत् । अथ सा काली देवी रुषा क्रुद्धं तमपि मुण्डासुरमपि खट्वाङ्गाभिहतं खट्वाङ्गताडितं परासुं भूमौ अपातयत् पातयामास । खट्वाङ्गं नरकङ्कालः प्रेतनरशरीरास्थिपञ्जरः तेन ताडितः परासुः कृतः । तं मुण्डं 'दानवे पुंसि मुण्डः स्यान्मस्तके तु द्वयोरदः । मुण्डिते त्रिषु लिङ्गेषु मुण्डो मुण्डत्वयोगिनि' । अपातयत् । पातयतेर्लङ् ॥ २० ॥

( ४ नागोजीभट्टी) अथेति । खड्गादिभिर्हतं पूर्वोद्यतखड्गाभिहतं अस्य शिरो न छिन्नं खड्गप्रहारमात्रम् ॥ २० ॥

( ५ जगच्चन्द्रचन्द्रिका ) अथ मुण्ड इति २१ ॥ २० ॥

( ६ दंशोद्धारः ) ॥ २० ॥

**हतशेषं ततः सैन्यं दृष्ट्वा चण्डं निपातितम् । मुण्डं च सुमहावीर्यं दिशो भेजे भयातुरम् ॥२१॥**

( १ गुप्तवती ) ॥ २१ ॥

( २ चतुर्धरी ) ॥ २१ ॥

(३ शान्तनवी ) देव्या हतेभ्यः शेषमवशिष्टं सैन्यं दैत्यबलं स्वसैन्यं कर्तृ । सुमहावीर्यं सुष्ठु महत् वीर्यं प्रभावो यस्य सः चण्डं च सुमहावीर्यं मुण्डं च युद्धे देव्या निपातितं दृष्ट्वा भयातुरं सत् ततः युद्धभूमितः सकाशादपगत्य दिशो भेजे । ततः युद्धभूमितोऽपसृत्य दिगन्तानशिश्रियत् । भयेन आतुरं विह्वलं व्यथितं भयातुरम् ॥ २१ ॥

( ४ नागोजीभट्टी ) ॥ २१ ॥

( ५ जगच्चन्द्रचन्द्रिका ) हतशेषमिति २२ ॥ २१ ॥

(६ दंशोद्धारः ) ॥ २१ ॥

**शिरश्चण्डस्य काली च गृहीत्वा मुण्डमेव च । प्राह प्रचण्डाट्टहासमिश्रमभ्येत्य चण्डिकाम् ॥२२॥**

( १ गुप्तवती ) ॥ २२ ॥

( २ चतुर्धरी ) मुण्डमित्येव लक्षणया मुण्डस्य मुण्डमित्यभिप्रेयते । अभि एत्य आगत्य महाहासयुक्तं वच इत्यर्थः । चण्डिकां कौशिकीम् ॥ २२ ॥

(३ शान्तनवी) सा काली अम्बिका ललाटे स्थिता देवी चण्डस्य असुरस्य शिरश्च तथा मुण्डस्यासुरस्येदं मौण्डं शिरश्च तयोर्मस्तकद्वयं गृहित्वा आदाय । प्रचण्डाट्टहासमिश्रं । प्रचण्डः प्रगल्भः अट्टः अधिकः हासः तेन मिश्रं मिलितं प्रचण्डाट्टगर्भं यथा स्यात्तथा अभ्येत्यैव आगत्यैव चण्डिकां अम्बिकां आसाद्य शक्तिं प्राह अवोचत् । प्राहेत्यव्ययं कालसामान्यद्योति । यथा स्त्रियः किमप्यद्भुतं कार्यं विधाय स्वनिकाये सहासमाभाषन्ते खलु लोके तथेयं सहासमवोचत् । अथवा यौ त्वां परदेवतां त्रिभुवनजननीं भुवनेश्वरीं प्रागालोक्य गत्वा शुम्भाय गृहाणेत्यवोचतांताविमौ चण्डमुण्डौ पुनर्द्रष्टुमागतौ तावालोकय । लोकजननीति सोत्प्रासो युक्त एवेत्यलं विस्तरेण ॥ २२ ॥

( ४ नागोजीभट्टी ) शिर इति । मुण्डं सशिरस्कं । सदेहमित्यर्थः । प्रचण्डाट्टहासेन मिश्रं युक्तं यथा भवति तथा चण्डिकां स्वललाटफलकान्निर्गतां तां देवीं प्राहेत्यर्थः ॥ २२ ॥

( ५ जगच्चन्द्रचन्द्रिका ) शिरश्चण्डेति २३ ॥ २२ ॥

( ६ दंशोद्धारः ) शिर इति । मुण्डमित्यैक्यलक्षणया मुण्डस्य मुण्डमित्यर्थः ॥ २२ ॥

**मया तवात्रोपहृतौ चण्डमुण्डौ महापशू । युद्धयज्ञे स्वयं शुम्भं निशुम्भं च हनिष्यसि ॥ २३ ॥**

**(१ गुप्तवती)** मया तवात्रेति । युद्धस्य यज्ञत्वेन रूपकवलाच्छुम्भनिशुम्भयोरपि चण्डमुण्डवदुपहारयोग्यमहापशुत्वध्वननेन पूर्वार्धोक्तविशेषणयोरिहाप्यन्वयः सूचितः । तेन एवमेतद्वली शुम्भ इति प्राथमिकश्लोकध्वन्यर्थस्य स्पष्टमिदमुपबृंहणम् ॥ २३ ॥

**(२ चतुर्धरी)** अत्र युद्धयज्ञे इत्यन्वयः । महापशू इति रूपकाभिप्रायेण ॥ २३ ॥

**(३ शान्तनवी)** काली किमब्रवीचण्डिकामित्याह । हे चण्डिके देवि तव महापशू द्वौ चण्डमुण्डौ अत्र युद्धयज्ञे युद्धं यज्ञ इव युद्धयज्ञः तस्मिन्विषये मया काल्या उपाहृतौ समर्पितौ उपहारीकृतौ स्तः । अतश्च युद्धं यज्ञो यस्याः सा युद्धयज्ञा देवी देवकार्यकारिणी हे युद्धयज्ञे हे देवि हे देवकार्यकारिणि त्वं स्वयमेव शुम्भं निशुम्भं च द्वौ महापशू देवगणप्रीत्यै हनिष्यसि । यद्वा युद्धयज्ञे विषये हनिष्यसि । यथा देवगणप्रीत्यै यज्ञे शास्त्रयुक्ते महापशू नरमेधे हन्यते नरः । तथा तव मया ऋत्विजेव चण्डमुण्डौ नाम पशू द्वौ हतौ । अतः परं शुम्भनिशुम्भौ च महापशू त्वमेव हन्तुमर्हसीति भावः ॥ २३ ॥

**(४ नागोजीभट्टी)** मयेति । अत्र युद्धयज्ञे । महापशू इति रूपकं । उपहृतौ प्रधानाङ्गद्वारेण चण्डस्योपहारः ॥२३॥

**(५ जगच्चन्द्रचन्द्रिका)** मया तवात्रेति २४ ॥ २३ ॥

**(६ दंशोद्धारः)** ॥ २३ ॥

## ऋषिरुवाच ।

**तावानीतौ ततो दृष्ट्वा चण्डमुण्डौ महासुरौ । उवाच कालीं कल्याणी ललितं चण्डिका वचः २४**

**(१ गुप्तवती)** ॥ २४ ॥

**(२ चतुर्धरी)** कालीं मुखभवां । कल्याणीति कर्तृविशेषणं । ललितं हृद्यम् ॥ २४ ॥

**(३ शान्तनवी)** ततोऽनन्तरं कल्याणी कल्यां शुभां वाचं अणिती कथयन्ती चण्डिका भगवती तौ महासुरौ चण्डमुण्डौ काल्या आनीतौ दृष्ट्वा कालीं देवीं ललितं ईप्सितं मनोहरं वच उवाच उचितमुक्तवती ॥ २४ ॥

**(४ नागोजीभट्टी)** ऋषिरुवाच । ताविति । कालीं ललाटभवां । कल्याणीति कर्तृविशेषणम् । चण्डिका कौशिकी २४

**(५ जगच्चन्द्रचन्द्रिका)** ऋषिरुवाचेति २५ । तावानीताविति २६ ॥ २४ ॥

**(६ दंशोद्धारः)** ॥ २४ ॥

**यस्माच्चण्डं च मुण्डं च गृहीत्वा त्वमुपागता । चामुण्डेति ततो लोके ख्याता देवी भविष्यसि २५**

**इति श्रीमार्कण्डेयपुराणे सावर्णिके मन्वन्तरे चण्डमुण्डवधो नाम सप्तमोऽध्यायः ॥ ७ ॥**

**(१ गुप्तवती)** ॥ २५ ॥ इति श्रीगुप्तवत्यां मन्त्रव्याख्यायां चण्डमुण्डवधो नाम सप्तमोऽध्यायः ॥ ७ ॥

**(२ चतुर्धरी)** चण्डं च मुण्डं चेति पूर्ववत् । चामुण्डेति पृषोदरादित्वात् चामुण्डाशब्दो भविष्यति ॥ २५ ॥ इति श्रीचतुर्धरीटीकायां चण्डमुण्डयोर्वधो नाम सप्तमोऽध्यायः ॥ ७ ॥

**(३ शान्तनवी)** चण्डिका देवी कालीमादिक्षत् । किमिति । हे कालि त्वं यस्मात् कारणात् चण्डं मुण्डं च गृहीत्वा मामुपागतासि ततः कारणात् लोके भुवने चामुण्डेति ख्याता देवी भविष्यसि संपत्स्यसे इति ललितं वच उवाच । चण्डिका अम्बिका 'हस्ताभ्यां चण्डमुण्डौ द्वौ किलागृह्णादसौ यतः । मत्वर्थको ह्यतश्चण्डा मुण्डो देव्येव कथ्यते । ततः पृषोदरादित्वाच्छिष्टशब्दप्रयोगतः । चण्डशब्दस्य चात्वेन चामुण्डेति प्रसिध्यति' । अत्राहुः । पृषोदरादित्वाच्चण्डमुण्डस्थाने चामुण्डा साध्येति । यद्यस्य करेऽस्ति तस्यास्तीति तद्वान् स भवति दण्डीतिवत् तं करेण यागृह्णात्सा चण्डमुण्डवती कालीति मत्वर्थे अर्शआदित्वादच् स्त्रियां टापि चण्डशब्दस्य पृषोदरादित्वाच्चा इत्यादेशे चण्डमुण्डैव चामुण्डेति चण्डिकाभिप्रायः । यद्यपि चण्डमुण्डशिरसी एव काल्या गृहीत्वा आनीते ननु तावेव चण्डमुण्डदैत्यौ तथापि क्वापि ग्रामैकदेशे दग्धे ग्रामो दग्ध इतिवच्चण्डमुण्डैकदेशयोः शिरसोश्चण्डमुण्डौ समुदायौ तयोः प्रयुक्तौ शिष्टप्रयोगतः । कश्चित्त्वाख्यत् । 'चस्तस्करः समाख्यातश्चन्द्रमाश्च समीरितः' इत्यभिधानतः चान् तस्करान् मुण्डयति खण्डयति चचामुण्डा चामुण्डैव चामुण्डेति 'अन्येषामपि दृश्यते' इति पूरुषवद्दीर्घत्वमिति । तन्न । यस्माच्चण्डं च मुण्डं च गृहीत्वा त्वमुपागता । चामुण्डेति ततो लोके ख्याता देवी भविष्यसीति चण्डिकाभिप्रायतश्चामुण्डेति प्रकृतार्थहानादप्रकृतार्थाभ्यनुज्ञानात्परमर्षिप्रणीतरूढशब्दार्थविग्रहव्याकोपप्रसंगाच्च ॥ २५ ॥ इति श्रीमद्राजाधिराजश्रीमत्तोमरान्वयश्रीमदुद्धरणात्मजशन्तनुचक्रवर्तिविरचितायां शान्तनव्यां चण्डिकामाहात्म्यटीकायां चण्डमुण्डवधविध्युपलक्षितः सप्तमोऽध्यायः ॥ ७ ॥

**( ४ नागोजीभट्टी )** यस्मादिति । चण्डशिरोद्वारा हे देवि ख्याता भविष्यसीत्यन्वयः । चामुण्डेति पृषोदरादित्वात्साधुः । अनेनेयं तामसी कौशिकी नियम्या भवतीत्याहुः ॥ २५ ॥ इति शिवभट्टसुतसतीगर्भसमुद्भवनागोजीभट्टकृते सप्तशतीव्याख्याने सप्तमोऽध्यायः समाप्तः ॥ ७ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** यस्माच्चण्डेति २७ ॥ २५ ॥ इति श्रीभगीरथविरचिता कण्वगोविन्दकृतसप्तशतीमन्त्रहोमविभागकारिकाणां सप्तमाध्यायस्य जगच्चन्द्रचन्द्रिकाख्यटीका संपूर्णा ॥ ७ ॥

**( ६ दंशोद्धारः )** यस्मादिति । चण्डं च मुण्डं चेत्यत्रापि पूर्ववदवयवलक्षणा । चामुण्डेति पृषोदरादित्वात्साधुः । यद्वा चानां चौराणां मुण्डः खण्डनं यस्याः । मुडि खण्डने 'चन्द्रमाश्च समाख्यातस्तस्करश्च उदाहृतः' इत्येकाक्षरः ॥ २५ ॥ इति श्रीमद्गुल्लोप० दंशोद्धारटीकायां सप्तमोऽध्यायः ॥ ७ ॥

---

## अष्टमोऽध्यायः ८

### ऋषिरुवाच ।

**चण्डे च निहते दैत्ये मुण्डे च विनिपातिते । बहुलेषु च सैन्येषु क्षयितेष्वसुरेश्वरः ॥ १ ॥**

**( १ गुप्तवती )** ॥ १ ॥

**( २ चतुर्धरी )** ॥ १ ॥

**( ३ शान्तनवी )** अस्य श्लोकयुग्मस्यैकक्रियात्वादेककर्तृकत्वादेकान्वयतावसेया । तया काल्या देव्या रणोत्सवे चण्डे दैत्ये निहते सति तथैव मुण्डे दैत्ये विनिपातिते सति तथैव च सैन्येषु बहुलेष्वसंख्यातेषु क्षयितेषु संजातक्षयेषु कृतेषु सत्सु ततोऽनन्तरं कोपपराधीनचेताः क्रोधपरवशस्वान्तः प्रतापवान् अच्युतो(व्युग्रो)प्रतेजस्कश्च भूत्वा असुरेश्वरः शुम्भः दैत्यानां सर्वसैन्यानां उद्योगं देवीं चण्डिकां प्रत्यभियानोत्सवोत्सुकता(प्रतिप्रयाणोत्सुकता)मादिदेश । देवीं प्रति सेनाभिरभियात यूयमभिशेषेणयतेत्यादिक्षत् । देवीं प्रत्यभिषेणयितुमुद्योगं कुरुतेत्याज्ञापयामास । दैत्यानां सैन्यानीति भावः । उद्योगं सर्वसैन्यानामित्येव सिद्धे दैत्यानामिति प्राधान्यख्यापनार्थं दैत्यानां महतां यानि सर्वाणि हस्त्यश्वरथपादातलक्षणानि समस्तानि सैन्यानि तेषां उद्योगः उद्यमः तं उद्योगं सर्वसैन्यानि येषां ते सर्वसैन्याः रक्तबीजप्रभृतयो दैत्याः तेषामुद्योगमादिदेश । 'प्रभूतं प्रचुरं प्राज्यमदभ्रं बहुलं बहु' क्षयो नाशः संजातो येषां तानि क्षयितानि तेषु कृतेषु । यद्वा क्षपितेषु[1] । यद्वा क्षिप प्रेरणे चुरादिः । प्रेरितेषु द्रावितेषु प्राणेभ्यो दूरीकृतेषु । नाशितेष्विति यावत् । कोपपराधीनं चेतो यस्य स तथोक्तः । कोपाधीनचित्त इति यावत् । कोपे परं अतिशयितं अधीनमायत्तं चेतो यस्य स तथोक्तः । असुरेश्वर इति असुराणामीश्वरः शुम्भः । यद्वा असून् प्राणान् राति गृह्णाति असुरः मृत्युः ईश्वरो यस्य सः असुरेश्वरः मृत्युपरतन्त्रः आसन्नमृत्युः शुम्भो देवीं प्रति दैत्यानामुद्योगमादिदेश आज्ञापयामासेति भावः । ह इत्यव्ययं पूरणे ॥ १ ॥

**( ४ नागोजीभट्टी )** चण्डे इति । क्षयितेषु कृतक्षयेषु ॥ १ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** सार्धैकषष्टिश्लोकाढ्येऽष्टमेऽध्याये प्रकीर्तिता इति अर्धसहिता एकाधिकषष्टिविंशतित्रयं तद्युक्ता ये श्लोकास्तैराढ्ये युक्ते अष्टमेऽष्टसंज्ञकेऽध्याये प्रकीर्तिताः कथिताः । एकषष्टिश्लोकमन्त्रा इति एक अधिका षष्टिश्लोकास्तद्रूपा मन्त्रा वर्तन्ते इति शेषः । अन्ते अर्ध इति । अन्ते एतेषां मन्त्राणामन्ते अर्ध पादद्वयात्मको मन्त्र इत्यर्थः । श्लोकरूपो मन्त्रको मन्त्रः । स्वार्थे कः । आदावेक ऋषिश्चैवं त्रिषष्टिर्मन्त्रसंततिरिति । आदौ अध्यायादौ एक ऋषिरुवाचेत्ययं मन्त्रः । तिस्र अधिका षष्टिविंशतित्रयं तस्या मन्त्रसंततिर्मन्त्रविस्तारः । तथाहि ऋषिरुवाच १ । चण्डे चेति २ ॥ १ ॥

**( ६ दंशोद्धारः )** ॥ १ ॥

**ततः कोपपराधीनचेताः शुम्भः प्रतापवान् । उद्योगं सर्वसैन्यानां दैत्यानामादिदेश ह ॥ २ ॥**

**( १ गुप्तवती )** ॥ २ ॥

**( २ चतुर्धरी )** कोपेन पराधीनमस्वाधीनं चेतो यस्य । दैत्यानां यानि सर्वाणि सैन्यानि तेषामित्यन्वयः । सर्वसैन्यानामिति दैत्यानां विशेषणं वा । आदिदेश आज्ञप्तवान् । हेति पादपूरणे सुरथामन्त्रणे वा ॥ २ ॥

**( ३ शान्तनवी )** अस्यार्थः पूर्वश्लोकेन सह व्याख्यातः ॥ २ ॥

---

[1] 'क्षपितेषु' इत्यपि पाठः ।

**( ४ नागोजीभट्टी )** तत इति । तेषां वधजकोपेनास्वाधीनचेताः अतएव स्त्रीवधेप्यस्य प्रवृत्तिरिति भावः । सर्वसैन्यानामिति दैत्यानां विशेषणम् ॥ २ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** ततः कोपेति ३ ॥ २ ॥

**( ६ दंशोद्धारः )** तत इति । कोपेन पराधीनमस्वाधीनं चेतो यस्य । हेति पादपूरणे आमन्त्रणे वा ॥ २ ॥

**अद्य सर्वबलैर्दैत्याः षडशीतिरुदायुधाः। कम्बूनां चतुराशीतिर्निर्यान्तु स्वबलैर्वृताः ॥ ३ ॥**

**( १ गुप्तवती )** कम्बूनां कोटिशतकानां चतुरा च सा अशीतिश्च चतुरशीतिः ॥ ३ ॥

**( २ चतुर्धरी )** षडशीतिरिति राजसमीपवर्तिसामन्तामात्याभिप्रायेण । उदायुधाः कम्बूनां कम्बूनाम्नि दैत्यकुले जातानां चतुराशीतिः चतुर्भिरधिका अशीतिः । आङोऽधिकार्थत्वात् चतुराशीतिरिति वा पाठः ॥ ३ ॥

**( ३ शान्तनवी )** शुम्भः पुनर्विशेषतः आदिदेश । किमिति । अद्य अस्मिन्नहनि इदानीं वा ममाज्ञया षडशीतिर्दैत्याः प्रधानभूताः उदायुधाः उद्यतशस्त्राः सज्जीकृतायुधाः सन्तः सर्वबलैः सर्वसैन्यैः चतुरङ्गलक्षणैः सज्जितैः हस्त्यश्वरथपदातिभिः सेनाभिर्वृताः वेष्टिताः सन्तः निर्यान्तु देव्या समं योद्धुं निर्गच्छन्तु । षड्भिरधिकाशीतिः षडशीतिः । शाकपार्थिवादित्वात्समासः । 'विंशत्याद्याः सदैकस्मिन्संख्याः संख्येयसंख्ययोः' । किंच कम्बूनां कम्बूनाम्नां दैत्यानां चतुरशीतिः वृन्दभेदाः स्वबलैर्वृताः संतः निर्यान्तु देव्या समं योद्धुं निःसरन्तु । चतुर्भिरधिका अशीतिः । पूर्ववदेकवचनं । यदि चतुरशीति इति निर्विसर्गः पाठस्तदा चतस्रः अशीतयः कम्बूनां व्यक्तयः समाहृता इति विगृह्य तद्धितार्थेत्यादिना समाहार(द्वन्द्व)समासः । कम्बूनां चतुराशीति कर्तृ । स्वबलैर्वृतं वेष्टितं सत् निर्यातु योद्धुं निःसरतु इति एकवचनान्तत्वेन योज्यं । एकत्वोक्तितः यथा वृक्षाः फलन्ति लता च सफलेत्युक्ते लता च फलति इति एकवचनसंगतिः । चतुराशीति इति पाठे 'आत्महत' इत्यत्र सूत्रे आदिति योगविभागः शिष्टप्रयोगतः प्रागेकादशभ्यो छन्दसीति सूत्रकारव्यवहाराल्लिङ्गाद्योगविभागादिष्टसिद्धिरित्यालं । तच्च रेफात्परत एव पृषोदरादित्वाद्वा । अन्येषामपि दृश्यत इति च । अशीतिशब्दादीकारस्य दीर्घत्वं द्रष्टव्यं । नैतत्सर्वत्र कर्तव्यमिति । चतस्रः अशीतयः इत्यत्र 'दशान्तैकादिका संख्या संख्येयेष्वेव च त्रिषु' कम्बुः शङ्कः । चतुरशीतिशङ्कपरिमिताः सेनाः ताभिः सहिताः दैत्याः ॥ ३ ॥

**( ४ नागोजीभट्टी )** अद्येति । उदायुधास्तत्संज्ञकाश्च । कम्बूनां तन्नाम्नां चतुराशीतिर्दैत्या इति शेषः ॥ ३ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** अद्य सर्वबलैरिति ४ ॥ ३ ॥

**( ६ दंशोद्धारः )** अद्येति । षडशीतिः सामन्तामात्याः कम्बूनां कम्ब्वाख्यकुलजानां चतुर्भिः अधिका अशीतिरित्यर्थः । आङोऽधिकार्थत्वात् अव्ययानामेकार्थत्वात् कुलानीत्यनुकृष्यते ॥ ३ ॥

**कोटिवीर्याणि पञ्चाशदसुराणां कुलानि वै । शतं कुलानि धूम्राणां निर्गच्छन्तु ममाज्ञया ॥ ४॥**

**( १ गुप्तवती )** कोटिवीर्याणि धौम्राः कालकादयश्च कुलनामानि ॥ ४ ॥

**( २ चतुर्धरी )** कुलानीति परस्मात्पूर्वं सम्बध्यते सिंहावलोकनन्यायात् । कोटिवीर्याणि कोटिवीरकुलोद्भवानि कुलानि वृन्दानि । धूम्राणां धूम्रवंश्यानाम् ॥ ४ ॥

**( ३ शान्तनवी )** शुम्भः पुनः विशेषतः आदिदेश । प्रसिद्धानि कोटिवीर्याणि कोटिवीर्यनामधेयानि असुराणां कुलानि वृन्दानि निर्गच्छन्तु ममाज्ञया देव्या समं योद्धुं निर्यान्तु । कोटिसंख्यानि पञ्चाशदिति तु पाठे असुराणां कुलानि निर्यान्तु । कति तानि पञ्चाशत् । पुनश्च कति तानि कोटिसंख्यानि । एवंचैकत्र पञ्चाशत्कोटिसंख्यानि । कोटिरिति संख्या येषां पञ्चाशत्कुलानां तानि कोटिसंख्यानि । एवंचैकत्र पञ्चाशत्कोटिसंख्यानि असुराणां कुलानि वै प्रसिद्धानि मम शुम्भस्य आज्ञया देव्या समं योद्धुं निर्गच्छन्तु इत्यर्थः । किंच धूम्राणां धूम्रनाम्नां असुराणां शतं कुलानि शतवृन्दानि निर्गच्छन्तु ममाज्ञया देव्या समं योद्धुं निर्यान्तु । धौम्राणामिति पाठे तु धूम्रस्यापत्यानि पुमांसः धूम्राः । शिवादित्वादण् । अतइञोपवादः । धौम्राणां असुराणां शतं कुलानि योद्धुं निर्गच्छन्त्वित्यर्थः । विधौ लट् ॥ ४ ॥

**( ४ नागोजीभट्टी )** कोटीति कोटिवीर्याणि तन्नामानि । धौम्राः धूम्रवंश्याः ॥ ४ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** कोटिवीर्याणीति ५ ॥ ४ ॥

**( ६ दंशोद्धारः )** कोटीति । कोटिवीर्यकुलोद्भवानि कुलानि वृन्दानि धौम्राणां धूम्रवंश्यानां । एवमग्रेऽपि ॥ ४ ॥

**कालका दौर्हृदा मौर्याः कालकेयास्तथासुराः । युद्धाय सज्जा निर्यान्तु चाज्ञया त्वरिता मम ५**

**( १ गुप्तवती )** ॥ ५ ॥

**( २ चतुर्धरी )** कालकाः कालवंश्याः । दौर्हृदाः दौर्हृदवंश्याः । मौर्याः मुरवंश्याः । कालकेयाः कालकायां जाताः ।

'कालका दैत्यपत्नी स्यात्' । 'तस्यापत्यं' इति स्त्रीभ्यो ढक् । सज्जाः ससामग्रीकाः निर्यान्तु अज्ञायेति विवक्षाधीनत्वान्न संधिः ॥ ५ ॥

**( ३ शान्तनवी )** शुम्भः पुनर्विशेषतः आदिदेश । कालकाः असुराः कालकनामानः दैत्याः कालं यमस्वरूपमात्मानं शत्रुभ्यः कायति कथयति कालकः कालकस्यापत्यानि पुमांसः कालकाः । शिवादित्वादण् । यद्वा कलं मन्द्रं कायति कथयति कलकः तस्येमे कालकाः कलककुलोत्पन्नाः दैत्याः अद्य ममाज्ञया त्वरिताः । त्वित्वरा संभ्रमे । संभ्रमसहिताः वेगिनः सत्वराः संजातत्वराः सन्तः देव्या समं युद्धाय योद्धुं सज्जाः सायुधाः सन्तो निर्यान्तु । तथा तद्वत् दौर्हृदाः असुराः दुष्टं हृदयं यस्य स दुर्हृद्दैत्यः । 'सुहृद्दुर्हृदौ मित्रामित्रयोः' इति निपातः । तस्यापत्यानि पुमांसः दौर्हृदाः दौर्हृदाख्या दैत्याः ते युद्धाय सज्जाः सन्तो ममाज्ञया त्वरमाणाः त्वरिताः निर्यान्तु । तथा मौर्याः मौर्याख्याः असुराः मुरस्यापत्यानि गोत्राणि । गर्गादित्वाद्यञ् । 'यञञोश्च' इति लुक् कुतोऽत्र न । छान्दसत्वात् । छन्दोवत्पुराणानि भवन्ति । यद्वा मुरस्य दैत्यस्य भावः मौर्यं तद्वन्तः मौर्याः । अर्शआदित्वादच् । यद्वा मुरस्य भावः मौरी । ष्यञ् षित्वात् ङीष् । मौरीमर्हन्ति मौर्याः । 'दण्डादिभ्यो यः' । तेपि युद्धाय त्वरिताः ममाज्ञया देव्या सह योद्धुं निर्यान्तु । तथा कालकेयाः कालकायाः अपत्यानि पुमांसः कालकेयाः कालकेयनामानोऽसुराः । स्त्रीभ्यो ढक् । कालकवंशजाता दैत्याः । 'शुभ्रादिभ्यश्च' इति ढक् । कालकेयाः तेपि ममाज्ञया त्वरिताः युद्धाय सज्जाः सन्तो निर्यान्तु इति शुम्भः आदिदेश ॥ ५ ॥

**( ४ नागोजीभट्टी )** कालकाः तन्नामानः । दौर्हृदाः दुर्हृदोपत्यानि । मौर्याः तन्नामानः । तथा कालकाया अपत्यानि कालकेयाः । असुराः सज्जाः ससामग्रीकाः ॥ ५ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** कालका दौर्हृदा इति ६ ॥ ५ ॥

**( ६ दंशोद्धारः )** कालकाः कालकवंश्याः । दौर्हृदाः दुर्हृद्वंश्याः । मौर्या मुरवंश्याः । कालका दैत्यपत्नी तदपत्यानि । स्त्रीभ्यो ढक् । निर्यान्तु आज्ञयेत्यत्र संहिताया अविवक्षणान्न संधिः ॥ ५ ॥

## इत्याज्ञाप्यासुरपतिः शुम्भो भैरवशासनः । निर्जगाम महासैन्यसहस्रैर्बहुभिर्वृतः ॥ ६ ॥

( १ गुप्तवती ) ॥ ६ ॥

**( २ चतुर्धरी )** भैरवमत्युग्रं शासनमाज्ञा यस्य । महान्ति सैन्यान्यत्रेति महासैन्यं सेनासमुदायः तेषां सहस्रैः ॥ ६ ॥

**( ३ शान्तनवी )** इत्येवमसुरान् आज्ञाप्य आदिश्य भैरवशासनः भैरवं भयंकरं शासनं अव्याहताज्ञा यस्य सः तथोक्तः । यद्वा भैरवात् मृत्योः सकाशात् शासनं यस्य सः आसन्नमरणत्वात् । स तथोक्तः असुरपतिः शुम्भः बहुभिरनेकैर्दैत्यैर्वृतः सन् निर्जगाम देव्या समं योद्धुं निर्ययौ निरगात् । किंभूतैः बहुभिः महासैन्यसहस्रैः महान्ति सैन्यानां सहस्राणि तैर्बहुभिरनेकैः दानवसैन्यैः वृतो देव्या सह योद्धुं निर्जगाम शुम्भः ॥ ६ ॥

**( ४ नागोजीभट्टी )** इतीति । भैरवमुग्रम् ॥ ६ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** इत्याज्ञाप्येति ७ ॥ ६ ॥

**( ६ दंशोद्धारः )** ॥ ६ ॥

## आयान्तं चण्डिका दृष्ट्वा तत्सैन्यमतिभीषणम् । ज्यास्वनैः पूरयामास धरणीगगनान्तरम् ॥ ७ ॥

( १ गुप्तवती ) ॥ ७ ॥

**( २ चतुर्धरी )** धरणीगगनयोरन्तरं मध्यम् ॥ ७ ॥

**( ३ शान्तनवी )** आयान्तं शुम्भं यद्वा 'सेनायां समवेता ये सैन्यास्ते सैनिकाश्च ते' इति । सैन्यः पुंसि । सेनायां समवेतः सैन्यः । 'सेनाया वा' इति यः । यद्वा । आयान्तं शुम्भं अतिस्थाने । अतिशब्दश्चार्थे । तथायमन्वयः । अतिभीषणमतिभयंकरं तत्सैन्यं यस्य शुम्भस्य स तत्सैन्यः । यद्वा ते सैन्याः सेनायां समवेताः संमिलिता हस्त्यश्वरथपादातादिसमूहा यस्य शुम्भस्य स तत्सैन्यः तं आयान्तं शुम्भं दृष्ट्वा चण्डिका देवी ज्यास्वनैः धनुष्यानता मौर्वी आकृष्टमौर्वीढंकारध्वनिभिः धरणीगगनान्तरं द्यावापृथिव्यन्तरालं पूरयामास । अथ द्वितीयोऽन्वयः । अतिभीषणं अतितरां भीषणं भयंकरं तत्सैन्यं तस्य शुम्भस्य सैन्यः सेनायां समवेतो मिलितः हस्त्यश्वरथपादातसमूहः तत्सैन्यः तं तत्सैन्यं आयान्तं दृष्ट्वा चण्डिकादेवी ज्यास्वनैः धनुरारोपिताकृष्टमौर्वीजनितनिस्वनैः धरणीगगनान्तरं पूरयामास । अथ तृतीयोऽन्वयः । भीषणं भयंकरं शुम्भं आयान्तं दृष्ट्वा भीषणं भयंकरं तत्सैन्यमपि तस्य शुम्भस्य सैन्यमपि सेनां आयान्तं आगच्छत् दृष्ट्वा चण्डिकादेवी ज्यास्वनैः धरणीगगनान्तरं पूरयामास । आयान्तं आगच्छन्तं शुम्भं आयात् आगच्छत् । तत्सैन्यं शुम्भसैन्यं नपुंसकलिङ्गं । ज्यास्वनाः तैः । पूरी आप्यायने । धरणी च गगनं च धरणीगगने तयोरन्तरं मध्यं पृथिव्याकाशमध्यं व्यापयामास । आयान्तं शत्रुं तं पदं । आयातमिति पाठे कर्तरि क्तः । ततः शुम्भं तत्सैन्यं च ॥ ७ ॥

**( ४ नागोजीभट्टी )** आयान्तमिति । आगतमित्यर्थः । अन्तरं मध्यम् ॥ ७ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** आयान्तमिति ८ ॥ ७ ॥

**( ६ दंशोद्धारः )** ॥ ७ ॥

**ततः सिंहो महानादमतीव कृतवान्नृप । घण्टास्वनेन तन्नादमम्बिका चोपबृंहयत् ॥ ८ ॥**

**( १ गुप्तवती )** उपबृंहयत् । आगमशास्त्रस्यानित्यत्वादडभावः ॥ ८ ॥

**( २ चतुर्धरी )** अतीवात्यर्थमनेकं कृत्वा इतियावत् । उपबृंहयदवर्धयत् । आगमशासनस्यानित्यत्वादडागमाभावः ८

**( ३ शान्तनवी )** हे नृप दत्तावधानो भव । यतः धनुर्ज्यानिःस्वनादनन्तरं सत्र सिंहः स सिंहश्च अतीव सुतरां सुष्ठु महानादं महान्तं नादं गलगर्जनं कृतवान् चकार । अम्बिका देव्यपि घण्टास्वनेन नादेन तन्नादं तस्य सिंहस्य नादं सिंहनादं अबृंहयत् अवर्धयत् । बृहि वृद्धौ । हेतौ णिच् । लट् अडागमः । वर्धयामास । अम्बिका चोपबृंहयदिति पाठे आगमशासनस्यानित्यत्वादडागमाभावः । अन्यथोपाबृंहयदिति स्यात् । ततः सिंहो महानादं सच सिंहो महानादमिति च पाठद्वयं । 'बलवत्सुष्ठु किमुत स्वत्यतीव च निर्भरे' ॥ ८ ॥

**( ४ नागोजीभट्टी )** तत इति । तन्नादानिति बहुवचनं । महानादमित्येकत्वाविवक्षया अतीवेत्यस्यानेकवारमित्यर्थे वा उपबृंहयदित्यत्रागमशास्त्रस्यानित्यत्वादडभावः ॥ ८ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** ततः सिंह इति ९ ॥ ८ ॥

**( ६ दंशोद्धारः )** तत इति । अतीव अत्युपमानकं उपबृंहयत् । आगमशास्त्रस्यानित्यत्वान्नाडागमः ॥ ८ ॥

**धनुर्ज्यासिंहघण्टानां नादापूरितदिङ्मुखा । निनादैर्भीषणैः काली जिग्ये विस्तारितानना ९**

**( १ गुप्तवती )** घण्टानां तन्नादानां । कर्मणि षष्ठी । जिग्ये जितवती ॥ ९ ॥

**( २ चतुर्धरी )** धनुर्ज्या इति स्वभावाख्यानमात्रं । ज्यापदे चैव धनुर्ग्रहणप्रतीतेः । धनुर्ज्यादीनां नादैरापूरितं दिङ्मुखं यया । निनादैर्जिग्ये जितवती नादानित्यन्वयः । 'तिङ्तिङः' इत्यात्मनेपदं । यद्वा शब्दापूरितदिङ्मुखापि काली देव्या धनुर्ज्यासिंहघण्टानां निनादैर्जिग्ये इति कश्चित् ॥ ९ ॥

**( ३ शान्तनवी )** धनुर्ज्यानादेन सिंहनादेन घण्टानादेन च आपूरितदिङ्मुखा आसमन्तात्पूरितानि दिशां मुखानि यया सा तथोक्ता । 'स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्' इति पक्षे ङीप् । पक्षे च टाप् । एवंविधा काली देवी तैस्त्रिविधैर्भीषणैर्निनादैर्विस्तारितानना विकृतास्या विस्तारितमुखा सती जिग्ये । जि जये जिजि अभिभवे 'व्यत्ययो बहुलम्' इति कर्तर्यात्मनेपदं । लोकोत्कर्षेण वर्तते । यद्वा शत्रूनभिबभूव । यद्वा जिग्ये इति कर्मणि प्रयोगः । धनुर्ज्यासिंहघण्टानां नादापूरितदिङ्मुखा विस्तारितानना च या काली देवी तया भीषणैः भयंकरैः निनादैः स्वनैः असुरवर्गः शत्रुवर्गो जिग्ये अभिबभूवे । जनी प्रादुर्भावे आत्मनेपदी । काली भीषणैर्निनादैर्विस्तारितानना जज्ञे । दैत्यानत्स्यामीति विवृतीकृतकरालवदना जाता । कीदृशी काली । धनुर्ज्यानां सिंहस्य घण्टायाश्च नादैः आपूरितदिङ्मुखा आसमन्तात्पूरितदिगन्तराला । अथवा जज्ञे इति ज्ञा अवबोधने । कर्मणि लिङात्मनपदं । भीषणैर्निनादैर्या विस्तारितानना दैत्यसैन्यानि सर्वाण्यप्यमूनि प्रत्यवस्यतीति विकृतीकृतकरालवक्त्रा दृश्यते । सा कालीति दैत्यैर्जज्ञे अज्ञायि सा । किंभूता काली । धनुर्ज्यासिंहघण्टानां नादापूरितदिङ्मुखा इत्यन्वयः । सखीसमूहे वर्तमाना का वा काली का वा सखीति तत्सादृश्यतः संशयानैरथ तैर्भीषणैर्निनादैर्विशेषचिह्नैर्विस्तारितानना दैत्यसैन्यानि सर्वाण्यमूनि प्रत्यवसायगामिनीविकृतीकृतकरालवदना सतीति यावत् । सा कालीति दैत्यैरज्ञायीति भावः ॥ ९ ॥

**( ४ नागोजीभट्टी )** धनुरिति । नादैः स्वीयैरापूरितदिङ्मुखा काली धनुर्ज्यासिंहघण्टानां भीषणैर्नादैर्जिग्ये जिता । देव्या धनुरादिशब्दैः कालीशब्दो जित इति भावः ॥ ९ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** धनुर्ज्येति १० ॥ ९ ॥

**( ६ दंशोद्धारः )** धनुर्ज्येति । कर्णावतंसवत्स्वभावाख्यानमात्रं । ज्यापदेनैव धनुषः प्रतीतेः । धनुर्ज्यादीनां नादैरापूरितं दिङ्मुखं यया । निनादैः जिग्ये नादानित्यध्याहार्यम् । यद्वा नादापूरितदिङ्मुखापि सा धनुर्ज्यादीनां निनादैर्जिग्ये इति कर्मणि तिङन्तं । निनादमिति । सरोषैः सक्रोधैः दैत्यसैन्यैः देवीसिंहः काली च परिवारिता इत्यन्वयः । शरौघैरिति वा पाठः ॥ ९ ॥

**तन्निनादमुपश्रुत्य दैत्यसैन्यैश्चतुर्दिशम् । देवीसिंहस्तथा काली सरोषैः परिवारिताः ॥ १० ॥**

**( १ गुप्तवती )** सरोषैः कुपितैः । स इति सिंहपरं भिन्नपदं वा ॥ १० ॥

**( २ चतुर्धरी )** चतुर्दिशं चतुर्दिक्षु कालीललाटभवा । सरोषैः सक्रोधैः । शरौघैरिति वा पाठः ॥ १० ॥

**( ३ शान्तनवी )** चतुर्दिशमित्येतत्पदं शकारान्तं निनादविशेषणं चैतत् । अथ चेत्परिवारणक्रियाविशेषणं स्यात्तदा दिशाशब्देन टावन्तेन साधनीयं । चतस्रो दिशोऽधिकरणभूता यस्य तन्निनादस्य सः । चतुर्दिशं चतुर्दिक्षु व्याप्तं तन्निनादं तस्य धनुर्ज्यासिंहघण्टानां निनादं निःस्वनं ध्वनिं उपश्रुत्य आकर्ण्य कुपितैर्दैत्यसैन्यैर्देवी च आद्या शक्तिर्भगवती अम्बिका । सिंहश्च केसरी वाहनीभूतः । काली च अम्बिकाललाटोद्भवा तथाच एताः देवीसिंहकाल्यस्तिस्रोपि शरौघैः शरसंपातैः शरव्रातैः चतुर्दिशं यथा स्यात्तथा परिवारिताः परिवेष्टिताः कीलिताः । विद्धा इति यावत् । 'हलन्तादपि टापं च यथा वाचा निशा दिशा' । दिशाशब्दष्टाबन्तोऽप्यस्ति । चतस्रो दिशा अधिकरणभूता यस्मिन् शरौघपरिवारिणे तच्चतुर्दिशं । क्रियाविशेषणानां कर्मत्वं नपुंसकैकत्वं च वक्तव्यम् ॥ १० ॥

**( ४ नागोजीभट्टी )** तदिति । काली चण्डीललाटजा । सरोषैः सक्रोधैः ॥ १० ॥

**( ५ जगच्चन्द्रचन्द्रिका )** तन्निनादमिति ११ ॥ १० ॥

**( ६ दंशोद्धारः )** ॥ १० ॥

**एतस्मिन्नन्तरे भूप विनाशाय सुरद्विषाम् । भवायामरसिंहानामतिवीर्यबलान्विताः ॥ ११ ॥**

**( १ गुप्तवती )** ॥ ११ ॥

**( २ चतुर्धरी )** अन्तरे अवसरे । भवाय संपदे । अमरसिंहानामिति सिंहशब्दः श्रेष्ठवचनः । वीर्यं तेजः ॥ ११ ॥

**( ३ शान्तनवी )** श्लोकयुग्ममिदमेकक्रियैकान्वयमवसेयम् । सुमेधाः सुरथं राजानं संबोधयति । हे भूप दत्तावधानो भव । देवीमहिमानमाकर्णय । एतस्मिन्नन्तरे एतस्मिन्देवीदानवसंग्रामे प्रस्तुते सति अन्तरे अवकाशे समये मध्ये सुरद्विषां दैत्यानां विनाशाय अमरसैन्यानां सिंहानां देवश्रेष्ठानां भवाय भूत्यै अभिवृद्ध्यै स्थितये च अतिवीर्यबलान्विताः शक्तयः सामर्थ्यलक्षणाः देवतारूपाश्च ब्रह्मेशगुहविष्णूनां तथा इन्द्रस्य च पञ्चापि च पञ्चानां तेषां शरीरेभ्यो विनिष्क्रम्य विनिर्गत्य तद्रूपैः ब्रह्मादिरूपैः तदा महेश्वरश्च गुहश्च कुमारः विष्णुश्च नारायणः इन्द्रश्च वज्री एतेषां तनुभ्यो विनिर्गत्यैकैकाः शक्तिदेवता चण्डिकां ययुः । ब्रह्मणः शरीरात् ब्रह्माणी निर्गता महेश्वरस्य शरीरात् माहेश्वरी कुमारस्य शरीरात् कौमारी विष्णोः शरीरात् वैष्णवी इन्द्रस्य शरीरात् ऐन्द्री एतास्ततो विनिर्गत्य तद्रूपैः चण्डिकां देवीं च ययुरित्यर्थः । 'भवः कल्याणसंसारसत्वावाप्तीशजन्मसु' । अमराणां सैन्यानि तेषां । अमरसिंहानां इति तु पाठे अमरसिंहा इति तु श्रेष्ठाः अमरसिंहाः तेषां 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे समस्यते । अभ्यधुश्च । 'स्युरुत्तरपदे व्याघ्रपुंगवर्षभकुञ्जराः । सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थगोचराः' । वीर्यं बलं प्रभावश्च वीर्यं वीरकर्म । बलं प्राणसामर्थ्यं । 'स्थौल्यसामर्थ्यसैन्येषु बलं ना काकसीरिणोः' बृंहति वर्धते विष्टभते ब्रह्मा । ईष्टे ईशः । गूहते सेनां संवृणोति गुहः । वेवेष्टि व्याप्नोति विशति वा विश्वं विष्णुः । इन्दति परमैश्वर्येण राजते इन्द्रः । शक्नोति शक्तिः क्तिच् । शक्यते कर्तुमनया वा शक्तिः । क्तिन् । चडि कोपे कुप्यति चण्डते चण्डिका । प्रापणे लिट् ॥ ११ ॥

**( ४ नागोजीभट्टी )** एतस्मिन्निति । देवीदानवसंपातावसरे । भवाय संपदे ॥ ११ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** एतस्मिन्निति १२ ॥ ११ ॥

**( ६ दंशोद्धारः )** एतस्मिन्निति । अन्तरे अवसरे । भवाय संपदे । वीर्यमुत्साहशक्तिः । बलं देहशक्तिः ॥ ११ ॥

**ब्रह्मेशगुहविष्णूनां तथैवेन्द्रस्य शक्तयः । शरीरेभ्यो विनिष्क्रम्य तद्रूपैश्चण्डिकां ययुः ॥ १२ ॥**

**( १ गुप्तवती )** ॥ १२ ॥

**( २ चतुर्धरी )** ईशः शिवः । गुहः कार्तिकेयः । विष्णुशब्दोऽत्र वराहनृसिंहावपि संगृहीते । शक्तयः स्वव्यतिरेकिन्यो देवताः । तद्रूपैस्तस्य रूपैः ॥ १२ ॥

**( ३ शान्तनवी )** ॥ १२ ॥

**( ४ नागोजीभट्टी )** ब्रह्मेति । विष्णुशब्देन वराहनृसिंहावपि । शक्तयः स्वातिरेकिण्यो देवताः । शक्तिशक्तिमतोस्तादात्म्यात् ॥ १२ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** ब्रह्मेशेति १३ ॥ १२ ॥

**( ६ दंशोद्धारः )** ब्रह्मेशेति । ईशः शिवः । गुहः स्कन्दः । विष्णुपदेन वराहनृसिंहयोरपि संग्रहः । तद्रूपैः तस्य तस्य रूपैः ॥ १२ ॥

## यस्य देवस्य यद्रूपं यथाभूषणवाहनम् । तद्वदेव हि तच्छक्तिरसुरान्योद्धुमाययौ ॥ १३ ॥

**( १ गुप्तवती )** ॥ १३ ॥

**( २ चतुर्धरी )** एतदेव प्रकटयति । यस्येति । यथाभूषणवाहनं भूषणवाहनानतिक्रमेण तद्वत्तथाविधाः ॥ १३ ॥

**( ३ शान्तनवी )** तद्रूपैरिति यदुक्तं तदेव व्यक्तीकर्तुमाह । देवीदानवयुद्धं द्रष्टुमुपागतानां तेषां ब्रह्मादीनां शरीरेभ्यो विनिष्क्रम्यानुभावान्प्राकाश्य कायव्यूहेन प्रव्यक्ताकृतयो ब्रह्माण्यादयः शक्तयः तत्तदेव सदृशरूपैश्चण्डिकांशभूताश्चण्डिकां युद्धायोत्साहयितुं ययुः इति प्रागुक्तं तदेव स्पष्टयति । यस्य देवस्य ब्रह्मादेः यद्रूपं य आकारः यथा भूषणवाहनं भूषणवाहनान्यनतिक्रम्य यथाभूषणवाहनं यथालंकारवाहनं च यस्य देवस्य यद्भूषणं यस्य देवस्य यद्वाहनं तद्वदेव तद्रूपं बिभ्राणां तादृशमेव शरीरविन्यासं धारयति तद्वदेव च वाहनमारूढवती तच्छक्तिस्तस्य देवस्य शक्तिर्ब्रह्मादिदेवता तद्वदेवायुधानि बिभ्रतीसती हि निश्चयेन असुरान् योद्धुं । युध संप्रहारे । दैत्यान्प्रहर्तुं आययौ । देवीसान्निध्यं संग्रामरङ्गस्थलीं वा आजगाम ॥ १३ ॥

**( ४ नागोजीभट्टी )** ब्रह्मादिरूपैरित्यर्थकं तद्रूपैरिति व्याचष्टे । यस्येति । तद्वत् तथाविधरूपभूषणवाहनेत्यर्थः ॥१३॥

**( ५ जगच्चन्द्रचन्द्रिका )** यस्य देवस्येति १४ ॥ १३ ॥

**( ६ दंशोद्धारः )** ॥ १३ ॥

## हंसयुक्तविमानाग्रे साक्षसूत्रकमण्डलुः । आयाता ब्रह्मणः शक्तिर्ब्रह्माणी साभिधीयते ॥ १४ ॥

**( १ गुप्तवती )** ॥ १४ ॥

**( २ चतुर्धरी )** तदेव व्याकुरुते । हंसेति । अग्रे उपरि अक्षसूत्रं जाप्यमालिका ॥ १४ ॥

**( ३ शान्तनवी )** हंसैर्युक्तो योजितो विमानः हंसयुक्तविमानः तस्मिन् तिष्ठतीति हंसयुक्तविमानस्था । अक्षाणां स्फटिकमणीनां सूत्रं जपमाला । अक्षसूत्रं च कमण्डलुश्च ताभ्यां सहवर्तमाना साक्षसूत्रकण्डलुः एवंविधा सा कानामेत्याह । एवंविशेषणविशिष्टा ब्रह्मणः शक्तिरसुरैः सह योद्धुमायाता आजगाम । सा खलु ब्रह्मणीत्यभिधीयते । ब्रह्मणः स्त्री ब्रह्माणी । अत्र तुगागमाभावाच्छैवागमप्रसिद्धं नामधेयमिदं कथ्यते । अतएव निरूढतामपेक्षितनियमसिद्धतामिति नारदः । यद्वा 'वेदस्तत्त्वं तपो ब्रह्म ब्रह्मा विप्रः प्रजापतिः' । अण शब्दे ब्रह्मणा अणति कथयति प्रतिपादयति ब्रह्माणी । कर्मण्यणि स्त्रियां ङीप् । यद्वा ब्रह्माणमणति मदीयोयमीत्यपि ब्रह्माणी । 'हंसो यतिविशेषे च प्राणश्वेतच्छदेषु ना' । अतएव हंसैर्यतिविशेषैर्युक्तं विमानं विगतमानं परं ब्रह्म तत्र तिष्ठत्युपनिषद्रूपलादिति हंसयुक्तविमानस्था ब्रह्माणीत्यप्यर्थलेशः ॥ १४ ॥

**( ४ नागोजीभट्टी )** हंसेति । विमानाग्रे इत्यस्य स्थितेति शेषः । अक्षसूत्रं जपमाला । ब्रह्माणी ब्रह्माणमानयति चेष्टयतीति व्युत्पत्त्यायं शब्दः साधुः ॥ १४ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** हंसयुक्तेति १५ ॥ १४ ॥

**( ६ दंशोद्धारः )** हंसेति । विमानाग्रे विमानोपरि । अक्षसूत्रं जपमाला ॥ १४ ॥

## माहेश्वरी वृषारूढा त्रिशूलवरधारिणी । महाहिवलया प्राप्ता चन्द्ररेखाविभूषणा ॥ १५ ॥

**( १ गुप्तवती )** ॥ १५ ॥

**( २ चतुर्धरी )** महाही महासर्पौ अनन्ततक्षकौ वलयौ कङ्कणौ यस्याः । चन्द्रस्य रेखा कला विभूषणं यस्याः ॥१५॥

**( ३ शान्तनवी )** वृषारूढा वृषं वृषभं धर्मं चारूढा आरूढवती । त्रिशूलवरधारिणी त्रीणि शूलानि शृङ्गाण्यग्राणि यस्यायुधस्य तत् श्रेष्ठं त्रिशूलं त्रिशूलवरं धरति धारयति बिभर्तीति त्रिशूलवरधारिणी । महान्त अहयो नागाः वलयानि यस्याः सा महाहिवलया । महोरगहस्तसूत्राख्यवलया । चन्द्रस्य लेखा रेखा कला विभूषणं यस्याः सा चन्द्ररेखाविभूषणा । एवंलक्षणा शक्तिः महेश्वरस्येयं माहेश्वरी देवता प्राप्ता असुरैः समं योद्धुमाजगाम । 'शुक्ले मूषिके श्रेष्ठे सुकृते वृषभे वृषः' । 'अस्त्री शूलं रुगायुधं' 'देवाद्वृते वरः श्रेष्ठे त्रिषु क्लिवं मनाक् प्रिये' । 'आवापकः परिहार्यः कटको वलयोऽस्त्रियां' । प्रोक्ता । कर्तरि क्तः । रेखा लेखा कला प्रकृतौचित्यात् । अन्यथा लेखा राजिरित्यर्थः ॥ १५ ॥

**( ४ नागोजीभट्टी)** माहेश्वरीति । महाही तक्षकानन्तौ वलयौ । चन्द्ररेखा चन्द्रकला सैव विभूषणं यस्याः ॥ १५ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** माहेश्वरीति १६ ॥ १५ ॥

**( ६ दंशोद्धारः )** माहेश्वरीति । महाही शेषतक्षकौ वलये कङ्कणे यस्याः ॥ १५ ॥

**कौमारी शक्तिहस्ता च मयूरवरवाहना। योद्धुमभ्याययौ दैत्यानम्बिका गुहरूपिणी ॥ १६ ॥**

**( १ गुप्तवती )** ॥ १६ ॥

**( २ चतुर्धरी )** ॥ १६ ॥

**( ३ शान्तनवी )** शक्तिरायुधं हस्ते यस्याः सा । अजाद्यतष्टाप् । शक्तिहस्ता । प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ भवत इति वक्तव्यं । मयूरेषु वरः श्रेष्ठः मयूरवरः वाहनं यस्याः सा मयूरवरवाहना । 'वाहनमाहितात्' इति नत्वं नाशङ्कनीयं । आहितत्वाभावात् । नहि मयूरवरः वाहनमारोपितोस्ति । वाहने यदारोपितमुच्यते तदारोपितमाहितमुच्यते । मयूरो वरं श्रेष्ठं वाहनं यस्याः सा तथोक्ता । रूप रूपक्रियायां चुरादिः । गुहं कुमारमाकारेण रूपयति दर्शयति गुहरूपिणी । यद्वा गुहस्य रूपं गुहरूपं तदस्यामस्तीति गुहरूपिणी । अत इनिः । ऋन्नेभ्यो ङीप् । यद्वा गुहरूपं करोत्यात्मनि तदाचष्टे वा तच्छीला । गुहरूपयतेर्णिनिः । अम्बिका माता कुमारस्येयं कौमारी शक्तिर्देवता दैत्यान् योद्धुं संप्रहर्तुं अभ्याययौ अभ्याजगाम ॥ १६ ॥

**( ४ नागोजीभट्टी )** कौमारीति । गुहरूपिणी गुहसमानाकारा । कुमारसंबन्धिनी शक्तिरायया वित्यर्थान्न पौनरुक्त्यम् । ऐन्द्रीत्युक्तापि यथा शक्रस्तथैव सेतिवत् अम्बिकापदेन गुहस्य शिवव्यूहत्वं सूचयति ॥ १६ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** कौमारीति १७ ॥ १६ ॥

**( ६ दंशोद्धारः )** ॥ १६ ॥

**तथैव वैष्णवी शक्तिर्गरुडोपरि संस्थिता। शङ्खचक्रगदाशार्ङ्गखड्गहस्ताभ्युपाययौ॥ १७ ॥**

**( १ गुप्तवती )** शङ्खचक्रेति । शार्ङ्गपदेन बाणा अप्युपलक्ष्यन्ते । 'बाहुभिर्गरुडारूढा शङ्खचक्रगदासिनी । शार्ङ्गबाणधरायाता वैष्णवीरूपधारिणी' इति वामनपुराणात् । अतएव षड्भुजेयं । केचित्तु 'अभ्युपो बाहुमूलं स्यात्' इति कोशोऽस्ति तेन कक्षे खड्गोऽर्थात्पृष्ठे इषुधिरिति चतुर्भुजत्वमेव परिष्कुर्वन्ति तत्कोशसत्त्व एव विश्वसनीयम् ॥ १७ ॥

**( २ चतुर्धरी )** शङ्खः पाञ्चजन्यः । चक्रं सुदर्शनं । गदा कौमोदकी । शार्ङ्गं धनुः । धनुषः साहचर्याद्बाणोप्यत्रोहनीयः । खड्गो नन्दकः । ते हस्ते यस्याः सा । तथाच वामनपुराणे । 'बाहुभ्यां गरुडारूढा शङ्खचक्रगदासिनी । शार्ङ्गबाणधरा जाता वैष्णवीरूपशालिनी' इति । एतेनास्याः षड्बाहुत्वमभिधीयते । यच्च श्रृङ्गमयो मुष्टिरस्येति शार्ङ्गः खड्ग इति व्याख्यानं तदसंगतं । ननु धनुषः साहचर्याच्चर्म किं नो गृह्यत इति चेत् । सत्यम् । अनुजानाम्यहं । तस्या अष्टभुजत्वेप्यदोषात् । नत्वेकस्य भुजस्य शून्यत्वे दोषः । माहेश्वर्यादावेकायुधमात्रोल्लेखदर्शनात् । 'अभ्युपो बाहुमूलं' स्यात् ॥ १७ ॥

**( ३ शान्तनवी )** गरुडस्योपरि गरुडोपरि 'पूरणगुण' इत्यादिना षष्ठीसमासप्रतिषेधः । कृदन्ताव्ययस्य तेन तदुपरि मदुपरीतिवत्षष्ठीसमासः । संस्थिता सम्यक्स्थिता । गरुडारूढेत्यर्थः । 'संस्थाधारे स्थितौ मृतौ' शङ्खश्च पाञ्चजन्यः । चक्रं च सुदर्शनं । गदा कौमोदकी च शार्ङ्गं च धनुः । हस्तिदन्तः शार्ङ्गं श्रृङ्गस्य हस्तिदन्तस्येदं शार्ङ्गं वैष्णवं धनुः । अन्यदीयं तु चापीयं शृङ्गं माहिषमुच्यते । गवयं माहिषं श्रृङ्गं शार्ङ्गं चापादि यन्मयं' । खड्गश्च नन्दकः । सेनाङ्गत्वादेकवद्भावेन नपुंसकत्वं । तत् शङ्खाद्यं हस्ते यस्याः सा शङ्खचक्रगदाशार्ङ्गखड्गहस्ता । 'प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ भवत इति वक्तव्यं' । विष्णोरियं वैष्णवी शक्तिर्देवता नारायणी तथैव तद्वदेव ब्रह्मादिशक्तिवदेव दैत्यान् योद्धुं । युध संप्रहारे । संप्रहर्तुं अभ्याययौ अभ्युपाजगाम । अथवा तथैव तद्वदेव विष्णुवदेव वैष्णवी शक्तिरपि दैत्यान् प्रहर्तुं क्षमेति भावः । वैष्णव्या शक्तेरायुधानि पञ्च । बाहवस्तु चत्वार इति वैषम्यं । आहुरत्र । शङ्खखड्गमेकस्मिन्बाहौ । अङ्गुलीसक्तसूत्रलीनः शङ्खो वादनार्थः । शार्ङ्गं तु मुष्टौ निविष्टमित्यवैषम्यमिति । यद्वा युद्धे वादनार्थः शङ्खो वादनौचित्याद्बाहुमूलावलम्बीत्यवैषम्यं । शङ्खो नायुधं तस्य वादनार्थत्वादिति कश्चिदाख्यत् । तत्र शङ्खपाणिरित्यत्र पाणेः सप्तम्यन्तस्य परनिपातभावप्रसङ्गात् । अस्ति च शङ्खस्य संग्रामे स्वनिःस्वनत्रासाकुलत्वात्तुत्वादायुधत्वौचित्यमित्यलं विस्तरेण ॥ १७ ॥

**( ४ नागोजीभट्टी )** तथैवेति । अत्र शार्ङ्गपदेन बाणोप्युपलक्ष्यते । 'बाहुभिर्गरुडारूढा शङ्खचक्रगदीसिनी । शार्ङ्गबाणधरा जाता वैष्णवीरूपशालिनी' इति वामनपुराणात् । एतेनास्याः षड्भुजात्वं सूचितम् ॥ १७ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** तथैव वैष्णवीति १८ ॥ १७ ॥

**( ६ दंशोद्धारः )** तथैवेति । शङ्खः पाञ्चजन्यः । चक्रं सुदर्शनं । गदा कौमोदकी । शार्ङ्गं धनुः । खड्गो नन्दकः । एतानि पञ्च हस्ताभ्युपेषु यस्याः । 'अभ्युपो बाहुमूलं स्यात्' इति विश्वः । शङ्खादयश्चतुर्षु हस्तेषु खड्गः कक्षायामिति संप्रदायः यद्वा श्रृङ्गमयो मुष्टिरस्येति शार्ङ्गः । स चासौ खड्गश्चेति चत्वार्यायुधानि हस्तेष्वस्याः । यद्वा शार्ङ्गपदं बाणस्याप्युपलक्षणं । शङ्खादीनि षडायुधानि हस्तेष्वस्याः इति षड्हस्तत्वमस्याः । यथोक्तं वामनपुराणे 'वायुभिर्गरुडारूढा शङ्खचक्रगदासिनी । शार्ङ्ग-

बाणधरा जाता वैष्णवीरूपधारणी' इति । ननु शार्ङ्गसाहचर्याद्बाण इव खड्गसाहचर्याच्चर्मापि किमिति न गृह्यते इति चेष्टापत्ते अस्याष्टभुजत्वाकल्पनस्याप्युपपत्तेः । प्रसिद्धं च दक्षादीनां वरदानावसरे विष्णोरष्टभुजत्वं भागवतादिषु । नचैकभुजस्य शून्यत्वं दोषाय । कौमार्यादीनामेकायुधत्वात् । शङ्खादिपदस्य पद्मोपलक्षकत्वसंभवाच्च ॥ १७ ॥

## यज्ञवाराहमतुलं रूपं या बिभ्रतो हरेः । शक्तिः साप्याययौ तत्र वाराहीं बिभ्रती तनुम् ॥ १८

(१ गुप्तवती) ॥ १८ ॥

**( २ चतुर्धरी )** यज्ञवाराहं यज्ञाङ्गकल्पितसूकराकारं । या शक्तिरित्यन्वयः । वाराहीं वराहाकारां तनुं मूर्तिं बिभ्रती धारयन्ती ॥ १८ ॥

**( ३ शान्तनवी )** पुनर्वैष्णवीशक्त्यन्तरमाविर्बभूवेत्याह । हरेर्भगवतो विष्णोः अतुलं बलपराक्रमाभ्यामनुपम्यं । वराहस्येदं वाराहं रूपं या बिभ्रती सती भगवती जज्ञे अजनिष्ट प्रादुर्भूता । जनी प्रादुर्भावे अनुदात्तेत् कर्तरि लिट् । यद्वा ज्ञा अवबोधने । कर्मणि लिङात्मनेपदं । ऋषिभिः शास्त्रेण च जज्ञे अज्ञायि सापि हरेः शक्तिः नारायणी देवता । वराहस्येयं वाराही तां वाराहीं तनुं शरीरव्यक्तिं बिभ्रती धारयती सती तत्र तस्मिन् देवीदानवसंग्रामे दैत्यान् योद्धुं संहर्तुं आययौ आजगाम ॥ १८ ॥

**( ४ नागोजीभट्टी )** यज्ञेति । यज्ञाङ्गकल्पितं वराहाकारं बिभ्रतो हरेरित्यनेनास्याः विष्णुत्वमेवेति सूचितम् । एवं नृसिंहोऽपि तत्रैव कालीपुराणे शरभवराहयुद्धे विष्णोः शरभपक्षपातित्वं वराहबलहारकत्वमुक्तम् । नृसिंहस्य च वराहानुयायित्वमुक्तं विरुध्यतेति वाच्यम् । तस्य लीलामात्रत्वात् ॥ १८ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** यज्ञवाराहेति १९ ॥ १८ ॥

**( ६ दंशोद्धारः )** यज्ञवाराहमिति । यज्ञाङ्गकल्पितसूकराकारं । शक्तिरित्यन्वयः ॥ १८ ॥

## नारसिंही नृसिंहस्य बिभ्रती सदृशं वपुः । प्राप्ता तत्र सटाक्षेपक्षिप्तनक्षत्रसंहतिः ॥ १९ ॥

(१ गुप्तवती) ॥ १९ ॥

**( २ चतुर्धरी )** वपुः शरीरं । सटाः केसराः तासां क्षेपेण क्षिप्ता तिरस्कृता नक्षत्रसंहतिर्यया ॥ १९ ॥

**( ३ शान्तनवी )** पुनर्वैष्णवीशक्त्यन्तरं प्रापदित्याह । तत्र देवीदानवसंग्रामे सटाक्षेपक्षिप्तनक्षत्रसंहतिः । सटास्कन्धकेसराणां आक्षेपेण कम्पनेन इतस्ततः स्कन्धकेसराताडनेन क्षिप्ताः प्रेरिताः दलिताः नक्षत्राणां तारकाणां संहतयः समूहा यया तथोक्ता । अतएव नृसिंहस्येयं नारसिंही वैष्णवी शक्तिर्देवता दानवान् योद्धुं संहर्तुं प्राप्ता प्राप्तवती आययौ । आपॢ व्याप्तौ कर्तरि क्तः । ना चासौ सिंहश्च नृसिंहः । यद्वा ग्रामैकदेशे दग्धे ग्रामो दग्ध इति वत् नुरेकदेशे नृशब्दस्य वर्तते । तत्तश्च ना च नृसिंहश्च नृसिंहो यस्मिन् भगवतो नृसिंहावतारे स नृसिंहः । मत्वर्थे अर्शआदित्वादच् ॥ १९ ॥

**( ४ नागोजीभट्टी )** ॥ १९ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** नारसिंहीति २० ॥ १९ ॥

**( ६ दंशोद्धारः )** नारसिंहीति । सटाः केसराः तासामाक्षेपेण क्षिप्ता नक्षत्रसंहतिर्यया ॥ १९ ॥

## वज्रहस्ता तथैवैन्द्री गजराजोपरि स्थिता । प्राप्ता सहस्रनयना यथा शक्रस्तथैव सा ॥ २० ॥

(१ गुप्तवती) ॥ २० ॥

**( २ चतुर्धरी )** गजराजोपरि ऐरावतपृष्ठे प्राप्ता आगता ॥ २० ॥

**( ३ शान्तनवी )** वज्रमायुधं हस्ते यस्याः सा वज्रहस्ता । तथा गजराजोपरि स्थिता गजानां राजा ऐरावतः गजराजः गजराजस्य उपरि 'पूरणगुण' इत्यादिना षष्ठीसमासप्रतिषेधस्तु कृदन्तान्तस्यैवेति ततोऽन्येनाव्ययेन षष्ठीसमास एव । गजराजाधिरूढा ऐरावतादिसंस्थेत्यर्थः । सहस्रं नयनानि यस्याः सा तथोक्ता । अतएव यथा येन प्रकारेण इन्द्रः शक्रः समवस्थितोऽभूदाकारादिना तथैवैन्द्री शक्तिः इन्द्रस्येयं ऐन्द्री देवता । तथैव तद्वदेव ब्रह्माण्यादिदेव्यो दानवसंग्रामे दैत्यैः सह संग्रामयितुं प्राप्ता । आपॢ व्याप्तौ कर्तरि क्तः । योद्धुमाययौ । यथा शक्र इति 'यथासादृश्ये' इति प्रतिषेधादव्ययीभावाभावे यथेति पृथक्पदं । वज्रहस्ता वज्रालंकृतहस्तापि । 'वज्रोऽस्त्री हीरके पवौ' । हीरको रत्नभेदः । इन्द्रस्य स्त्री इन्द्राणीशक्तिस्त्वैन्द्री । तदित्थं ब्रह्माणी माहेश्वरी वैष्णवी वाराही नारसिंही ऐन्द्री चेति देवशक्तयः सप्तेह कथिताः ॥ २० ॥

**( ४ नागोजीभट्टी )** वज्रेति । यथा शक्र इत्याकारपरम् । एवंच सर्वासु तदाकारता द्रष्टव्या । गजराज ऐरावतः २०

( ५ जगच्चन्द्रचन्द्रिका ) वज्रहस्तेति २१ ॥ २० ॥

( ६ दंशोद्धारः ) ॥ २० ॥

**ततः परिवृतस्ताभिरीशानो देवशक्तिभिः । हन्यन्तामसुराः शीघ्रं मम प्रीत्याह चण्डिकाम्॥२१॥**

( १ गुप्तवती ) मम प्रीत्याह । मम प्रिये इति वक्तव्ये चरमाक्षरलोपो रभसावेशात् ॥ २१ ॥

( २ चतुर्धरी ) असुरा हन्यन्तामित्याहेति साध्याहारोऽन्वयः ॥ २१ ॥

( ३ शान्तनवी ) ततोऽनन्तरं ताभिर्ब्रह्माण्यादिभिर्देवताशक्तिभिः परिवृतः परवेष्टित ईशानो महेशः चण्डिकामाह । किमिति । मम शंभोः प्रीत्या स्नेहेन कारणेन असुराः हन्यन्तां शीघ्रमिति । क्वचित्तु चण्डिकेति पाठः । तदा परिवृता ईशाना इतिच स्त्रीलिङ्गत्वेन तदा चण्डिका विशेषणे द्वे । एवंच देवशक्तिसमन्वितत्वं चण्डिकाया युक्तं । 'ब्रह्मेशगुहविष्णूनां तथेन्द्रस्य च शक्तयः । शरीरेभ्यो विनिष्क्रम्य तद्रूपैश्चण्डिकां ययुः' इत्युक्तत्वात् । तत्रायमन्वयः । ततोऽनन्तरं देवशक्त्यागमनानन्तरं ताभिर्ब्रह्माण्यादिदेवशक्तिभिः परिवृता परिवेष्टिता ईशानशक्तिः संपन्ना अप्रतिहतशासना स्वामिनी चण्डिका देवी भगवती देवशक्तीः प्रति आह । किमिति हे देवशक्तयः भवतीति मम प्रीत्या मम चण्डिकायाः प्रीत्या स्नेहेन कारणेन शीघ्रं क्षिप्रं असुराः सर्वे हन्यन्तामिति आह । कालसामान्येति विभक्तेः प्रतिरूपकमव्ययं । ईशानः ईश ऐश्वर्ये लटः शानच् । यद्वा ताच्छील्ये चानश् । स्त्रियां तु टाप् ॥ २१ ॥

( ४ नागोजीभट्टी ) अतिविशिष्टतेजसः कौशिक्याः सविधि यान्तुमशक्तास्ता देवशक्तीरीशानो देव्यै दर्शितवानित्याह । तत इति । ताभिः परिवृतः ईशानः । मम प्रीत्या एताभिर्देवशक्तिभिः सहासुरा हन्यन्तामिति चण्डिकामाहेत्यन्वयः । स्वशक्तेः पार्वत्याः प्रादुर्भूतत्वेन धृष्टतया ईशान एव तथोक्तवानिति भावः । अण्डाधिकारिण इमे ब्रह्मादयः । अण्डान्तराधिकारिणां शुम्भादिजितत्वेन धृष्टत्वासंभवात् ॥ २१ ॥

( ५ जगच्चन्द्रचन्द्रिका ) ततः परिवृत इति २२ ॥ २१ ॥

( ६ दंशोद्धारः ) तत इति । मम प्रीत्या असुरा हन्यन्तामित्याहेति शब्दाध्याहारः ॥ २१ ॥

**ततो देवीशरीरात्तु विनिष्क्रान्तातिभीषणा । चण्डिकाशक्तिरत्युग्रा शिवाशतनिनादिनी ॥ २२ ॥**

( १ गुप्तवती ) शिवाशतानामनन्तशृगालानां नादेन युक्ता ॥ २२ ॥

( २ चतुर्धरी ) शिवाशतनिनादिनीति असंख्यातशृगालीगणनिनादेनान्विता ॥ २२ ॥

( ३ शान्तनवी ) ततः असुराः हन्यन्तामिति चण्डिकाशासनानन्तरं देवीशरीरात्तु चण्डिकाशरीरादपि पुनश्चण्डिकाशक्तिः विनिष्क्रान्ता अभूत् विनिर्गता प्रादुरभूत् । देव्याश्चण्डिकायाः शरीरतः तस्मात् चण्डिकायाः देव्याः शक्तिः चण्डिकाशक्तिः । कीदृशी शक्तिः चण्डिकायाः । अतिभीषणात्यर्थं भयकारिणी । अतिपाशिनीति क्वचित्पाठः । प्रशस्तः पाशो यस्याः सा पाशिनी । पुनः कीदृशी शक्तिः । अत्युग्रा अतिरौद्रा । पुनः कीदृशी शक्तिः । शिवाशतनिनादिनी । शिवानां शृगालानां शतेन कृतो निनादः शिवाशतनिनादः सोऽस्त्यस्याः सा शिवाशतनिनादिनी शृगालशतजनितध्वनिः । शिवाशब्दः शृगालेऽपि स्त्रीलिङ्गः । 'शिवा काले शिवा क्रोष्टा भवेदामलकी शिवा । शिवो रुद्रे शिवः शम्भुः शिवा गौरी शिवाभया' 'शिवा गौरीशृगालयोः' । अतः शिवेत्यनेन परमेश्वर्यपि कथ्यते । शक्तिशक्तिमदभेदोपचारात् । तस्या विशेषणं शतनिनादिनीत्येतत् । शतत्वसंख्यया निनदति सा शिवाशतनिनादिनी । शतमित्युपलक्षणं । सर्वतः शब्दायमानान्शब्दयतीत्यर्थः । एतदुक्तं भवति । 'यस्य देवस्य यद्रूपं यथाभूषणवाहनं । तद्वदेव हि तच्छक्तिरसुरान्योद्धुमाययौ' इति वचनात् चण्डिकाशक्तिर्विनिर्गता चण्डिकाकृतिरेव शिवेतिनाम्ना प्रादुरभूदिति । यद्वा सैवार्थः शिवाशतकृता निनादा चण्डिकाशक्तिरिति । अथवा शिवाशतेन सह निनदतीति शिवाशतनिनादिनी । अन्यथोत्तरत्र 'तदागच्छत तृप्यन्तु मच्छिवाः पिशितेन वः' इति शिवागतबहुत्वं कथं स्यात् ॥ २२ ॥

( ४ नागोजीभट्टी ) स्वस्यापि सहायप्रदर्शनेनैषा दृष्टा भगवती तस्योत्तरं नाह किंतु काचिन्न शक्तिरित्याह । तत इति । अतिभीषणा दर्शनमात्राद्भयंकरी । अत्युग्रा रौद्रस्वभावा । शिवानां शृगालीनां शतेन निनादिनी । शतशब्दोऽनन्तवाची । निनददनन्तशिवावृता ॥ २२ ॥

( ५ जगच्चन्द्रचन्द्रिका ) ततो देवीति २३ ॥ २२ ॥

( ६ दंशोद्धारः ) तत इति । शिवाशतस्य शृगालशतस्य निनादैर्युक्ता ॥ २२ ॥

**सा चाह धूम्रजटिलमीशानमपराजिता । दूतत्वं गच्छ भगवन्पार्श्वं शुम्भनिशुम्भयोः ॥ २३ ॥**

**( १ गुप्तवती )** दूतत्वं दौत्यं गच्छ प्राप्नुहि । पार्श्वं समीपमुद्दिश्येत्यर्थात् । हे दूत तयोः पार्श्वं प्रति त्वं गच्छेति वा ॥ २३ ॥

**( २ चतुर्धरी )** धूम्रजटिलं धूम्रवर्णजटाशालिनं । दूतो वार्ताहरः तद्भावो दूतत्वं गच्छेति काकाक्षिवत् संवन्धनीयं ॥ २३ ॥

**( ३ शान्तनवी )** अपराजिता अवाप्तलोकोत्कर्षा । यद्वा अजः पितामहः संजातो यस्याः सा अजिता पितामहमाता । विष्णुमायेति यावत् । 'अजश्छागे हरे विष्णौ ध्रुवद्रुहिणयोरपि' । सा चण्डिकायाः शक्तिर्देवता धूम्रजटिलमीशानं शूलिनं कपालभृतं मृत्युंजयं रुद्रं आह अब्रवीत् । आहेति कालमात्रे विभक्तिप्रतिरूपकमव्ययं । किमाह हे भगवन् दूतत्वं गच्छ देव्याः शक्तेः दूतोऽस्मीति दूतभावं भज । शुम्भनिशुम्भयोः पार्श्वं गच्छ याहि । चः समुच्चयार्थो भिन्नक्रमश्च । दूतत्वं गच्छ पार्श्वं च इति योजनान्तरे तु धूम्रजटिलं इति छेदः । दूत त्वं इति च छेदः । सा चण्डिकायाः शक्तिरपराजितानाम जटिलं ईशानं जटाः सन्ति यस्य सः जटिलः तं । 'तुन्दादिभ्य इलच्' । आह किमिति । असुरेषु क्रोधाग्निपूर्णत्वात् धूम्रः कृष्णलोहितः । हे धूम्र हे धूम्रवर्ण हे भगवन् त्वं दूत । लोण्मध्यमपुरुषैकवचनान्तमेतत् । 'स्यात्संदेशहरो दूतः' । हे धूम्र दूत इव आचरति दूतति । लोटस्तु 'सेर्ह्यपिच' । अतोहेतुर्लुक् । दूत दूत इवाचर । शुम्भनिशुम्भयोः पार्श्वं गच्छ याहि । 'सर्वप्रातिपदिकेभ्यः क्विब्वाचारे वक्तव्यः' । यदि दूतवदाचरति दूत इति 'उपमानादाचारे' क्विबन्तताम्नाश्रित्य मुख्यार्थे दूतशब्दात् त्वप्रत्ययः क्रियते यैस्तेषां । हे भगवन् इति सर्वैश्वर्याद्युपेत पूजित । संबोधनं । दूतत्वेति नीचत्वे प्रत्ययुक्तमिति केयं वाचोयुक्तिपटुत्वौचिती स्यात् । धूम्रजटिलमित्यत्र एकपदत्वपक्षे धूम्रश्चासौ जटिलश्चेति विग्रहीतव्यं । ततो विशेषणसमासः । धूम्रा जटाः यस्येति तु विगृह्य न कर्मधारयान्मत्वर्थीय इति प्रतिषेधादिलजभावाद्बहुव्रीहौ धूम्रजट इत्येव स्यात् ॥ २३ ॥

**( ४ नागोजीभट्टी )** सा चेति । धूम्रजटिलं धूम्रजटावन्तं । अपराजिता तदाख्या अपरैरजिता च । दूतभावं वार्ताहत्वं गच्छ शुम्भनिशुम्भयोः पार्श्वं च गच्छेत्यन्वयः । आहेति निपातः कालमात्रे । तेनाब्रवीदित्यर्थः । त्रिमूर्त्यन्तशिवापेक्षया यस्याः कौशिक्यास्तत्प्रादुर्भावकसमक्षतया आधिक्येन तस्य दूत्ये तत्प्रेषणं नानुचितम् ॥ २३ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** सा चाहेति २४ ॥ २३ ॥

**( ६ दंशोद्धारः )** ॥ २३ ॥

**ब्रूहि शुम्भं निशुम्भं च दानवावतिगर्वितौ । ये चान्ये दानवास्तत्र युद्धाय समुपस्थिताः ॥ २४ ॥**

**( १ गुप्तवती )** ॥ २४ ॥

**( २ चतुर्धरी )** तत्र शुम्भनिशुम्भान्तिके ॥ २४ ॥

**( ३ शान्तनवी )** तत्र गत्वा किं ब्रवाणीत्यत आह । हे भगवन् हे रुद्र क्रतुभुजौ विजित्यैवातिगर्वितौ अस्मत्समः कोपि संग्रामशूरो नास्तीति संजाताहंकारौ शुम्भनिशुम्भौ दानवौ हितं वक्ष्यमाणं ब्रूहि उपदिश । अथच । ये चान्ये दानवाः तत्र शुम्भनिशुम्भयोः पक्षे संग्रामशूरंमन्यतया गर्विता युद्धाय युद्धं कर्तुं समुपस्थिताः संगताः स्युस्तानपि च हितं वक्ष्यमाणं ब्रूहि उपदिश । ब्रूञ् द्विकर्मकः । 'अकथितं च' इत्यत्र ब्रूञ्शास्विति द्विकर्मकेषु परिगणितत्वादस्य ॥ २४ ॥

**( ४ नागोजीभट्टी )** ब्रूहीति । ये च तत्र शुम्भान्तिकेऽन्ये दानवास्तांश्च ब्रूहीत्यन्वयः । युद्धाय युद्धं कर्तुम् ॥ २४ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** ब्रूहि शुम्भमिति २५ ॥ २४ ॥

**( ६ दंशोद्धारः )** ॥ २४ ॥

**त्रैलोक्यमिन्द्रो लभतां देवाः संतु हविर्भुजः । यूयं प्रयात पातालं यदि जीवितुमिच्छथ ॥ २५ ॥**

**( १ गुप्तवती )** ॥ २५ ॥

**( २ चतुर्धरी )** प्रयात पुनरनावृत्त्या गच्छत ॥ २५ ॥

**( ३ शान्तवी )** अनेन हितमाह चण्डिकायाः शक्तिः । हे शुम्भादयो दैत्याः यूयं सर्वेपि यदि जीवितुमिच्छथ जिजीविषथ चेत् तर्हि पातालं रसातलं प्रयात प्रगच्छत । ततश्च इन्द्रः त्रैलोक्यं लभतां प्राप्नोतु । इन्द्रादयो देवाः सुपर्वाणः हविर्भुजः यज्ञेषु हवींषि यथाभागं भुञ्जानाः संतु हवींषि भुञ्जन्तामिति सर्वहिता चण्डिकायाः शक्तिः देवता शुम्भादिभ्यो हितमुचितमुपादिशत् । अग्निमुखेन देवतोद्देशेन हूयमानं देवद्रव्यं घृतादिकं हविराहुः । अन्ये तु हूयते हविः सान्नाय्यमाहुः । 'घृतमाज्यं हविः सर्पिर्हविष्यं च तदुच्यते' । इच्छथ । लटो मध्यमस्थः । 'इषुगमियमां छः शिति' ॥ २५ ॥

**( ४ नागोजीभट्टी )** वचनमाह त्रैलोक्यमिति स्पष्टम् ॥ २५ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** त्रैलोक्यमिति २६ ॥ २५ ॥

**( ६ दंशोद्धारः )** ॥ २५ ॥

**बलावलेपादथ चेद्भवन्तो युद्धकाङ्क्षिणः । तदागच्छत तृप्यन्तु मच्छिवाः पिशितेन वः ॥ २६ ॥**

**( १ गुप्तवती )** ॥ २६ ॥

**( २ चतुर्धरी )** मच्छिवाः मदीयश्रृगालाः वो युष्माकं पिशितेन मांसेन तृप्यन्तु तृप्तिं गच्छन्तु संतुष्टिं प्राप्नुवन्तु॥२६॥

**( ३ शान्तनवी )** अथ चेद्भवन्तो दानवाः बलावलेपाद्धेतोः बलगर्वात्कारणात् युद्धकाङ्क्षिणः स्युः तदा तर्हि मया समं योद्धुमागच्छत यूयं तत्फलं चावाप्स्यथ । मच्छिवाश्च वः पिशितेन तृप्यन्तु मम शक्तेः परिवाराः श्रृगालाश्च वः युष्माकं युधि खण्डितानां पिशितेन मांसेन तृप्तिमाप्नुवन्तु । 'कुकुराश्च श्रृगालाश्च हरिणाश्च तथा वयः । प्रिया भवन्ति शक्तीनां भैरवाणां च वै तथा' । 'गर्वोऽभिमानोहंकारो मानश्चित्तसमुन्नतिः । दर्पोऽवलेपोऽहन्तापि स्यादहं युद्धमेव च' । काक्षि इच्छायां । युद्धं काङ्क्षन्ति युद्धकाङ्क्षिणः । तृप तृप्तौ दिवादिः । तृप्यन्तु लोट् । पिशितं तरसं मांसम् ॥ २६ ॥

**( ४ नागोजीभट्टी )** बलेति । अवलेपो गर्वः । मच्छिवाः मया सह निनदन्त्यः प्रादुर्भूताः । पिशितं मांसम् ॥२६॥

**( ५ जगच्चन्द्रचन्द्रिका )** बलावलेपादिति २७ ॥ २६ ॥

**( ६ दंशोद्धारः )** बलावलेपाद्बलगर्वात् मच्छिवा मदीयश्रृगालाः । पिशितेन मांसेन ॥ २६ ॥

**यतो नियुक्तो दौत्येन तया देव्या शिवः स्वयम् । शिवदूतीति लोकेऽस्मिंस्ततः सा ख्यातिमागता २७**

**( १ गुप्तवती )** शिवदूतीति । शिवेन दूतयति संदेशं प्रापयतीत्यर्थे गौरादेराकृतिगणत्वान्ङीप् । बहुव्रीहौ तु टाप्स्या-दित्याहुः । वस्तुतस्तु दुनोतेः 'दुतनिभ्यां दीर्घश्च' इति निष्ठायां दीर्घे सत्यल्पसंदेशप्रापकत्वविवक्षायां 'क्तादल्पाख्यायाम्' इति बहुव्रीहावपि ङीप्संभवतीति समर्थितं ललितासहस्रनामभाष्येऽस्माभिः ॥ २७ ॥

**( २ चतुर्धरी )** दौत्येन दूतभावेन 'सखिदूतवणिग्भ्यो यः' इति प्राप्ते क्वचिदौत्सर्गिकोऽपि यण्प्रत्ययः ॥ २७ ॥

**( ३ शान्तनवी )** यतः कारणात् तया शक्त्या स्वयं देव्या शिवः शम्भुः दैत्येन दूतत्वेन दूतभावेन दूतकर्मणा वा नियुक्तः अधिकृतः प्रेरितोभूत् ततस्तस्मात्कारणात् सा चण्डिकायाः शक्तिर्देवता अस्मिन् मर्त्यानां लोके शिवदूतीति ख्यातिं कीर्तिं प्रसिद्धिं आगता प्राप्ता । कर्तरि क्तः 'सख्युर्यः' 'दूतवणिग्भ्यां चेति वक्तव्यं' । दूतस्य भावः कर्म वेति यः । दूतशब्दात् ष्यञ् तु नचेत्समुच्चायितो यतः । वाणिज्यावाणिज्यमित्युपलक्षणं । अयं तु ब्राह्मणादौ वणिज्शब्दस्य पाठात्सेत्स्यति । दूतशब्दस्तु न दृढादौ नापि ब्रह्मणादौ पठितः । यद्यभ्यधुः । 'दूत्यं तद्भावकर्मणि' इति । कश्चिदाह दूत्यं दौत्यमित्युभयमपि भवति । वणिज्यावाणिज्यमितिवत् । 'दूतवणिग्भ्यां च' इति चकारात्ष्यञपि भवतीति तन्न । 'सख्युर्यः' 'दूतवणिग्भ्यां च' न केवलं सख्युरेव यः अपितु दूतवणिग्भ्यां च यो भवतीति चकारेण य एवसमुच्चीयते नतु ष्यञपि । यदि ष्यञपि चेत्समुच्ची-यते तदा ब्राह्मणादौ वणिक्शब्दपाठो निरर्थकः स्यात् । चकारेणैव ष्यञ्सिद्धत्वात् । दौत्येनेति तु क्वचित्पाठः । दूत्यमेव दौत्यं प्रज्ञादित्वादण् । शिवदूतीति 'दुतनिभ्यां दीर्घश्च' इति क्तः । टुदु उपतापे 'दुतनिभ्यां दीर्घश्च' इत्यौणादिकः क्तः । 'स्या-त्संदेशहरो दूतः' । दूयते अनेन यथोक्तवादित्वात्पर इति दूतः । स्त्रियां गोरादेराकृतिगणत्वादीप् । 'दूती संचारिके समे' । शिवेन दूतयतीति शिवदूती शिवेन संचारयति संदेशं प्रापयतीति शिवदूती । यद्वा शिवं दूतं प्रेर्यं करोति शिवदूती । कर्म-ण्यणि स्त्रियां ङीप् । शिवे कर्मणि दूतयते ण्यन्तादणि शिवं दूतयति दूतं करोतीति तत्करोतीति तदात्व इति णिजन्तात्कर्मण्यण् । शिवो दूतो यस्याः सेति तु बहुले बहुसुता ब्राह्मणीति वच्छिवदूतेति टावेव भवति । शिवदूतेत्यपि सम्य-पाठः ॥ २७ ॥

**( ४ नागोजीभट्टी )** यत इति । दूत्यमेव दौत्यम् । प्रज्ञाद्यण् । शिवदूती गौरादित्वात् ङीप् । अस्वाङ्गपूर्वपदादिति वा २७

**( ५ जगच्चन्द्रचन्द्रिका )** यतो नियुक्त इति २८ ॥ २७ ॥

**( ६ दंशोद्धारः )** यत इति दौत्येन दूतस्य भावो दूत्यम् 'दूतवणिग्भ्यां च' इति यः । दूतमेव दौत्यम् । प्रज्ञाद्यण् शिवो दूतो यस्याः शिवदूती ॥ २७ ॥

**तेऽपि श्रुत्वा वचो देव्याः शर्वाख्यातं महासुराः । अमर्षापूरिता जग्मुर्यतः कात्यायनी स्थिता २८**

**( १ गुप्तवती )** ॥ २८ ॥

**( २ चतुर्धरी )** ते शुम्भादयः शर्वाख्यातं शिवेन कथितं । तालव्योऽयं शकारः । शर्वः शिवः इति तालव्येषु व्याख्या-नात् । यतो यत्र । सार्वविभक्तिकस्तस् ॥ २८ ॥

(३ शान्तनवी) तेपि देव्या वचः श्रुत्वा ते शुम्भादयोऽपि महासुराः अमर्षापूरिता जग्मुः । शर्वाख्यातं । शृणोति हिनस्ति शर्वः शिवः तेनाख्यातं कथितं देव्याः शिवदूत्याः शक्त्याः वचः संदेशवाचं श्रुत्वा अमर्षेण क्रोधेन आपूरिताः क्रोधाविष्टाः सन्तः जग्मुः । क्व यत्र कात्यायनी स्थिता शर्वोक्तदेवीसंदिष्टसामवादोद्दीपितामर्षपूरिताः क्रिया केवलमुत्तरमिति मन्वानाः संततस्तत्र ययुः । क्व यत्र स्थाने कात्यायनी चण्डिका स्थिता वर्ततेस्म तत्र जग्मुः । कतो नामर्षिः कतस्य गोत्रं स्त्री कात्यायनी । कात्यशब्दाद्गर्गादियञन्तात् 'सर्वत्र लोहितादिकतन्तेभ्यः' इति स्त्रियां ष्फः । फस्यायनादेशः । षित्त्वाङीष् । 'उमा कात्यायनी गौरी' । यतः कात्यायनी स्थितेति पाठे आद्यादित्वात्सप्तम्यर्थे तसिः । यत्रेत्येवार्थः ॥ २८ ॥

(४ नागोजीभट्टी) तेपीति अमर्षेण सर्वतः पूरिताः । यतः यं देशमाक्रम्य कात्यायनी स्थिता तं देशं जग्मुरित्यन्वयः । मूलशक्त्यभेदे तस्या अपि कात्यायनीत्वोक्तिः ॥ २८ ॥

(५ जगच्चन्द्रचन्द्रिका) तेऽपि श्रुत्वेति २९ ॥ २८ ॥

(६ दंशोद्धारः) ॥ २८ ॥

## ततः प्रथममेवाग्रे शरशक्त्यृष्टिवृष्टिभिः । ववर्षुरुद्धतामर्षास्तां देवीममरारयः ॥ २९ ॥

(१ गुप्तवती) ॥ २९ ॥

(२ चतुर्धरी) प्रथममादौ अग्रे संमुखे शरशक्तिऋष्टीनां वृष्टिभिः उद्धत उद्गतोऽमर्षो येषां ते ववर्षुरिति नञा निर्दिष्टस्यानित्यादगुणाभावः । ववृषुरिति वा पाठः ॥ २९ ॥

(३ शान्तनवी) ततोऽनन्तरं अमरारयः सुरद्विषः शुम्भादयः उद्धतामर्षाः प्रवृद्धरोषाः सन्तः प्रथममेव च प्रथमारम्भसमये । 'कालाध्वनोः' इति द्वितीया । अग्रे देव्याश्चण्डिकायाः अग्रभागे उरसि शरशक्त्यृष्टिवृष्टिभिः शरसंपातैः शक्तिपातैः ऋष्टिपातैः खड्गपातैश्च साधनैः तां देवीं चण्डिकां ववर्षुः ववृषुः छादयामासुः । वृषु सेचने । 'असंयोगाल्लिट्कित्' । सर्वे विधयश्छन्दसि कल्पन्ते छन्दोवत्पुराणानि भवन्ति । छन्दोवत्तद्विदां वचः । अन्यथा शरीरादिभिर्ववृषुरित्येव गुणाभावात्स्यात् । अमर्षः क्रोधः । 'कासूसामर्थ्ययोः शक्तिः' कासूस्तोमराख्यमायुधं । ऋष्टिः खड्गः । वृष्टयः सन्ततधाराणि वर्षाणि ॥ २९ ॥

(४ नागोजीभट्टी) तत इति प्रथममादौ । अग्रे संमुखे । ववर्षुरिति गुणश्छान्दसः । उद्धतः प्रकटः । अनेन स्त्री प्रथमतो हन्तुमयोग्येति विवेकराहित्येन रौद्राविष्टत्वं सूचितम् ॥ २९ ॥

(५ जगच्चन्द्रचन्द्रिका) ततः प्रथममेवाग्र इति ३० ॥ २९ ॥

(६ दंशोद्धारः) तत इति । प्रथममेव आदावेव । अग्रे संमुखे । ऋष्टिः खड्गः । ववृषुः इति वक्तव्ये आर्षत्वाद्गुणः ॥ २९ ॥

## सा च तान्प्रहितान्बाणाञ्शूलशक्तिपरश्वधान् । चिच्छेद लीलया ध्मातधनुर्मुक्तैर्महेषुभिः ॥ ३० ॥

(१ गुप्तवती) ॥ ३० ॥

(२ चतुर्धरी) परश्वधान् परशून् । आध्मातं शब्दवद्धनुः तेन मुक्तैः शरैः ॥ ३० ॥

(३ शान्तनवी) चण्डिका सा च तत्प्रहितान्बाणान् असुरैः प्रयुक्तान् शरान् शूलशक्तिपरश्वधान् शूलान् शक्तीः परश्वधान् परशून् कुठारान् अन्यान्यपि च आयुधानि लीलया अनायासेन ध्मातधनुर्मुक्तैः ध्मातं मौर्वीटनत्कारेण शब्दितं धनुः ततो मुक्तैः प्रेरितैः महेषुभिः महद्भिः प्रशस्तैरिषुभिः शरैः चिच्छेद । 'अस्त्री शूलं रुगायुधं' । 'कासूसामर्थ्ययोः शक्तिः' 'परशुश्च परश्वधः' । लीलया क्रीडया । ध्मा शब्दाग्निसंयोगयोः । ध्मातं । कर्मणि क्तः । 'पत्री रोप इषुर्द्वयोः' ॥ ३० ॥

(४ नागोजीभट्टी) ॥ ३० ॥

(५ जगच्चन्द्रचन्द्रिका) सा च तानिति ३१ ॥ ३० ॥

(६ दंशोद्धारः) सा चेति । प्रहितान् । आध्मातशब्दवद्धस्तेन मुक्तैः ॥ ३० ॥

## तस्याग्रतस्तथा काली शूलपातविदारितान् । खट्वाङ्गपोथितांश्चान्यान्कुर्वती व्यचरत्तदा ॥ ३१ ॥

(१ गुप्तवती) तस्मादग्रत इति वक्तव्ये पादपूरणायाकारलोपः । 'सोचि लोपे चेत्' इति ज्ञापकादिति दुर्घटवृत्तिकारः ३१

(२ चतुर्धरी) तस्याः देव्याः तस्याग्र इति क्वचिद्विसर्गलोपेपि संधिः । तस्यास्तथाग्रत इति वा पाठः । पोथितान्मर्दितान्कुर्वन्ती वैकल्पिकोऽनुषङ्गलोपाभावः (?) । सर्वे विधयः छन्दसि विकल्पन्त इति न्यायात् । कुर्वतीति वा पाठः ॥ ३१ ॥

---

१ 'ववृषु' इति पाठः ।

(**३ शान्तनवी**) तदा देवी दानवसंदह्यमाना अरीन् सुरद्विषः शूलपातविदारितान् खट्वाङ्गपोथितांश्च कुर्वती असुरशरीरपञ्जरमयायुधेन पोथितान् हिंसितान्प्रहृतान्कुर्वती सती व्यचरत् विचरतिस्म विहरतिस्म। अनेन या चण्डिकाललाटोत्पन्ना कालीनाम देवता तत्पराक्रमो वर्ण्यते। 'स्यात्पुरःपुरतोऽग्रतः'। खट्वाङ्गं शरीरकङ्कालः शरीरास्थिपञ्जरः। पुथ भाषार्थश्चुरादिः। धात्वनेकार्थत्वादिह तु हिंसार्थः। पुथितानिति तु पाठे पुथ हिंसासंक्लेशनयोः इति भ्वादिरिदित्। कर्मणि क्तः। यदभ्यधुः। 'पुथ्येत्पुथति हिंसार्थे भाषार्थे पोथयेदिति' ॥ ३१ ॥

(**४ नागोजीभट्टी**) तस्येति। तस्या अग्रत इति च्छेदः। छान्दसः संधिः। तथा चण्डीवत् तदा देव्या शस्त्रच्छेदो खट्वाङ्गं कङ्कालपञ्जरं पट्टिका वा। कालीललाटजा कुर्वती युक्तशस्त्राभावात् ॥ ३१ ॥

(**५ जगच्चन्द्रचन्द्रिका**) तस्याग्रत इति ३२ ॥ ३१ ॥

(**६ दंशोद्धारः**) तस्या इति देव्याः। संधिस्त्वार्षः। तस्यास्तथाग्रत इति पाठः सुगमः। कुर्वतीति पाठः। कुर्वन्तीति पाठे नुमागम आर्षः ॥ ३१ ॥

## कमण्डलुजलाक्षेपहतवीर्यान्हतौजसः। ब्रह्माणी चाकरोच्छत्रून्येन येन स्म धावति ॥ ३२ ॥

(**१ गुप्तवती**) ॥ ३२ ॥

(**२ चतुर्धरी**) वीर्यं बलं। आजोऽवष्टम्भः। येनयेन प्रदेशेन धावति स्म इति स्मयोगादतीते वर्तमानता। तेन ब्रह्माणी येन अधावत् तेन अरींस्तथाऽकरोदित्यन्वयः ॥ ३२ ॥

(**३ शान्तनवी**) ब्रह्म अणति वेदं कथयति ब्रह्माणी ब्राह्मी शक्तिः देवी दानवसंग्रामे येन येन यथा धावतिस्म योद्धुं गच्छतिस्म तत्रतत्र पथि शत्रून् सुरद्विषः कमण्डलुजलाक्षेपात् कमण्डलौ जलं तस्य आक्षेपात् कमण्डलुजलाकर्षणात् प्रोक्षणात्। यद्वा कमण्डलोः सकाशात् उद्धृतस्य जलस्य आक्षेपादाकृष्य प्रोक्षणात् हेतोः हतवीर्यान्नष्टवीर्यबलप्रभावांश्च हतौजसश्च हतदीप्तिबलानकरोत् कृतवती। 'ओजो दीप्तौ बलेऽपि स्यात्'। 'स्थौल्यसामर्थ्यसैन्येषु बलं ना काकसीरिणोः' 'वेदस्तत्त्वं तपो ब्रह्म ब्रह्मा विप्रः प्रजापतिः'। ब्रह्म अणति कथयति ब्रह्माणी कर्मण्यण्। अण शब्दार्थः। स्त्रियां ङीप्। लट्स्मे। स्मातीते। धावु गतिशुद्ध्योः स्वरितेत्। यद्वा सृ गतौ सर्तेर्वेगितायां गतौ धावादेशो वक्तव्यः शिति। अनेन ब्राह्मी या शक्तिः ब्रह्माणीनाम तत्पराक्रमो वर्णितः। कमण्डलुजलाक्षेपहतवीर्यानित्येकपदत्वपाठे हतौजस इत्यत्रापि कमण्डलुजलाक्षेपादित्येतदपेक्षया कारणं ज्ञेयं। कमण्डलुजलाक्षेपहतवीर्या हतौजस इत्येकपदत्वेन पाठे तु आहतवीर्याश्च हतौजसश्च आहतवीर्याहतौजसः। कमण्डलुजलाक्षेपा आहतवीर्याहतौजसस्तान् कमण्डलुजलाक्षेपाहतवीर्याहतौजसः। 'अस्त्री कमण्डलुः कुण्डी'। अथवा धावतीत्यत्र व्यत्ययेन धावन्तीति बहुवचनमाश्रित्य ये अनयेन अन्यायेन धावन्तिस्म लोकानुपद्रवन्तिस्म तान् शत्रून्दैत्यान्ब्रह्माणी ब्रह्मशक्तिः देवता कमण्डलुजलाक्षेपात् हतवीर्यान्हतौजसश्च अकरोत् कृतवती ॥ ३२ ॥

(**४ नागोजीभट्टी**) कमण्डल्विति। आक्षेपः प्रक्षेपः। वीर्यं बलम्। हततेजसः धावतीति स्मयोगे भूते लट्। येनयेन प्रदेशेन ॥ ३२ ॥

(**५ जगच्चन्द्रचन्द्रिका**) कमण्डल्विति ३३ ॥ ३२ ॥

(**६ दंशोद्धारः**) कमण्डलुजलेति। वीर्यमुत्साहः। ओजो बलम्। धावतीत्यत्र 'लट्स्मे' इति स्मयोगे भूतेऽपि लट्। धावतिस्म अधावदित्यर्थः ॥ ३२ ॥

## माहेश्वरी त्रिशूलेन तथा चक्रेण वैष्णवी। दैत्यान् जघान कौमारी तथा शक्त्यातिकोपना ॥ ३३ ॥

(**१ गुप्तवती**) ॥ ३३ ॥

(**२ चतुर्धरी**) ॥ ३३ ॥

(**३ शान्तनवी**) देव्या अग्रे महेश्वरस्येयं माहेश्वरी शक्तिर्देवता अतिकोपिता सती त्रिशूलेन दैत्यान् जघान जिहिंस। तथा अतिकोपना विष्णोरियं वैष्णवी शक्तिर्देवता चक्रेण दैत्यान् जघान ताडयामास। तथा कुमारस्य गुहस्येयं कौमारी शक्तिर्देवता अतिकोपना अत्युग्रक्रोधना सती शक्त्या आयुधेन दैत्यान् जघान हिंसितवती। एतेन माहेश्वरी वैष्णवी कौमारी इति तिसृणां शक्तीनां क्रमेण त्रिशूलचक्रशक्त्यायुधानां संग्रामे पराक्रमो वर्णितः। अतिकोपना। कुप क्रोधे। 'क्रुधमण्डार्थेभ्यश्च' इति युच् ॥ ३३ ॥

(**४ नागोजीभट्टी**) माहेश्वरीति स्पष्टम् ॥ ३३ ॥

(**५ जगच्चन्द्रचन्द्रिका**) माहेश्वरीति ३४ ॥ ३३ ॥

(**६ दंशोद्धारः**) ॥ ३३ ॥

**ऐन्द्रीकुलिशपातेन शतशो दैत्यदानवाः । पेतुर्विदारिता भूमौ रुधिरौघप्रवर्षिणः ॥ ३४ ॥**

**( १ गुप्तवती )** ॥ ३४ ॥

**( २ चतुर्धरी )** ऐन्द्र्याः यः कुलिशपातस्तेन ॥ ३४ ॥

**( ३ शान्तनवी )** इन्द्रस्येयमैन्द्री शक्तिर्देवता तस्याः ऐन्द्र्याः शक्त्याः देवतायाः कुलिशं वज्रं आयुधं तस्य पातः आघातः तेन ऐन्द्रीकुलिशपातेन शतं शतं शतशः । 'संख्यैकवचनाच्च वीप्सायां शस्' । दैत्यदानवाः विदारिताः । अतएव रुधिरौघप्रवर्षिणः सन्तः पृथिव्यां क्षोण्यां पेतुः पतिताः विदारिताः । दृ विदारणे क्र्यादिः । हेतुमति कर्मणि क्तः । अन्यथा विदीर्णाः स्युः । चुरादौ चास्ति । यदभ्यधुः 'दारिते भिन्नभेदितौ' । यद्वा विदारणं विदारो भेदः सः संजातो यस्येति विदारिताः । संजातभेदा इत्यर्थः । रुधिराणामोघाः तेषां प्रवर्षाणि तद्वतः । 'ओघो वृन्देऽम्भसां रये' 'स्याद्वृष्टौ लोकधात्वंशे वत्सरे वर्षमस्त्रियां' । यद्यपि 'असुरा दैत्यदैतेयदनुजेन्द्रारिदानवाः' इत्यभेदेनाभ्यधुः सामान्येन तथापीह मातृभेदतो भेदेनाभ्यधायि । दितेरपत्यानि पुमांसः दैत्याः । 'दित्यदित्यापत्यपत्युत्तरपदाण्ण्यः' । दनोरपत्यानि पुमांसः दानवाः 'तस्यापत्यं' इत्यण् । ओर्गुणः । अवादेशः । अतएव समानार्थत्वादविवक्ष्यमाणात् 'विरूपाणामपि समानार्थानां' इत्येकशेषो न कृतः ॥ ३४ ॥

**( ४ नागोजीभट्टी )** ऐन्द्रीति । दैत्यदानवयोर्मातृतो भेदः । ऐन्द्र्याः कुलिशपातेनेत्यर्थः ॥ ३४ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** ऐन्द्रीकुलिशेति ३५ ॥ ३४ ॥

**( ६ दंशोद्धारः )** ॥ ३४ ॥

**तुण्डप्रहारविध्वस्ता दंष्ट्राग्रक्षतवक्षसः । वाराहमूर्त्या न्यपतंश्चक्रेण च विदारिताः ॥ ३५ ॥**

**( १ गुप्तवती )** ॥ ३५ ॥

**( २ चतुर्धरी )** ॥ ३५ ॥

**( ३ शान्तनवी )** वराहस्य भगवतो विष्णोरियं वाराही मूर्तिः कायो यस्याः सा वाराहमूर्तिः वाराही शक्तिर्देवता तस्याः संबन्धि तुण्डं वक्त्रं । तुडि तोडने । तुण्डत्यनेन खण्डयतीति तुण्डं तेन यः प्रहारः आघातः तेन विध्वस्ताः तुण्डाग्रेण यः प्रहारः तेन व्यसूकृताः असुराः तस्याः संबन्धिन्यौ ये द्वे द्वे दंष्ट्रे ऊर्ध्वे तयोरग्रभागौ ताभ्यां क्षतानि हिंसितानि वक्षांसि येषां ते दंष्ट्राग्रक्षतवक्षसो दानवाः तस्या एव चक्रेण च वैष्णवायुधेन विदारिताः विदीर्णगात्राश्च सन्तो दैत्याः रणभुवि न्यपतन् निपतितवन्तः लङ् । न्यपतन्यन् इति पाठे लुङि पतः पुमागमः । एतेन वाराह्याः शक्तेः संख्याने पराक्रम उक्तः ३५

**( ४ नागोजीभट्टी )** तुण्डेति । वाराही चासौ मूर्तिश्च वाराहमूर्तिस्तया । चक्रेणेत्यनेन वाराह्या मुखमेव वराहसदृशं नान्यत् । एवं शक्तिमतो वराहस्यापि बोध्यम् ॥ ३५ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** तुण्डप्रहारेति ३६ ॥ ३५ ॥

**( ६ दंशोद्धारः )** ॥ ३५ ॥

**नखैर्विदारितांश्चान्यान्भक्षयन्ती महासुरान् । नारसिंही चचाराजौ नादापूर्णदिगम्बरा ॥ ३६ ॥**

**( १ गुप्तवती )** ॥ ३६ ॥

**( २ चतुर्धरी )** आजौ रणे । अम्बरमाकाशम् ॥ ३६ ॥

**( ३ शान्तनवी )** नादेन सिंहनादेन कण्ठगर्जनेन आसमन्तादभिव्याप्य पूर्णानि पूरितानि दिशामन्तराण्यन्तरालानि यया सा नादापूर्णदिगन्तरा । नादपूरितदिङ्मुखेत्यपि पाठे स एवार्थः । 'वा दान्तशान्तपूर्ण' इति पूरिते निपात्यते । नादेनापूरितानि दिङ्मुखानि अन्तरालानि यया सा तथोक्ता शक्तिर्देवता । यद्वा वराहस्यायं वाराहो विष्णोरवतारः वाराहस्येयं मूर्तिः कायो यस्याः सा वाराहमूर्तिः नृसिंहस्य भगवतो विष्णोरवतारस्येयं महावीर्यस्य शक्तिर्नारसिंही देवता आजौ युद्धे चचार विजहार । किं कुर्वती नखैर्नखरैरायुधैर्विदारितान्भेदविस्फुटितगात्रानन्यानपरान्महासुरान्भक्षयन्ती खादयन्ती प्रागुक्तशक्त्याहता दैत्येभ्योन्यान्सुरानभ्यवहरन्तीत्यर्थः । अथवा । च अ आन्यान् इति छेदः । अ इति प्रतिषेधार्थमव्ययं । अन्यानिति अण प्राणने णिचि 'अचो यत्' । आननीया अन्याः जीवयितुमर्हाः आ अन्याः आन्याः अजीवनीयाः । दुष्टत्वान्मारणीया इत्यर्थः । तान्महतोऽसुरान्भक्षयन्ती नारसिंही खलु मारयति खादति च । 'समित्याजिसमिद्युधः' 'समे क्ष्मांशे रणे प्याजिः' 'युद्धभागक्षणेष्वाजिः' । अनेन नारसिंह्याः शक्तेः पराक्रमः कथितः ॥ ३६ ॥

**( ४ नागोजीभट्टी )** नखैरिति । आजौ रणे । अम्बरमाकाशम् ॥ ३६ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** नखैर्विदारिता इति ३७ ॥ ३६ ॥

**( ६ दंशोद्धारः )** ॥ ३६ ॥

**चण्डाट्टहासैरसुराः शिवदूत्यभिदूषिताः। पेतुर्विदारिता भूमौ तांश्चखादाथ सा तदा॥ ३७॥**

**( १ गुप्तवती )** ॥ ३७॥

**( २ चतुर्धरी )** चण्ड उत्कटः सकोपो वा अट्ट उच्चैर्हासः । शिवदूत्यभिदूषिताः ॥ ३७ ॥

**( ३ शान्तनवी )** शिवदूत्या चण्डिकोत्पन्नया शक्त्या चण्डाट्टहासैः प्रचण्डोद्धतोच्चहासैः भयंकरैः अभिदूषिताः प्रापितक्लमाः प्रापितमूर्छाः असुराः पृथिव्यां रणक्षितौ पेतुः पतन्तिस्म । अथ तदा पृथिव्यां पतितान् असुरान् चखाद । खाद भक्षणे । भक्षयामास । अनेन शिवदूत्याः शक्तेः पराक्रम उक्तः । चण्डिकाशरीराद्धि निर्गता या शक्तिः शिवं हतमकरोत्सा शिवदूती नाम देवता अभिदूषिता । दुष वैकृत्ये वैकृत्यमविवेकः । णिचि कर्मणि क्तः । पेतुः पत्लृ गतौ । परोक्षे लिटि एत्वाभ्यासलोपौ ॥ ३७ ॥

**( ४ नागोजीभट्टी )** चण्डेति । चण्ड उत्कटः सकोपो वा । शिवदूत्यभिदूषिता इति तृतीयासमासः । प्रापितमूर्छा सा शिवदूती ॥ ३७ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** चण्डाट्टहासैरिति ३८ ॥ ३७ ॥

**( ६ दंशोद्धारः )** चण्डाट्टहासैरिति । चण्डा उत्कटाः सकोपा वा अट्टहासास्तैः शिवदूत्यभिदूषिताः पातिताः । उपसर्गबलेन धात्वर्थस्यान्यार्थत्वात् ॥ ३७ ॥

**इति मातृगणं क्रुद्धं मर्दयन्तं महासुरान्। दृष्ट्वाभ्युपायैर्विविधैर्नेशुर्देवारिसैनिकाः ॥ ३८ ॥**

**( १ गुप्तवती )** नेशुः पलायिताः ॥ ३८ ॥

**( २ चतुर्धरी )** विविधैरभ्युपायैर्महासुरान्मर्दयन्तं मातृगणं दृष्ट्वा (इत्यन्वयः) इत्यभ्युपायविशेषणं । नेशुरपययुः ॥ ३८ ॥

**( ३ शान्तनवी )** इति प्रागुक्तप्रकारेण मातृगणं मातृणां ब्रह्माण्यादीनां गणं समूहं क्रुद्धं क्रोधाविष्टं आविःकृतकोपं अतएव विविधैः बहुविधैरभ्युपायैः संग्रामसाधनैरमोघैः महासुरान्मर्दयन्तं दृष्ट्वा देवारिसैनिकाः देवानामरयो दैत्याः सुरद्विषस्तेषां सैनिकाः 'सेनायां समवेता ये सैन्यास्ते सैनिकाश्च ते' । नेशुः णश अदर्शने । अदर्शनमगुः । पलाय्य ययुरितियावत् । 'ब्रह्माणी वैष्णवी रौद्री कौमारी शिवदूतिका । ऐन्द्री च नारसिंही च वाराही चाष्टमातरः' । एताः शक्तयो युद्धायोद्धृताः अणिमेत्यन्या मातरोऽष्टौ । 'ब्राह्मी माहेश्वरी चैन्द्री वाराही वैष्णवी तथा । कौमारी चर्ममुण्डा च काली संकर्षणीति च' । 'ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा । वाराही चैव माहेन्द्री चामुण्डा त्वष्टमातरः' इत्यनेन । 'ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा । वाराही चैव माहेन्द्री चामुण्डा सप्त मातरः' ॥ ३८ ॥

**( ४ नागोजीभट्टी )** इति पूर्वोक्तैरभ्युपायैः संग्रामसाधनैः दैत्यान्मर्दयन्तं मातृगणं दृष्ट्वा नेशुः पलायिता इत्यन्वयः । ब्रह्माण्याद्या अष्ट मातरः । 'ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा । वाराही नारसिंह्यैन्द्री चामुण्डा मातरः स्मृताः' इति डामरतन्त्रे नवार्णविधाने उक्ताः ॥ ३८ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** इति मातृगणमिति ३९ ॥ ३८ ॥

**( ६ दंशोद्धारः )** इतीति । विविधैरुपायैरसुरान्मर्दयन्तमित्यन्वयः । नेशुर्न समर्थाः ॥ ३८ ॥

**पलायनपरान्दृष्ट्वा दैत्यान्मातृगणार्दितान्। योद्धुमभ्याययौ क्रुद्धो रक्तबीजो महासुरः ॥ ३९ ॥**

**( १ गुप्तवती )** रक्तबीजो महासुर इत्यस्योत्तरमेकः श्लोकोऽधिकः ।

'भागिनेयो महावीर्यस्तयोः शुम्भनिशुम्भयोः । क्रोधवत्याः सुतो ज्येष्ठो महाबलपराक्रमः' ॥ ४० ॥

इति ॥ ३९ ॥

**( २ चतुर्धरी )** ॥ ३९ ॥

**( ३ शान्तनवी )** रक्तं बीजं यस्यासुरस्य स रक्तबीजः महासुरः दैत्यान्मातृगणार्दितान् ब्रह्माण्यादिमातृसमूहेन हिंसितान् अतएव पलायनपरान्युद्धादपगमतत्परान् दृष्ट्वा वीक्ष्य क्रुद्धः क्रोधाविष्टः सन् । कर्तरि क्तः । देव्या सह योद्धुमभ्याययौ । रक्तं बीजयति बीजंकरोति रक्तबीजः । कर्मण्यण् । बहुव्रीहिस्तूक्तः प्रागेव । अर्द हिंसायां कर्मणि क्तः ॥ ३९ ॥

**( ४ नागोजीभट्टी )** पलयनेति । रक्तं बीजं कारणं यस्य सः रक्तबीजः ॥ ३९ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** पलायनेति ४० ॥ ३९ ॥

**( ६ दंशोद्धारः )** पलायनेति । रक्तं शोणितं बीजं पुनःपुनःप्रादुर्भावकं यस्येति रक्तबीजः ॥ ३९ ॥

**रक्तबिन्दुर्यदा भूमौ पतत्यस्य शरीरतः । समुत्पतति मेदिन्यास्तत्प्रमाणो महासुरः ॥ ४० ॥**

**( १ गुप्तवती )** ॥ ४० ॥

**( २ चतुर्धरी )** अस्य रक्तबीजस्य । मेदिन्यामित्यधिकरणे सप्तमी । पञ्चम्यन्तपाठे तु ल्यब्लोपेऽधिकरणे चोपसंख्यानं कर्तव्यमिति पञ्चमी नत्वपादाने । जनिकर्तुःप्रकृतेरेवापादानत्वात् । नचात्र मेदिनी प्रकृतिः । रक्तबिन्दोरेव तथात्वात् ॥४०॥

**( ३ शान्तनवी )** अस्य महासुरस्य रक्तबीजाख्यस्य शरीरतो रक्तबिन्दुः रक्तपृषत् यदा भूमौ पतति भ्रश्यति तदा तत्प्रमाणः रक्तबीजाख्यदैत्यशरीरप्रमाणकः महासुरः मेदिन्याः सकाशात्समुत्पतति समुत्पद्यते । अतश्च स रक्तबीजो रक्तबिन्दुबीजो रक्तबिन्दुश्चेति विख्यातोऽभून्महासुरः । रक्तबिन्दुरित्येकवचनमुपलक्षणं । तेन यावन्तस्तद्रक्तबिन्दवः भूमौ पतन्ति तावन्त एव तादृशा एव रक्तबीजाख्यदैत्यसमा एव महासुरा मेदिनीतो भूमितः समुत्पद्यन्ते । मेदिन्यामिति पाठेऽधिकरणं विवक्षितम् ॥ ४० ॥

**( ४ नागोजीभट्टी )** तदेवाह । रक्तेति। अस्य रक्तबीजस्य मेदिन्याः ।मेदिन्यां स्थितेत्यर्थः । ल्यब्लोपे पञ्चमी ४०

**( ५ जगच्चन्द्रचन्द्रिका )** रक्तबिन्दुरिति ४१ ॥ ४० ॥

**( ६ दंशोद्धारः )** रक्तबिन्दुरिति । मेदिन्या इति पञ्चम्यन्तपाठे तु ल्यब्लोपे पञ्चमी । मेदिनीं प्राप्येत्यर्थः । नत्वपादाने । जनिकर्तुःप्रकृतेरेवापादानत्वात् नात्र मेदिनी प्रकृतिः । किंतु रक्तबिन्दुरेव ॥ ४० ॥

**युयुधे स गदापाणिरिन्द्रशक्त्या महासुरः । ततश्चैन्द्री स्ववज्रेण रक्तबीजमताडयत् ॥ ४१ ॥**

**( १ गुप्तवती )** ॥ ४१ ॥

**( २ चतुर्धरी )** स रक्तबीजः ॥ ४१ ॥

**( ३ शान्तनवी )** स महासुरो रक्तबिन्दुबीजः गदापाणिः सन् इन्द्रशक्त्या सह ऐन्द्या शक्त्या देवतया सार्धं युयुधे संग्रामं चकार । ततः ऐन्द्री इन्द्रशक्तिः च देवता स्ववज्रेण निजायुधेन कुलिशेन तं रक्तबीजं महासुरं अताडयत् । तड आघाते चुरादिः । युयुधे युध संप्रहारे दिवादिरनुदात्तेत् । कर्तरि लिट् । गदा पाणौ यस्य सः इन्द्रस्येयं शक्तिः देवता ऐन्द्री स्ववज्रेण । स्वपदमसाधारणतां ध्वनयति । 'बन्धुजीवप्रसूनेन सदृशा रक्तबिन्दवः । रक्तबिन्दुः क्षितिस्पृक्सञ्जायते तत्समोऽसुरः ॥ ४१ ॥

**( ४ नागोजीभट्टी )** स रक्तबीजः ॥ ४१ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** युयुधे स गदेति ४२ ॥ ४१ ॥

**( ६ दंशोद्धारः )** ॥ ४१ ॥

**कुलिशेनाहतस्याशु बहु सुस्राव शोणितम् । समुत्तस्थुस्ततो योधास्तद्रूपास्तत्पराक्रमाः ॥ ४२ ॥**

**( १ गुप्तवती )** ॥ ४२ ॥

**( २ चतुर्धरी )** ॥ ४२ ॥

**( ३ शान्तनवी )** इन्द्रशक्त्या ऐन्द्या देवतया कुलिशेनाहतस्य वज्रेणायुधेन ताडितस्य रक्तबीजस्य महासुरस्य शरीरतः बहु बहुलं शोणितं कर्तृ आशु सुस्राव भूमौ पपात । ततः शोणितात्सकाशात् तस्यैव रक्तबीजस्यैव रूपमाकृतिर्येषां ते तद्रूपाः तस्यैव रक्तबीजस्यैव पराक्रमो येषां ते तत्पराक्रमाश्च योधाः योद्धारः महासुराः समुत्तस्थुः समुत्थिताः । एतावान्विशेषः । रक्तबीजरक्तजासुररक्तात्तु नोत्पद्यन्त इत्यत उक्तं तद्रूपास्तत्पराक्रमाश्च इति । आशु क्षिप्रं सुस्राव । स्रु गतौ दन्त्यादिः । आशु समुत्तस्थुः । कुलिशेनाहत इति प्रथमान्तपाठे घटः प्रस्रवतीतिवदकर्मकत्वेन शोणितं सुस्राव रक्तबिन्दुरिति सकर्मकता नोपपद्यते । अथवा कृपाणेन सैनिको हत इति किंचित्स्रवतीति (?) वत्सकर्मकत्वमपि घटेत । अथवा कुलिशेन हतः आशु शोणितं कर्म सुस्राव जगाम प्रास्रवानित्यर्थविवक्षायां सकर्मकतास्त्येव । आहतस्य रक्तबिन्दोः शरीरतः शोणितं कर्तृ । सुस्रावेत्यत्र अकर्मकत्वं तु घटात्पयः स्रवतीतिवत्कर्मनिरपेक्षत्वादवसेयं । 'शक्त्युद्योगौ पराक्रमौ' ॥ ४२ ॥

**( ४ नागोजीभट्टी )** कुलिशेनेति । तस्य रक्तबीजस्य ॥ ४२ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** कुलिशेति ४३ ॥ ४२ ॥

**( ६ दंशोद्धारः )** ॥ ४२ ॥

**यावन्तः पतितास्तस्य शरीराद्रक्तबिन्दवः । तावन्तः पुरुषा जातास्तद्वीर्यबलविक्रमाः ॥ ४३ ॥**

**( १ गुप्तवती )** ॥ ४३ ॥

**( २ चतुर्धरी )** वीर्यं प्रभावः । बलं सैन्यं । विक्रमः सामर्थ्यातिशयः ॥ ४३ ॥

**( ३ शान्तनवी )** तस्य रक्तबीजस्य दैत्यस्य शरीराद्वपुषः सकाशाद्यावन्तो यत्परिमाणाः यावत्संख्याकाः रक्तबिन्दवो रुधिरपृषताः पृथिव्यां पतिताः अपतन् तावन्तस्तत्परिमाणा एव तावत्संख्याकाः पुरुषा एव दैत्याः तद्वीर्याश्च तत्तुल्यबलाश्च तुल्यविक्रमाश्च दैत्याः समजनिषतेत्यर्थः । यावन्तः । 'यत्तदेतेभ्यः परिमाणे वतुप्' । पतिताः भुवि भ्रष्टाः । वीर्यं बलं प्रभावश्च । वीर्यं वीरकर्म वा । बलं प्राणसामर्थ्यं । 'स्थौल्यसामर्थ्यसैन्येषु बलं ना काकसीरिणोः' 'विक्रमस्तु पराक्रान्तौ शौर्ये वापि प्रकीर्तितः' 'विक्रमस्त्वतिशक्तिता' ॥ ४३ ॥

**( ४ नागोजीभट्टी )** यावन्त इति । वीर्यं प्रभावः । बलं शारीरं । विक्रम उत्साहरूपः ॥ ४३ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** यावन्त इति ४४ ॥ ४३ ॥

**( ६ दंशोद्धारः )** यावन्त इति । वीर्यं प्रभावः । बलं शारीरं । विक्रम उत्साहः ॥ ४३ ॥

## ते चापि युयुधुस्तत्र पुरुषा रक्तसंभवाः । समं मातृभिरत्युग्रशस्त्रपातातिभीषणम् ॥ ४४ ॥

**( १ गुप्तवती )** ॥ ४४ ॥

**( २ चतुर्धरी )** समं सह । अत्युग्रमिति क्रियाविशेषणं शस्त्रविशेषणं वा ॥ ४४ ॥

**( ३ शान्तनवी )** तत्र तस्मिन्देवीदानवसंग्रामे रक्तबीजासुरस्य रक्तसंभवाः रक्तजाः ये पुरुषाः दैत्याः तेपि च ब्रह्माण्यादिभिः मातृभिः समं सार्धं अत्युग्रमतिदारुणं यथा स्यात्तथा शस्त्राणां पातैरतिभीषणमतिभयंकरं च यथास्यात्तथा युयुधुः । युध संप्रहारे अनुदात्तेत् । इहतु 'व्यत्ययो बहुलं' इति परस्मैपदं । युयुधिरे पुरुषा इति त्वन्यथा स्यात् ॥ ४४ ॥

**( ४ नागोजीभट्टी )** त इति । समं सह । अत्युग्रेति शस्त्रविशेषणं समस्तम् ॥ ४४ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** ते चापीति ४५ ॥ ४४ ॥

**( ६ दंशोद्धारः)** ॥ ४४ ॥

## पुनश्च वज्रपातेन क्षतमस्य शिरो यदा । ववाह रक्तं पुरुषास्ततो जाताः सहस्रशः ॥ ४५ ॥

**( १ गुप्तवती )** ॥ ४५ ॥

**( २ चतुर्धरी )** ववाह सुस्राव । छान्दसत्वात्संप्रसारणाभावः । वह गतावित्यस्य वा रूपं । वह प्रयत्ने इत्यतो वा धातोरनेकार्थत्वात् । रक्तं कर्तृ वा । रक्तं ववाह इवेतिवा । ततो रक्तात्सहस्रशोऽसंख्याताः ॥ ४५ ॥

**( ३ शान्तनवी )** पुनश्च पुनरपि ऐन्द्र्या शक्त्या देवतया कृतेन वज्रपातेन अस्य रक्तबीजस्य महासुरस्य शिरो मस्तकं यदा क्षतं आहतं दलितं भग्नमभूत्तदा ततः वज्रताडिताच्छिरसः सकाशात् निर्गतं रक्तं कर्तृ । ववाह प्रवहतिस्म । प्रवाहीबभूवेति यावत् । ततश्च तस्माच्च रक्तप्रवाहात् भूयिष्ठात्सहस्रं सहस्रं सहस्रशः । 'संख्यैकवचनाच्च वीप्सायां शस्' । पुरुषाः दैत्याः जाताः समजनिषत । ववाहेति वह प्रापणे 'लिट्यभ्यासस्योभयेषां' इति संप्रसारणं तु संज्ञापूर्वको विधिरनित्य इति नेत्याहुः । वहिरसंप्रसारणे प्रकृत्यन्तरतया दन्त्योष्ठ्यादिरस्तीत्यपरे । वाह प्रयत्न इत्यस्मात्मनेपदानित्यत्वाद्ववाहेत्यपरे । चक्षिङो ङित्करणमनुदात्तेत्वलक्षणात्मनेपदानित्यत्वे ज्ञापकमाहुः । ववेत्यव्ययं । वव इति प्रथमं रक्तनिःसरणजनितध्वनिमाहेत्यन्ये । वव इत्येवं शब्दमाहुः । रक्तं कर्तृ प्रथमत इत्यर्थः । उवाहेत्यर्थे वव इति शब्दानुकरणं । आहेति च विभक्तिप्रतिरूपकं कालसामान्यवाच्यव्ययं । यतो निर्गमनसमये रक्तं कर्तृ । प्रथमतः वव इत्यव्ययरूपं शब्दं आह अतो ववाह इति शब्दानुकरणं द्रष्टव्यं । तेन अनुकार्यानुकरणयोर्भेदस्याविवक्षितत्वादसत्वार्थत्वे गवित्ययमाहेतिवद्विभक्त्युत्पत्त्यभावः । अन्यथा ववमाहेति स्यात् । केचित्तु कृतसंप्रसारणे उवाहेत्येव पेठुः । वयंतु ब्रूमः । संप्रसारणमत्र कर्तव्यं । कृते तस्मिन् 'संप्रसारणाच्च' इत्यत्र पूर्वरूपत्वे नित्यप्राप्ते 'वा छन्दसि' इत्यनुवृत्तेः पूर्वरूपत्वाभावपक्षे मित्रावरुणौ यजमानावितिवत्पुनःप्रसङ्गविज्ञानात् 'इको यणचि' इति यणादेश एव श्रूयते । छन्दोवत्पुराणानि च भवन्तीति । तदित्थं । 'पाठा व्याख्याश्च धातूनां दृश्यन्ते स्वैरिणः क्वचित् । प्रयोग एव भगवांस्तानवस्थापयत्यपि' ॥ ४५ ॥

**( ४ नागोजीभट्टी )** पुनश्चेति । ववाहेति वहि गताविल्यस्य रूपम् ॥ ४५ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** पुनश्चेति ४६ ॥ ४५ ॥

**( ६ दंशोद्धारः )** पुनश्चेति । ववाह सुस्राव । आर्षः संप्रसारणाभावः । यद्वा ववेति स्रवमाणशब्दानुकरणम् । रक्तं ववेत्याह । तत इति पदमध्याहार्यम् । यद्वा वाह प्रयत्ने इत्यस्य रूपं । धातूनामनेकार्थत्वात् । अनुदात्तेत्वप्रयुक्तस्यात्मनेपदस्यानित्यत्वाच्च । सहस्रशोऽसंख्याताः ॥ ४५ ॥

**वैष्णवी समरे चैनं चक्रेणाभिजघानह । गदया ताडयामास ऐन्द्री तमसुरेश्वरम् ॥ ४६ ॥**

**( १ गुप्तवती )** ॥ ४६ ॥

**( २ चतुर्धरी )** समरे रणे वैष्णवी एनं असुरेश्वरं चक्रेणाभिजघान गदया ताडयामास च । किंभूतं एनं ऐन्द्रीतं ऐन्द्याः इन्द्रशक्तेः सकाशात् इतं गतं युद्धे पराङ्गेणापि युध्यन्ते इति ऐन्द्री गदया तं ताडयामासेत्यन्वयः । ऐन्द्री गदया वाचा ताडयामास भर्त्सयामास इत्यर्थः ॥ ४६ ॥

**( ३ शान्तनवी )** समरे संग्रामे सा वैष्णवी शक्तिर्देवता च तमेनं रक्तबीजदैत्यं चक्रेण वैष्णवेन आयुधेन जघान जिहिंस । ह प्रसिद्धमेवैतत् । अथच सा इन्द्रस्येयं ऐन्द्री शक्तिर्देवता च तमेनं रक्तबीजदैत्यं असुरेश्वरं गदया आयुधेन ताडयामास जघान । यद्वा ऐन्द्रीतमित्येकं पदं । प्राक् ऐन्द्या शक्त्या इतः योद्धुं प्राप्तः ऐन्द्रीतः । ऐन्द्रीतं एनं असुरेश्वरं रक्तबीजं समरे युद्धे सा वैष्णवी शक्तिर्देवता चक्रेणाभिजघान । उरसि जिहिंस । न केवलं चक्रेण । गदया ताडयामास जघानच ॥४६॥

**( ४ नागोजीभट्टी )** वैष्णवीति । ऐन्द्याः शक्तेरितं पराङ्मुखं स्वसंमुखं प्राप्तं एनं वैष्णवी चक्रेणाभिजघान गदया च ताडयामासेत्यन्वयः ॥ ४६ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** वैष्णवी समर इति ४७ ॥ ४६ ॥

**( ६ दंशोद्धारः )** वैष्णवीति । एनं असुरं चक्रेणाभिजघान गदया च ताडयामास । किंभूतं ऐन्द्रीतं ऐन्द्याः सकाशादितं आगतं । कश्चित्तु ऐन्द्री गदया तं ताडयामास । ऐन्द्या गदायुधत्वाभावेऽपि युद्धे पराङ्गैरपि युध्यन्ते इति व्याचख्यौ । केचित्तु गदनं गदः पचाद्यच् । टाप् । गदया क्रूरवाचा तं ताडयामास भर्त्सयामासेत्याहुः ॥ ४६ ॥

**वैष्णवीचक्रभिन्नस्य रुधिरस्रावसंभवैः । सहस्रशो जगद्व्याप्तं तत्प्रमाणैर्महासुरैः ॥ ४७ ॥**

**( १ गुप्तवती )** ॥ ४७ ॥

**( २ चतुर्धरी )** ॥ ४७ ॥

**( ३ शान्तनवी )** विष्णोरियं वैष्णवी तस्याः शक्त्या देवतायाः चक्रेण भिन्नस्य विदारितस्य रक्तबीजस्य महासुरस्य रुधिरस्रावसंभवैः रक्तप्रवाहसमुद्भवैः तत्प्रमाणैः रक्तबीजासुरपरिमितैः सहस्रं सहस्रं सहस्रशः । यद्वा सहस्रेण सहस्रेण सहस्रशः । 'संख्यैकवचनाच्च वीप्सायां शस्' महासुरैः रक्तबीजरक्तप्रवाहसंभूतैः जगत् भुवनं व्याप्तं व्याकीर्णं । असुरैरसंख्याकैस्त्रैलोक्यं व्याप्तमिति भावः ॥ ४७ ॥

**( ४ नागोजीभट्टी )** ॥ ४७ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** वैष्णवीचक्रेति ४८ ॥ ४७ ॥

**( ६ दंशोद्धारः )** ॥ ४७ ॥

**शक्त्या जघान कौमारी वाराही च तथासिना । माहेश्वरी त्रिशूलेन रक्तबीजं महासुरम् ॥४८॥**

**( १ गुप्तवती )** ॥ ४८ ॥

**( २ चतुर्धरी )** त्रिशूलेन त्रिमुखेन शूलेन । आहनदिति गणकृतमनित्यमिति करणलोपाभावः ॥ ४८ ॥

**( ३ शान्तनवी )** कुमारस्येयं कौमारी शक्तिर्देवता शक्त्या आयुधेन रक्तबीजं महासुरं जघान जिहिंस । तथा वराहस्य भगवत इयं वाराही शक्तिर्देवता असिना खड्गेन तं रक्तबीजं महासुरं जघान ताडयामास । वाराह्या देव्याः वदनमेव वराहानुकारि नतु करचरणादिकमिति ज्ञेयं । तेन वाराह्याः देव्याः संग्रामे खड्गग्रहणं न संभवतीति नाशङ्कनीयं । तथा माहेश्वरी महेश्वरस्येयं शक्तिर्देवता च त्रिशूलेन तं रक्तबीजं महासुरं जघान अतीतडत् । क्वचित्तु पाठः । 'माहेश्वरी त्रिशूलेन रक्तबीजं महासुरं । ताडयामास हृदये न चचाल तथापि सः' । इति दृश्यते । यद्यपि हृदये सा तं ताडयामास तथापि सः रक्तबीजः संग्रामान्न चचाल । नापजगामेत्यर्थः ॥ ४८ ॥

**( ४ नागोजीभट्टी )** शक्त्येति ॥ ४८ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** शक्त्या जघानेति ॥ ४९ ॥ ४८ ॥

**( ६ दंशोद्धारः )** ॥ ४८ ॥

**स चापि गदया दैत्यः सर्वा एवाहनत्पृथक् । मातृः कोपसमाविष्टो रक्तबीजो महासुरः ॥४९॥**

**( १ गुप्तवती )** ॥ ४८ ॥

**( २ चतुर्धरी )** ॥ ४९ ॥

**( ३ शान्तनवी )** स चापि रक्तबीजो महासुरः दैत्यः कोपसमाविष्टो क्रोधानलज्वालाकुलः सन् गदया आयुधेन सर्वा एव मातृः ब्रह्माण्यादिशक्तीः पृथक्प्रत्येकमहनदताडयत् । दैत्यः महासुरः इत्युक्ते कुतो न पौनरुक्त्यं स्यात् । सामान्यतो दैत्योऽसावित्युक्त्वा सामर्थ्यतो महांश्चासावसुरश्चेति महासुर इत्यतिशयसामर्थ्यप्रदर्शनादपौनरुक्त्यं । यद्वा दितेरपत्यं दैत्यः । यद्वा महान्तः असुराः यस्य सः महासुरः । यद्वा महादेवं जहाति यः स चासावसुरश्चेति महासुरः । 'मः शिवश्चन्द्रमाश्च स्यात्' । ओहाक् त्यागे । 'आतोऽनुपसर्गे कः' । अहनदिति । हन हिंसागत्योः । लङ्स्तिप् । अदिप्रभृतिभ्यः शपो लुक् । संज्ञापूर्वको विधिरनित्य इति नेत्याहुः । यद्वा हन्तीति हनः पचाद्यच् । हन इवाचरत् अहनत् । 'सर्वप्रातिपदिकेभ्यः क्विब्वा वक्तव्यः' । सनाद्यन्तत्वाद्धातुत्वाद्धनशब्दाल्लङ्स्तिप् । अडागमः ॥ ४९ ॥

**( ४ नागोजीभट्टी )** स चापीति । अहनदिति छान्दसं । दितेरपत्यं दैत्यः । महान्तोऽसुराः यस्मादिति न पौनरुक्त्यम् ॥ ४९ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** स चापि गदयेति ५० ॥ ४९ ॥

**( ६ दंशोद्धारः )** स चापीति । अहनिति वक्तव्ये अहनदित्यत्र गणकार्यस्यानित्यत्वाच्छपो न लुगित्याहुः ॥ ४९ ॥

**तस्याहतस्य बहुधा शक्तिशूलादिभिर्भुवि । पपात यो वै रक्तौघस्तेनासञ्शतशोऽसुराः ॥ ५० ॥**

**( १ गुप्तवती )** ॥ ५० ॥

**( २ चतुर्धरी )** ॥ ५० ॥

**( ३ शान्तनवी )** शक्तिशूलादिभिरायुधैर्बहुधा बहुभिः प्रकारैराहतस्य ताडितस्य तस्य रक्तबीजस्य । वै प्रसिद्धौ । यो रक्तौघः वेगवद्रुधिरप्रवाहो भुवि पपात प्रवभ्रंश तेन रक्तौघेन शतशः शतं शतं असुराः आसन् । शतश इत्युपलक्षणं । शतशः सहस्रशो लक्षशः कोटिशश्चापि बहुसंख्याका असुराः रक्तबीजासुरसदृक्षपरिमाणकायपराक्रमा आसन्समभवन् । 'संख्यैकवचनाच्च वीप्सायां शस्' । शक्तीनां देवीनां शूलादीन्यायुधानि इत्यपि यथायोगं व्याख्या । ब्रह्माण्याः आयुधं शत्रुघ्नो मन्त्रः । वैष्णव्याश्चक्रं । माहेश्वर्याः शूलं । कौमार्याः शक्तिः । ऐन्द्र्याः कुलिशं । वाराह्याश्चक्रं मुखनखरपञ्जरश्च । शिवदूत्याः शूलं पिनाकाख्यं धनुश्च । काल्याः शूलं चक्रं च ॥ ५० ॥

**( ४ नागोजीभट्टी )** ॥ ५० ॥

**( ५ जगच्चन्द्रचन्द्रिका )** तस्याहतस्येति ५१ ॥ ५० ॥

**( ६ दंशोद्धारः )** ॥ ५० ॥

**तैश्चासुरासृक्संभूतैरसुरैः सकलं जगत् । व्याप्तमासीत्ततो देवा भयमाजग्मुरुत्तमम् ॥ ५१ ॥**

**( १ गुप्तवती )** ॥ ५१ ॥

**( २ चतुर्धरी )** उत्तमं निरतिशयं । प्रकर्षेण हन्यन्ते शत्रवोऽत्रेति प्राहो रणः । प्रपूर्वाद्धन्तेरन्यतोऽपि चेति डप्रत्यये रूपं । तत्र प्राहे रणे सत्वरा वेगयुक्ता । तथाच स्कन्दपुराणे । 'रथेन काञ्चनाङ्गेन प्रययौ प्राहलालसः' इति । अत उवाचेत्यनेन पुनरुक्तिवर्णनाकर्षेण । प्राहसत् इति क्रियाविशेषणं क्रियापदं वा । त्वरा त्वरावती । अर्शआदित्वादच् । यद्वा त्वरया नैरुक्तो वर्णनाशः । क्विबन्तं तृतीयान्तं वा अन्य आह । चण्डिका प्राह अये देवाः भयं मा जग्मुरिति स्वगतं ब्रूते ॥ ५१ ॥

**( ३ शान्तनवी )** असुरस्य रक्तबीजाख्यस्य दैत्यस्य यदसृक् रक्तं रुधिरं तस्मात् भूयिष्ठात्संभूतैरुत्पन्नैरनिर्दिष्टनामधेयैरसुरैः रक्तबीजसदृशैर्घातुकैः समस्तं सकलं जगत् त्रैलोक्यं व्याप्तमासीत् । ततो देवाः उत्तममधिकं भयमाजग्मुरापयुः । अहो किमेतदासीत् । अहो नु खल्वसौ शान्तिकर्मणि वेतालोदयः यज्जगद्रक्षणार्थो दैत्यसंक्षयाय संग्रामः प्रारब्धो भगवत्या स तावन्नाभूत्प्रत्युत रक्तबीजरक्तजैर्दैत्यैः शतशो सहस्रशः लक्षशः कोटिशः संख्याकैश्च तैर्घातुकैः अशेषं जगदापूर्णं पीड्यते हन्तैतदिति देवाः साध्वसमापुरतितमामिति भावः । पटैकदेशेपि दग्धे पटो दग्ध इतिवज्जगदेकदेशोऽपि जगदेवेति भावसाकल्येन जगद्व्याप्तमिति सूचयितुं सकलग्रहणं । सकलमित्येवोक्तेः किं तदिति साकाङ्क्षं स्यात्तत उभयमप्युक्तम् ॥ ५१ ॥

**( ४ नागोजीभट्टी )** तैश्चेति । उत्तमं निरतिशयं सकलं जगदित्यतिशयोक्तिः ॥ ५१ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** तैश्चासुरासृगिति ५२ ॥ ५१ ॥

**( ६ दंशोद्धारः )** तैश्चेति । अतिशयेनोत्कृष्टमुत्तमं भयम् ॥ ५१ ॥

**तान्विषण्णान्सुरान्दृष्ट्वा चण्डिका प्राह सत्वरा । उवाच कालीं चामुण्डे विस्तीर्णं वदनं कुरु ५२**

**( १ गुप्तवती )** ॥ ५२ ॥

**( २ चतुर्धरी )** ततः सत्वरा सा तां विस्तीर्णं वदनं कुर्विति कालीमुवाचेति । विस्तीर्णं विततम् ॥ ५२ ॥

**( ३ शान्तनवी )** चण्डिका देवी ईश्वरी सुरान्देवान्विषादसहितान्दुःखितान्दृष्ट्वा वीक्ष्य सत्वरा संभ्रमोपेता सती तान्प्राह । मा यूयं विषीदत सुस्था भवतेत्यब्रवीत् । अधुनैव वः शत्रूनुच्छिनद्मीत्याश्वासयन्ती सा माविषीदतेति देवान्कथयन्तीत्यर्थः । प्राहेति विभक्तिप्रतिरूपकमव्ययं कालसामान्ये वर्तते । अथ देवानित्थमाश्वास्य चण्डिका देवी कालीं शक्तिं उवाच । हे चामुण्डे हे कालि त्वदीयं वदनं विस्तीर्णं कुरु विपुलं विशालं रचय इति कालीं आदिक्षत् । इत्थं भिन्नकर्मकत्वात्प्राह उवाचेत्यपौनरुक्त्यं द्रष्टव्यं । यद्वा अप्रा अहसत् त्वरा इति छेदः । प्रा पूरणे अदादिः । अं विष्णुं प्राप्तैश्वर्येण पूरयत्यप्रा । 'आतोऽनुपसर्गे कः' विष्णुमाया चण्डिका देवी तान्विषण्णान्सुरान्देवान्दृष्ट्वा वीक्ष्य त्वरा संभ्रमः त्वरते त्वरा । पचाद्यच् । त्वरमाणा सती अहसत् । एतावतैव रक्तबीजं रक्तजजन्तुदर्शनेनैव भीता आसन्निति देवानहसत् । हसे हसने । लङि रूपं । ततश्च कालीमुवाच । हे चामुण्डे हे कालि त्वदीयं वदनं विस्तीर्णं कुर्विति कथयामास चण्डिका । अतएव चण्डिका प्राहसत् त्वरा इत्यपि छेदे स एवार्थः । त्वरते त्वरा देवी । अतएव प्राहसत्तदेत्यपि पाठे तदा देवानां भयोदयकाले इति स एवार्थोऽवशिष्टः । यद्वा प्राहसत्वरेत्येकं पदं । तान् विषण्णान्सुरान्दृष्ट्वा चण्डिका प्राहसत्वरा युद्धमूर्धनि संग्रामं कर्तुं सत्वरा त्वरया सह वर्तमाना सती कालीमुवाच । किमिति हे चामुण्डे हे कालि त्वदीयं वक्त्रं दैत्यानत्तुं विस्तीर्णं विशालं कुरु विरचयेति । प्राहेति प्रब्रवीत्यर्थे तिङन्तप्रतिरूपकमव्ययं कालसामान्ये । 'प्राहस्तु रणमूर्धनि' प्राहे युद्धमूर्धनि सत्वरा ससंभ्रमा । यल्लक्ष्यं देवीपुराणे । प्रययौ प्राहकाम्ययेति ॥ ५२ ॥

**( ४ नागोजीभट्टी )** तानिति । तान्विषण्णान्दृष्ट्वा सत्वरा त्वरया सहिता चण्डिका सुरान्प्राह । यूयं माविषीदतेति शेषः ॥ ५२ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** तान्विषण्णानिति ५३ ॥ ५२ ॥

**( ६ दंशोद्धारः )** तानिति । प्रकर्षेणासमन्ताद्धन्यन्ते शत्रवो यत्रेति प्राहो रणः । 'रथेन काञ्चनाङ्गेन प्रययौ प्राहलालसा' इति स्कान्ददर्शनात् । 'अन्येष्वपि दृश्यते' इति डः । तत्र सत्वरा चण्डिका उवाचेत्यन्वयः । यद्वा प्राहसदिति छेदः । तान्सुरान्विषण्णान्दृष्ट्वा प्राहसत् । मम वीर्याज्ञानादेते विषण्णा इत्यहसत् । अतएव सत्वरा त्वराती सती कालीमुवाचेति संबन्धः । चतुर्भुजमिश्रास्तु त्वरेति तृतीयान्तं क्विबन्तमिति व्याचख्युः । रामाश्रमोऽपि तथैवानुससार तत्र । ज्वरत्वरेत्यूठ्प्रसंगात् । केचित्तु अतो देवा भयं जग्मुरिति स्वगतं प्राहुः । ततः सत्वरा सती कालीमुवाचेति संबन्ध इति व्याचक्षते ॥ ५२ ॥

**मच्छस्त्रपातसंभूतान्रक्तबिन्दून्महासुरान् । रक्तबिन्दोः प्रतीच्छ त्वं वक्त्रेणानेन वेगिता[१] ॥ ५३ ॥**

**( १ गुप्तवती )** मच्छस्त्रपातेति । रक्तबीजादिति पञ्चमी । मच्छस्त्रपातेन रक्तबीजतः संभूताद्रक्तबिन्दोः ॥ ५३ ॥

**( २ चतुर्धरी )** रक्तबिन्दून्रुधिरबिन्दोर्जातान्महासुरानपि वक्त्रेण । जात्यपेक्षया एकवचनम् । जात्यपेक्षया एकत्वमित्यपादानपञ्चम्याक्षिप्यते । अन्य आह । रक्तबिन्दुः चेतनं यस्येति रक्तबिन्दू रक्तबीज उच्यते । वेगिता त्वरावती ॥५३॥

**( ३ शान्तनवी )** हे चामुण्डे हे कालि त्वं अनेन विस्तीर्णकृतेन वेगिना वेगयुक्तेन त्वदीयेन वक्त्रेण महासुरान्रक्तबीजान्महादैत्यसकाशात् मम चण्डिकायाः देव्याः शस्त्राणि तेषां पाताः पतनानि तेभ्यः संभूताः समुत्पन्नास्तान्मच्छस्त्रपातसंभूतान् । रक्तानां बिन्दवः पृषतस्तान्रक्तबिन्दून्प्रतीच्छ मुखेन गृहाणेति सूचनार्थं । अन्यथा रक्तबीजरक्तबिन्दवः क्षितिं प्राप्नुवन्तः पुनस्तत्प्रमाणांस्तत्पराक्रमान्महासुरानुपजनयेयुरिति भावः ॥ ५३ ॥

**( ४ नागोजीभट्टी )** एवं सुरानाश्वास्य विस्तीर्णवदनेन । रक्तबिन्दोरिति जात्यपेक्षया । ततो जातान्महासुरान्मच्छस्त्रपातसंभूतान्रक्तबिन्दूंश्च भूमिमप्राप्तानेव प्रतीच्छ गृहाण ॥ ५३ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** मच्छस्त्रपातेति ५४ ॥ ५३ ॥

**( ६ दंशोद्धारः )** मच्छस्त्रेति । रक्तबीन्दून्रुधिरविप्रुषः वक्त्रेण मुखस्य पार्थिवत्वात्तत्र रक्तबिन्दोः रक्तबिन्दुभ्यः । जातावेकवचनम् । जातान् महासुरान्वक्त्रेण प्रतीच्छ । यद्वा रक्तबिन्दुर्बीजमस्येति रक्तबीजः तस्य रक्तबिन्दूनेव महासुरान्भक्षेति ॥ ५३ ॥

**भक्षयन्ती चर रणे तदुत्पन्नान्महासुरान् । एवमेष क्षयं दैत्यः क्षीणरक्तो गमिष्यति ॥ ५४ ॥**

**( १ गुप्तवती )** एकवचनादेकैकबिन्दुसंबन्धिनोप्यनेकमित्यर्थः ॥ ५४ ॥

**( २ चतुर्धरी )** तदुत्पन्नान्रक्तबिन्दुजातान् । एवं क्षयं गमिष्यतीत्यन्वयः ॥ ५४ ॥

**( ३ शान्तनवी )** हे चामुण्डे कालि तदुत्पन्नांस्तस्माद्रक्तबीजरक्तादुत्पन्नान्समुद्भूतान्महासुरान्भक्षयन्ती खादयन्ती

[१] 'वेगिना' शान्तनवीपाठः ।

सती रणे संग्रामे चर विहर । ततः किं फलिष्यतीत्याह। एवमनेन प्रकारेण एष दैत्यो रक्तबीजः क्षीणरक्तः सन् क्षयं नाशं परासुतां गमिष्यति प्राप्स्यति ॥ ५४ ॥

**( ४ नागोजीभट्टी )** किंच पानसमये त्वद्वक्त्रे समुत्पन्नान्महासुरान्भक्षयन्ती रणे चर । एवं प्रकारेणैव दैत्यः क्षयं गमिष्यति ॥ ५४ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** भक्षयन्तीति ५५ ॥ ५४ ॥

**(६ दंशोद्धारः )** भक्षयन्तीति । उत्पत्स्यन्तीति परस्मैपदमार्षम् ॥ ५४ ॥

**भक्ष्यमाणास्त्वया चोग्रा न चोत्पत्स्यन्ति चापरे । इत्युक्त्वा तां ततो देवी शूलेनाभिजघान तम्५५**

**( १ गुप्तवती )** ॥ ५५ ॥

**( २ चतुर्धरी )** न चोत्पत्स्यन्तीति व्यत्ययात्परस्मैपदम् ॥ ५५ ॥

**(३ शान्तनवी)** रक्तबीजरक्तजाः महासुराः किं करिष्यन्तीत्यत आह । हे चामुण्डे हे कालि अपरे च ये रक्तबीजरक्तजा महासुरा उग्राः अतिरौद्राः सन्ति तेपि च त्वया भक्ष्यमाणा ग्रस्यमानाः सन्तः पुनर्नैवोत्पत्स्यन्ति नोदेष्यन्ति । पद गतौ । अनुदात्तेत्त्वादात्मनेपदं । चक्षिङो ङित्करणादनुदात्तेत्त्वनिमित्तादात्मनेपदस्यानित्यत्वमवसीयत इति परस्मैपदं भवति । अन्यथोत्पत्स्यन्ते इत्येव स्यात् । इत्युक्तप्रकारेण चण्डिका देवी विजिगीषुः सती तां कालीं चामुण्डां इत्थं कुरु इत्थं कुर्वित्युक्त्वा आदिश्य तं रक्तबीजं महासुरं शूलेन एकाग्रलोहेन दण्डेन त्रिशूलेन वा आभिमुख्येनोरसि जघान ताडयामास ॥ ५५ ॥

**( ४ नागोजीभट्टी )** भक्ष्यमाणा इति । उत्पत्स्यन्तीति अनुदात्तेत्त्वलक्षणतङोऽनित्यत्वान्न तङ् ॥ ५५ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** भक्ष्यमाणा इति ५६ ॥ ५५ ॥

**( ६ दंशोद्धारः)** ॥ ५५ ॥

**मुखेन काली जगृहे रक्तबीजस्य शोणितम् । ततोऽसावाजघानाथ गदया तत्र चण्डिकाम्॥५६॥**

**( १ गुप्तवती )** ॥ ५६ ॥

**( २ चतुर्धरी )** असौ रक्तबीजः । तत्र युद्धे ॥ ५६ ॥

**( ३ शान्तनवी )** काली च मुखेन रक्तबीजस्य महासुरस्य शोणितं रुधिरं जगृहे अभूमिष्ठमेवान्तरिक्षे जग्राह अपिबत् । तत्र रणे देव्या शूले प्रयुक्ते सति ततोऽनन्तरं असौ रक्तबीजोऽसुरः गदया चण्डिकां देवीं आजघान ताडयामास ॥ ५६ ॥

**( ४ नागोजीभट्टी )** मुखेनेति । शोणितं भूगतमेव विस्तीर्णत्वाद्वदनस्य । असौ रक्तबीजः । तत्र युद्धे ॥ ५६ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** मुखेनेति ५७ ॥ ५६ ॥

**( ६ दंशोद्धारः )** ॥ ५६ ॥

**न चास्या वेदनां चक्रे गदापातोऽल्पिकामपि । तस्याहतस्य देहात्तु बहु सुस्राव शोणितम् ५७**

**( १ गुप्तवती )** ॥ ५७ ॥

**( २ चतुर्धरी )** वेदनां पीडां । अल्पिकामत्यल्पामपि । तस्य रक्तबीजस्य ॥ ५७ ॥

**( ३ शान्तनवी )** अथ गदाघातानन्तरं असौ गदाघातः अस्याः देव्याः अल्पिकामपि स्वल्पामपि वेदनां दुःखेन पीडां न चक्रे नैव चकार । देव्याः परमानन्दब्रह्मात्मत्वाद्दुःखलेशोऽपि कुत इति भावः । 'आङो यमहनः' इत्यात्मनेपदमकर्मकादेव भवति नतु सकर्मकात् । अन्यथा जघ्ने इति स्यात् । 'वेदना पीडनं बाधा व्यथनं पीडनं व्यथा' । चण्डिकया देव्या शस्त्रैराहतस्य रक्तबीजस्य महासुरस्य देहात्सकाशात् यतो यतः यच्च यच्च बहु शोणितं रुधिरं सुस्राव निरगात् ॥ ५७ ॥

**( ४ नागोजीभट्टी )** नचेति । चिदानन्दात्मत्वादिति भावः ॥ ५७ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** न चास्येति ५८ ॥ ५७ ॥

**( ६ दंशोद्धारः )** ॥ ५७ ॥

**यतस्ततस्तद्वक्त्रेण चामुण्डा संप्रतीच्छति । मुखे समुद्गता येऽस्या रक्तपातान्महासुराः ॥ ५८ ॥**

**( १ गुप्तवती )** प्रतीच्छति गृह्णाति ॥ ५८ ॥

**( २ चतुर्धरी )** यतो यस्माद्देहादङ्गात्पतच्छोणितं बह्वपि चामुण्डा वक्त्रेण मुखेन संप्रतीच्छतीत्यन्वयः । ततोऽनन्तरं यतो गच्छति ततस्तस्य तच्छोणितं पतितं । ऊर्ध्वमितिकेचित् । समुद्गताः जाताः । मुखे चासुरोत्पत्तिर्मुखस्यापि पार्थिवत्वादविरुद्धा ॥ ५८ ॥

(३ शान्तनवी) ततस्ततस्तचतच्च शोणितं कर्म। स्ववक्रेण चामुण्डा काली विस्तीर्णीकृतेन निजवदनेन संप्रतीच्छति जगृहे। पपाविति भावः। यतस्तत इति आद्यादित्वात्तसिर्यथायोगं। यद्वा तस्य देहात्सकाशात् यतोयतो द्वारतो द्वारात्सुस्राव शोणितं निरगात्ततस्ततो द्वारात्सकाशात्स्ववक्रेण प्रतीच्छतिस्म चामुण्डेत्यर्थः। तद्वक्रेणेति पाठे तेन विस्तारितेन वक्रेणेत्यर्थः। यतस्तत इतस्तत इत्यर्थं केचिद्व्याचख्युः। इतस्तत इत्येव क्वचित्पाठः। अस्याः काल्याश्चामुण्डायाः मुखे रक्तपाताद्रक्तबीजरुधिरपतनात्समुद्गताः समुत्पन्ना ये महासुराः ॥ ५८ ॥

(४ नागोजीभट्टी) यतस्तत इति। सर्वत इत्यर्थः। अतिविस्तीर्णत्वाद्वक्त्रस्य। उत्तरार्धमुत्तरान्वयि ॥ ५८ ॥

(५ जगच्चन्द्रचन्द्रिका) यत इति ५९ ॥ ५८ ॥

(६ दंशोद्धारः) तस्येति। यतो यस्माद्देहादङ्गाच्छोणितं सुस्राव ततोऽङ्गात्तच्छोणितं चामुण्डा संप्रतीच्छति गृह्णातीत्यन्वयः। वर्तमाननिर्देशस्तूपचारात्। यद्वा ततोऽनन्तरं यतः आगच्छतस्तस्य तच्छोणितमित्यन्वयः। मुखे इति मुखस्य पार्थिवत्वात्तत्रासुरोत्पत्तिरविरुद्धा ॥ ५८ ॥

**तांश्चखादाथ चामुण्डा पपौ तस्य च शोणितम्। देवी शूलेन वज्रेण बाणैरसिभि ऋष्टिभिः ॥५९॥**

(१ गुप्तवती) असिभिरित्यत्र रेफलोपश्छान्दसः ॥ ५९ ॥

(२ चतुर्धरी) ऋष्टिभिरेकधाराऽसिभिः ॥ ५९ ॥

(३ शान्तनवी) तान् चामुण्डा काली चखाद। खादृ भक्षणे। जक्षतिस्म। अथ तस्य रक्तबीजस्य शोणितं च पपौ पीतवती। देवी चण्डिका शूलेन चक्रेण। क्वचिद्वज्रेणेति पाठे कुलिशेन। बाणैः असिभि खड्गैः ऋष्टिभिः खड्गप्रभेदैः ५९

(४ नागोजीभट्टी) तांश्चेति। उत्तरार्धमुत्तरान्वयि। असिभिरिति क्रियापेक्षं बहुवचनं। ऋष्टिभिरित्यप्येवम्। ऋष्टिरुभयतोधारोऽसिः ॥ ५९ ॥

(५ जगच्चन्द्रचन्द्रिका) तांश्चखादेति ६० ॥ ५९ ॥

(६ दंशोद्धारः) ॥ ५९ ॥

**जघान रक्तबीजं तं चामुण्डा पीतशोणितम्। स पपात महीपृष्ठे शस्त्रसङ्घसमाहतः ॥ ६० ॥**

(१ गुप्तवती) ॥ ६० ॥

(२ चतुर्धरी) चामुण्डया पीतं शोणितं यस्याः ॥ ६० ॥

(३ शान्तनवी) तं रक्तबीजं महासुरं जघान जिहिंस। कीदृशं चामुण्डया काल्या पीतं शोणितं रुधिरं यस्य तं चामुण्डापीतशोणितं। ननु बाणबाहुल्यं युक्तमेव असिबाहुल्यं किमर्थं। उच्यते। असिकृतप्रहारा उपचारादसय इत्युच्यन्ते। एवं ऋष्टयोपि ऋष्टिप्रहारबाहुल्यादुपचरिताः। असिभिरिष्टिभिः इत्यत्र सलोपे छान्दसत्वं। यद्वा रोरीति रेफलोपे 'ढ्रलोपे पूर्वस्य दीर्घोणः' इति दीर्घाभावश्छान्दसः। ऋष्टिभिरिति पाठेपि सलोपसमाधानं छान्दसं ज्ञेयं। यद्वा यष्टिभिरिति विवक्षायां छान्दसं संप्रसारणमूह्यं। इष्टिभिर्यष्टिभिरित्यर्थः। तथाच असिभिरिष्टिभिरिति संधिर्युक्त एव। हे महीपाल राजन् देव्याः शस्त्रसंहतितः शस्त्रसमूहाद्धेतोः हतस्ताडितः। यद्वा आद्यादित्वात्तसिः। शस्त्रसंहत्या हतः। यद्वा शस्त्रसंहतिमेत्य हतः। कर्मणि क्यब्लोपे पञ्चमी। चामुण्डया देव्या निःशेषपीतरुधिरत्वात् शस्त्राणि संहरति राशीकरोति शस्त्रसं युद्धं तेन शस्त्रसंहेन युद्धेन समाहतः। शस्त्रसंप्रहारसमाहत इति यावत्। शस्त्रसंघसमाहतः इत्यपि पाठः। 'संघसार्थौ तु जन्तुभिः' इत्यभिधानात् पाण्या लब्धः समूहः संघः शस्त्रसंघः शस्त्रसमूहः तेन समाहतः शस्त्राणि जन्तव इव चेष्टन्ते जन्तुजचेष्टावशत्वेन चेष्टितत्वात्। यद्वा शस्त्रसंहतिमाहतः इति पाठः। पृषोदरादित्वात्तिशब्दलोपश्छन्दोनुरोधाच्च कृतः कविना ॥ ६० ॥

(४ नागोजीभट्टी) जघानेति। शस्त्रसंघैः समूहैः समाहत इति तृतीयातत्पुरुषः ॥ ६० ॥

(५ जगच्चन्द्रचन्द्रिका) जघानेति ६१ ॥ ६० ॥

(६ दंशोद्धारः) ॥ ६० ॥

**नीरक्तश्च महीपाल रक्तबीजो महासुरः। ततस्ते हर्षमतुलमवापुस्त्रिदशा नृप ॥ ६१ ॥**

(१ गुप्तवती) ॥ ६१ ॥

(२ चतुर्धरी) महिपालेति योग्यतया सुर[illegible]त्रणम् ॥ ६१ ॥

(३ शान्तनवी) नीरक्तश्च सन् स रक्तबीजो म[illegible] मर्तुं महीपृष्ठे भूमेरुपरिभागे पपात प्रापतत्। शस्त्रसंहत इति पाठे 'सप्तम्यां जनेर्डः'। 'अन्येष्वपि दृश्यते' इत्यपिशब्दः स[illegible]पाधिव्यभिचारार्थः। तेन धात्वन्तरादपि डो भवति। कारका-

न्तेपि चेति वचनात् । सुमेधाः सुरथं राजानं संबोधयति । हे नृप हे सुरथ इतस्त्वं कथायां दत्तावधानो भव । ततो रक्तबीजवधानन्तरं ते प्राग्विषण्णास्त्रिदशाः देवाः संप्रति अतुलं असदृशमपरिमितं हर्षं संतोषमानन्दमवापुः प्राप्तवन्तः ॥६१॥

**(४ नागोजीभट्टी)** नीरक्तश्चेति । कातर्यात् निःशेषरुधिरत्वान्नीरक्तश्च सन् मातृगणो ब्रह्माण्यादिसमूहो ननर्तेत्यर्थः ॥ ६१ ॥

**(५ जगच्चन्द्रचन्द्रिका)** नीरक्तश्चेति । नीरक्तश्च महीपाल रक्तबीजो महासुरः ६२ ॥

ततस्तेहर्षमिति ६३ ॥ ६१ ॥

**(६ दंशोद्धारः)** ततस्ते इति । तेषां सुराणां जातः शक्तिभूतो मातृगणः । संबन्धसामान्ये षष्ठी । यद्वा असृङ्मदोद्धतो जातः सन् मातृगणो ननर्तेत्यन्वयः ॥ ६१ ॥

## हते मातृगणस्तस्मिन्ननर्तासृङ्मदोद्धतः ॥ ६२ ॥

## इति श्रीमार्कण्डेयपुराणे देवीमाहात्म्ये रक्तबीजवधो नामाष्टमोऽध्यायः ॥ ८ ॥

**(१ गुप्तवती)** ॥ ६२ ॥ इति श्रीगुप्तवत्यां मन्त्रविभागव्याख्यानेऽष्टमोऽध्यायः ॥ ८ ॥

**(२ चतुर्धरी)** तेषां त्रिदशानां संबन्धितया जातो मातृगणो ननर्तेत्यन्वयः । असृजो यो मदः तेनोद्धतस्तरल इत्यर्थः । अथवा तेषामसुराणामसृङ्मदोद्धतः सन्नित्यर्थः ॥ ६२ ॥ इति श्रीचतुर्धरीटीकायां देवीमाहात्म्ये रक्तबीजवधो नामाष्टमोऽध्यायः ॥ ८ ॥

**(३ शान्तनवी)** अथ च तेषां रक्तबीजादीनां असृङ्मदोद्धतो रुधिरपानमदोत्कटः । अतएव मत्तो मदघूर्णितो मातृगणः मातृणां ब्रह्माण्यादिमातॄणां समूहः आनन्दतो ननर्त नृत्यतिस्म । तेन युद्धावसाने वीरपानं सूचितं । 'वीरपानं तु यत्पानं वृत्ते भाविनि वा रणे' । 'रुधिरेऽसृग्लोहितास्ररक्तक्षतजशोणितं' । असृजा कृतो मदस्तेन उद्धतः ननर्त । नृती गात्रविक्षेपे । परोक्षे लिट् ॥ ६२ ॥ इति श्रीमद्राजाधिराजश्रीमत्तोमरान्वयश्रीमदुद्धरणात्मजश्रीशन्तनुचक्रवर्तिविरचितायां शान्तनव्यां चण्डिकामाहात्म्यटीकायां रक्तबीजवधविध्युपलक्षितोऽष्टमोऽध्यायः ॥ ८ ॥

**(४ नागोजीभट्टी)** ॥ ६२ ॥ इति श्रीसतीगर्भसमुद्भवनागोजीभट्टकृतसप्तशतीव्याख्यायामष्टमोऽध्यायः ॥ ८ ॥

**(५ जगच्चन्द्रचन्द्रिका)** ६४ ॥ ६२ ॥ इति श्रीभगीरथविरचिता कण्वगोविन्दकृतसप्तशतीमन्त्रहोमविभागकारिकाणामष्टमाध्यायस्य जगच्चन्द्रचन्द्रिकाख्यटीका संपूर्णा ॥ ८ ॥

**(६ दंशोद्धारः)** ॥ ६२ ॥ इति श्रीमद्दुल्लो०सप्तशतीव्याख्यानेऽष्टमोऽध्यायः ॥ ८ ॥

---

# नवमोऽध्यायः ९

## राजोवाच ।

## विचित्रमिदमाख्यातं भगवन्भवता मम । देव्याश्चरितमाहात्म्यं रक्तबीजवधाश्रितम् ॥ १ ॥

**(१ गुप्तवती)** अस्मिन्नवमेऽध्याये तृतीयश्लोकोत्तरमुत्पातान्बहूनुक्त्वाताननादृत्यैव युद्धाय निर्गताविति कथा बहुभिः श्लोकैः क्वचित्पठ्यते ॥ १ ॥

**(२ चतुर्धरी)** राजा सुरथः विचित्रं आश्चर्यं आख्यातं चरितस्य चेष्टितस्य माहात्म्यमौदार्यं । यद्वा चरितं कर्म । माहात्म्यं प्रभावातिशयः ॥ १ ॥

**(३ शान्तनवी)** राजोवाच । सुमेधसमृषिं वाचं प्रस्तुतामूचिवान्नृपः । सुव्रतं सुरथो नाम प्रष्टुमप्यद्भुतान्तरम् । हे भगवन् हे सुमेधोनामर्षे हे अमम ममतारहित भवता त्वया मम सुरथस्य शृण्वतः रक्तबीजवधाश्रितं रक्तबीजवधविषयं विचित्रमद्भुतं इदं देव्याश्चरितं चण्डिकायाश्चरितस्य माहात्म्यं महात्मना आख्यातं कथितं । रक्तबीजवधाश्रितं रक्तबीजवधेन आश्रितं । यद्वा रक्तबीजवधेन एनं विष्णुनाश्रितं रक्तबीजवधाश्रितं रक्तबीजवधेन दुष्करेण संतुष्टवता एनं विष्णुना अहो इदमद्भुतमिति श्रितं विष्णुश्रितं । रक्तबीजवधाश्रितमित्यर्थः । 'अकारो वासुदेवः स्यात्' यद्वा 'आकारस्तु पितामहः' । रक्तबीजवधेन दुष्करेण दुःसाध्येन संतुष्यता आ ब्रह्मणा चतुर्मुखेन श्रितं सेवितं । संस्तुतमित्यर्थः । यद्वा रक्तबीजवधोश्रितमित्याश्रिते पाठे आ ब्रह्मा अः विष्णुः उकारस्तु महेश्वरः तेषां समाहारद्वन्द्वैकवद्भावौ द्वयोराद्ययोः संधौ सवर्णदीर्घः । ततः उनसहाद्गुणः । उ इति प्रातिपदिकं । 'ह्रस्वो नपुंसके प्रातिपदिकस्य' । उना श्रितं उश्रितं रक्तबीजवधेनातिदुष्करेणातिदुःसा-

ध्येन लीलया देव्या कृतेन संतुष्यता उना ब्रह्मविष्णुमहेश्वरेण श्रितं सेवितं आदृतं । अहो नु खल्विदमित्याश्चर्यमित्यतिश्लाघितमिति रक्तबीजवधाश्रितमित्यनासहाद्भुणेन सिद्धम् ॥ १ ॥

**( ४ नागोजीभट्टी )** राजोवाच । विचित्रमिति । राजा सुरथः । चरितं कर्म । माहात्म्यं प्रभावः । समाहारद्वन्द्वः । आश्रितं जनकम् ॥ १ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** अथ नवमाध्यायस्य सप्तशतीमन्त्रहोमविभाग उच्यते । एकोनचत्वारिंशद्भिः श्लोकोक्तैश्च समीरिताः । अध्याये नवमे मन्त्रा इति । एकेन ऊनैश्चत्वारिंशद्भिः श्लोकैः युक्ते नवमेऽध्याये तावन्तस्तत्संख्याका मन्त्राः समीरिता उक्ताः । अथ मनुद्वयं राजा ऋषिश्चेति । अथानन्तरं मनुद्वयं राजा ऋषिश्चेति द्वौ मन्त्रौ भवतः । राजोवाच ऋषिरुवाच एकचत्वारिंशन्नवमाध्यायस्य मनुस्त्वयमिति । पुनः एकचत्वारिंशत् एकाधिकं विंशतिद्वयं । एतैः श्लोकैः अयं मनुमन्त्रः । तथाहि राजोवाच १ । विचित्रमिति २ ॥ १ ॥

**( ६ दंशोद्धारः )** विचित्रमिति । चरितस्य माहात्म्यं औदार्यं । चरितं कर्म । माहात्म्यं प्रभावातिशयो वा ॥ १ ॥

## भूयश्चेच्छाम्यहं श्रोतुं रक्तबीजे निपातिते । चकार शुम्भो यत्कर्म निशुम्भश्चातिकोपनः ॥ २ ॥

**( १ गुप्तवती )** ॥ २ ॥

**( २ चतुर्धरी )** भूयः पुनः वारंवारम् ॥ २ ॥

**( ३ शान्तनवी )** राजा आह हे सुमेधः हे ऋषे देव्या रक्तबीजे महादैत्ये निपातिते विनिहते सति अतिकोपनः शुम्भः निशुम्भश्च भूयः पुनः अत्यधिकं च यत्कर्म संग्रामलक्षणं कर्म चकार कृतवान् तदहं सुरथः भूयोऽधिकं यथास्यात्तथा श्रोतुमिच्छामि । 'पुरुहं पुरु भूयिष्ठं स्फारं भूयश्च भूरि च' । ऋषिरुवाच सुमेधाऋषिः सुरथं वाचमूचे ॥ २ ॥

**( ४ नागोजीभट्टी )** ॥ २ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** भूयश्चेति ॥ ३ ॥ २ ॥

**( ६ दंशोद्धारः )** ॥ २ ॥

### ऋषिरुवाच ।

## चकार कोपमतुलं रक्तबीजे निपातिते । शुम्भासुरो निशुम्भश्च हतेष्वन्येषु चाहवे ॥ ३ ॥

**( १ गुप्तवती )** ॥ ३ ॥

**( २ चतुर्धरी )** अन्येषु धूम्रलोचनादिषु । आहवे संग्रामे ॥ ३ ॥

**( ३ शान्तनवी )** हे राजन् शृणु । आहवे संग्रामे देव्या रक्तबीजे महासुरे निपातिते निहते सति ततोऽन्येषु देव्या हतेषु सत्सु शुम्भासुरो निशुम्भश्चासुरः अतुलमनुपमं असमं अमर्यादं कोपं क्रोधं चकार विदधौ । 'स्वपति करोति कुरुते विदधाति विधत्त आदधात्यार्यः' । 'अभ्यामर्दसमाघातसंग्रामाभ्यागमाहवाः' आह्वयन्तेऽत्र स्पर्धयेत्याहवः ॥ ३ ॥

**( ४ नागोजीभट्टी )** ऋषिरुवाच । चकारेति । आहवे रणे ॥ ३ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** ऋषिरुवाच ४ । चकार कोपमिति ५ ॥ ३ ॥

**( ६ दंशोद्धारः )** ॥ ३ ॥

## हन्यमानं महासैन्यं विलोक्यामर्षमुद्वहन् । अभ्यधावन्निशुम्भोऽथ मुख्ययासुरसेनया ॥ ४ ॥

**( १ गुप्तवती )** ॥ ४ ॥

**( २ चतुर्धरी )** उद्वहन्धारयन् आलोक्य अभ्यधावन् अभिमुखं ययौ । अपिशब्दादितरेतरसमुच्चयः । मुख्यया फल्गुशून्यया ॥ ४ ॥

**( ३ शान्तनवी )** देव्या हन्यमानं हतं महासैन्यं विलोक्याथ अमर्षं क्रोधं उद्वमन्नुद्गिरन् क्रोधाविष्टः सन् । उद्वहन् इति पाठे बिभ्राणः सन् निशुम्भमुख्यया निजया आत्मीयया असुरसेनया आसुरी सेना तया अभ्यधावत् देवीमभिद्रोद्धुमाढौकत् । सृ गतौ लङ् । सर्तेर्वेगितायां गतौ धावादेशो वक्तव्यः । यद्वा धावु गतिशुद्धयोः । स्वरितेत् । हन्यमानं 'वर्तमानसामीप्ये वर्तमानवद्वा' इति लटः कर्मणि शानच् । उद्वहन् इति पाठे यद्यप्युद्वहनं पाणिपीडनं तथापीह धातूनेकार्थतया धारणमर्थः । अन्यथा 'सदृशीमुद्वहेत्कन्यामरुग्णामनुपक्षतां' इतिवदुद्वहनं पाणिपीडनं स्यात् ॥ ४ ॥

**( ४ नागोजीभट्टी )** हन्यमानमिति । उद्वहन्धारयत् ॥ ४ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** हन्यमानमिति ६ ॥ ४ ॥

**( ६ दंशोद्धारः )** ॥ ४ ॥

**तस्याग्रतस्तथा पृष्ठे पार्श्वयोश्च महासुराः । संदष्टौष्ठपुटाः क्रुद्धा हन्तुं देवीमुपाययुः ॥ ५ ॥**

**( १ गुप्तवती )** ॥ ५ ॥

**( २ चतुर्धरी )** ॥ ५ ॥

**( ३ शान्तनवी )** तस्य निशुम्भस्यासुरस्याग्रतः पुरस्तात् तथा तद्वत्पृष्ठे पश्चाद्भागे तथा पार्श्वयोर्वामदक्षिणयोर्भागयोर्वर्तमाना महासुराः संदष्टौष्ठपुटाः रोषदष्टाधरोष्ठाः क्रुद्धाः सन्तः देवीं चण्डिकां हन्तुं ताडयितुमुपाययुः उप समीपमाययुराजग्मुः । ओत्वोष्ठयोः समासे वर्णनाद्वा पररूपं वक्तव्यं । उत्तरोष्ठापेक्षयात्र रोषप्रकरणादोष्ठोऽधरो विवक्षितः । अन्यथाभिधाने ओष्ठशब्दोऽधरपर्याय एवाधरशब्दोप्योष्ठपर्याय एव । यदभ्यधुः 'ओष्ठाधरौ तु रदनच्छदौ दशनवाससी' इति । यच्चाभ्यधुः । ओष्ठो दन्तच्छदोऽधरः' इति । यच्चाभ्यधुः । 'ओष्ठमात्रेऽधरः' इति । पुटशब्देन परस्परसंसक्तपिधानं सूच्यते । ओष्ठः पुट इव ओष्ठपुटः संदष्टः ओष्ठपुटो यैस्ते संदष्टौष्ठपुटाः दैत्याः । पुट संश्लेषणे । पुट्यते संश्लेष्यते पुटः । क्रुद्धा इति कर्तरि क्तः॥५॥

**( ४ नागोजीभट्टी )** संदष्टौष्ठपुटाः दन्ताभ्यामन्तः संधृतौष्ठाः । तथासति पुटाकारता भवति ॥ ५ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** तस्याग्रत इति ७ ॥ ५ ॥

**( ६ दंशोद्धारः )** ॥ ५ ॥

**आजगाम महावीर्यः शुम्भोऽपि स्वबलैर्वृतः । निहन्तुं चण्डिकां कोपात्कृत्वा युद्धं तु मातृभिः ६**

**( १ गुप्तवती )** ॥ ६ ॥

**( २ चतुर्धरी )** ॥ ६ ॥

**( ३ शान्तनवी )** स्वबलैर्वृतः स्वैरात्मीयैः सैन्यैर्वेष्टितः महावीर्यः अत्यधिकवीर्यः महाप्रभावः शूरः शुम्भोपि दैत्येश्वरः प्रथमतः मातृभिः सह ब्रह्माण्यादिभिर्मातृगणैः समं युद्धं प्रथमं कृत्वा अथ तु कोपात् क्रोधावेशाच्चण्डिकां देवीं निहन्तुं आजगाम आययौ कोपवशात् । असौ शुम्भो न जानाति चण्डिकां भगवतीं हन्तुं न शक्येति भावमावेदयितुं कोपादित्युक्तं । वीर्यं बलं प्रभावश्च । बलं प्राणसामर्थ्यं । 'स्थौल्यसामर्थ्यसैन्येषु बलं ना काकसीरिणोः' ॥ ६ ॥

**( ४ नागोजीभट्टी )** ॥ ६ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** आजगामेति ८ ॥ ६ ॥

**( ६ दंशोद्धारः )** ॥ ६ ॥

**ततो युद्धमतीवासीद्देव्या शुम्भनिशुम्भयोः । शरवर्षमतीवोग्रं मेघयोरिव वर्षतोः ॥ ७ ॥**

**( १ गुप्तवती )** ॥ ७ ॥

**( २ चतुर्धरी )** देव्येति सहार्थे तृतीया ॥ ७ ॥

**( ३ शान्तनवी )** ततोऽनन्तरं तयोः अतीव अत्यर्थं उग्रं रौद्रं शराणां वर्षं शरवृष्टिं वर्षतोः शरान्मुञ्चतोः शुम्भनिशुम्भयोर्देव्या चण्डिकया सह अतीव अतितरां सुष्ठु युद्धं रणमासीत् । कयोरिव वर्षतोर्मेघयोरिव । यथा मेघौ द्वौ पृथग्भूतौ अवर्षतो वृष्टिधाराः । तथा अतीवोग्रं शरवर्षं शरवृष्टिं वर्षतोस्तयोः शुम्भनिशुम्भयोः देव्या सह अतीव युद्धमभूदित्यर्थः । 'वलवत्सुष्ठु किमुत स्वत्यतीव च निर्भरे' । ततो युद्धं तयोर्युद्धं इति पाठद्वयम् ॥ ७ ॥

**( ४ नागोजीभट्टी )** तत इति । देव्या इति सहार्थे तृतीया ॥ ७ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** ततो युद्धमिति ९ ॥ ७ ॥

**( ६ दंशोद्धारः )** ॥ ७ ॥

**चिच्छेदास्तांश्छरांस्ताभ्यां चण्डिका स्वशरोत्करैः । ताडयामास चाङ्गेषु शस्त्रौघैरसुरेश्वरौ ॥ ८ ॥**

**( १ गुप्तवती )** चिच्छेदेति । अस्तान्क्षिप्तान् ॥ ८ ॥

**( २ चतुर्धरी )** अस्तान्क्षिप्तान् ॥ ८ ॥

**( ३ शान्तनवी )** ताभ्यां शुम्भनिशुम्भाभ्यां अस्तान्क्षिप्तान्प्रेरितान् । असु क्षेपणे कर्मणि क्तः । शरान्बाणान् चण्डिका देवी स्वशरोत्करैः स्वैः शराणामुत्करैः पुंजैः । सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः । 'स्यान्निकायः पुञ्जराशी तूत्करः कूटमस्त्रियां' । कॄ विक्षेपणे । उत्कीर्यन्ते उत्कराः । कर्मणि ऋदोरप् । स्तोमैश्चिच्छेद खण्डयामास । अथच सा तावसुरेश्वरौ शुम्भनिशुम्भावपि कर्मभूतौ अङ्गेषु तदीयेषु प्रत्यङ्गं प्रतिलोमकूपं शस्त्रौघैः बाणाद्यायुधव्यूहैस्ताडयामास जघान च ॥ ८ ॥

( ४ नागोजीभट्टी ) चिच्छेदेति । ताभ्यामस्तान्क्षिप्तानित्यन्वयः ॥ ८ ॥

( ५ जगच्चन्द्रचन्द्रिका ) चिच्छेदास्तानिति १० ॥ ८ ॥

( ६ दंशोद्धारः ) चिच्छेदेति । अस्तान्क्षिप्तान् । असु क्षेपणे ॥ ८ ॥

**निशुम्भो निशितं खड्गं चर्म चादाय सुप्रभम् । अताडयन्मूर्ध्नि सिंहं देव्या वाहनमुत्तमम् ॥ ९ ॥**

( १ गुप्तवती ) ॥ ९ ॥

( २ चतुर्धरी ) निशितं शाणतेजितं । चर्म फलकम् ॥ ९ ॥

( ३ शान्तनवी ) निशुम्भः निशितं तीक्ष्णं खड्गं मण्डलाग्रं सुप्रभं सुप्रभामण्डलभास्वरं चर्म च फलकं आदाय गृहीत्वा देव्याश्चण्डिकायाः उत्तमं श्रेष्ठं मुख्यं वाहनं सिंहं वाहनीभूतं केसरिणं मूर्ध्नि मस्तके अताडयत् हन्तिस्म । तड आघाते चुरादिः ण्यन्ताल्लुङ् । निशितं क्ष्णुतं शातं तेजितमितियावत् । फलकोऽस्त्री फलं चर्म परप्रहारनिवारणसाधनं चर्ममयत्वाच्चर्म । सुप्रभमिति खड्गस्य विशेषणं चर्मणश्च । 'संभवे व्यभिचारे च स्याद्विशेषणमर्थवत्' ॥ ९ ॥

( ४ नागोजीभट्टी ) ॥ ९ ॥

( ५ जगच्चन्द्रचन्द्रिका ) निशुम्भ इति ११ ॥ ९ ॥

( ६ दंशोद्धारः ) निशुम्भ इति । निशितं शाणोल्लीढम् ॥ ९ ॥

**ताडिते वाहने देवी क्षुरप्रेणासिमुत्तमम् । निशुम्भस्याशु चिच्छेद चर्म चाप्यष्टचन्द्रकम् ॥ १० ॥**

( १ गुप्तवती ) ॥ १० ॥

( २ चतुर्धरी ) क्षुरप्रेण क्षुरवद्विशेषधारेण । खुरप्रेणेति वा पाठः । दशनेन प्रक्षुरः प्रखण्डितः क्वचित् दुर्गतार्थो हिमवद्दीधितिर्यथेति । हरेर्विनाशदर्शनात् । अष्टौ चन्द्रकाश्चन्द्राकाररचनाविशेषा यत्र ॥ १० ॥

( ३ शान्तनवी ) निशुम्भेन वाहने सिंहे ताडिते सति देवी चण्डिका क्षुरप्रेण क्षुरं प्रत्याऽकारेण पूरयति मुखेन अनुकरोति क्षुरप्रो बाणविशेषः तेन क्षुराकृतिमुखेन बाणेन निशुम्भस्य उत्तमं श्रेष्ठं असिं खड्गं चिच्छेद आशु अविलम्बेन अष्टचन्द्रकं चर्मफलकं च तेनैव क्षुरप्रेण चिच्छेदैव । प्रयत्नेन असिं चर्म च विदारयामासेत्यर्थः । अष्टौ चन्द्रा यस्मिंस्तत् अष्टचन्द्रकं लिखिताष्टचन्द्रकमित्यर्थः । यद्वा अष्टः व्याप्तः चन्द्रः कर्पूरो यस्मिन् विलिप्तोऽस्ति तदष्टचन्द्रकं । अश् व्याप्तौ कर्तरि क्तः । यद्वा अष्टौ चन्द्रांश्चित्रितान्कायति अष्टचन्द्रकं अष्टानां चन्द्राणां समाहारोऽष्टचन्द्रं तत्कायत्वात्मलक्षणत्वेन लिखितं कथयत्यष्टचन्द्रकं । कर्पूरश्चन्द्रसंज्ञकः ॥ १० ॥

( ४ नागोजीभट्टी ) ताडित इति । क्षुरविशेषः चर्म वालकं अष्टसंख्याकरत्नादिघटितं चन्द्राकारसहितम् ॥ १० ॥

( ५ जगच्चन्द्रचन्द्रिका ) ताडिते वाहनेति १२ ॥ १० ॥

( ६ दंशोद्धारः ) ताडिते इति । क्षुरप्रेण विशिखेन । खुरप्रेणेति पाठेऽप्ययमेवार्थः । अष्टौ चन्द्राः चन्द्राकाररचनाविशेषा यत्र ॥ १० ॥

**छिन्ने चर्मणि खड्गे च शक्तिं चिक्षेप सोऽसुरः । तामप्यस्य द्विधा चक्रे चक्रेणाभिमुखागताम् ॥ ११ ॥**

( १ गुप्तवती ) ॥ ११ ॥

( २ चतुर्धरी ) ॥ ११ ॥

( ३ शान्तनवी ) देव्या चर्मणि छिन्ने द्विधा कृते खड्गे च छिन्ने द्विधा कृते सति सः निशुम्भोऽसुरो देवीं प्रति शक्तिमायुधविशेषं चिक्षेप प्रेरयामास । प्रयुयुजे । देवी अभिमुखागतां तामप्यस्य निशुम्भस्य महासुरस्य शक्तिं चक्रेण द्विधा चक्रे चिच्छेद अभिमुखागतां तां । कर्तरि क्तः । अभिशब्दोऽभ्यधिकं सूचयति । खड्गं च चर्म च चिच्छेद । न केवलं तद्द्वयमेव देवी चिच्छेद । अपि तु तदीयां तां शक्तिमपि चिच्छेद ॥ ११ ॥

( ४ नागोजीभट्टी ) छिन्ने इति । शक्तिक्षेपो देवीं प्रति । अभिमुखागतां तां देवीं चिच्छेदेत्यर्थः ॥ ११ ॥

( ५ जगच्चन्द्रचन्द्रिका ) छिन्ने चर्मणीति १३ ॥ ११ ॥

( ६ दंशोद्धारः ) ॥ ११ ॥

**कोपाध्मातो निशुम्भोऽथ शूलं जग्राह दानवः । आयान्तं मुष्टिपातेन देवीतच्चाप्यचूर्णयत् ॥ १२ ॥**

( १ गुप्तवती ) ॥ १२ ॥

( २ चतुर्धरी ) कोपाध्मातः कोपेनाध्मातः प्रज्वलितः । मुष्टिपातेन मुष्टिप्रहारेण ॥ १२ ॥

( ३ शान्तनवी ) अथानन्तरं कोपेन आध्मातः पूरितः शरीरकोषः कोपाविष्टः । यद्वा कोपाग्नियुक्तः निशुम्भो दानवः दनोः दानवमातुरपत्यं पुमान् दानवः असुरः देवीमुद्दिश्य शूलं आयुधं 'अस्त्री शूलं रुगायुधं' जग्राह प्रयुयुजे इत्यर्थः । अथ देवी अभिमुखमायान्तं तच्चापि शूलं मुष्टिपातेन मुष्टेः प्रहारेण अचूर्णयत् । सत्यापपाशसूत्रेण अवध्वंसने चूर्णप्रतिपदिका णिच् । अवीध्वंसवतीत्यर्थः । अथवा चूर्ण प्रेरणप्रेषणयोः चुरादिः । अचूर्णयत् प्रेरयतिस्म संपिनष्टिस्मेति वार्थः । आयांतमिति पुल्लिङ्गप्रयोगान्तं चापीत्ययमपितच्छब्दः पुल्लिङ्गएव द्वितीयैकवचनान्तः । ध्माशब्दाग्निसंयोगयोः । कोपेन आध्मातः दीपितः । कर्मणि क्तः 'स्त्रीपुंसयोः स्मृतो मुष्टिः' ॥ १२ ॥

( ४ नागोजीभट्टी ) कोपेति । जग्राह । ग्रहणपूर्वके प्रक्षेपेऽत्र ग्रहिः । आयान्तं तच्छूलम् ॥ १२ ॥

( ५ जगच्चन्द्रचन्द्रिका ) कोपाध्मात इति १४ ॥ १२ ॥

( ६ दंशोद्धारः ) ॥ १२ ॥

**आविध्याथ गदां सोऽपि चिक्षेप चण्डिकां प्रति। सापि देव्या त्रिशूलेन भिन्ना भस्मत्वमागता १३**

( १ गुप्तवती ) आविध्य शूलक्षेपोत्तरं आदायेति वा तदर्थः ॥ १३ ॥

( २ चतुर्धरी ) आविध्य भ्रामयित्वा ॥ १३ ॥

( ३ शान्तनवी ) अथ सोपि निशुम्भोऽपि गदामादाय गृहीत्वा चण्डिकां प्रति चिक्षेप प्रेरयामास । सापि गदा निशुम्भेन प्रेरिता गदा देव्या कर्तृभूतया चण्डिकया त्रिशूलेन अग्निबीजगर्भेण करणेन भिन्ना विदारिता सती भस्मत्वमागता भस्मतां गता भस्मीबभूवेत्यर्थः । क्वचित्तु आविव्याध गदां सोऽपि इति पाठः । सोपि निशुम्भोपि चण्डिकां प्रति गदां चिक्षेप । आविव्याध च अताडयच्च इति तदा व्याख्यातव्यं स्यात् । ततश्च यदि गदया देवीं विव्याध निशुम्भस्तर्हि देवीप्रयुक्तत्रिशूलेन भस्मीकरणवर्णनं निशुम्भप्रयुक्तगदायाः विफलं स्यात् । देव्या उत्कर्षाभावात् । देवीविषयं व्यधनं गदया कृतमेवेति त्रिशूलेन गदया भस्मतास्तु माभूत् किं तया कृतं स्यात् । पाटच्चरलुटितवेश्मनियामिकजागरणसंततयापि वा किंकृतं स्यादिति । क्वचित्तु आविध्याथ गदां सोपि इति पाठः । आविध्येति गदां भ्रामयित्वेत्यर्थः । इत्थं आविव्याध गदां सोपि इति पाठे गदामाविव्याध । भ्रामयामासेत्यर्थः । अथ न किंचिद्दुष्यति वैदुष्यशिष्यमाणार्थसिद्धेरिति मतमायुष्मतः । मैवं मंस्थाः । शब्दशक्तिस्वाभाव्यादाविद्धो मणिरित्यादौ विध्यतिराङ्पूर्वोपि ताडनार्थ एव प्रसिद्धो नतु परिभ्रमणवृत्तिरित्यलं विस्तरेण प्रकृतमनुसरामः ॥ १३ ॥

( ४ नागोजीभट्टी ) आविध्य भ्रामयित्वा देव्या कर्त्रा त्रिशूलेन करणेन सापि गदा भिन्ना भस्मत्वमागता आपातिता च । अन्तर्भावितण्यर्थात् क्तः ॥ १३ ॥

( ५ जगच्चन्द्रचन्द्रिका ) आविध्याथेति १५ ॥ १३ ॥

( ६ दंशोद्धारः ) ॥ १३ ॥

**ततः परशुहस्तं तमायान्तं दैत्यपुंगवम् । आहत्य देवी बाणौघैरपातयत भूतले ॥ १४ ॥**

( १ गुप्तवती ) अपातयतमूर्च्छां प्राप्येति यावत् ॥ १४ ॥

( २ चतुर्धरी ) दैत्यपुङ्गवं दैत्यमुख्यम् ॥ १४ ॥

( ३ शान्तनवी ) ततो गदायां भस्मितायां तदनन्तरं परशुहस्तं परशुपाणिं अभिमुखमायान्तं तं दैत्यपुङ्गवं दानवश्रेष्ठं निशुम्भं देवी चण्डिका बाणौघैः शरव्यूहैराहत्य आहतं विधाय ताडयित्वा भूतले अपातयत्प्रभ्रंशयामास 'स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जराः । सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थगोचराः' । दैत्योयं पुङ्गव इव शूरो बलवान्वा दैत्यपुङ्गवः तं । उपमितं व्याघ्रादिभिः सामान्यप्रयोगे समस्यते । निशुम्भो भूमौ पतितो मूर्छां प्रापितो न तावन्मारितस्तदानीं । अग्रे 'ततो निशुम्भः संप्राप्य चेतनामात्तकार्मुकः' इति तदुज्जीवनश्रवणात् ॥ १४ ॥

( ४ नागोजीभट्टी ) पुङ्गवं श्रेष्ठं । अत्र निशुम्भस्य मूर्च्छासंपादनेन पातनम् ॥ १४ ॥

( ५ जगच्चन्द्रचन्द्रिका ) ततः परशुहस्तमिति १६ ॥ १४ ॥

( ६ दंशोद्धारः ) ॥ १४ ॥

**तस्मिन्निपतिते भूमौ निशुम्भे भीमविक्रमे । भ्रातर्यतीव संक्रुद्धः प्रययौ योद्धुमम्बिकाम् ॥ १५ ॥**

( १ गुप्तवती ) ॥ १५ ॥

( २ चतुर्धरी ) ॥ १५ ॥

( ३ शान्तनवी ) तस्मिन्भीमविक्रमे घोरपराक्रमे भयंकरवीरकर्मणि निशुम्भे भ्रातरि भूमौ निपतिते प्रथममूर्धनि

मूर्च्छिते सति भ्राता शुम्भः अतीव क्रुद्धः अतितरां क्रोधाविष्ट अतएव अम्बिकां देवीं चण्डिकां हन्तुं प्रययौ प्रजगाम । अम्बिकेयं परदेवता हन्तुं न शक्येत्यवधारयत् । 'विक्रमस्त्वतिशक्तिता' 'विक्रमो वीरकर्मणि' 'विक्रमः पादविक्षेपे भ्रातरि' इति संबन्धिशब्दत्वात् । भ्रातात्र शुम्भ एव प्रणस्य कर्ता वसीयते ॥ १५ ॥

**( ४ नागोजीभट्टी )** तस्मिन्निति । प्रययौ शुम्भ इति शेषः ॥ १५ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** तस्मिन्निपतिते इति १७ ॥ १५ ॥

**( ६ दंशोद्धारः )** आविध्य भ्रामयित्वा ॥ १५ ॥

**स रथस्थस्तथात्युच्चैर्गृहीतपरमायुधैः । भुजैरष्टाभिरतुलैर्व्याप्याशेषं बभौ नभः ॥ १६ ॥**

**( १ गुप्तवती )** ॥ १६ ॥

**( २ चतुर्धरी )** स शुम्भो नभो व्याप्य आकाशं व्याप्य बभावित्यन्वयः ॥ १६ ॥

**( ३ शान्तनवी )** तथा तेन प्रकारेण तदा तस्मिन्काले अत्युच्चैः रथस्थः रथारूढः सः शुम्भो महासुरः अत्युच्चैर्गृहीतपरमायुधैः अतुलैः अनुपमैः अष्टाभिर्भुजैर्बाहुभिरशेषं कृत्स्नं नभः नभोमण्डलं व्याप्य आच्छाद्य आकाशमण्डलमाक्रम्य बभौ शुशुभे । भा दीप्तौ । आत औ णलः ॥ १६ ॥

**( ४ नागोजीभट्टी )** स इति तथा सामुद्रिकाप्रकारेणात्युच्चैर्भुजैर्नभो व्याप्य बभावित्यर्थः ॥ १६ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** स रथस्थ इति १८ ॥ १६ ॥

**( ६ दंशोद्धारः )** ॥ १६ ॥

**तमायान्तं समालोक्य देवी शङ्खमवादयत् । ज्याशब्दं चापि धनुषश्चकारातीव दुःसहम् ॥१७॥**

**( १ गुप्तवती )** ॥ १७ ॥

**( २ चतुर्धरी )** ॥ १७ ॥

**( ३ शान्तनवी )** देवी चण्डिका तं शुम्भं महासुरं संमुखमायान्तमागच्छन्तं विलोक्य शङ्खमवादयद्ध्मौ पूरयामास । किंच अतीवातितरां दुःसहं सोढुमशक्यं धनुषः ज्यायाः धनुरारोपितमौर्व्याः शब्दं टंकारस्वनं च चकार । शङ्खस्वनश्चापस्वनश्च युद्धोत्साहं जनयति । 'मौर्वी ज्या सिञ्जिनी गुणः' । आरोपितेष्वासनार्थं धनुर्गृहाण । धनुः शब्दोर्धर्चादित्वात्पुंनपुंसकलिङ्गः । धनुर्वंशविरुद्धोऽपि निर्गुणः किं करिष्यति । दुःखेन सोढुमशक्यो दुःसहः तं । 'स्वत्यतीव च निर्भरे' ॥ १७ ॥

**( ४ नागोजीभट्टी )** आयान्तमागच्छन्तम् ॥ १७ ॥

**(५ जगच्चन्द्रचन्द्रिका )** तमायान्तमिति ॥ १९ ॥ १७ ॥

**( ६ दंशोद्धारः )** ॥ १७ ॥

**पूरयामास ककुभो निजघण्टास्वनेन च । समस्तदैत्यसैन्यानां तेजोवधविधायिना ॥ १८ ॥**

**( १ गुप्तवती )** ॥ १८ ॥

**( २ चतुर्धरी )** ककुभो दिशः तेजोवधविधायिना तेजोवधकरणशीलेन ॥ १८ ॥

**( ३ शान्तनवी )** समस्तदैत्यसैन्यानां सकलासुरसेनानां तेजोवधविधायिना तेजसां वधः विनाशः तं विदधाति करोति तेजोवधविधायी तेन । यद्वा तेजांसि च वधाश्च तेषां विधानं विधायः तेजोवधविधायः । भावे घञ् । सोऽस्त्यस्मिन्वा स तथोक्तः । तेन निजघण्टास्वनेन आत्मीयघण्टानादेन च ककुभो दशदिशः पूरयामास संवर्धयामास । पूरी आप्यायने । दिवादिः । आप्यायनं वृद्धिः । 'हेतुमति च' इति णिच् । 'कास्प्रत्ययादाममन्त्रे लिटि' । स्वनेन चेति चकारेण शङ्खज्यानिजघण्टास्वनैर्दिशः पूरयामासेत्येतदुक्तं स्वनत्रयं समुच्चीयते । 'तेजः प्रभावे दीप्तौ च बले छन्नेऽपि संस्मृतं । अधिक्षेपावमानादेः प्रयुक्तस्य परेण यत् । प्राणात्ययेप्यसहनं तत्तेजः समुदाहृतम्' ॥ १८ ॥

**( ४ नागोजीभट्टी )** स्वनेन चेति । चेन शङ्खज्याशब्दयोः समुच्चयः । वधो नाशः । विधायिनेति स्वनविशेषणम् ॥ १८ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** पूरयामासेति २० ॥ १८ ॥

**( ६ दंशोद्धारः )** पूरयामासेति । कुकभो दिशः ॥ १८ ॥

**ततः सिंहो महानादैस्त्याजितेभमहामदैः । पूरयामास गगनं गां तथोपदिशो दश ॥ १९ ॥**

( १ गुप्तवती ) ॥ १९ ॥

( २ चतुर्धरी ) त्याजित इभानां महामदो यैः । गगनमाकाशं गां स्वर्गं भुवं वा उपदिशः संग्रामवर्तिदिक्प्रदेशा उपदिक्सहितादिशः । शाकपार्थिवादित्वान्मध्यमपदलोपीसमास इत्यन्ये ॥ १९ ॥

( ३ शान्तनवी ) ततः शङ्खादिनिःस्वनादनन्तरं सिंहो देव्याः केसरी युयुत्सुः सन् त्याजितेभमहामदैः त्याजिताः वर्जिताः इभानां गजानां महान्तो मदा यैस्ते तैः दूरीकृतमहामत्तेभमहामदप्रवाहैः सिंहगर्जनश्रवणादुद्विग्नत्वाद्गजाः खलु निर्मदाः स्युः महानादैः सद्भिः कण्ठीरवस्यास्य पञ्चास्यस्य नादैः कण्ठगर्जनैः सिंहनादैः गगनमाकाशदेशं पूरयामास । तथैव तद्वदेव तैर्महानादैर्गां पृथिवीं पूरयामास । तथैव तद्वदेव महानादैः दिशोपि च दिशः ककुभः पूरयामास वर्धयामास । क्वचित्तु गां तथोपदिशो दशेति पाठः । उपशब्दः आधिक्ये पूर्वं कृतशङ्खज्याघण्टानां नादापेक्षया सिंहनादोऽधिकः । यतोऽसौ गगनं च गां क्ष्मां च दशापि च दिशः पूरयामास । अथच सिंहनादेन महत्तरेण शङ्खज्याघण्टानां नादास्तिरोहिता इत्युपशब्देन सूच्यते ॥ १९ ॥

( ४ नागोजीभट्टी ) उपदिशः सामान्यदिगाक्षेपोपदिक्त्वं पूर्वादीनां दशानां तदाह दशेति ॥ १९ ॥

( ५ जगच्चन्द्रचन्द्रिका ) ततः सिंह इति २१ ॥ १९ ॥

( ६ दंशोद्धारः ) तत इति । त्याजितः इभानां महामदो यैः गगनमाकाशं गां भुवं उप संग्रामसमीपे दशदिश इत्यर्थः । तथैव दिशो दश इति पाठः सुगमः ॥ १९ ॥

**ततः काली समुत्पत्य गगनं क्ष्मामताडयत् । कराभ्यां तन्निनादेन प्राक्स्वनास्ते तिरोहिताः ॥२०॥**

( १ गुप्तवती ) ततः कालीति । गगनं समुत्पत्य क्ष्मामताडयदित्यन्वयः । प्राक्स्वनाः शङ्खज्याघण्टासिंहशब्दाः॥२०॥

( २ चतुर्धरी ) गगनं समुत्पत्य उत्प्लुत्य क्ष्मां भूमिं कराभ्यामताडयदित्यन्वयः । तस्या निनादेन प्राक्शब्दास्तिरोहिताः पिहिताः ॥ २० ॥

( ३ शान्तनवी ) ततः सिंहनादादनन्तरं काली चामुण्डा गगनमाकाशं समुत्पत्य सम्यगुत्पत्य उत्प्लुत्य गगनं क्ष्मां पृथिवीं कराभ्यां पाणिभ्यां ताडयत् आहतवती । यद्वा काली चामुण्डा समुत्पत्योत्प्लुत्योड्डीय गगनं क्ष्मां च द्यावापृथिव्यौ द्वे अपि कराभ्यां हस्ताभ्यामताडयत्ताडयतिस्म । ततस्तन्निनादेन द्यावापृथिव्याघातजनितध्वनिना ते प्राक्स्वनाः प्रागुक्ताः शङ्खज्याघण्टासिंहस्वनाः तिरोहिताः आच्छादिता आसन् । अल्पो ध्वनिरधिकध्वनिना हि तिरोधीयते । न्यक्क्रियते अभिभूयते । देवताशक्तिरीदृश्यद्भुतकरी । तयोर्द्यावापृथिव्योरपि काली कराभ्यामताडयत् । आहतवत्यासीत् । तिरोन्तर्द्धौ कर्मणि क्तः ॥ २० ॥

( ४ नागोजीभट्टी ) समुत्पत्य उत्प्लुत्य पुनरवतीर्य पृथ्वीम् ॥ २० ॥

( ५ जगच्चन्द्रचन्द्रिका ) ततः कालीति २२ ॥ २० ॥

( ६ दंशोद्धारः ) तत इति । काली चामुण्डा गगनमुत्पत्य कराभ्यां क्ष्मां भूमिं समताडयदित्यन्वयः ॥ २० ॥

**अट्टाट्टहासमशिवं शिवदूती चकार ह । तैः शब्दैरसुरास्त्रेसुः शुम्भः कोपं परं ययौ ॥ २१ ॥**

( १ गुप्तवती ) त्रेसुर्भयं प्रापुः ॥ २१ ॥

( २ चतुर्धरी ) अट्टाट्टहासमित्यत्र शकन्ध्वादित्वादकारलोपः । इत्युच्चैर्हासं अशिवं अतिभीषणं । त्रेसुः उद्वेजिरे २१

( ३ शान्तनवी ) चण्डिकाशरीरविनिष्क्रान्ता शक्तिर्देवता शिवदूती दैत्यानामशिवं कर्णकटु यथा स्यात्तथा अट्टाट्टहासजनितैः शब्दैर्ध्वनिभिरसुरास्त्रेसुः । त्रसु उद्वेगे । त्रासमुद्वेगमापुः । एत्वाभ्यासलोपौ । शुम्भस्तु परमधिकं कोपं ययौ प्राप । अट्ट अतिक्रमणहिंसनयोः । अट्टनमट्टः । अतिक्रमं उल्लङ्घनं शत्रूनुल्लङ्घयोल्लङ्घय हसनमट्टहासः । यद्वा अट्टेन नादेन अतिक्रमेण हासः अट्टाट्टहासः । 'नित्यवीप्सयोः' इति वीप्सायां द्विर्वचनं । अतिशयेन व्याप्तोऽट्टः अतिशयेनातिक्रमः तेन कृतो हासः । 'कर्मधारयवदुत्तरेषु' इति सुपो लोपः अट्टट्टहासमिति पाठे अट्टट्टहासो महाहासः । शकन्ध्वादित्वात्पररूपत्वं तं । यद्वा अट्टन्ते हिंसन्ति अट्टाः हिंसकाः दैत्याः तेषु हासः अट्टेन अतिक्रमेण हासः अट्टाट्टहासः तं । यद्वा अट्टेष्वट्टेषु हिंसकेषु हासः अट्टाट्टहासः तं । यद्वा अट्टेषु अतिक्रामत्सु उल्लङ्घितमर्यादेषु दैत्येषु हासः अट्टाट्टहासः तं । इह कश्चित्त्वाह । शकटध्वनिरिति तन्न । प्रमाणाभावात् । स एवाह अट्टोऽतिशय इति तच्च न । वीप्सातोऽन्यत्राट्टशब्दस्य केवलस्यातिशयार्थतायां प्रयोगाभावात् । तच्चोक्तं तेनैव । अट्टः शकटातिशयार्थेष्विति तच्च पापात्पापीयः । प्रामाण्यानुपन्यासात् ॥ २१ ॥

( ४ नागोजीभट्टी ) अट्टाट्टहासं । शकन्ध्वादित्वात्पररूपम् । अशिवं रिपूणां भयदम् ॥ २१ ॥

(**५ जगच्चन्द्रचन्द्रिका**) अट्टाट्टहासमिति २३ ॥ २१ ॥

(**६ दंशोद्धारः**) अट्टाट्टहासमिति पाठे शकन्ध्वादित्वात्पररूपम् । त्रैमुरुद्विविज्ञः ॥ २१ ॥

**दुरात्मंस्तिष्ठतिष्ठेति व्याजहाराम्बिका यदा । तदा जयेत्यभिहितं देवैराकाशसंस्थितैः ॥ २२ ॥**

(**१ गुप्तवती**) ॥ २२ ॥

(**२ चतुर्धरी**) ॥ २२ ॥

(**३ शान्तनवी**) रे शुम्भ रे दुरात्मन् त्वं खलु दूतं प्रत्यक्षिपः तिष्ठतिष्ठ मां प्रयासीस्तत्फलमद्य पश्य । किमतो निष्ठुरालापेन प्रथमोचिता क्रिया केवलमुत्तरमत्रेति यदा अम्बिका देवी व्याजहार तदा तस्मिन्काले आकाशसंस्थितैर्देवैराकाशस्थैर्जयेत्यभिहितं जय शत्रूनभिभवेत्युक्तं । अथ च आजि युद्धं कुरु आजय जय शत्रूनभिभवेत्यभिहितमित्यप्यर्थलेशो द्रष्टव्यः । दुरात्मन्नित्यनेन दूतवचनेन जनितदीर्घद्वेषोक्तिरम्बिकायाः सूचिता । अथ युद्धे प्रतियोद्धरि दुरुक्तिः नायोधनौचितिं नावहेत । अतएव देवैराजयजयेत्यभिहितं । जय जिजि अभिभवे । जि जयेचेल्लोत्कर्षेण वर्तस्व । 'संस्थाधारे स्थितौ मृतौ' तिष्ठतिष्ठेति कोपेनोक्तौ वा द्विरुक्तिः । जयति स्वपक्षस्थापनं परपक्षप्रतिक्षेपणं च जयतेरर्थः ॥ २२ ॥

(**४ नागोजीभट्टी**) आकाशे संस्थितैः देवैः दानवसंग्रामदर्शनाय तत्र स्थितैः ॥ २२ ॥

(**५ जगच्चन्द्रचन्द्रिका**) दुरात्मंस्तिष्ठेति २४ ॥ २२ ॥

(**६ दंशोद्धारः**) ॥ २२ ॥

**शुम्भेनागत्य या शक्तिर्मुक्ता ज्वालातिभीषणा । आयान्ती वह्निकूटाभा सा निरस्ता महोल्कया २३**

(**१ गुप्तवती**) महोल्कया तत्तुल्यया तन्नामिकया वा शक्त्या ॥ २३ ॥

(**२ चतुर्धरी**) ॥ २३ ॥

(**३ शान्तनवी**) शुम्भेनागत्य ढौकिला ज्वालातिभीषणा ज्वालया तेजसा अतिभीषणा ज्वालेव अतिभीषणा वा अतितरां साध्वसकारिणी या शक्तिरायुधविशेषः मुक्ता प्रेरिता सा वह्निकूटाभा आयान्तीसन्ती चण्डिकया कर्तृभूतया महोल्कया साधनीभूतया कारणभूतया शक्त्या निरस्ता निवारिताभूत् । वह्निकूटाभा अग्निपुञ्जकान्तिः महोल्कया बृहत्तराङ्गारकाष्ठज्वालया इत्यपि कश्चिद्व्याख्यत् । ज्वल दीप्तौ । 'ज्वलितिकसन्तेभ्यो णः कर्तरि' । ज्वलति ज्वालः ज्वाला वा । 'वह्नेर्द्वयोर्ज्वालकीलावर्चिर्हेतिः शिखा स्त्रियाम् । मायानिश्चलयन्त्रेषु कैतवानृतराशिषु । अयोघने शैलशृङ्गे सीराङ्गे कूटमस्त्रियाम्' । महती उल्का ज्वाला यस्याः सा महोल्का नामशक्तिश्चण्डिकाया आयुधं । 'निरस्तः प्रहितो मुक्तः प्रेरितः क्षिप्त उज्झितः । विसृष्टो दवितो दूरीकृतो वाणादिमोक्षणे' ॥ २३ ॥

(**४ नागोजीभट्टी**) महोल्कयेति । महाज्वालावत्या शक्त्येत्यर्थकं । यद्वा तन्नामकशक्त्येत्यर्थकम् ॥ २३ ॥

(**५ जगच्चन्द्रचन्द्रिका**) शुम्भेनागत्येति २५ ॥ २३ ॥

(**६ दंशोद्धार**) ॥ २३ ॥

**सिंहनादेन शुम्भस्य व्याप्तं लोकत्रयान्तरम् । निर्घातनिःस्वनो घोरो जितवानवनीपते ॥ २४ ॥**

(**१ गुप्तवती**) निर्घातेति । देवीशक्त्या शुम्भशक्तेर्थः प्रतिघातस्तज्जन्यो निःस्वन एव शुम्भकृतसिंहनादापेक्षयाधिकं लोकान्व्याप्त इत्यर्थः ॥ २४ ॥

(**२ चतुर्धरी**) लोकत्रयस्य भूर्भुवःस्वर्लक्षणस्यान्तरं मध्यं । भुवर्लोक इति यावत् । निर्घातनिःस्वनः उत्पातध्वनिः जितवानभ्यसूयत । अर्थात् शुम्भस्य सिंहनादमिति शेषः । यो ध्वनिः शब्दः (सिंहनाद इति वेदितव्यः) तेन तादृगप्यस्य सिंहनादेन निर्घातध्वनिनाभिभूतं संकुलं अथवा शुम्भस्य तेन सिंहनादेन निर्घातनिःस्वन उत्पातनिःस्वनः उत्पातध्वनिर्जितवान् जितः अभिभूतः । कृद्व्यभिचारात्कर्मणि क्तवतुः ॥ २४ ॥

(**३ शान्तनवी**) हे अवनीपते हे सुरथ यद्यपि खलु शुम्भस्य सिंहनादेन कण्ठगर्जनेन लोकत्रयान्तरं जगतामन्तरालं भुवनत्रयमध्यं व्याप्तमाकीर्णमभूत् अथापि तत्तत्सैनिकानां यः घोरो भयंकरः निर्घातनिःस्वनः समजनिष्टः समजनितवान् शुम्भकृतसिंहनादमतिमहत्तरमपि तत्सैनिकनिर्घातस्य निःस्वनः निर्घातनिःस्वनः शब्दः यः खलु देवीं प्रति शुम्भसैनिकैः समररसावेशतः कण्ठतः कथितस्त्वां निर्जहि निर्जहि मारयमारयेति शब्दः समभूत्स निर्घातनिःस्वनोऽत्र विवक्षितः । अतश्च स एव शुम्भसिंहनादाधिकएव । घ्नन्ति शत्रूनेभिरिति निर्घाताः खड्गाद्यायुधसमूहाः तेषां निस्वनः निर्घातनिःस्वनः खड्गाद्यायुधसमूहानां संग्रामसज्जानां परस्पराहतिजनितो ध्वनिः शुम्भसिंहनादं लोकत्रयान्तरालं व्याप्तवन्तमपि ततोऽधिकतरत्वात्तं जितवानभिभूत् तिरोहितं चकारेत्यर्थः । अथवा आकस्मिक एव गगनादत्यायतज्योतिःपातो यः स निर्घातः सनिर्घातघोषः

तस्य यः स्यान्निस्वनो घोरः भयंकरः निर्घातनिःस्वन इव शुम्भस्य पातइवोत्पातः तस्य सिंहनादमधिकमप्यधिकत्वात्तं जितवानभ्यभूत् । तिरोहितं चकारेत्यर्थः । अथवा तस्य येन सिंहनादेन लोकत्रयान्तरं कवलितं समभवत्स खलु सिंहनादः घोरः भयंकरः निर्घातनिःस्वनो यदस्य शुम्भस्य पातयितोत्पातः । अतएव तमसुरं जितवाञ्जिगाय अभिभूतवान्पराजयं प्रापितवान् । यद्वा स एव सिंहनादः सकलदानवानां नाशोत्पातो निर्घातनिःस्वनः । संपाद्यमानः सन् अजितवान् न जनितवान् प्रकाशं प्रकर्षमप्राप्य ननाशेत्यर्थः । महाध्वनिर्घावापृथिवीव्यापी निर्घनगगनतः पतति य उत्पातोऽनर्थकरः स निर्घातः । पृषोदरादित्वात्साधुः । अथवा यस्य शुम्भस्य प्रथमतः प्रथमोच्चितेन सिंहनादेन लोकत्रयान्तरं व्याप्तं कवलितं स शुम्भः पश्चान्निर्घातनिःस्वनः समभूत् निर्घातस्येव निर्घनगगनतः प्रभ्रश्य ज्योतिर्मण्डलपातस्य दानवनाशकारिण उत्पातरूपस्येव निःस्वनो यस्य सः निर्घातनिःस्वनः । अघेन व्याप्तं पापेन कवलितं उरः प्रधानमङ्गं तेन उपलक्षितः सन् अजितवान् न अभिभूतवान् । देवीमिति शेषः । यद्वा येन सिंहस्य देवीवाहनस्य नादेन देवीकण्ठीरवकण्ठनादेन लोकत्रयान्तरं व्याप्तं कवलितं स एव जितवान्सन् लोकेषूत्कृष्टः सन् शुम्भस्य घोरः भयंकरः निर्घातनिःस्वनो बभूव । निर्घनगनतः पतन्महाज्योतिध्वनिर्निर्घातः निःस्वनो महोत्पातः पापात्मनामनभ्युदयकारीत्याहुः ॥ २४ ॥

**( ४ नागोजीभट्टी )** सिंहेति । उत्तरार्धस्य तथापीत्यादि । निर्घातनिःस्वनः उत्पातध्वनिः । जितवानित्यस्य शुम्भनादमिति शेषः ॥ २४ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** सिंहनादेनेति २६ ॥ २४ ॥

**( ६ दंशोद्धारः )** सिंहनादेति । लोकत्रयान्तरं भुवोर्लोकः निर्घातनिःस्वनः उत्पातशब्दश्च जितवान् । सिंहनादमिति शेषः । यद्वा सिंहनादेनैव निर्घातनिःस्वनो जितवान् जिग्ये । बाहुलकात्कर्मणि क्तवतुः ॥ २४ ॥

**शुम्भमुक्ताञ्शरान्देवी शुम्भस्तत्प्रहिताञ्शरान् । चिच्छेद स्वशरैरुग्रैः शतशोऽथ सहस्रशः ॥ २५ ॥**

**( १ गुप्तवती )** ॥ २५ ॥

**( २ चतुर्धरी )** तत्प्रहितान्देव्या प्रेषितान् ॥ २५ ॥

**( ३ शान्तनवी )** अथ देवी उग्रैः रौद्रैः स्वशरैः आत्मियैर्बाणैः शतशः शतं शतं सहस्रशः सहस्रं सहस्रं शुम्भमुक्तानुग्राञ्शरान् चिच्छेद द्विधा चकार । शतशः शहस्रश इत्यव्ययं । शरान्स्वशरैरिति चोभयविशेषणं यथायोगं द्रष्टव्यं । 'संख्यैक्यवचनाच्च वीप्सायां' इति शस् । अथ शुम्भश्च उग्रैः स्वशरैः तत्प्रहिताञ्शरान् तया देव्या प्रहितान्प्रेरितानुग्राञ्शरांश्चिच्छेद द्विधा चकार । खण्डयामास । शतं शतं शरान् स्वशरैः शतशः गतेन गतेन सहस्रशः सहस्रं सहस्रं स्वशरैः सहस्रेण सहस्रेण चिच्छेद इत्यनेन देव्याः शुम्भस्य च समं युद्धमुक्तं । शुम्भमुक्ता देवी देव्या मुक्तान् शुम्भश्च शरान्स्वैश्च स्वैश्च शरैश्चिच्छेद चिच्छेद वेति समत्वमेव तावदित्यर्थः ॥ २५ ॥

**( ४ नागोजीभट्टी )** शुम्भेति । अनेन देवीशुम्भयोः समयुद्धमुक्तम् ॥ २५ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** शुम्भमुक्तानिति २७ ॥ २५ ॥

**( ६ दंशोद्धारः )** ॥ २५ ॥

**ततः सा चण्डिका क्रुद्धा शूलेनाभिजघान तम् । स तदाभिहतो भूमौ मूर्छितो निपपात ह ॥ २६ ॥**

**( १ गुप्तवती )** ॥ २६ ॥

**( २ चतुर्धरी )** ततश्चानन्तरं भगवती क्रुद्धा सती त्रिशूलेन तं निशुम्भं जघान । सः निशुम्भः मूर्छितो विचेताः भूम्यां पतितः ॥ २६ ॥

**( ३ शान्तनवी )** सा चण्डिका देवी ततः शुम्भेन समरसाम्यतः तदसहमाना अतएव क्रुद्धा सती तं शुम्भदैत्यं शूलेनायुधेन अभिजघान आभिमुख्येन ताडयामास । स शुम्भः तदा तस्मिन्काले निहतः । यद्वा तदानिहतः तया देव्या चण्डिकया आनिहतः आसमन्तात् निहतः अतएव मूर्छितः सन् भूमौ रणक्षितौ निपपात नितरामपतत् । मूर्छा संजाता यस्येति मूर्च्छितः ह इति प्रसिद्धौ । सा तदा अनिहत इति तु छेदे तदा तस्मिन्काले देव्या शूलेन निहतः स शुम्भः अनिहतः नानिहतः न मारितः नापरासुः कृतः किं तर्हि संमूर्छितः सन्भूमौ निपपातेत्यर्थः ॥ २६ ॥

**( ४ नागोजीभट्टी )** तत इति । अभिहतः समन्ताद्धतोऽभिहतः ॥ २६ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** ततः सा चण्डिकेति २८ ॥ २६ ॥

**( ६ दंशोद्धारः )** ॥ २६ ॥

**ततो निशुम्भः संप्राप्य चेतनामात्तकार्मुकः । आजघान शरैर्देवीं कालीं केसरिणं तथा ॥ २७ ॥**

**( १ गुप्तवती )** ॥ २७ ॥

**( २ चतुर्धरी )** आत्तं गृहीतं कार्मुकं धनुर्येन ॥ २७ ॥

**( ३ शान्तनवी )** इदानीं ततः परशुहस्तमित्यत्र श्लोके प्राक् निशुम्भं देवी भूतले अपातयदित्युक्तं ततस्तस्य पुनरुज्जीवनपूर्वकं संग्रामारभणं प्रस्तोतुमाहार्षिः ततो भूतले पतनानन्तरं । यद्वा ततः शुम्भे मूर्च्छिते सति निशुम्भः प्राक् मूर्च्छितः पश्चाच्चेतनां संज्ञां प्राप्य आत्तकार्मुकः गृहीतशरासनः सन् । शरैर्देवीं चण्डिकां कालीं चामुण्डां तथा तद्वत्केसरिणं सिंहं च आजघान ताडयामास । 'आङो यमहनः' इति आत्मनेपदविधावकर्मकात् । सकर्मकत्वे तु आत्मनेपदं । 'आजघ्ने विषमविलोचनस्य वक्षः' इत्यत्र तु स्वाङ्गकर्मकत्वाच्चेति वक्तव्यादात्मनेपदं । वक्षसेत्यध्याहृत्य विषमविलोचनस्य वक्षसा सह संगत्य अर्जुनः स्ववक्ष आजघ्न इत्यर्थः । यद्वा विषमविलोचनस्य समीपो भूत्वा अर्जुनः स्वं वक्ष आजघ्ने आस्फोटितवानित्यर्थः ॥ २७ ॥

**( ४ नागोजीभट्टी )** तत इति । शुम्भमूर्च्छानन्तरं निशुम्भो यः पूर्वं मूर्च्छितः । आत्तं गृहीतम् ॥ २७ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** ततो निशुम्भ इति २९ ॥ २७ ॥

**( ६ दंशोद्धारः )** ॥ २७ ॥

**पुनश्च कृत्वा बाहूनामयुतं दनुजेश्वरः । शक्रायुधेन दितिजश्छादयामास चण्डिकाम् ॥ २८ ॥**

**( १ गुप्तवती )** ॥ २८ ॥

**( २ चतुर्धरी )** ॥ २८ ॥

**( ३ शान्तनवी )** दितेर्जातः असुरः दनोर्जाता दनुजाः दनुजानां ईश्वरः स्वामी दनुजेश्वरः स निशुम्भः मायावी पुनश्च बाहूनां दोष्णां अयुतं दशसहस्रं कृत्वा विधाय अयुतबाहुर्भूत्वा चक्रायुतेन चक्राणां आयुधानां अयुतेन दशसाहस्र्या साधनभूतया चण्डिकां देवीं छादयामास । छद संवरणे चुरादिः । संवृतांचकार । ताडयामासेत्यर्थः । रथाङ्गायुधसैन्येषु चक्रं राष्ट्रसमूहयोः । असुचचाशुगानस्यामत्युग्राग्राञ्जवायतान्' निशुम्भः सिंहनादं च चकारामरभीकरम् ॥ २८ ॥

**( ४ नागोजीभट्टी )** पुनरिति । दनोः पुत्रोपि दितिजसमानशीलत्वाद्दितिजः ॥ २८ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** पुनश्च कृत्वेति ३० ॥ २८ ॥

**( ६ दंशोद्धारः )** ॥ २८ ॥

**ततो भगवती क्रुद्धा दुर्गा दुर्गार्तिनाशिनी । चिच्छेद तानि चक्राणि स्वशरैः सायकांश्च तान् २९**

**( १ गुप्तवती )** ॥ २९ ॥

**( २ चतुर्धरी )** दुर्गार्तिर्दुःसह्या पीडा अथवा दुर्गे संकटे या आर्तिः पीडा तस्याः नाशिनी नाशनशीला । नाशनीति वा पाठः । सायकान् इषून् ॥ २९ ॥

**( ३ शान्तनवी )** ततोऽनन्तरं दुर्गार्तिनाशनी दुस्तरार्तिं नाशयन्ती दुरुत्तरदुःखदात्रिनी भगवती दुर्गा चण्डिका देवी क्रुद्धा क्रोधाविष्टा सती स्वशरैर्बाणैः तानि निशुम्भप्रेरितानि चक्राणि चिच्छेद । किंच निशुम्भप्रेरितान्सायकानाशुगांश्च चिच्छेद खण्डयामास । दुर्गा गहनाकृतिः आर्तिः पीडा तां नाशयन्ती दुःखेन गच्छन्त्यस्यां दुर्गा आर्तिः पीडा तां नाशयन्ती 'सुदुरोरधिकरणे च' इति गमेर्डः । 'आर्तिः पीडाधनुःकोट्योः' 'शरे खड्गे च सायकः' षोन्तकर्मणि । स्यति अन्तं कर्म करोति सायकः ॥ २९ ॥

**( ४ नागोजीभट्टी )** तत इति । दुर्गे संकटे आर्तेः पीडायाः नाशिनीति णिनिप्रत्ययः ॥ २९ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** ततो भगवतीति ३१ ॥ २९ ॥

**( ६ दंशोद्धारः )** तत इति । दुर्गार्तिर्दुःसहपीडा । यद्वा दुर्गे संकटे या आर्तिस्तस्या नाशिनी ॥ २९ ॥

**ततो निशुम्भो वेगेन गदामादाय चण्डिकाम् । अभ्यधावत वै हन्तुं दैत्यसेनासमावृतः ॥ ३० ॥**

**( १ गुप्तवती )** ॥ ३० ॥

**( २ चतुर्धरी )** ॥ ३० ॥

**( ३ शान्तनवी )** ततश्चक्राशुगभञ्जनतः निशुम्भो जवेन वेगेन त्वरया गदामादाय गृहीत्वा दैत्यसैन्यसमावृतः वेष्टितः

सन् चण्डिकां देवीं हन्तुं ताडयितुमभ्यधावत् । वै निश्चितमेतत् । धातु गतिशुद्ध्योः । स्वरितेत्त्वाल्लङ् आत्मनेपदं । 'जलप्रहारयोर्वेगः' इति ॥ ३० ॥

( ४ नागोजीभट्टी ) तत इति । दैत्यसेनया समावृतः ॥ ३० ॥

( ५ जगच्चन्द्रचन्द्रिका ) ततो निशुम्भो वेगेनेति ॥ ३२ ॥ ३० ॥

( ६ दंशोद्धारः ) ॥ ३० ॥

**तस्यापतत एवाशु गदां चिच्छेद चण्डिका । खड्गेन शितधारेण स च शूलं समाददे ॥ ३१ ॥**

( १ गुप्तवती ) ॥ ३१ ॥

( २ चतुर्धरी ) आपतत आगच्छतः ॥ ३१ ॥

( ३ शान्तनवी ) आपतत एव आद्रवत एव आगच्छत एव आपतनसमसमय एव तस्य निशुम्भस्य गदां चण्डिका देवी शितधारेण खड्गेन मण्डलाग्रेण आशु शीघ्रं चिच्छेद खण्डयामास ततश्च निशुम्भभग्नगदायुधः शूलं आयुधं समाददे संजग्राह । शूलं गृहीत्वा चण्डिकामाहन्तुं आडुढौके इति भावः । शिते निशिते तीक्ष्णे धारे स शितधारः 'अस्त्री शूलं रुगायुधं' । समाददे । आङो दोऽनास्यविहरणे आत्मनेपदं । यद्वा ङित्त्वादात्मनेपदम् ॥ ३१ ॥

( ४ नागोजीभट्टी ) ॥ ३१ ॥

( ५ जगच्चन्द्रचन्द्रिका ) तस्यापतत इति ॥ ३३ ॥ ३१ ॥

( ६ दंशोद्धारः ) ॥ ३१ ॥

**शूलहस्तं समायान्तं निशुम्भममरार्दनम् । हृदि विव्याध शूलेन वेगाविद्धेन चण्डिका ॥ ३२ ॥**

( १ गुप्तवती ) ॥ ३२ ॥

( २ चतुर्धरी ) वेगाविद्धेनात्यर्थं भ्रामितेन पतिता ॥ ३२ ॥

( ३ शान्तनवी ) चण्डिका देवी अमरार्दनं । अरिमर्दनमिति पाठे अर्द हिंसायां चुरादिः । अर्दयते हिनस्ति अर्दनः । नन्द्यादित्वाल्युः । युवोरनो णिलोपश्च । अमराणामर्दनः तं शूलहस्तं शूलं हस्ते यस्य तं निशुम्भं आयान्तं आगच्छन्तं वीक्ष्य वेगाविद्धेन संभ्रमेण स्वनवद्यथा स्यात्तदर्थमाविद्धेन भ्रामितेनोत्क्षिप्तेन गृहीतेन वा शूलेन आयुधेन हृदि वक्षसि विव्याध ताडयामास । व्यध ताडने । 'लिट्यभ्यासस्योभयेषां' इति संप्रसारणं । आविद्धेति क्त्वोल्यपि 'ग्रहीज्या' इत्यादिना संप्रसारणं । हृदीतिप्रकरणान्निशुम्भस्येति गम्यते । 'क्रियावाचित्वमाख्यातुमेकोत्राऽर्थः प्रदर्शितः । प्रयोगतोऽनुसर्तव्या अनेकार्था हि धातवः' । तेनाविद्धेति विवक्षितार्थसिद्धिः ॥ ३२ ॥

( ४ नागोजीभट्टी ) शूलेति । समायान्तं संमुखमायान्तं वेगाविद्धेन वेगाक्षिप्तेन ॥ ३२ ॥

( ५ जगच्चन्द्रचन्द्रिका ) शूलहस्तमिति ३४ ॥ ३२ ॥

( ६ दंशोद्धारः ) शूलेन वेगाविद्धेन वेगभ्रामितेन ॥ ३२ ॥

**भिन्नस्य तस्य शूलेन हृदयान्निःसृतोऽपरः । महाबलो महावीर्यस्तिष्ठेति पुरुषो वदन् ॥ ३३ ॥**

( १ गुप्तवती ) ॥ ३३ ॥

( २ चतुर्धरी ) तिष्ठेति वदन् अपरः पुरुषो हृदयान्निःसृत इत्यन्वयः ॥ ३३ ॥

( ३ शान्तनवी ) देव्या शूलेन भिन्नस्य विदारितस्य विद्धस्य तस्य निशुम्भस्य हृदयाद्वक्षसः उरःस्थलात्सकाशान्महाबलः महाप्राणसामर्थ्यः महावीर्यो महत्तरवीरकर्मा देवीं प्रति तिष्ठेति वदन् अतः क्व यास्यसि मदग्रतोऽद्येति भाषमाणः अपरः शूरः शुम्भादन्यः पुरुषः पुमान्निःसृतः निरगात् 'स्थौल्यसामर्थ्यसैन्येषु बलं ना काकसीरिणोः' । वीर्यं बलं प्रभावश्च । अपरः पुरुषः देहभेदेन अपरत्वं नतु निशुम्भरूपक्षेत्रज्ञत्वेन । अतएव न परः इत्यर्थोऽनुसंधेयः । 'क्षेत्रज्ञ आत्मा पुरुषः' 'पुरुषावात्ममानवौ' ॥ ३३ ॥

( ४ नागोजीभट्टी) ॥ ३३ ॥

( ५ जगच्चन्द्रचन्द्रिका ) भिन्नस्य तस्येति ३५ ॥ ३३ ॥

( ६ दंशोद्धारः) ॥ ३३ ॥

**तस्य निष्क्रामतो देवी प्रहस्य स्वनवत्ततः । शिरश्चिच्छेद खड्गेन ततोऽसावपतद्भुवि ॥ ३४ ॥**

( १ गुप्तवती ) ॥ ३४ ॥

( २ चतुर्धरी ) स्वनवत्सशब्दमिति क्रियाविशेषणम् ॥ ३४ ॥

**( ३ शान्तनवी )** खनवत् तत इति वदन् माया सर्वापि मन्मयी मन्मयीं मायां उपेत्य मामेव हन्तुं पुनरुदेष्यसि उदेहि पुनस्तर्हि प्रहरिष्यामीति हसित्वा तस्य निष्क्रामतः पुरुषस्य प्राक्तननिशुम्भशरीरात्तु निर्गच्छतः निशुम्भदैत्यावतारस्य शिरः मस्तकं खड्गेन चिच्छेद ततः शिरश्छेदाद्धेतोः शिरश्छेदानन्तरं वा असौ निशुम्भनामा दैत्यः भुवि रणक्षितौ अपतत्पततिस्म ॥३४॥

**( ४ नागोजीभट्टी )** खनवदिति प्रहस्येत्यस्य विशेषणम् ॥ ३४ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** तस्य निष्कामत इति ३६ ॥ ३४ ॥

**( ६ दंशोद्धारः )** ॥ ३४ ॥

**ततः सिंहश्चखादोग्रदंष्ट्राक्षुण्णमहीतलान् । असुरांस्तांस्तदा काली शिवदूती तथा परान् ॥ ३५ ॥**

**( १ गुप्तवती )** चखादेति । उग्राभिर्दंष्ट्राभिः क्षुण्णश्चूर्णीकृताः शिरोधरा ग्रीवा येषां तान् ॥ ३५ ॥

**( २ चतुर्धरी )** उग्रदंष्ट्राभिः क्षुण्णा शिरोधरा ग्रीवा उग्रमिति वा पाठे क्रियाविशेषणम् ॥ ३५ ॥

**( ३ शान्तनवी )** निशुम्भे निपातिते तदन्यांस्तदीयानसुरान्किं चकार देव्यतः परमित्यतश्चाहार्धः ततो निशुम्भपतनानन्तरं । यद्वा निशुम्भादपरान्कानप्यसुरान्सिंहो देवीवाहनं पञ्चास्यः चखाद भक्षयामास । कथंभूतान् उग्रान् रौद्रान् । यद्वा उग्रदंष्ट्राशिरोधरान् उग्राभिः रौद्राभिः क्षुण्णाः संपिष्टाः संचूर्णिताः शिरोधरा ग्रीवा येषां ते उग्रदंष्ट्राः क्षुण्णशिरोधराः तान् । शिरोधरः शिरोधिः । धरतीति धरः पचाद्यच् । शिरोधरः शिरो धरति बिभ्रतीति तु विग्रहे कर्मण्यण् स्यात् । ततः सिंहभक्षितेभ्योऽपरानसुरान् काली चामुण्डा चखाद भक्षयामास । तथा सिंहकालीखादितशेषा ये असुरा दैत्यास्तानसुरान् शिवदूती चखाद भक्षयामास । चण्डिका शक्तितो निष्क्रान्ता शक्तिर्देवता शिवदूतीत्युच्यते । उग्रमिति पाठे उग्रं रौद्रं कर्कशं भयंकरं यथा स्यात्तथा । दंष्ट्राक्षुण्णशिरोधरानसुरान् शिवा काली शिवदूती च चखादेत्यर्थः ॥ ३५ ॥

**( ४ नागोजीभट्टी )** तत इति । उग्रमिति क्रियाविशेषणम् । काली शिवदूती च चखादेत्यन्वयः ॥ ३५ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** ततः सिंहश्चेति ३७ ॥ ३५ ॥

**( ६ दंशोद्धारः )** तत इति । उग्रदंष्ट्राभिः क्षुण्णा शिरोधरा ग्रीवा येषां तान् । उग्रमिति पाठे क्रियाविशेषणम् ३५

**कौमारीशक्तिनिर्भिन्नाः केचिन्नेशुर्महासुराः । ब्रह्माणीमन्त्रपूतेन तोयेनान्ये निराकृताः ॥ ३६ ॥**

**( १ गुप्तवती )** नेशुः मृताः ॥ ३६ ॥

**( २ चतुर्धरी )** निराकृताः निर्ध्वस्ताः ॥ ३६ ॥

**( ३ शान्तनवी )** केचित्केपिचिन्महासुराः कौमार्याः शक्त्याः आयुधेन निर्भिन्नास्ताडिताः खण्डिताः सन्तः नेशुः । नश अदर्शने । अत्यन्तादर्शनमत्रादर्शनं । नश्यन्तिस्म । प्राणानत्याक्षुरित्यर्थः । अन्ये महासुराः केचित् ब्रह्माणीमन्त्रपूतेन ब्रह्माण्याः ब्रह्मशक्तेः देवतायाः मन्त्रः गुह्यभाषणीयो वर्णमयो निगमागमज्ञोपदेशगम्यः प्रणवादिः तेन पवित्रीकृतेन तोयेन वारिणा निराकृताः प्रमथादयस्ताः 'प्रत्यादिष्टो निरस्तः स्यात्प्रत्याख्यातो निराकृतः । अणशब्दार्थः । ब्रह्म अणति कथयति ब्रह्मा ब्रह्मणः परमेष्ठिन इयं ब्रह्माणी । कर्मण्यण् नादिवृद्धिः । संज्ञापूर्वको विधिरनित्य इति वचनात् । यद्वा सैव ब्रह्म अणति कथयति ब्रह्माणी । कर्मण्यणि स्त्रियां ङीप् । 'वेदस्तत्वं तपो ब्रह्म ब्रह्मा विप्रः प्रजापतिः' । तदित्थं ब्रह्मणोपि स्त्री ब्रह्माणी ज्ञेया ॥ ३६ ॥

**( ४ नागोजीभट्टी )** निराकृताः ध्वस्ताः । मन्त्रोऽत्र प्रणवः ३७ ॥ ३६ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** कौमारीशक्तीति ३८ ॥ ३६ ॥

**( ६ दंशोद्धारः )** ॥ ३६ ॥

**माहेश्वरी त्रिशूलेन भिन्नाः पेतुस्तथापरे । वाराहीतुण्डघातेन केचिच्चूर्णीकृता भुवि ॥ ३७ ॥**

**( १ गुप्तवती )** ॥ ३७ ॥

**( २ चतुर्धरी)** ॥ ३७ ॥

**( ३ शान्तनवी )** महेश्वरस्येयं शक्तिर्देवता माहेश्वरी । तस्यास्त्रिशूलं आयुधं तेन भिन्नाः विदारिताः संतः अपरे दैत्याः तथैव निशुम्भवदेव रणक्षितौ समरे निपेतुः पतन्तिस्म । चूर्णीकृताः । अवध्वंसिताः भुवि पेतुः ॥ ३७ ॥

**( ४ नागोजीभट्टी )** ॥ ३७ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** माहेश्वरीति ३९ ॥ ३७ ॥

**( ६ दंशोद्धारः )** ॥ ३७ ॥

**खण्डं खण्डं च चक्रेण वैष्णव्या दानवाः कृताः । वज्रेण चैन्द्रीहस्ताग्रविमुक्तेन तथा परे ॥३८॥**

**( १ गुप्तवती )** विनेशुर्मृताः । नष्टाः पलायिताः ॥ ३८ ॥

**( २ चतुर्धरी )** तथा खण्डं खण्डं कृताः ॥ ३८ ॥

**( ३ शान्तनवी )** विष्णोरियं वैष्णवी शक्तिर्देवता वैष्णवीतया वैष्णव्या चक्रेण वैष्णवेन आयुधेन केचिद्दानवाः असुराः खण्डं खण्डं कृताः खण्डत्वप्रकारं प्रापिताः खण्डिताः शकलीकृता इति यावत् । 'प्रकारे गुणवचनस्य' इति द्विर्वचनं । खण्डमिति पाठे तु 'कर्मधारयवदुत्तरेषु' इति कर्मधारयसमासत्वातिदेशात्सुपो लुप् । खण्डसदृशाः कृताः । खण्डं खण्डं कृता इत्यर्थः । प्रकारो भेदः सादृश्यं च । तदित्यसादृश्यं परिगृह्यते । नत्वत्र दानवा इति बहुवचनं । तथा प्रयोगदर्शनात् खण्डाः कृता इति भवितव्यम् । पुल्लिङ्गेन च कर्मधारयत्वातिदेशेऽपि खण्डखण्डाः कृता इति भवितव्यम् । पुल्लिङ्गेन च । अत्राहुः । खण्डशब्दस्य गुणवचनत्वाद्गुणमुक्त्वा गुणिनि यो वर्तते स गुणवचन इति गुणवचनस्य लक्षणं । तस्माद्गुणवचनक्रियया विशेषणं च भवतीति क्रियाविशेषणानां कर्मत्वं नपुंसकैकत्वं च भवति इति वक्तव्यमिति न बहुवचनान्तत्वं नापि पुल्लिङ्गत्वमिति । अन्ये आहुः । खण्डं खण्डं इति चक्रायुधप्रयोगमन्त्रोऽयं चतुरक्षर इति । तथा तद्वत् इन्द्रस्येयं शक्तिर्देवता ऐन्द्री ऐन्द्र्याः हस्तः तस्याग्रं तेन विमुक्तं प्रेरितं तेन वज्रेण अपरे दानवाः विनेशुः विनाशमगुः विनष्टाः ॥ ३८ ॥

**( ४ नागोजीभट्टी )** खण्डं खण्डं खण्डप्रकाराः खण्डस्य खण्डा वा यस्यां क्रियायां तथा कृताः । आद्ये 'प्रकारे गुणवचनस्य' इति द्वित्वम् । वज्रेण च खण्डं खण्डं कृत्वा इत्येव ॥ ३८ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** खण्डं खण्डं चेति ४० ॥ ३८ ॥

**( ६ दंशोद्धारः )** ॥ ३८ ॥

**केचिद्विनेशुरसुराः केचिन्नष्टा महाहवात् । भक्षिताश्चापरे कालीशिवदूतीमृगाधिपैः ॥ ३९ ॥**

**इति श्रीमार्कण्डेयपुराणे देवीमाहात्म्ये निशुम्भवधो नाम नवमोऽध्यायः ॥ ९ ॥**

**( १ गुप्तवती )** ॥ ३९ ॥ इति श्रीगुप्तवत्यां नवमोऽध्यायः ॥ ९ ॥

**( २ चतुर्धरी )** विनेशुर्मृताः नष्टाः अपसृताः । मृगाधिपः सिंहः ॥ ३९ ॥ इति श्रीचतुर्धरीटीकायां निशुम्भवधो नाम नवमोऽध्यायः ॥ ९ ॥

**( ३ शान्तनवी )** केचिदसुराः महाहवं महायुद्धं प्राप्य कर्मणि ल्यब्लोपे पञ्चमी । महाहवात् विनेशुः विध्वंसमगुः । प्राणानत्याक्षुः । केचिदसुराः महतः आहवाद्युद्धात्सकाशान्नष्टाः अदर्शनमगुः पलाय्य गताः । 'अभ्यामर्दसमाघातसंग्रामाभ्यागमाहवाः' । आह्वन्तेऽत्र योद्धुं प्रति भटानित्याह्वयः । अपरे निशुम्भसैन्ये अवशिष्टा असुराः सर्वेपि च काल्या चामुण्डया शिवदूत्या चण्डिका देहविनिष्क्रान्ता शक्तिः शिवदूती तया मृगाधिपः देवीवाहनीभूतः सिंहः तेन च भक्षिताः । कर्मणि क्तः । काली च शिवदूती च मृगाधिपश्च । चार्थे द्वन्द्वः । 'परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः' । एवं च निशुम्भे निशुम्भसैन्ये च देव्या संग्रामेन्यपाति ॥ ३९ ॥ इति श्रीमद्राजाधिराजश्रीमत्तोमरान्वयश्रीमदुद्धरणात्मजश्रीशन्तनुचक्रवर्तिविरचितायां शान्तनव्यां चण्डिकामाहात्म्यटीकायां निशुम्भवधविध्युपलक्षितो नवमोध्यायः ॥ ९ ॥

**( ४ नागोजीभट्टी )** विनेशुर्मृताः नष्टाः पलायिताः ॥ ३९ ॥ इति शिवभट्टसुतसतीगर्भजनागोजीभट्टकृते सप्तशतीव्याख्याने नवमोऽध्यायः ॥ ९ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** केचिद्विनेशुरिति ॥ ४१ ॥ ३९ ॥ इति श्रीभगीरथविरचिता कण्वगोविन्दकृतसप्तशतीमन्त्रहोमविभागकारिकाणां नवमाध्यायस्य जगचन्द्रचन्द्रिकाख्यटीकासंपूर्णा ॥ ९ ॥

**( ६ दंशोद्धारः )** केचिदिति । विनेशुर्मृताः नष्टाः पलायिताः । मृगाधिपः सिंहः ॥ ३९ ॥ इति श्रीदंशोद्धाराख्यसप्तशतीटीकायां नवमोऽध्यायः ॥ ९ ॥

---

## दशमोऽध्यायः १०

### ऋषिरुवाच ।

**निशुम्भं निहतं दृष्ट्वा भ्रातरं प्राणसंमितम् । हन्यमानं बलं चैव शुम्भः क्रुद्धोऽब्रवीद्वचः ॥ १ ॥**

**( १ गुप्तवती )** ॥ १ ॥

**( २ चतुर्धरी )** प्राणसंमितं जीवितसमं भ्रातरम् ॥ १ ॥

**( ३ शान्तनवी )** अथ शुम्भः दैत्येश्वरः प्राणसंमितं प्राणतुल्यं भ्रातरं निशुम्भं देव्या चण्डिकया निहतं व्यसूकृतं

मारितं दृष्ट्वा विलोक्य बलं च सैन्यं हन्यमानं । 'वर्तमानसामीप्ये वर्तमानवद्वा' इति कर्मणि लटः शानच् । हतं निहतं दृष्ट्वा क्रुद्धः क्रोधाविष्टः सन् देवीं वचः वचनमब्रवीत् । ब्रुविर्द्विकर्मकः । देव्या निशुम्भे निपातिते इति व्यपदेशमात्रमेतत् । स खलु मे प्राणभूतः स चाद्यो निहतो हतः मे प्राणा एव तया हताः किमतःपरमवशिष्टमिष्टमिति सूचयितुं प्राणसंमितमित्युक्तम् ॥१॥

**( ४ नागोजीभट्टी )** ऋषिरुवाच । निशुम्भमिति ॥ १ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** अथ दशमाध्यायस्य सप्तशतीमन्त्रहोमविभाग उच्यते । सार्धसप्तान्वितैर्विंशतिश्लोकैस्तु दशमेऽन्वित इति । अर्धसहिता ये सप्तश्लोकास्तैरन्वितैर्युक्तैः विंशतिश्लोकैः तु पुनः दशमेऽध्याये अन्वितः । सप्तविंशतिमन्त्रास्तु श्लोकरूपा इति । सप्तविंशतिमन्त्राः तु पुनः श्लोकरूपा अत्र वर्तन्ते इति । शेषः । ततोऽन्तिमार्धश्लोकात्मको मन्त्र इति ततः सप्तविंशतिश्लोकानन्तरं अन्तिमः चरमः अर्धश्लोकात्मकः अन्वितः सप्तविंशतिमन्त्रास्तु श्लोकरूपा इति । अन्तिमः पादद्वयात्मको मन्त्र इत्यर्थः । ऋष्युवाचद्वयं तथेति ऋषिरुवाचेति द्वौ मन्त्रौ ज्ञेयौ । अत्र रेफलोपश्छिन्त्यः । देव्युवाचद्वयं चेति । च पुनः देव्युवाचेति द्वौ मन्त्रौ । एवं द्वात्रिंशन्मन्त्रसंग्रह इति । एवंप्रकारेण द्वाभ्यामधिकाः त्रिंशद्ये मन्त्रास्तेषां संग्रहः कथितः । तथाहि ऋषिरुवाच १ । निशुम्भमिति २ ॥ १ ॥

**( ६ दंशोद्धारः )** निशुम्भमिति । प्राणसंमितं जीवनसमम् ॥ १ ॥

## बलावलेपाद्दुष्टे त्वं मा दुर्गे गर्वमावह । अन्यासां बलमाश्रित्य युध्यसे यातिमानिनी ॥ २ ॥

**( १ गुप्तवती )** ॥ २ ॥

**( २ चतुर्धरी )** ॥ २ ॥

**( ३ शान्तनवी )** शुम्भो देवीमाह । हे दुर्गे हे दुष्टे हे सर्वदानवनाशिनि सा त्वं गर्वमहंकारं मावह मा आश्रय । कस्माद्गर्वं मा आवह । बलावलेपात् । अवलेपोऽत्र लेपनं लेपः संबन्धः । अवकृष्ट आश्रितः संबन्धः अवलेपः । बलस्य सामर्थ्यस्यावलेपात्संबन्धात्संसर्गात् । 'अवलेपस्तु गर्वे स्यात्सुवर्णे भूषणेऽपि च' । अवलेपशब्दोऽत्र लेपनार्थः संबन्धार्थको ग्राह्यः । गर्वार्थे तु तस्मिन् गृह्यमाणे हे दुर्गे त्वं बलावलेपाद्बलगर्वात् । गर्वमावहेत्यनेनान्वयेन वियागर्वाद्गर्वं करोतीतिवदाधिक्यदोषः स्यात् । बलवद्गर्वमावहेत्येतावतैवं निराकाङ्क्षत्वस्य सिद्धत्वादवलेपादित्यस्याधिकत्वेन वैयर्थ्यं स्यात् । सा त्वमित्युक्तं । सा का इत्याह । या अन्यासां ब्रह्माणीप्रभृतीनां शक्तीनां बलं सामर्थ्यं पराक्रममाश्रित्य अतिमानिनी सती अतितरां अहंकारवती सती युध्यसे संग्रामं सेवसे तदित्थं कथयसि त्वं अतिमानिनी । यदन्यबलेन युध्यसे नतु स्वबलेनेति शुम्भाभिप्रायः । 'गर्वोऽभिमानोऽहंकारो मानश्चित्तसमुन्नतिः' । युध्यसे चेति पाठे चशब्दः स्वव्याघातकर्तां समुच्चिनोति देव्याः । तथाहि हे दुष्टे हे दुर्गे त्वं बलावलेपाद्बलस्य दर्पादौद्धत्याद्गर्वं मा आवह मा आश्रय । अथ च ते बलमेव नास्ति । कुतस्ते बलं यतस्ते बलावलेपः स्यात् । बलं तु तदन्यदीयं सैषा ते व्याहतिः । अन्यासां बलमाश्रित्य युध्यसेऽतिमानिनीति अतिमानिनी चेति यदन्यदीयबलेन युध्यसे कुतस्ते तर्हि अतिमानिनीत्वं । यद्यतिमानिनी त्वं कुतस्ते तर्हि योद्धुमन्यबलप्रश्रयणं युज्यते कर्तुं । तस्मादस्वाव्याघातात्समुच्चयप्रसङ्गो माभूदिति बलावलेपाद्गर्वं मावहेति शुम्भाभिप्रायान्तरमेतत् । अतिमानिनी इति संबुद्ध्यन्तत्वपाठे तु सोल्लुण्ठमेतत् । त्वं खल्वखिलैरपि शूरमानिभिरभिमुखीक्रियसे । हे अतिमानिनि इति संबोध्यसे । अथ तर्हि कथं त्वमन्यासां बलमाश्रित्य युध्यसे । अतस्ते कुतो मानः कुतस्तरां त्वं मानिनी कुतस्तमां वा त्वमतिमानिनीत्याहूयसे । ततस्तरां ततस्तमां च मा गर्वमावहेति शुम्भाभिप्रायान्तरमेतत् । अथ च त्वमसत्यसंधा ह्यसि यतस्ततो दुष्टासि । हे दुष्टे यदुक्तं त्वया यो मां जयति संग्रामे इति त्वया संग्रामे किं कृतं किंत्वन्यासां बलमासाद्य युध्यसे । काल्या खलु चण्डो मुण्डश्च निहतौ । तद्बलं खलु त्वत्सिंहेन संहृतं । रक्तबीजरक्तपानं खलु काली किल कलयामास । निशुम्भोऽपि खलु ब्रह्माण्यादीनां अन्यासां बलमाश्रित्य निपातितः । असद्बलान्यपि ताभिरेव विनिहतानि । ततस्तस्मात्संग्रामप्रतिज्ञा कदर्थिता त्वयेति साधूक्तं । हे दुष्टे इति शुम्भाभिप्रायान्तरमेतत् । अथ च लोकाः दुःखेन गच्छन्त्यस्यां सा दुर्गा हे दुर्गे इत्यभिमुखी किंक्रियसे संबोध्यसे इति यत्तच्च कुशलादिशब्दवद्व्युत्पत्तिमात्रमेव । अथवा नयगतार्थत्वाभावादाहूयसे मया तदाहूये दुर्गे इति अधुनैव खल्वेषा फले व्यक्तिर्भविष्यति यदहं त्वया निहतः स्यां स्यास्त्वं दुर्गैवेति शुम्भाभिप्रायान्तरमेतत् । देवीपार्षदैस्तु देवीं प्रति अन्यथाभिप्रायेणास्य श्लोकस्यार्थोऽभिधीयते । बलावलेपदुष्टे इत्येकपदं संबुध्यन्तं चैतत् । हे बलावलेपदुष्टे हे दुर्गे सा त्वं गर्वं दर्पं आवह आश्रयं कुरु अवलेपोऽहंकारः । अत सातत्यगमने । आङ्पूर्वः क्विप् । आसमन्तादभिव्याप्य अतति सततं गच्छति आत् । बले सैन्ये सामर्थ्येऽविषये अवलेपो गर्वो अहंकारो दर्पः बलावलेपेन बलगर्वेण आत् सततमुपप्रेतुमागत उपद्रोता यः स बलावलेपात् दैत्यउपद्रवकारी तस्मिन्विषये दुष्टासि सासंहर्त्रीबलावलेपदुष्टा एकं पदं । तस्याः संबोधनं हे बलावलेपदुष्टे । किंविशिष्टा त्वं मा लक्ष्मीः लोकमाता । किंविशिष्टा त्वं अन्यासां । द्वितीयान्तमेतत्पदमाकारान्तं । प्राणिहितमुत्पाद्य हिंसकं । श्वस प्राणने अनचेत्यत इत्ययं धातुः । अनति प्राणितीत्यनः (अनः पचाद्यजन्तः) अनाय प्राणिने हितः अन्यः । प्राणिहितं मुन्यादि । षोऽन्तकर्मणि

अदन्तत्वाच्छान्दसो विच् प्रयोगतो भाषायां च स्यात् । तं अन्यं प्राणिहितं मुन्यादि न स्यति न अन्तं नयति न नाशयति अन्यासाः । अन्यस्य प्राणिजातस्य मुन्यादेः असाः अहिंसका रक्षका अन्यसाः । तं अन्यासां । आकारान्तपुल्लिङ्गद्वितीयैकवचनान्तं पदं सोमपा इतिवत् । प्राणिहितं मुनिजनरक्षणमित्यर्थः । येन गर्वेण कृतप्राणिहितः मुनिजनादिः अन्तं नाशनं नीयते तं सर्वसात्विकलोकरक्षणे आवह आश्रयं कुर्वित्यर्थः । सा त्वमित्युक्तं सा का इत्याह । या त्वं बलमाश्रित्य सामर्थ्यमुपेत्य युध्यसे । युध संप्रहारे । अनुदात्तेत्वादात्मनेपदं । किंविशिष्टा त्वं । अतिमानिनी । मान पूजायां । माननं मानः भावे घञ् । सोऽस्त्यस्यां मानिनी । अतितरां मानिनी अत्यर्थं पूजायुक्तेत्यर्थः । इत्थमयं देवीष्टाभिप्रायो देवीपार्षदैरुदितोऽवधारणीयः । बलावलेपा दुष्टे त्वमिति पाठे बले विषये अवलेपेन दर्पेण आसमन्तात् दुष्टा विकृता विरुद्धा । तत्संबुद्धौ हे बलावलेपादुष्टे इति शुम्भानुकूलोऽर्थः । देव्यनुकूलोऽर्थस्त्वेषः । बलावलेपेन सामर्थ्यगर्वेण अदुष्टा अविकृता विकृतिरहिता तत्संबुद्धौ हे बलावलेपादुष्टे इत्युभयत्राप्यर्थभेदोऽवगन्तव्यः ॥ २ ॥

**( ४ नागोजीभट्टी )** बलेति । बलवर्गेण दुर्विनीते दुर्गे मा गर्वमावह । या त्वमतिमानिनी सती अन्यासां बलमाश्रित्य युध्यसे इत्यन्वयः ॥ २ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** बलावलेपेति ३ ॥ २ ॥

**( ६ दंशोद्धारः )** बलावलेपेति बलेनाऽवलेपो गर्वस्तेन दुष्टे ॥ २ ॥

## देव्युवाच ।

**एकैवाहं जगत्यत्र द्वितीया का ममापरा । पश्यैता दुष्ट मय्येव विशन्त्यो मद्विभूतयः ॥ ३ ॥**

**( १ गुप्तवती )** एकैवाहमिति । एकमेवाद्वितीयमिति श्रुतेरिति भावः । पश्येत्यस्यैता इत्येव कर्म । वाक्यार्थ एव वा कर्म ॥ ३ ॥

**( २ चतुर्धरी )** एका सजातीयविजातीयस्वगतभेदहीना । केति किंशब्दः क्षेपे । कापीति यावत् । अपरा अन्या । व्यतिरिक्तेति यावत् । अनुभूयमानभेदो न वास्तव इत्याह । पश्येति । एता ब्रह्माण्यां विशन्त्यः । व्यत्ययात्कर्मणि प्रथमा । यद्वा मय्येव विशन्त्यः सत्यः सन्ति एतत्पश्येति साध्याहारोऽन्वयः । मद्विभूतयो मच्छक्तयः ॥ ३ ॥

**( ३ शान्तनवी )** हे दुष्ट हे असूयक हे शुम्भ अत्रास्मिञ्जगति भुवनत्रयेऽपि अहमेकैव । एकमेवाद्वितीयमिति श्रुतेः परमात्मरूपाहमेकैवास्मि । यद्वा अहं अहंकाररूपा मायाकृतिश्चण्डिकाख्या एकैवाहमस्मि । मम देव्याः द्वितीया अपरा व्यक्तिः कास्ति । अस्तिचेत्कथंचन सा मदन्या नैव । हे दुष्ट हे शुम्भ इतः इतोऽवलोकय । एताः ब्रह्माणीप्रभृतिशक्तयः मद्विभूतयः मय्येव देव्यामेव विशन्त्यः सन्ति । मत्सकाशात् विविधा भूतिरुत्पत्तिः प्रादुर्भाव आसां ब्रह्माण्यादीनां ताः मद्विभूतयः । यद्वा मम देव्याः विभूतयः कायव्यूहसृष्टिसंपदः पश्य । मृगो धावतीतिवद्वाक्यार्थरूपं कर्मेह द्रष्टव्यं । एताः शक्तयः मत्कायव्यूहसिद्धिसंसिद्धसृष्टिसंपदः मद्विभूतयः मदवताराः मय्येव विशन्त्यः सन्तीति यत् । तत्पश्येत्यर्थः । अथवा जगदेव जगती एकैव जगती अहं अत्र ऐक्ये सति अत्रत्यामेकस्यां मयि जगत्यां ऐक्येन स्थितायां सत्यां अथ च अत्र एकाहमस्यां जगत्यां मयि च ऐक्येन स्थितायां सत्यां मत्तो जगतीतः सकाशात् जगतीतः मत्तः सकाशाच्च अपरा द्वितीया व्यक्तिः का मम स्यात् । न कापि । तस्माज्जगत्योरैक्यात् । हे दुष्ट हे असूयक हे शुम्भ इतः पश्य इतोऽवलोकय । एता मद्विभूतयः ब्रह्माण्यादयः मदंशप्रभवा मत्तेजोमय्य एव मय्येव विशन्त्यः प्रविशन्त्यः सन्तीति यत् तत्पश्येति वाक्यार्थरूपं पश्येत्यस्य कर्म । मृगा धावन्ति इतिवत् । 'जगतो नाहमन्या स्यां स्यान्मदन्यज्जगच्च न । जगतो मम चाप्यैक्याद्व्यक्तिरन्या ततोऽस्ति का । अहं च जगती चैका जगती मन्मयी यतः । दुग्धवद्दधि चाप्येकं दधि दुग्धमयं यतः । दुष्टेति । परस्त्रीलोलुपेन स्वस्त्री त्यक्तातु धैर्यतः । हन्ति वैवस्वतो राजा नृणामायुः शतं च यत् । सद्वाक्यं हि शिवेनोक्तं त्वया त्यक्तं दुरात्मना । अतस्त्वां शुम्भ हन्म्याजौ हतदैवं हतप्रभं' । इत्यभिप्रायतो देव्या हे दुष्टेत्यभिभाषितः । अथवैतन्न बोध्यं चेत्फले व्यक्तिर्भविष्यति ॥ ३ ॥

**( ४ नागोजीभट्टी )** देव्युवाच एकैवेति । एका स्वगतसजातीयादिभेदहीना । परमात्मस्वरूपत्वात् । अपरान्या मम सहायभूता द्वितीया कास्ति । न कापीत्यर्थः । अनुभूयमानस्तु भेदो न वास्तव इत्याह । पश्येति । वाक्यार्थस्य कर्मत्वं । मद्विभूतय इत्यनेन भेदं निरस्यति ॥ ३ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** देव्युवाचेति ४ । एकैवाहमिति ५ ॥ ३ ॥

**( ६ दंशोद्धारः )** एकैवेति । एका सजातीयविजातीयस्वगतभेदरहिता । अपरा मद्व्यतिरिक्ता का । किंशब्दः प्रश्ने आक्षेपे वा । न कापीत्यर्थः । साक्षादनुभूयमानोऽपि भेदो न वास्तव इत्याह । पश्येत्यादि ॥ ३ ॥

**ततः समस्तास्ता देव्यो ब्रह्माणीप्रमुखा लयम्। तस्या देव्यास्तनौ जग्मुरेकैवासीत्तदाम्बिका ४**

**( १ गुप्तवती )** तनौ लयं जग्मुरित्यन्वयः। स्तनाविति छेदे तु प्राप्येति शेषः॥ ४॥

**( २ चतुर्धरी )** तनौ शरीरे लयमाश्लेषमपृथग्भावं जग्मुरित्यन्वयः॥ ४॥

**( ३ शान्तनवी )** हे सुरथ ततः मय्येव विश्यन्त्यः सन्ति ताः शक्तयः इत्युक्तेरनन्तरं ताः समस्ताः अष्टौ ब्रह्माणीप्रमुखा ब्रह्माण्याद्याः शक्तयः देव्यो देवताः तस्या आद्याया देव्याश्चण्डिकाया एव तनौ तन्वां शरीरे लयं लीनतां एकतां जग्मुः प्रापुः। तदा तासां तया सहैक्योदयकाले अम्बिका चण्डिका देवी एकैवासीत्। अद्वितीया सा चण्डिकैवातिष्ठत् एकैव जाता॥ ४॥

**( ४ नागोजीभट्टी )** तत इति। तनौ शरीरे। लयं अपृथक्भावं। अनेन ब्रह्मादिभ्यः आविर्भूतानामप्यत्र लयदर्शनेन समस्तोपादानत्वमस्या एवेति दर्शयति। तच्च मूलशक्त्यभेदादित्युक्तम्॥ ४॥

**( ५ जगच्चन्द्रचन्द्रिका )** ततः समस्ता इति ६॥ ४॥

**( ६ दंशोद्धारः )**॥ ४॥

## देव्युवाच।

**अहं विभूत्या बहुभिरिह रूपैर्यदास्थिता। तत्संहृतं मयैकैव तिष्ठाम्याजौ स्थिरो भव॥ ५॥**

**( १ गुप्तवती )** यत् आस्थितेति छेदः। आजौ युद्धे॥ ५॥

**( २ चतुर्धरी )** विभूत्या ऐश्वर्येण तद्बहुभिः रूपैरवस्थानम्॥ ५॥

**( ३ शान्तनवी )** हे शुम्भ इह रणक्षितौ अहं चण्डिकादेवी बहुभिरनेकै रूपैः कृत्वा विभूत्या विभवेन विभुत्वेन ऐश्वर्यत्वेन वा यत् बहुलं अस्ति तं अङ्गीकृतवत्यस्मि तद्बहुलं मया संहृतं तानि बहूनि ब्रह्माण्यादिशक्तिरूपाण्युपसंहृतानि मया। तस्मादहमेकैव तिष्ठामि। हे शुम्भ त्वं आजौ युद्धे स्थिरो भव। यत्तदिति बहुत्वसामान्यमपेक्ष्यैकवचनं। आभिर्बहूनि रूपाणि उपसंहृतानि वर्जितानि मय्येवेत्यर्थः। तस्मादहमेकैव तिष्ठामि। आजौ युद्धे त्वं स्थिरो भव। आस्थितेति गत्यर्थाकर्मकसूत्रेण तिष्ठतेः कर्तरि क्तः। आजौ इत्येतत्पदं काकाक्षिगोलकन्यायेनोभयत्रापि संबध्यते। अहमेकैव तिष्ठाम्याजौ। त्वं स्थिरो भवेति उभयत्रापि संबन्धसंभवात्॥ ५॥

**( ४ नागोजीभट्टी )** देव्युवाच। अहमिति। अहं विभूत्यैश्वर्येण बहुभिः रूपैः यद्बहुलमास्थिता तद्बहुलं मया संहृतं। तस्मादहमेकैव तिष्ठामि। त्वमपि रणे स्थिरो भवेत्यर्थः। अनेनापि तदेव दृढीकृतम्॥ ५॥

**( ५ जगच्चन्द्रचन्द्रिका )** देव्युवाचेति ७। अहं विभूत्येति ८॥ ५॥

**( ६ दंशोद्धारः )** अहमिति। तत् बहुरूपावस्थानम्॥ ५॥

**ततः प्रववृते युद्धं देव्याः शुम्भस्य चोभयोः। पश्यतां सर्वदेवानामसुराणां च दारुणम्॥ ६॥**

**(१ गुप्तवती )**॥ ६॥

**( २ चतुर्धरी )** पश्यतामित्यनादरे षष्ठी॥ ६॥

**( ३ शान्तनवी )** ततोऽनन्तरं देव्याश्चण्डिकायाः शुम्भस्य चासुरस्य उभयोर्युद्धं प्रववृते प्रावर्तिष्ट। कीदृग्युद्धं। सर्वेषां देवानां सर्वेषामसुराणां च पश्यतामवलोकयतामुभयेषां दारुणं घोरं भयंकरं। यदि शुम्भो जेष्यति तदा देवानां भयं स्यात्। यदि च देवी जेष्यति तदा असुराणां देवीतो भयं स्यात्। तस्मादुभयेषां दारुणं। यद्वा पश्यतामित्युक्तत्वात्तद्द्रष्टॄणां भयहेतुस्तद्युद्धमित्यर्थः। उभयशब्दः संख्यावाचित्वाच्च वाच्यलिङ्गः। अतस्त उभयोर्देव्याः शुम्भस्य यल्लिङ्गं तदिह स्यादितीहोभयशब्दस्य स्त्रीपुंलिङ्गतावगन्तव्या॥ ६॥

**( ४ नागोजीभट्टी )** ऋषिरुवाच तत इति। पश्यतामित्यनादरे षष्ठी॥ ६॥

**( ५ जगच्चन्द्रचन्द्रिका )** ऋषिरुवाच ९। ततः प्रववृत इति १०॥ ६॥

**( ६ दंशोद्धारः )** तत इति। पश्यतामित्यनादरे षष्ठी। पुरत इति शेषो वा॥ ६॥

**शरवर्षैः शितैः शस्त्रैस्तथास्त्रैश्चैव दारुणैः। तयोर्युद्धमभूद्भूयः सर्वलोकभयंकरम्॥ ७॥**

**( १ गुप्तवती )**॥ ७॥

**( २ चतुर्धरी )** शितैस्तीक्ष्णैः। भूयो महत्। यद्वा भूयः पुनः॥ ७॥

**( ३ शान्तनवी )** भूयः बहुतरमित्यर्थः। भूपेति पाठे तु सुरथस्य राज्ञः संबोधनम्। हे भूप राजन्। सुदारुणैः

शरवर्षैः बाणवृष्टिभिः तयोः भूयः बहुतरं सर्वलोकभयंकरं युद्धमभूत् । तथा तद्वच्छितैः सुदारुणैर्घोरतरैरस्त्रैश्च मन्त्रवद्भिः सायकैः क्षेप्तव्यैः भूयो बहुतरं सर्वलोकभयंकरं युद्धमुभयोरभूत् । आयुधभेदादेव युद्धभेदः । आयुधसाम्ये तथास्त्रैश्चैव दारुणैरित्यपि पाठे स एवार्थः । तुल्यजातीयैरायुधैस्तौ युयुधाते । देवी च शुम्भश्चेत्यर्थः ॥ ७ ॥

**( ४ नागोजीभट्टी )** भूयः महत् ॥ ७ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** शरवर्षैरिति ११ ॥ ७ ॥

**( ६ दंशोद्धारः )** शरवर्षैरिति । शरवर्षादिभिर्भूयो महत् । यद्वा भूयः पुनः ॥ ७ ॥

## दिव्यान्यस्त्राणि शतशो मुमुचे यान्यथाम्बिका । बभञ्ज तानि दैत्येन्द्रस्तत्प्रतीघातकर्तृभिः ॥८॥

**( १ गुप्तवती )** ॥ ८ ॥

**( २ चतुर्धरी )** प्रागपि युद्धमासीत् तत्प्रती(कार)घातकर्तृभिरस्त्रैरिति विपरिणामेनान्वयः ॥ ८ ॥

**( ३ शान्तनवी )** अथ अम्बिका देवी दैत्येन्द्रविषये यानि शतं शतशः । दिव्यानि दिव्यमन्त्राणि सदैवतानि अस्त्राणि मुमुचे प्रयुयुजे प्रयुक्तवती तानि दैत्येन्द्रः शुम्भः तत्प्रतीघातकर्तृभिः तत्तदस्त्रविरोधिभिरस्त्रैर्बभञ्ज । भञ्जो आमर्दने । प्रतियोगैः खण्डयामास । आग्नेयास्त्राणि वारुणास्त्रैर्विघ्नितानि वारुणास्त्राणि वायव्यास्त्रैर्विघ्नितानि वायव्यास्त्राणि पन्नगास्त्रैः पवनाशनास्त्रैर्विघ्नितानि पन्नगास्त्राणि गारुडास्त्रैः पन्नगाशनास्त्रैर्विघ्नितानि चकार इत्यन्योन्यंप्रत्यस्त्राण्यस्त्रशास्त्रसिद्धान्यवगन्तव्यानि । शतंशतं शतशः । 'संख्यैकवचनाच्च वीप्सायां शस्' । दिव्येति'द्युप्रागपागुदक्प्रतीचो यत्' शैषिकः । मुमुचे । मुच्लृ मोक्षणे । तेषामम्बिकाप्रयुक्तास्त्राणां प्रतिघातः विघातः । 'उपसर्गस्य घञ्मनुष्ये बहुलं' । दीर्घः । तस्य कर्तृणि तैः 'जनिकर्तुः प्रकृतिः' इति लिङ्गात्समासः ॥ ८ ॥

**( ४ नागोजीभट्टी )** ॥ ८ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** दिव्यान्यस्त्राणीति १२ ॥ ८ ॥

**( ६ दंशोद्धारः )** ॥ ८ ॥

## मुक्तानि तेन चास्त्राणि दिव्यानि परमेश्वरी । बभञ्ज लीलयैवोग्रहुंकारोच्चारणादिभिः ॥ ९ ॥

**( १ गुप्तवती )** ॥ ९ ॥

**( २ चतुर्धरी )** तेन शुम्भेन लीलयाखेन । उग्रमिति क्रियाविशेषणम् । समस्तपक्षे हुंकारोच्चारणादेर्विशेषणम् ॥ ९ ॥

**( ३ शान्तनवी )** परमेश्वरी चण्डिकादेवी तेन च शुम्भेन मुक्तानि प्रेरितानि दिव्यानि दिवि भवान्यस्त्राणि उग्रहुंकारोच्चारणादिभिः लीलयैव अप्रयत्नेनैव बभञ्ज भनक्तिस्म खण्डयामास । आदिशब्दादस्त्रैश्च बभञ्ज । लीलया विलासेन चूर्णयामास । उग्रः रौद्रः हं इति शेषेणोच्चारणशब्दः । तदादिभिः अस्त्रैः परमा ईश्वरी परमेश्वरी । 'अश्नोतेराशुकर्मणि वरट् चेचोपधायाः' ॥ ९ ॥

**( ४ नागोजीभट्टी )** उग्रं च तत् हुंकारोच्चारणं च तदादिभूतं येषामस्त्राणाम् ॥ ९ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** मुक्तानि चेति १३ ॥ ९ ॥

**( ६ दंशोद्धारः)** मुक्तानीति । उग्रमिति क्रियाविशेषणं । समस्तपाठे हुंकारादेर्विशेषणम् ॥ ९ ॥

## ततः शरशतैर्देवीमाच्छादयत सोऽसुरः । सापि तत्कुपिता देवी धनुश्चिच्छेद चेषुभिः ॥ १० ॥

**( १ गुप्तवती )** ॥ १० ॥

**( २ चतुर्धरी )** ॥ १० ॥

**( ३ शान्तनवी )** ततः दिव्यास्त्रभञ्जनादनन्तरं सः असुरः शुम्भः देवीं चण्डिकां शराणां शतैरसंख्यैस्तैः शरशतैः शरसहस्रैश्च आच्छादयत । छद संवरणे चुरादिराङ्पूर्वः लट् । छादयामास । 'णिचश्च'इत्यात्मनेपदम् । साच देव्यपि तत्कुपिता तदिति हेतोः पृथक्पदं । तस्माच्छरशतैराच्छादनाद्धेतोः कुपिता क्रोधाविष्टा सती इषुभिर्बाणैः धनुश्चापं शुम्भस्य शरासनं चिच्छेद खण्डयामास । 'कलम्बमार्गणशराः पत्रीरोप इषुर्द्वयोः' । इषुभिरिति बहुवचनं । पुनः पुनः धनुश्छेदं पुनः पुनः धनुर्ग्राहं धनुश्छेदः । धनुश्छेदं संसूचयितुमाश्रितं । अन्यथैकस्य धनुषश्छेदे कर्तव्ये धनुश्चिच्छेद चेषुणा इत्येवं ब्रूयादनन्तामोघशक्तिकलाद्देवीविशेषणे ॥ १० ॥

**( ४ नागोजीभट्टी )** ततस्तस्मात्कुपिता धनुः इषुभिः सह ॥ १० ॥

**( ५ जगच्चन्द्रचन्द्रिका )** ततः शरशतैरिति १४ ॥ १० ॥

**( ६ दंशोद्धारः)** तत इति । तदित्यव्ययं तस्येत्यर्थः ॥ १० ॥

**छिन्ने धनुषि दैत्येन्द्रस्तथा शक्तिमथाददे । चिच्छेद देवी चक्रेण तामप्यस्य करेस्थिताम् ॥११॥**

( १ गुप्तवती ) ॥ ११ ॥

( २ चतुर्धरी ) तदित्यव्ययं । तस्येत्यन्वयः । तथा तेन प्रकारेण धनुषि छिन्ने इत्यन्वयः ॥ ११ ॥

( ३ शान्तनवी ) अथ दैत्येन्द्रः शुम्भः धनुषि शरासने देव्या छिन्ने सति तथा प्रकारेण खण्डिते सति तथा तद्वत् शक्तिरायुधं आददे संजग्राह । अथ देवी अस्य शुम्भस्य करे स्थितां प्रेषयितुं गृहीतां तां शक्तिमपि चक्रेणायुधेन चिच्छेद। खण्डीचकारेत्यर्थः । अपिशब्द उक्तसमुच्चये । धनुश्चिच्छेद तदनु शक्तिमपि तां चिच्छेद । समाददे इत्यपि पाठे स एवार्थः । 'कासूसामर्थ्ययोः शक्तिः' ॥ ११ ॥

( ४ नागोजीभट्टी ) छिन्ने इति । तथा तेन प्रकारेण छिन्ने धनुषीत्यन्वयः ॥ ११ ॥

( ५ जगच्चन्द्रचन्द्रिका ) छिन्ने धनुषीति १५ ॥ ११ ॥

( ६ दंशोद्धारः ) ॥ ११ ॥

**ततः खड्गमुपादाय शतचन्द्रं च भानुमत् । अभ्यधावत तां देवीं दैत्यानामधिपेश्वरः ॥ १२ ॥**

( १ गुप्तवती ) शतचन्द्रमिति चर्म । भानुमदिति विशेषणम् ॥ १२ ॥

( २ चतुर्धरी ) शतचन्द्रं कृत्रिमचन्द्रशतान्वितं चर्म भानुमत्तेजस्वि दैत्यानां येऽधिपास्तेषामपीश्वरः ॥ १२ ॥

( ३ शान्तनवी ) ततः शक्तिच्छेदानन्तरं दैत्यानामधिपेश्वरः धूम्रलोचनचण्डमुण्डरक्तबीजनिशुम्भादयः तेषामीश्वरः स्वामी शुम्भः खड्गं चन्द्रहासं उपादाय भानुकिरणयुक्तं शोभान्वितं शतचन्द्रं शतलिखिताश्चित्रिताश्चन्द्रा यस्मिन् । फलकमेतत् । तत् शतचन्द्रं फलकं च उपादाय गृहीत्वा तां देवीं हन्तुं अभ्यधावत् अढौकत् । धावु गतिशुद्ध्योः । स्वरितेत्वाल्लङात्मनेपदं । दैत्यानामधिपेश्वर इत्येकपदमंते नामप्रसिद्धिः ख्यातकीर्तिः न नाम अनाम अप्रसिद्धिरख्यातिरकीर्तिः । अनाम धीयते येषु अनामधयः अकीर्तयः धूम्रलोचनचण्डमुण्डरक्तबीजनिशुम्भादयो दैत्याः अकीर्तिभाजः दैत्येषु अनामधयो दैत्यानामधयः तान् दैत्यानामधीन् पाति रक्षति दैत्यानामधिपः 'आतोऽनुपसर्गे कः' । दैत्यानामधिपश्चासावीश्वरश्च ऐश्वर्योपेतः शुम्भः दैत्यानामधिपेश्वरः । अनामधय इत्यत्र 'कर्मण्यधिकरणे च' इति उपसर्गे घोः किः ॥ १२ ॥

( ४ नागोजीभट्टी ) तत इति । चर्म चेति चेनाश्वसारथ्योः समुच्चयः ॥ १२ ॥

( ५ जगच्चन्द्रचन्द्रिका ) ततः खड्गमिति १६ ॥ १२ ॥

( ६ दंशोद्धारः ) ॥ १२ ॥

**तस्यापतत एवाशु खड्गं चिच्छेद चण्डिका । धनुर्मुक्तैः शितैर्बाणैश्चर्म चार्ककरामलम् ॥ १३ ॥**

( १ गुप्तवती ) ॥ १३ ॥

( २ चतुर्धरी ) अर्ककरामलं सूर्यरश्मिवन्निर्मलम् ॥ १३ ॥

( ३ शान्तनवी ) चण्डिकादेवी तस्य आपतत एव सतः अढौकमानस्यैव शुम्भस्य आशु तत्क्षण एव तदा ढौकनसमय एव धनुर्मुक्तैः चापात्सकाशान्निर्गतैः शितैस्तेजसैः तीक्ष्णैः अर्ककरामलं अर्ककरैः संगतैः अलिप्तत्वात्प्रतिफलितकिरणत्वादमलमुज्वलं खड्गं चिच्छेद । अथ च बाणैः अर्ककरामलं प्रतिफलितैरर्कस्य करैः सह संपर्कलाभादमलमुज्वलं चर्म फलकं चिच्छेद। बाणैरिति बहुवचनात्खड्गफलकं च चूर्णयांचकारेति सूच्यते । फलकोऽस्त्री फलं चर्म । चर्ममयत्वाच्चर्म । स्वभावतः श्यामवर्णयोरपि तयोरपनीतपिधानत्वात्प्रतिफलितार्ककरसंपर्कलाभादर्ककरामलत्वं खड्गचर्मणोरुपपद्यते । धनुषो मुक्तैरुज्झितैः प्रेरितैः 'कुरण्टकेपि बाणः स्याद्बाणो बलिसुते शरे' । धनुर्ग्रहणादत्र शरो बाणो विवक्षितः । 'संभवे व्यभिचारे च स्याद्विशेषणमर्थवत्' । 'अश्वांश्च पातयामास रथं सारथिना सह' । सा देवी तस्य शुम्भस्य न केवलं खड्गं चर्म च चिच्छेद । अपिच अश्वांश्च छित्वा शरैः पातयामास । सारथिना सह यत्र सार्धं रथं च स्यन्दनं पातयामास । व्यत्यस्तावयवसंनिवेशं तं भ्रंशयांचकार ॥ १३ ॥

( ४ नागोजीभट्टी ) ॥ १३ ॥

( ५ जगच्चन्द्रचन्द्रिका ) तस्यापतत इति १७ ॥ १३ ॥

( ६ दंशोद्धारः ) ॥ १३ ॥

**हताश्वः स तदा दैत्यश्छिन्नधन्वा विसारथिः । जग्राह मुद्गरं घोरमम्बिकानिधनोद्यतः ॥ १४ ॥**

( १ गुप्तवती ) ॥ १४ ॥

( २ चतुर्धरी ) हताश्व इत्यादिना । अस्मिन्नवसरे अश्वादिवधोप्यभिधीयते हतासिरिति पाठस्तु न वृद्धसंमतः । विसारथिरिति सारथिर्हयनियामकः । मुद्गरं अयोलगुडम् ॥ १४ ॥

**( ३ शान्तनवी )** तदा सः शुम्भो दैत्यः तया देव्या हताश्वः नष्टरथः छिन्नधन्वा भग्नशरासनः विसारथिश्च विगतः व्यसुः सारथिर्यस्य स विसारथिः एवमवस्थः सन्नप्यम्बिकानिधनोद्यतः अतएव घोरं भीमं भयानकं मुद्गरं नाम लोहमयं घनं आयुधविशेषं जग्राह उपाददे । 'द्रुघने मुद्गरघनौ' । मुदं गिरति ग्रस्तेः मुद्गरः घनः 'वाद्ये मुस्तेऽम्बुदे सान्द्रे घनः स्याल्लोहमुद्गरे' । छिन्नं धनुर्यस्य स छिन्नधन्वा । अम्बिकायाः निधनं मृत्युः तत्र उद्यत उद्युक्तः अम्बिकानिधनोद्यतः । इति शुम्भाभिधातव्योऽर्थः । अम्बिकायाः सकाशात्प्राप्तमरणनिभं तत्र उद्यत उद्युक्तः इति देवीपार्षदाभिधातव्योर्थः । धन धान्ये । नि पूर्वाद्धनेर्मरणार्थे भावे ल्युट् । निवृत्तं धनमतोऽत्र वा निधनमित्यपरे व्यग्रहिषुः । 'अन्तो नाशो' द्वयोर्मृत्युर्मरणं निधनोऽस्त्रियाम् ॥ १४ ॥

**( ४ नागोजीभट्टी )** तदाह । हताश्व इति ॥ १४ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** हताश्व इति १८ ॥ १४ ॥

**( ६ दंशोद्धारः )** ॥ १४ ॥

## चिच्छेदापततस्तस्य मुद्गरं निशितैः शरैः । तथापि सोऽभ्यधावत्तां मुष्टिमुद्यम्य वेगवान् ॥१५॥

**( १ गुप्तवती )** ॥ १५ ॥

**( २ चतुर्धरी )** उद्यम्य प्रहाराभिमुखं कृत्वा देव्या हृदय इत्यन्वयः ॥ १५ ॥

**( ३ शान्तनवी )** अपि ततः अढौकमानस्य तस्य शुम्भस्य मुद्गरं द्रुघनं नामायुधं निशितैः तैजसैस्तीक्ष्णैः शरैः देवी चिच्छेद । तथापि भग्नमुद्गरः सन्नपि शुम्भः वेगवान् । जवोपेतः सन् तां देवीं अभ्यधावत् । हन्तुं मुष्टिमुद्यम्य अढौकत् । सर्तेर्वेगितायां गतौ धावादेशो वक्तव्यः । यद्वा धावु गतिशुद्ध्योः स्वरितेत्त्वादुभयपदी । 'लक्ष्यदृष्ट्या स्त्रियां पुंसि मुष्टिशब्दः प्रकीर्तितः' ॥ १५ ॥

**( ४ नागोजीभट्टी )** ॥ १५ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** चिच्छेदापतत इति १९ ॥ १५ ॥

**( ६ दंशोद्धारः )** ॥ १५ ॥

## स मुष्टिं पातयामास हृदये दैत्यपुङ्गवः । देव्यास्तं चापि सा देवी तलेनोरस्यताडयत् ॥ १६ ॥

**( १ गुप्तवती )** ॥ १६ ॥

**( २ चतुर्धरी )** सा देवी तमपि तलेन प्रतलेन उरसि हृदयेऽताडयत् । दैत्यपुङ्गवः शुम्भः देव्या हृदये मुष्टिं पातयामास ॥ १६ ॥

**( ३ शान्तनवी )** देव्या स दैत्यपुङ्गवः शुम्भः श्रेष्ठो दैत्यः युद्धे देव्या हृदये वक्षसि मुष्टिं रत्निं बद्धाङ्गुलिसन्निवेशं बद्धाङ्गुलिग्रन्थिं पातयामास प्रयुक्तवान् । 'अक्लीबे मुष्टिरत्नी द्वौ' । पुमान् गौः पुंगवः । 'गोरतद्धितलुकि' इति टच् समासान्तः । दैत्यपुङ्गव इव बलवान्दैत्यपुङ्गवः । 'स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जराः । सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थगोचराः' । 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे समस्यते । तं सा च देवी तलेन करतलेन चपेटतलेन तमपि शुम्भमपि उरसि वक्षसि अताडयत् । तड आघाते चुरादिः । कर्तरि लङ् । 'अस्त्री तलमधोदेशे स्वरूपे पृष्ठके तलं । वितस्तौ च चपेटे च तलो ज्यारक्षणे तलम् ॥ १६ ॥

**( ४ नागोजीभट्टी )** स मुष्टिमिति । देव्या हृदये इत्यन्वयः । तलं प्रसृतचपेटः ॥ १६ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** स मुष्टिमिति २० ॥ १६ ॥

**( ६ दंशोद्धारः )** ॥ १६ ॥

## तलप्रहाराभिहतो निपपात महीतले । स दैत्यराजः सहसा पुनरेव तथोत्थितः ॥ १७ ॥

**( १ गुप्तवती )** ॥ १७ ॥

**( २ चतुर्धरी )** सहसा तत्क्षणात् ॥ १७ ॥

**( ३ शान्तनवी )** स दैत्यराजः दैत्यानां राजा शुम्भः । 'राजाहःसखिभ्यष्टच्' समासान्तः । देवीकृतेन तलप्रहारेण चपेटघातेन अभिहतः वक्षसि ताडितः महीतले भूपृष्ठे निपपात बभ्रंश । अथ स दैत्यराजः शुम्भः सहसा वेगेन अतर्क्येन बलेन च पुनस्तथैव निपतनात्प्रागिव उत्थितः उदस्थादुच्चकैः स्थितिमाप । अतर्किते तु सहसा अव्ययं । सहाव्ययं । तथा च सहसा कृतमित्यर्थः । 'ओजःसहोम्भस्तमसस्तृतीयाया अलुक् । स दैत्यराजः सहसा तथापतनात्प्रागिव पुनरुत्थित एव अतर्कितमुदस्थादेव ॥ १७ ॥

( ४ नागोजीभट्टी ) ॥ १७ ॥

( ५ जगच्चन्द्रचन्द्रिका ) तलप्रहारेति २१ ॥ १७ ॥

( ६ दंशोद्धारः ) ॥ १७ ॥

**उत्पत्य च प्रगृह्योच्चैर्देवीं गगनमास्थितः । तत्रापि सा निराधारा युयुधे तेन चण्डिका ॥ १८ ॥**

( १ गुप्तवती ) ॥ १८ ॥

( २ चतुर्धरी ) उत्पत्य ऊर्ध्वं गत्वा प्रगृह्यादाय उच्चैरत्यर्थं देवीं प्रगृह्योच्चैरुत्पत्य गगनमास्थित इत्यन्वयः । तत्र गगनेऽपि निराधारा स्वप्रयत्नेतरपाताभावहेतुहीना तेन शुम्भेन सह ॥ १८ ॥

( ३ शान्तनवी ) महीतलादुत्पत्य उड्डीय देवीं प्रगृह्य गृहीत्वा उच्चैर्गगनमाकाशमास्थित आरूढवान् आश्रितः । आङ्-पूर्वात्तिष्ठतेः सकर्मकात् गत्यर्थाकर्मकसूत्रेण कर्तरि क्तः । आस्थितवान् । आङः स्थः प्रतिज्ञानमर्थः । गगनं स्थानत्वेन प्रतिज्ञातवान् । आश्रितवानित्यर्थः । तत्रापि गगनेपि सा चण्डिका देवी निराधारा निरधिकरणा सत्येव तेन शुम्भेन सह युयुधे । युध संप्रहारे । अनुदात्तेत्त्वादात्मनेपदं । संप्रजहार । यद्वा तत्रापि गगने सा देवी अम्बिका निराधारा अन्तर्गत-ब्रह्माणी वैष्णवी कौमारीरूपै रूपित्वा हंसगरुडमयूरवाहनतया आधारसहितैव चण्डिकेति सुहृद्भी रहस्यमूहनीयं । यद्वा 'नि-र्निश्चयनिषेधयोः' निश्चयश्चावाध्याध्यव्यवसायः । निराधारा अहमेव सर्वशक्तिसमन्विता शत्रूनुपसंहरिष्यामीति निश्चयज्ञा-नाधारा चण्डिका । यद्वा चण्डिका शब्दब्रह्मरूपतया आकाशास्थिततया साधारत्वादनिराधारा । यद्वा शब्दब्रह्म मन्त्रतत्त्वं मन्त्रतत्त्वं च चण्डिका चण्डिका चाकाशरूपा आकाशरूपं च विभु विभु च निराधारमिति विभूतयश्चेयं देवतासर्वात्मतया-युक्ता मेवैतच्चण्डिका भगवती निराधारेति ॥ १८ ॥

( ४ नागोजीभट्टी ) उच्चैर्गगनं इत्यन्वयः । आस्थित आश्रितवान् । निराधारा स्वप्रयत्नेतरपाताभावहेतुहीना तेन शुम्भेन ॥ १८ ॥

( ५ जगच्चन्द्रचन्द्रिका ) उत्पत्येति २२ ॥ १८ ॥

( ६ दंशोद्धारः ) उत्पत्येति । उच्चैरुत्पत्य देवीं प्रगृह्य गगनमास्थित इत्यन्वयः। निराधारा स्वभावातिरिक्तयानाभा-वहेतुहीना ॥ १८ ॥

**नियुद्धं खे तदा दैत्यश्चण्डिका च परस्परम् । चक्रतुः प्रथमं युद्धं मुनिविस्मयकारकम् ॥ १९ ॥**

( १ गुप्तवती ) ॥ १९ ॥

( २ चतुर्धरी ) नियुद्धं बाहुयुद्धं खे व्योम्नि चक्रतुरिति क्रियाव्यतिहारेपि परस्पराच्छेदादात्मनेपदाभावः । प्रथमं प्राक् । सिद्धाः देवयोनिविशेषाः ॥ १९ ॥

( ३ शान्तनवी ) तदा तस्मिन् गगनारोहणकाले प्रथमं प्रथमतः खे आकाशे दैत्यः शुम्भः चण्डिका च दुर्गा पर-स्परं अन्योन्यं नियुद्धं बाहुयुद्धं नाम प्रथमं युद्धं चक्रतुः चक्राते विदधाते । कीदृक् नियुद्धं सिद्धमुनिविस्मयकारकं सिद्धाश्च मुनयश्च सिद्धमुनयः । ननु च द्वन्द्वे घिपूर्वं स्यात् । नैतत् । प्राप्तस्य च बाधास्त्येवेति । यद्वा सिद्धैः सहिता मुनयः सिद्धामुनयः तेषां सिद्धानां प्राप्ताखिलसिद्धिसिद्धानां विश्वावसुप्रभृतीनां मुनीनां च नारदादीनां देवर्षीणां पश्यतां विस्मयस्याद्भुतस्याश्च-र्यस्य कारकमुपजनकं । इह केचित्सिद्धमपनीय युद्धं पेठुः । नियुद्धं नाम युद्धं प्रथमं चक्रतुरित्यर्थः । केचित्तु प्रथममपनीय पेठुः । कर्मव्यतिहारे सर्वनाम्नो द्वे भवतः । 'समासवच्च बहुलं' इति सुडामौ । परस्य क्रियाः परः करोति परस्यापि परः परस्परम् ॥ १९ ॥

( ४ नागोजीभट्टी ) नियुद्धं बाहुयुद्धं तद्विशेषणं । प्रथममिति मुख्यार्थकम् । सिद्धाः देवयोनिविशेषाः । मुनयो ऋषयः ॥ १९ ॥

( ५ जगच्चन्द्रचन्द्रिका ) नियुद्धमिति २३ ॥ १९ ॥

( ६ दंशोद्धारः ) नियुद्धमिति । बाहुयुद्धं । परस्परमित्यनेनैव क्रियाविनिमयस्योक्तत्वाच्चक्रतुरित्यत्र कर्मव्यतिहारे न तङ् ॥ १९ ॥

**ततो नियुद्धं सुचिरं कृत्वा तेनाम्बिका सह । उत्पात्य भ्रामयामास चिक्षेप धरणीतले ॥ २० ॥**

( १ गुप्तवती ) उत्पात्य शुम्भस्य कञ्चिदवयवं धृत्वा स्वमस्तकादुपरिभागे उत्तोल्य ॥ २० ॥

( २ चतुर्धरी ) उत्पात्य ऊर्ध्वं नीत्वा । उत्पाठ्येति वा पाठः । धरणीतले धरणीतलमधःप्रदेशः । 'अधः स्वरूपयोरस्त्री' इति नामशासनात् ॥ २० ॥

( ३ शान्तनवी ) अम्बिकादेवी तेन शुम्भेन महासुरेण सह सुचिरं चिरतरं कालं नियुद्धं बाहुयुद्धं कृत्वा निवृत्य ततोऽनन्तरं पश्चात्तं शुम्भं दैत्यं उत्पात्य उत्क्षिप्य चरणमुद्धृत्य भ्रामयामास । ततो भ्रामयित्वा तं शुम्भं वलयाकारेणोद्धृत्य भ्रामयित्वा धरणीतले भुवि चिक्षेप पातयामास । इह भ्रमेण वमन्तत्वान्मित्वात् 'मितां ह्रस्वः' इति ह्रस्वत्वं । भ्रमयामासेति सभ्यः पाठः । यद्वा वेत्यनुवर्त्य मितां ह्रस्वः । सा च व्यवस्थितविभाषा । तेन क्वचित्प्रयोगे पुराणादौ संक्रामयतीतिवद्भ्रामयामासेत्यपि सभ्यः पाठः । इह उत्पाद्य उत्पात्य उक्षिप्य इति पाठत्रयं । भ्रमु अनवस्थाने णेरयादेशः । क्षिप प्रेरणे लिट् ॥ २० ॥

( ४ नागोजीभट्टी ) उत्पात्य कन्दुकवदुपरि क्षिप्तः पतनसमये चरणमुद्धृत्य भ्रामयामास । धरणीतले चिक्षेप चेत्यर्थः ॥ २० ॥

( ५ जगच्चन्द्रचन्द्रिका ) ततो नियुद्धमिति २४ ॥ २० ॥

( ६ दंशोद्धारः ) तत इति । उत्पाद्य ऊर्ध्वं नीत्वा ॥ २० ॥

**स क्षिप्तो धरणीं प्राप्य मुष्टिमुद्यम्य वेगतः । अभ्यधावत दुष्टात्मा चण्डिकानिधनेच्छया ॥२१॥**

( १ गुप्तवती ) अत्र देव्युवाचेति मन्त्रद्वयस्याव्यवधानेन स्वीकरणं वचनबलान्न दुष्यति तदुपपत्तये ऋषिरुवाचेति पठनीयं । ततः समस्ता इत्यस्य वस्तुतः ऋषिवाक्यत्वेनैव तदुपपत्तेः ॥ २१ ॥

( २ चतुर्धरी ) वेगितो वेगयुक्तः ॥ २१ ॥

( ३ शान्तनवी ) देव्या भगवत्या क्षिप्तः स दुष्टात्मा तु शुम्भः धरणीं प्राप्य वेगितः संजातवेगः सन् । वेगत इति पाठे वेगात् । वेगवानिति पाठे वेगयुक्तः । चण्डिकानिधनेच्छया मुष्टिमुद्यम्य उत्क्षिप्य उद्यतं कृत्वा अभ्यधावत । चण्डिकामाहन्तुं मुष्टिमुद्यतं कृत्वा आभिमुख्येन अद्रवदढौकत् । धावु गतिशुद्ध्योः स्वरितेत्त्वादात्मनेपदं लङ् । देवीष्टार्थ उच्यते । चण्डिकायाः निधनं मरणं तत्रेच्छया यतः मुष्टिमुद्यम्य वेगादभ्यधावत् । इति शुम्भेष्टार्थः । देवीसखीष्टार्थस्तु चण्डिकायाः सकाशात्प्राप्तव्यं यन्निधनं मरणं तत्रेच्छया यतः अभ्यागच्छत् । अन्यथा पलाय्य चेद्गच्छेत असौ न म्रियेतैवेति । दुष्ट आत्मा स्वभावो यस्य स दुष्टात्मा । 'आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म च' ॥ २१ ॥

( ४ नागोजीभट्टी ) ॥ २१ ॥

( ५ जगच्चन्द्रचन्द्रिका ) स क्षिप्तो धरणीमिति २५ ॥ २१ ॥

( ६ दंशोद्धारः ) ॥ २१ ॥

**तमायान्तं ततो देवी सर्वदैत्यजनेश्वरम् । जगत्यां पातयामास भित्त्वा शूलेन वक्षसि ॥ २२ ॥**

( १ गुप्तवती ) ॥ २२ ॥

( २ चतुर्धरी ) जगत्यां पृथिव्याम् ॥ २२ ॥

( ३ शान्तनवी ) सर्वेषां दैत्यानां जनानामीश्वरो राजा ततो देवी सर्वदैत्यजनेश्वरं सर्वासुरपतिं आयान्तं शुम्भं वक्षसि उरसि शूलेन भित्त्वा विदार्य जगत्यां भूमौ पातयामास भ्रंशयांचकार । 'जगती जगतिछन्दे विशेषेऽपि क्षितावपि' २२

( ४ नागोजीभट्टी ) ॥ २२ ॥

( ५ जगच्चन्द्रचन्द्रिका ) तमायान्तमिति २६ ॥ २२ ॥

( ६ दंशोद्धारः ) ॥ २२ ॥

**स गतासुः पपातोर्व्यां देवीशूलाग्रविक्षतः । चालयन्सकलां पृथ्वीं साब्धिद्वीपां सपर्वताम् ॥२३॥**

( १ गुप्तवती ) ॥ २३ ॥

( २ चतुर्धरी ) स शुम्भः गतासुर्मृतः उर्व्यां भूमौ शूलाग्रं शूलमुख्यं । अग्रपदस्यापि मुख्यवचनत्वात् देव्याः शूलाग्रेण विक्षतः विशेषेण चूर्णितः बभूव इति पूर्वेणान्वयः । चालयन् कम्पयन् सपूर्वकलाद्रस्वाभावः । चलनं चालस्तं करोतीति इनन्ताच्छतृङ् ॥ २३ ॥

( ३ शान्तनवी ) देव्याः शूलमायुधं तस्याग्रं तेन विशेषेण क्षतः हिंसितः हतः ताडितः । क्षिणु हिंसायां । द्वावपि णान्तौ तनादी । तेन विक्षितः विक्षतः इति पाठद्वयं । कर्मणि क्तः । 'अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति' । स शुम्भः गतासुः निर्गतप्राणः सन् उर्व्यां भूमौ पपात । किंकुर्वन् सकलां पृथ्वीं चालयन् स्थानान्तरं प्रापयन् कथंभूतां पृथ्वीं । साब्धिद्वीपां सपर्वतां समुद्रद्वीपपर्वतैः सहवर्तमानां तां चालयन् इति । चल कम्पने । णिचि कम्पने चलिर्मित् । वायुश्चलति वल्लीं ईषत्कम्पयति । अन्यत्र न मित् । वायुश्चालयति वारिदश्रेणीं देशान्तरं प्रापयतीत्यर्थः । अत्र तु

स्थानान्तरप्रापणं प्रापधात्वर्थः । तेनात्र मित्त्वाभावाद्ध्रस्वत्वाभावः । कश्चित्त्वाह । चलनं चालः तं करोति णिच् । चलः शतृप्रत्ययः । प्रयोजनव्यापाराभावाण्णिचोऽत्रासंभवादिति । तन्न । मृतस्याप्युपचारात्स्वाभाव्याद्वा प्रयोजकव्यापारसंभवात् मृतः पुत्रो मातरं रोदयति धनमानन्दयतीतिवत् । मृताचेतनयोरप्यस्त्येव प्रयोजकव्यापार इति प्रागुक्त एव । मित्त्वाभावाभावोपाय आश्रयितव्यः ॥ २३ ॥

**( ४ नागोजीभट्टी )** ॥ २३ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** स गतासुरिति २७ ॥ २३ ॥

**( ६ दंशोद्धारः )** स गतासुरिति । चालयन्कम्पयन् । कम्पने चलिरिति मित्त्वान्मितां ह्रस्वः प्राप्तोपि संज्ञापूर्वकविधेरनित्यत्वान्न भवति । यद्वा चलनं चलस्तं कुर्वन्निति॒न्नन्ताच्छता ॥ २३ ॥

**उत्पातमेघाः सोल्का ये प्रागासंस्ते शमं ययुः । सरितो मार्गवाहिन्यस्तथासंस्तत्र पातिते ॥ २४ ॥**

**( १ गुप्तवती )** ॥ २४ ॥

**( २ चतुर्धरी )** उत्पातसूचका मेघाः । उल्का दिव्यमुक्तं प्राक् । तत् शुम्भादिवधाच्छममुपशान्तिं प्रापुः । सरितो नद्यः याहि प्रागुत्पथगामिन्य आसन् ताः तत्र शुम्भे निपातिते मारिते सति मार्गवाहिन्यः अभवन् ॥ २४ ॥

**( ३ शान्तनवी )** प्राक् शुम्भासुरमरणात्पूर्वं सोल्काः उल्कासहिताः ये उत्पातमेघा आसंस्तेऽधुना शुम्भासुरे मृते सति शमं शान्तिं ययुः । शुभाशुभसूचक उत्पाताः तदर्थाः मेघास्तन्मेघाः देवलोकशुभाय दैत्याशुभाय च आगतास्तादृशा मेघाः शान्तिमगमन्निति भावः । उल्का ज्वाला । स्त्रीलिङ्ग उल्काशब्दः । यदभ्यधुः । 'लङ्का शेफालिका टीका धातकीयं च काकिका । सिन्धूका शारिका हिक्का प्राचिकोल्का पिपीलिका' । देव्या शुम्भे निपातिते सति तथा अनाकुलाः सरितो नद्यः मार्गवाहिन्यः मार्गगा आसन् । पूर्वमाकुलत्वान्नद्यधिदेवताः स्वस्वप्रवाहसहिताः अधुना तद्वैपरीत्यमिता इति भावः । मार्गे वहन्ति स्रवन्ति मार्गवाहिन्यः । सरितो मार्गवाहिन्यस्तथासंस्तत्र पातिते इति पाठान्तरेऽपि स एवार्थः ॥ २४ ॥

**( ४ नागोजीभट्टी )** उत्पातेति । उत्पातसूचका मेघाः शुभा देवानां दैत्यानामशुभाश्च उल्का दिव्यतेजः । प्राक् शुम्भवधात् । तथा तद्वत्सरितो मार्गवाहिन्यः न पूर्ववदुत्पथगामिन्य आसन् । तत्र शुम्भे ॥ २४ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** उत्पातमेघा इति २८ ॥ २४ ॥

**( ६ दंशोद्धारः )** ॥ २४ ॥

**ततः प्रसन्नमखिलं हते तस्मिन्दुरात्मनि । जगत्स्वास्थ्यमतीवाप निर्मलं चाभवन्नभः ॥ २५ ॥**

**( १ गुप्तवती )** ॥ २५ ॥

**( २ चतुर्धरी )** अखिलमशेषं प्रसन्नं प्रकाशीभूतं स्वास्थ्यमनाविलत्वं आप प्राप्तं । निर्मलं प्रसन्नं नभ आकाशमभवत् ॥ २५ ॥

**( ३ शान्तनवी )** जगत्स्वास्थ्यं स्वच्छतां अनाकुलतां अतीव अतितरां आप प्राप । नभश्च आकाशं कर्तृ । अतीव अत्यर्थं निर्मलं निष्पांसु अभवदासीत् । 'विश्वमशेषं कृत्स्नं समस्तनिखिलाखिलानिनिःशेषं' 'विष्टपं भुवनं जगत्' । स्वस्थस्य भावः स्वास्थ्यं । जीवति शुम्भे एव तद्वैपरीत्यमभूद्विश्वस्येति भावः ॥ २५ ॥

**( ४ नागोजीभट्टी )** ॥ २५ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** ततः प्रसन्नमिति २९ ॥ २५ ॥

**( ६ दंशोद्धारः )** ॥ २५ ॥

**ततो देवगणाः सर्वे हर्षनिर्भरमानसाः । बभूवुर्निहते तस्मिन् गन्धर्वा ललितं जगुः ॥ २६ ॥**

**( १ गुप्तवती )** ॥ २६ ॥

**( २ चतुर्धरी )** हर्षेण निर्भरं पूर्णं मानसं येषां । बभूवुरिति पूर्वेणान्वयः । ललितं लालित्ययुक्तम् ॥ २६ ॥

**( ३ शान्तनवी )** देव्या तत्र तस्मिञ्शुम्भासुरे निहते मारिते सति ततो हेतुतः सर्वे देवगणाः ब्रह्मविष्णुमहेश्वरादयः (इन्द्रादयः) सुरसमूहाः हर्षनिर्भरमानसाः निःशेषेण भारः पोषः पूर्णता यत्र तानि निर्भराणि । हर्षेण निर्भराणि पूर्णानि मान-

---

१ 'अतीवासीन्निर्मलं' इति पाठः ।

सानि येषां ते तथोक्ता बभूवुः । आनन्दपूर्णहृदयाः समजनिषतेत्यर्थः । अथच ते सर्वे गन्धर्वाः हाहाहूहूप्रभृतयः हर्षनिर्भरमानसाः सन्तो ललितं मनोहरं यथा स्यात्तथा देव्याः पराक्रमं जगुः गायन्ति स्म ॥ २६ ॥

**( ४ नागोजीभट्टी )** ॥ २६ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** ततो देवगणा इति ३० ॥ २६ ॥

**( ६ दंशोद्धारः )** ॥ २६ ॥

**अवादयंस्तथैवान्ये ननृतुश्चाप्सरोगणाः। ववुः पुण्यास्तथा वाताः सुप्रभोऽभूद्दिवाकरः ॥ २७ ॥**

**( १ गुप्तवती )** ॥ २७ ॥

**( २ चतुर्धरी )** अवादयन्वादनं चक्रुः । पुण्या अनुकूलाः ॥ २७ ॥

**(३ शान्तनवी)** गीतमुक्त्वा वाद्यं नृत्यं चाह । अवादयन् । तथा अन्ये एवाप्सरोगणाः ननृतुः । देव्या शुम्भे निपातिते सति दिव्यानि वाद्यानि आनन्दादवादयन् । तथा अपरे देवगणाः अपरे त्वप्सरसामुर्वशीप्रमुखानां गणा ननृतुः नृत्यन्तिस्म । ववुः पुण्यास्तथावाताः सुप्रभोभूद्दिवाकरः । तथा देव्या शुम्भे निपातिते सति वाताः पुण्याः शैत्यमान्द्यसौरभ्ययुक्ताः ववुः वान्तिस्म । पुण्या रजःशून्याश्च । तथा शुम्भासुरे निपातिते सति दिवाकरः सूर्यः सुप्रभः सुतेजस्कोऽभूत् ॥ २७ ॥

**( ४ नागोजीभट्टी )** पुण्या अनुकूलाः ॥ २७ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** अवादयंस्तथेति ३१ ॥ २७ ॥

**( ६ दंशोद्धारः )** ववुरिति । प्राक् शान्ता ये अग्नयस्ते ॥ २७ ॥

**जज्वलुश्चाग्नयः शान्ताः शान्ता दिग्जनितस्वनाः ॥ २८ ॥**

**इति श्रीमार्कण्डेयपुराणे शुम्भवधो नाम दशमोऽध्यायः ॥ १० ॥**

**( १ गुप्तवती )** ॥ २८ ॥ इति श्रीगुप्तवत्यां मन्त्रव्याख्याने दशमोऽध्यायः ॥ १० ॥

**( २ चतुर्धरी )** शान्ताः प्रागुपशान्ता ये अग्नयस्ते जज्वलुरित्यन्वयः । यद्वा शान्ताः सौम्याः सन्तः दिक्षु जनितः स्वनो दिग्जनितस्वनः । शान्तो दिग्जनितस्वनो येषां । प्रागेव ये दिग्दाहं कुर्वाणा अग्नयो दिक्षु स्वनितवन्तः जज्वलुरित्यन्वयः । यद्वा शान्ताः सन्तः । यद्वा शान्ता दिग्जनितस्वना यैस्तेऽग्नयः । ताश्चाह वराहमिहरः । 'अङ्गारिणी दिग् रविणा प्रयुक्ता यस्यां रविस्तिष्ठति सा प्रदीप्ता । प्रधूपिता यास्यति यां दिनेशः शेषास्तु शान्ताः शुभदाश्च ताः स्युः' इति ॥ २८ ॥ इति श्रीचतुर्धरीटीकायां शुम्भवधो नाम दशमोऽध्यायः ॥ १० ॥

**( ३ शान्तनवी )** जज्वलुश्चाग्नयः शान्ताः । अग्नय आहवनीयगार्हपत्यदक्षिणाग्न्यादयः शान्ताः धूमरहिताः निर्मलाः संतः जज्वलुः ज्वलन्तिस्म । शुम्भे निहते यज्ञाः प्रवृत्ता इति भावः । ज्वल दीप्तौ । लिट् उस् । शान्ता दिग्जनितस्वनाः । शुम्भे निहते सति दिग्जनितस्वनाः उत्पातशब्दाः शान्ताः उपशान्तिमगुः । शान्तादिग्जनितस्वना इत्येकं पदं । तत्पक्षे शान्ताश्च ते दिग्जनितस्वनाश्चेति कर्मधारयः । दिशासुत्पातशब्दाः शान्ता इत्यर्थः । अथवा दैत्यार्दिता दिग्देवताः ताभिर्हाहाकारेण दिग्जनिताः स्वनाः । दैत्यशब्दाः शान्ता इत्यर्थः ॥ २८ ॥ इति श्रीमद्राजाधिराजश्रीमत्तोमरान्वयश्रीमदुद्धरणात्मजश्रीशन्तनुचक्रवर्तिविरचितायां शान्तनव्यां श्रीचण्डिकामाहात्म्यटिकायां शुम्भवधविध्युपलक्षितो दशमोऽध्यायः ॥ १० ॥

**( ४ नागोजीभट्टी )** जज्वलुरिति । अग्नयः आहवनीयादयः शान्ताः सौम्याः सन्तो जज्वलुः । शान्ताः दिक्षु जनिताः स्वनाः उत्पातसूचकस्फुरणादिशब्दा येषां ते ॥ २८ ॥ इति शिवभट्टसुतसतीगर्भसमुद्भवनागोजीभट्टकृतटीकायां दशमोऽध्यायः ॥ १० ॥

**( ५ जगच्चन्द्रचन्द्रिका )** जज्वलुरिति । जज्वलुश्चाग्नयः शान्ताः शान्तादिग्जनितस्वनाः स्वाहा ३२ ॥ २८॥ इति श्रीभगीरथविरचिता कण्वगोविन्दकृतसप्तशतीमन्त्रहोमविभागकारिकाणां दशमाऽध्यायस्य जगच्चन्द्रचन्द्रिकाख्यटीका संपूर्णा ॥ १० ॥

**( ६ दंशोद्धारः )** जज्वलुः । यद्वा शान्ता निर्धूताः दिग्जनितस्वना दिक्षूत्पन्ना उत्पातशब्दाश्च शान्ताः । शान्तदिगिति ह्रस्वपाठे शान्तासु दिक्षु जनितः स्वनो यैस्तेऽग्नय इत्यर्थः । शान्तादिग्लक्षणं चोक्तं वराहमिहिरेण । 'अङ्गारिणी दिग् रविविप्रयुक्ता यस्यां रविस्तिष्ठति सा प्रदीप्ता । प्रधूपिता यास्यति यां दिनेशः शेषास्तु शान्ताः शुभदाश्च ताः स्युः' इति ॥ २८ ॥ इति श्रीमद्गुलो० दंशोद्धारटीकायां दशमोऽध्यायः ॥ १० ॥

---

## एकादशोऽध्यायः ११

### ऋषिरुवाच ।

**देव्या हते तत्र महासुरेन्द्रे सेन्द्राः सुरा वह्निपुरोगमास्ताम् ।**
**कात्यायनीं तुष्टुवुरिष्टलाभाद्विकाशिवक्रास्तु विकासिताशाः ॥ १ ॥**

(**१ गुप्तवती**) अथ तन्त्रे पञ्चदश इति (सार्धैश्चतुर्दशभिः) श्लोकैरेकादशाद्यध्यायत्रयगतमन्त्रविभजनार्थकश्चतुर्थः पटलः । ईश्वर उवाच । ऋषेः सुमेधसः ख्यातं प्रोक्तं देव्या हतेऽशुभे । चतुस्त्रिंशदिति श्लोका मन्त्रास्तत्संख्यकाश्च ते । ततो देव्येकमन्त्रेण वरदाहं सुरेश्वरी । देवा ऊचुस्ततः सर्वाबाधाप्रशमनं तथा । श्लोकेनैकेन देवेशि देव्युवाच ततः परम् । वैवस्वतेन्तरे प्राप्ते इति सार्धाश्चतुर्दश । श्लोका आहुतयः सर्वाः पञ्चाशत्पञ्चसंयुताः । वैष्णवी देवता ह्यत्र महागरुडवाहिनी । ऋषेः प्रोक्तं वच इत्यन्वयः । शुभे इति संबुद्धिः । मन्त्रेण श्लोकेनेतीत्थंभूतलक्षणे तृतीया । सार्धाः । शाकम्भरीति विख्यातिं तदा यास्याम्यहं भुवीत्यर्धमन्त्रेण सहिताः । तत्रैव च वधिष्यामीत्यादीनां श्लोकमन्त्राणां तथात्व एव सामञ्जस्यात् । अत्र एकादशेऽध्याये । देव्युवाचेति च तत एभि स्तवैश्च मामिति । दूरेत्यर्धेन सहिता अष्टाविंशतिरूपकाः । ततश्चर्षिरुवाचेतीत्युक्त्वा श्लोकादिकैश्च तैः । अर्धयुङ्नवभिः श्लोकैस्तत्संख्या मनवो मताः । एवं तु द्वादशेएकचत्वारिंशन्मिताहुतिः । एभिरित्यारभ्य दूरादेवेत्यर्धोत्तरमृषिरुवाचेत्येतत्पर्यन्तं सार्धाष्टाविंशतिश्लोकाः सन्ति । इदं च श्लोकसंख्यामात्रमिति तु रूपका इत्यनेन ध्वनितम् । आद्यार्धस्याद्यप्रतीकवदन्त्यार्धस्यान्त्यप्रतीकग्रहणेन निर्देशे युक्तेपि तदाद्यप्रतीक एव गृहीत इत्येव विशेषः । षड्विंशतिरित्येव ब्रूयादित्यादौ मध्यप्रतीकग्रहणादेरपि दर्शनात्ततश्च इत्युक्त्वा सा भगवतीत्यर्धयुक्तनवश्लोकैस्तैः पूर्वनिर्दिष्टैरर्धसहिताष्टाविंशतिश्लोकैश्च तत्संख्या एकोनत्रिंशत्संख्या दशसंख्याश्च मनवो ज्ञेया इत्यर्थः । तेन दूरादेवेति प्रतीकग्रहणमपि श्लोकसंख्यानिर्देशमात्राभिप्रायकं नतु मन्त्रत्वस्यापि बोधकं तत्संख्या इति वाक्यान्तरेणैव पूर्वनिर्दिष्टयोरुभयोरपि श्लोकगणयोर्मन्त्रविधानात् । अर्धमन्त्रविशेषनिर्णयस्तु यथापूर्वं लक्षणानुसारेणैवेति भावः । ततश्च सर्वं ममैतन्माहात्म्यं मम सन्निधिकारकमित्यर्धं । निशुम्भे च महावीर्ये शेषाः पातालमाययुरित्यर्धं मन्त्रद्वयं क्रमेण ज्ञेयं । यद्यपि निशुम्भे चेत्यर्धस्य दैत्याश्च देव्येत्येतत्पूर्वश्लोकस्य च परसाकाङ्क्षत्वादेकवाक्यत्वमेव तथापि सार्धश्लोकस्यैकमन्त्रत्वायोगादनायत्या तदीया ये स्थिता इत्यस्य चाध्याहारेणोभयोरप्यवान्तरवाक्यत्वं प्रकल्प्य ये तेपि इत्यप्यध्याहृत्य महावाक्यता यथाकथंचित्कल्पनीया । एवमेव पशुपुष्पार्घधूपैश्चेति श्लोके या प्रीतिरित्यध्याहार्यं । अरण्ये प्रान्तरे वापीति श्लोकत्रये यः स्यादित्यध्याहार्यं । पश्चात्तेषामुत्तरश्लोकेन महावाक्यता कल्पनीयेत्यादिकमूहनीयं । ततस्त्रयोदशेऽध्याये ऋषिरुवाचवाक्यतः । एतत्ते कथितं भूपेत्यादिसार्धत्रयं मनुः । अर्धेन सह चत्वारो मनव इत्यर्थः । मार्कण्डेय उवाचेति इति तस्य वचोमुखं । श्लोकषट्कं ततो देवीवचनं परमेश्वरि । वचोमुखं वचः श्रुत्वा सुरथ इत्यादिकं । यत्प्रार्थ्यते त्वया भूप त्वयेति श्लोक एककः । मार्कण्डेय उवाचेति ततो वत्रे मनुद्वयम् । देव्युवाच पुनः स्वल्पैरिति श्लोकत्रयेण वै । अर्धानामेव मन्त्रत्वाद्भवन्त्याहुतयोऽत्र षट् । ततो मार्कण्डेयवच इति दत्वा तयोरिति । द्वौ मन्त्रौ पुनरुच्चार्य सावर्णिर्भविता मनुः । एकोनत्रिंशत्संख्याकाहुतिरत्र विधीयते । इति दत्वा तयोर्देवीति श्लोकौ द्वौ दण्डकलितवत्पुनरुच्चार्य मन्त्रद्वयवर्धनेनोनत्रिंशत्संख्याका मन्त्रा इह ज्ञेया इत्यर्थः । उत्तरत्र मन्त्रान्तराभावद्योतनाय चरमश्लोकचरमावयव एव कण्ठरवेण पठितः । तथाच संकर्षान्तिमसूत्रं विद्यते । वाच्यकालत्वाद्यथा याज्यासंप्रैषो यथायाज्यासंप्रैषो यथा याज्यासंप्रैष इति शास्त्रं समाप्तमिति तु तदर्थः । एवमस्मिन्नध्यायेऽर्धमन्त्राः सप्तैव । काण्वस्तु । इति तस्य वचः श्रुत्वेत्यर्धमन्त्रस्तथा स्मृतः । श्लोकमन्त्रास्ततो ज्ञेयाश्चत्वारोऽथार्ध उच्यते । इत्याद्युक्त्वान्ते । मार्कण्डेयस्ततः पादद्वयं मन्त्रत्रयं स्मृतं । आवृत्त्या ह्यधिको मन्त्रः सावर्णिर्भविता मनुरिति स्वकृतकारिकाद्वयं प्रललाप । तत्तुच्छं । तन्त्रे द्वौ मन्त्राविति प्रथमान्तौ पूर्वान्वयिनौ सावर्णिर्भवितेति । षडक्षरप्रतीकेन चरमचरणमुपलक्ष्य इति पुनरुच्चार्य पुनरुच्चरितश्चेदेको मनुर्भवतीत्यर्थ इति स्पष्टाऽक्षरमपि प्रतीकीकृत्य इति पुनरुच्चार्य योजनयैकोनत्रिंशत्संख्या भवतीत्यर्थः । इति वा व्याख्या यथाकथंचित्पादस्य मन्त्रत्वोपपादनसंभवेपीति तस्येति श्लोकषट्के प्रथमोपान्त्ययोरर्धयोरेव मन्त्रत्वस्वीकारे प्रमाणालाभात् समुदितसंख्याद्वयाद्वौ मन्त्रावित्यस्य द्वितीयान्तत्वेनोच्चारणकर्मत्वस्वीकारमात्रेणोपपत्तेः । अत एतच्छ्लोकवाक्यार्थभ्रममूलिकैवार्धकल्पना । एतेन चरमप्रतीकग्रहणेन चरमश्लोकस्यैव द्विरुच्चारणपरमिति केषांचिद्योजनमप्यपास्तं । कश्चित्तु । एकादशार्धाहुतयो द्वादशश्लोकमन्त्रकाः । उवाचवचनैः षड्भिर्मन्त्राः स्युः प्रोक्तसंख्यकाः । इति जजल्प । तेन सावर्णिरिति तन्त्रोक्तेरसदुक्तमेव सार्थक्यमभिप्रेतं स्यान्न कण्वोक्तं । परं त्वर्धवर्धने प्रमाणाभावस्तुल्य एवेति न किंचिदेतत् । अथ तन्त्रे समुदितसंख्यामाह । एवं त्रयोदशाध्याया होमपूजनतृप्तिषु । शतानि सप्तसंख्यानि तव प्रोक्तानि शैलजे । मकारादिर्नुकारान्तो मनुः परमदुर्लभः । स संप्रदायविधिना ज्ञातव्यो मम वल्लभे । अन्यथा विफलो मन्त्रः सत्यं सत्यं मयोदितं ।

होमे स्वाहान्तिमा मन्त्राः पूजायां तु नमोन्तिमाः । तर्पणे तर्पयाम्यन्ता ऊहनीया बुधैरिमे । तृप्तिस्तर्पणं ब्राह्मणभोजनं वा। मकारादिमार्कण्डेय उवाचेत्यारभ्य नुकारान्तः सावर्णिर्भवितामनुरित्येतत्पर्यन्तः । मकारपदेन व्यञ्जनमात्रं प्राथमिकं विवक्षितं । अकारस्तूच्चारणमात्रार्थोऽकारो व्यपेतो व्यञ्जनानामिति तैत्तिरीयप्रातिशाख्यसूत्रसिद्धो वा न विवक्षितः । नुकार इत्यत्रोकारस्तु विवक्षित एव । तेन जगाम गहनं वनमिति मन्त्रान्त्यनकारादेर्निरासः । तथैव च महाहनुरित्यस्य तु मन्त्रान्तत्वाभावादेव निरासः । मन्त्रान्त्यस्य नुरित्यक्षरस्यान्यस्याभावादेव नातिप्रसङ्गः । तेन मनुरिति पदस्याक्षमालेत्यक्षपदस्येव प्रत्याहारपरत्वेनाप्ययमेव मन्त्रो मुख्यवृत्त्यार्थद्योतनायाह मनुरिति । अतः सकारादिरिति केचितत्पठन्ति तच्चिन्त्यम् । तर्पयामीति पल्लवे चण्डिकामित्यपि परे योजयन्ति । तद्धोमपूजनयोरपि तुल्यन्यायेन चतुर्थ्यन्तयोजनापत्त्या न युक्तं । अतो यावद्वचनमेव मन्त्रान्पठताऽपेक्षितांशाध्याहारेणैषेत्यादाविव पूरयता वाक्यार्थोऽनुसंधातव्य इत्येव युक्तम् । इति श्रीगुप्तवत्यां कात्यायनीतन्त्रस्थत्रयोविंशतपटलस्य व्याख्या ॥ ॥ अथैतत्संग्रहश्लोका द्वाविंशतिः ॥ ॥ ऋषिर्देव्या हते तत्रेत्याद्यास्त्रिंशच्चतुर्युताः । देवीवाग्वरदेत्येको देवाः सर्वेति चैककः । देवीवैवस्वतेत्यष्टावथ शाकम्भरी मनुः । अर्धश्लोकात्मकः पश्चाच्छ्लोकास्तत्रैव वेति षट् । एवमेकादशे मन्त्राः पञ्चपञ्चाशदीरिताः । देवीवागेभिरित्याद्याः श्लोका अष्टादशोदिताः । सर्वे ममैतदित्यर्धं पश्चार्धे श्लोकका दश । ऋषेर्वचनमित्युक्तेत्याद्याः श्लोकास्ततस्त्रयः । निशुम्भे चेत्यर्धं मनुरेव । भगवतीति षट् । इत्येकचत्वारिंशत्स्युर्द्वादशाध्यायमन्त्रकाः । ऋषिरेतत्त इत्यर्धश्लोको मन्त्रस्ततस्त्रयः । एवंप्रभावा सेत्याद्या मार्कण्डेय उवाच ह । इति तस्येति षट् श्लोका देवी यदिति चैककः । मार्कण्डेय उवाचाथ ततो वव्रे मनुद्वयं । देव्युवाच ततः स्वल्पैरहोभिरिति षण्मताः । अर्धश्लोकात्मका मन्त्रा मार्कण्डेयवचस्ततः । इति दत्त्वा तयोरेवं देव्या वरमिति द्वयं । द्विर्दण्डकलितन्यायादावृत्तं स्याच्चतुष्टयं । इत्येवमेकोनत्रिंशन्मनवः स्युस्त्रयोदशे । अत्रापरे नवार्धानि केचिदेकादशेऽभ्यधुः । न तत्कात्यायनीतन्त्रजल्पितं किंतु कल्पितं । इत्युत्तमचरित्रेऽस्मिन्नध्यायत्रितयात्मनि । संभूय मन्त्रसंख्यैकचत्वारिंशच्चतुःशती । अर्धश्लोकात्मका मन्त्रास्तेषु द्वादश कीर्तिताः । त्रिपान्मन्त्रास्तु षट्षष्टिर्द्वौ श्लोकौ पुनरुक्तकौ । श्लोका अपुनरुक्तास्तु त्रिशती सप्तविंशतिः । राजैको देवदूतोक्तिर्द्वेद्वे देव्युक्तयो दश । मार्कण्डेयोक्तयस्तिस्र ऋषिवाक्यानि षोडश । इत्युवाचाङ्किता मन्त्राश्चतुस्त्रिंशदिति स्थितिः । अथ सर्वे मिलिताश्चेदध्यायेषु त्रयोदशसु । पञ्चशतानि श्लोका अष्टासप्ततियुतानि तेष्वन्त्यौ । श्लोकौ द्विगुणौ भवतस्त्रेधा द्वाविंशतेर्भागः । एकोनविंशतेश्च द्वेधा ते पञ्चषष्टिरतिरिक्ताः । ब्रह्मा भगवान्दूतो वैश्यो देवा नृपो मृकण्डुसुतः । देव्यृषयश्चैकैकद्विद्वित्रिचतुःशरार्कऋक्षमिताः । इति सप्ताधिकपञ्चाशदुवाचपदाङ्किता अमी अधिकाः । द्वाविंशतिशतमेषां श्लोकैर्योगेन मन्त्रसप्तशती । इति विभजनमुदितं प्रतिमन्त्रं कात्यायनीतन्त्रे । तस्मादेतत्प्रकृतिकमपूर्णमन्यत्तु यामलप्रभृति । श्लोकमन्त्रस्त्रिधामन्त्रः पुनरुक्तोर्धमन्त्रकः । उवाचाङ्कित इत्येवं मन्त्रः प्रोक्तोऽत्र पञ्चधा ॥ ७० ॥ मन्त्रपिण्डः श्लोकपिण्डोऽध्यायपिण्ड इति त्रिधा । इत्यष्टौ सुभग ४३७ स्तोषः ६६ श्री २ जलं ३८ सोम ५७ उन्नसः ७०० । उस्येमा ५७८ लोक १३ इत्याख्या संख्यास्तन्त्रेऽत्र वर्णिताः ॥ ॥ अथ मन्त्रव्याख्या । देव्येति । वह्निपुरोगमाः 'अग्निरग्रे प्रथमो देवतानां' इति श्रुतेः ॥ १ ॥

**( २ चतुर्धरी )** तत्र तस्मिन् शुम्भे इति यावत् । इष्टस्याभिमतार्थस्य लाभात्प्राप्तेः । लम्भादिति च पाठः । विकसनं विकासः सोऽस्यास्तीतिविकाशिविकासिनां वक्त्राणामंशुभी रश्मिभिर्विकासिता दीपिता आशा दिशो यैस्ते । विकाशिवक्त्रास्त्वित्ति पाठे विकासीनि वक्त्राणि येषां ते । तथा विकासिता नियन्त्रिता आशा प्रत्याशा येषां वा ॥ १ ॥

**( ३ शान्तनवी )** ऋषिरुवाच । सुमेधा ऋषिः सुरथं राजानं वाक्यमुक्तवान् । देव्या चण्डिकया कात्यायन्या तत्र संग्रामे । यद्वा तत्र महासुरेन्द्रे शुम्भे हते आहते सति सेन्द्रा इन्द्रसहिताः वह्निपुरोगमाः अग्निपुरःसराः सुराः देवाः इष्टलाभात् शुम्भनिधनलक्षणलाभात्संतुष्टाः ।अत एव विकासिवक्त्राः दीप्तियुक्ताननाः प्रसन्नमुखाः सुविकासिताशाः सुष्ठु विकासिताः । अशा दिशो येषां ते तथोक्ताश्च सन्तः प्रसन्नदिशः सन्तः तां शुम्भमर्दिनीं कात्यायनीं चण्डिकां तुष्टुवुः । ष्टुञ् स्तुतौ । विकाशितवक्त्राब्जविकासिताशाः इति पाठे तु चकास्ट दीप्तौ । तालव्यान्तः । काशनं काशः । काशो विद्यते येषां तानि काशीनि । विशेषेण काशीनि वक्त्राण्येव अब्जानि कमलानि यासां ताः विकाशिवक्त्राब्जाः । काशः संजातो यासां ताः काशिताः । विशेषेण काशिताः विकाशिताः ताश्च ताः आशाश्च विकाशिताशाः । विकाशिवक्त्राब्जाः विकासः संजातो येषां ते विकासिवक्त्राब्जविकासिताशाः सुराः । विकासिवक्त्राब्जविकासिताशाः इति तु पाठे सुरा इष्टलाभाद्विकासिवक्त्राब्जा विकासिताशाश्च भवन्ति । अंसो भुजशिरः । ततश्च कर्मधारयः । दीव्यति देवी । महान्तोऽसुरास्तेष्विन्द्रे श्रेष्ठे । षुर ऐश्वर्ये । सुरन्ति इषन्ते सुराः । 'इगुपधज्ञाप्रीकिरः कः' । वहत्याहुतीर्वह्निः स पुरोगमोऽग्रयायी येषां ते तथोक्ताः । कतो नामर्षिः तस्यापत्यं स्त्रीति गर्गादिपाठात्कात्यशब्दाद्गर्गादियञन्तात् 'सर्वत्र लोहितादिकतन्तेभ्यः' इति ष्फः । षित्वान्ङीप् । फस्यायनादेशः कात्यायनीं चण्डिकां तां देवा ऊचुः । देवीस्तोत्रं स्तुत्युपयोगीनि वाक्यानि उक्तवन्तः ॥ १ ॥

**( ४ नागोजीभट्टी )** ऋषिरुवाच । देव्येति । तत्र युद्धे वह्निपुरोगमाः वह्निमुख्याः कात्यायनीमित्यनेन परस्परमा-

सामैक्यं सूचयति इष्टस्य शुम्भादिवधस्य लाभात्प्राप्तेः । नुमागमः । विकासीनि विकस्वराणि वक्राणि येषां ते । तुः पादपूरणे । विकासिता आशा यैः ॥ १ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** श्लोकानां सार्धपञ्चाशज्ज्ञेयमेकादशे स्फुटं । पञ्चाशच्छ्लोकमन्त्रास्तदन्ते सार्धश्लोकमन्त्रकाः । देवीद्वयमृषिश्चैको देवा एकमितीरिता इति । अर्धसहितानां पञ्चाशच्छ्लोकानां एकादशाध्याये प्रव्यक्तं ज्ञेयं बोध्यं । पञ्चाशच्छ्लोकमन्त्राः दशाधिकं विंशतिद्वयमित्यर्थः । तदन्ते पञ्चाशच्छ्लोकमन्त्राणामन्ते प्रान्ते अर्धश्लोकमन्त्रकोऽर्धश्लोकरूपो मन्त्रो ज्ञेयः । देवीद्वयं देव्युवाचेति द्वौ मन्त्रौ ऋषिश्चैकः ऋषिरुवाचेत्येको मन्त्रः । देवा एकमितीरितं । देवा ऊचुरित्येको मन्त्रः कथितः । पञ्चपञ्चाशदाहुत्यस्तच्चतुस्त्रिंशदुत्तरं । श्लोके देवी उवाचैकमेवं ज्ञेयं तु साधकैरिति । पञ्च अधिका पञ्चाशदाहुतिस्तस्याः । चतुस्त्रिंशदुत्तरं तत् देवी उवाचैककं देवी उवाचेत्येको मन्त्रः साधकैः कात्यायनीतन्त्रज्ञैः तु पुनः एवंप्रकारेण ज्ञेयं बोध्यम् । तथाहि ऋषिरुवाच । देव्या हत इति २ ॥ १ ॥

**( ६ दंशोद्धारः )** देव्येति । इष्टस्याभिमतार्थस्य लाभाद्विकासशीला ये वक्राब्जा मुखचन्द्राः । 'अब्जो जैवातृकः सोमः' इत्यमरः । तैर्विकासिता आशा दिशो यैस्ते । वक्रांश्चेति पाठे वक्रांशुभिर्वक्रकिरणैः । वक्रास्त्विति पाठे विकाशीनि वक्राणि येषां ते । विकाशिताः फलिता आशा मनोरथा येषां ते इत्यर्थः ॥ १ ॥

**देवि प्रपन्नार्तिहरे प्रसीद प्रसीद मातर्जगतोऽखिलस्य ।**
**प्रसीद विश्वेश्वरि पाहि विश्वं त्वमीश्वरी देवि चराचरस्य ॥ २ ॥**

**(१ गुप्तवती )** ॥ २ ॥

**( २ चतुर्धरी )** प्रपन्ना भक्तास्तेषामार्तिं दुःखं हरतीत्यपि च । प्रसीदेति संभ्रमे त्रिरुक्तिः । ईश्वरी स्वतन्त्रा । चराचरस्येति निर्धारणे षष्ठी ॥ २ ॥

**( ३ शान्तनवी )** प्रपन्ना अनन्यशरणाः शरणार्थिनः भक्तिनम्राः तेषां आर्तिहरे आर्तिः पीडा तां हरतीति प्रपन्नार्तिहरा । हरतेरनुद्यमनेच् । स्त्रियां टाप् । तत्संबुद्धौ हे प्रपन्नार्तिहरे देवि त्वं प्रसीद प्रसन्ना भव । पाघ्रादिना सदेः सीदभावः । प्रसीद मातर्जगतोऽखिलस्य । हे मातः अखिलस्य कृत्स्नस्य जगतः हे जननि हे देवि त्वं प्रसन्ना भव । पटैकदेशे दग्धे पटो दग्ध इतिवदेकदेशेऽपि वर्ततेऽवयवीति तन्माभूदिति कार्त्स्न्यार्थमखिलग्रहणम् । हे विश्वस्य ईश्वरि व्यापके त्वं प्रसीद प्रसन्ना भव । 'अश्नुतेराशुकर्मणि वरट्चेचोपधायाः' । हे देवि त्वं विश्वं पाहि लक्ष्मीरूपेण त्वं सर्वं जगत् रक्ष । पा रक्षणे । लोटः 'सेर्ह्यपिच्' । त्वमीश्वरी देवि चराचरस्य । हे देवि त्वं चराचरस्य जङ्गमाजङ्गमात्मकस्य जगतः ईश्वरी विष्णुमायात्मतया व्यापकासि । यद्वा ईश्वरस्य स्त्री स्वामिनी भवसि । चराश्चाचराश्च चराचरं । 'सर्वो द्वन्द्वो विभाषैकवद्भवति' अन्यथा चर गतौ । पचाद्यच् । 'चरिचलिपतिवदीनामच्याक्चाभ्यासस्य' इत्यनेन चराचरं जङ्गमात्मकमेव स्यान्नाजङ्गमात्मकमपि । ततश्च तं प्रति तस्य ईश्वरीत्वं न स्यात् । यदभ्यधुः । 'चरिष्णुजङ्गमचरं त्रसमिङ्गं चराचरम्' ॥ २ ॥

**( ४ नागोजीभट्टी )** देवीति । प्रपन्ना भक्ताः । आदरे प्रसीदेति त्रिरुक्तिः । चराचरस्य मध्ये त्वमीश्वरी स्वतन्त्रा । इतरत्सर्वं त्वत्परतन्त्रमिति भावः ॥ २ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** देवि प्रपन्नेति ३ ॥ २ ॥

**( ६ दंशोद्धारः )** ॥ २ ॥

**आधारभूता जगतस्त्वमेका महीस्वरूपेण यतः स्थितासि ।**
**अपां स्वरूपस्थितया त्वयैतदाप्यायते कृत्स्नमलङ्घ्यवीर्ये ॥ ३ ॥**

**( १ गुप्तवती )** ॥ ३ ॥

**( २ चतुर्धरी )** अपां स्वरूपस्थितयेति । राहोः शिर इत्यादिवदर्थशून्या षष्ठी । जलस्वरूपेत्यर्थः । एतत्कृत्स्नमशेषं आप्यायते स्फीतीक्रियते । अलङ्घ्यवीर्ये अनन्यलङ्घनीयप्रभावे ॥ ३ ॥

**( ३ शान्तनवी )** हे देवि त्वं यतः कारणात् महीस्वरूपेण पृथिवीरूपेण स्थितासि अवस्थितासि अतो जगतः विश्वस्य आधारभूता अधिकरणात्मत्वं प्राप्ता त्वमेकैव नान्या व्यक्तिः । पृथिवीरूपा त्वं त्वद्रूपा च पृथिवीति भावः । हे अलङ्घ्यवीर्ये लङ्घितुमशक्यबले अपां स्वरूपस्थितया त्वयैव एकया एतत्कृत्स्नं जगत् आप्यायते संवर्ध्यते वृद्धिं नीयते । प्यायी वृद्धौ । णिच् कर्मणि लट् । अपां जलानां स्वरूपेण स्थितया तया । न लङ्घ्यं अलङ्घ्यं अलङ्घनीयं वीर्यं यस्याः सा तत्संबुद्धौ अलङ्घ्यवीर्ये । 'वीर्यं बलं प्रभावश्च' । अब्रूपा त्वं त्वद्रूपाश्चाप इति भावः ॥ ३ ॥

**( ४ नागोजीभट्टी )** आधारभूतेति । तत्र हेतुः । महीस्वरूपेणेति स्थितिः । अपांस्वरूपस्थितया अबभिन्नस्वरूपेणेति स्थितया । गमकत्वात्समासः । आप्यायते । ओप्यायीत्यतः कर्मणि यक् । अनेनोक्तलक्षणेन सार्वात्म्यं विवक्षितम् ॥ ३ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** आधारभूतेति ४ ॥ ३ ॥

**( ६ दंशोद्धारः )** आधारभूतेति । अपां स्वरूपस्थितया जलरूपया । अपामिति षष्ठीत्वऽभेदेपि राहोः शिर इत्यादिवदुपचारात् । यद्वा अपां जलदेवतानां जलरूपं तेन स्थितयेत्यर्थः । आप्यायते तृप्यते । अलङ्घ्यवीर्ये अनन्यलङ्घनीयप्रभावे ॥ ३ ॥

**त्वं वैष्णवी शक्तिरनन्तवीर्या विश्वस्य बीजं परमासि माया ।**
**संमोहितं देवि समस्तमेतत्त्वं वै प्रसन्ना भुवि मुक्तिहेतुः ॥ ४ ॥**

**( १ गुप्तवती )** नारायणीसूक्ताख्यं स्तवमाह । देवीति । संमोहितं त्वयैवेति शेषः ॥ ४ ॥

**( २ चतुर्धरी )** वैष्णवी ईश्वरी बीजं मूलकारणम् । परमा निरतिशया माया विद्याशक्तिः असि भवसि । एतत्समस्तं जगत्संमोहितं सम्यङ्मोहविषयीकृतं त्वयेति शेषः । भुवि जगति मुक्तिहेतुः विद्याभावेन ॥ ४ ॥

**( ३ शान्तनवी )** हे देवि त्वं अनन्तवीर्या अक्षयबला अक्षयप्रभावा च । वीर्यं बलं प्रभावश्च । वैष्णवी विष्णुसंबन्धिनी शक्तिरसि । यया शक्त्या विष्णुर्भगवानशेषलोकान्पालयति सा वैष्णवी विष्णुसामर्थ्यलक्षणा त्वमेवेति भावः । हे देवि त्वं विश्वस्य कृत्स्नस्य उचितं बीजं कारणं निदानं यत् लोकवेदप्रसिद्धं सा परमा व्यापिनी माया त्वमेवासि । या विश्वस्य कारणरूपा परमा उत्कृष्टा उत्तरा माया सा त्वमसि न त्वदन्या सेति भावः । बीज्यते वेति च बीजं । त्वयेति प्रसंगसिद्धं । हे देवि त्वया मायास्वरूपया एतत्समस्तं जगत् विश्वं संमोहितं संजातमोहं कृतं ममतायत्तं कृतं मोहगर्ते निपातितं । संसारपाशबद्धं कृतमिति भावः । हे देवि त्वं प्रसिद्धा ज्ञानवैराग्यरूपा उपनिषत्परमात्मतत्त्वावगमस्वभावा प्रसन्ना सती भवनं भूः पुनःपुनरुद्भव उत्पत्तिरभूत् । प्रादुर्भाव इति यावत् । तस्याः मुक्तिहेतुः कारणं बीजमसीत्यर्थः । भुवि मुक्तिहेतुरित्येकपदं । भुवि भूमावित्युक्तेऽर्थपुष्ट्यभावस्तिष्ठतु । ब्रह्मलोकादौ मुक्तिहेतुता न स्यादित्यव्याप्तिपरिजिहीर्षार्थोपलक्षणताश्रयणजनितप्रतिपत्तिगौरवदोषापत्तिरतिदुष्यति । हरेति भुवीति पृथक्पदताप्युच्यतामुच्यतामुक्तदोषपरिजिहीर्षुणा भुवि मुक्तिहेतुरित्येकपदमिति । 'हेतुर्ना कारणं बीजं निदानं त्वादिकारणम्' ॥ ४ ॥

**( ४ नागोजीभट्टी)** त्वमिति । आद्यपादे पालनशक्तिमत्त्वं । द्वितीये कारणशक्तिमत्त्वं । मायाऽविद्या । त्वयैतत्संमोहितं संसारगर्ते पातितं । तर्हि मोक्षो नास्त्येवेत्यत आह । त्वं प्रसन्ना कृतप्रसादा वै प्रसिद्धं भुवि जगति मुक्तिहेतुः ॥ ४ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** त्वं वैष्णवीति ५ ॥ ४ ॥

**( ६ दंशोद्धारः )** त्वं वैष्णवीति । बीजं मूलकारणं परमा अतिशया मायाऽविद्याशक्तिः एतत्संमोहितं । अविद्यारूपया त्वयेति शेषः ॥ ४ ॥

**विद्याः समस्तास्तव देवि भेदाः स्त्रियः समस्ताः सकला जगत्सु ।**
**त्वयैकया पूरितमम्बयैतत्का ते स्तुतिः स्तव्यपराऽपरोक्तिः ॥ ५ ॥**

**( १ गुप्तवती )** विद्या इति । सकलाश्चतुःषष्टिकलासहिताः षोडशकामकलासहिताश्चेति क्रमेण विद्यास्त्रियोरन्वेति । एतत्परिदृश्यमानं जगत्स्तव्यविषये परा वा अपरा वोक्तिरपि त्वमेवेति त्वदन्या स्तुतिः का ॥ ५ ॥

**( २ चतुर्धरी )** विद्या वेदादिलक्षणाः समस्ताः अष्टादश अपि । तथाच । 'अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः । धर्मशास्त्रं पुराणानि विद्या ह्येताश्चतुर्दश । आयुर्वेदो धनुर्वेदो गान्धर्वश्चेति ते त्रयः । अनुशास्त्रं चतुर्थं च विद्या ह्यष्टादशैव ताः' इति । तव भेदा इति । भिन्नशक्तय इति काकाक्षिवदन्वयः । सकलाः कलाभिः सह वर्तमानाः । ताश्चालिङ्गनाद्याश्चतुःषष्टिः । एतज्जगत्त्वयैकया पूरितं अभिव्याप्तं । एवंच ते तव का स्तुतिः । अपितु न कापीत्यर्थः । कुत इत्याह । स्तव्येति । स्तव्यस्य या पराऽपरोक्तिः मुख्यगौणकीर्तनं सा स्तुतिरभिधीयते । नच सर्वव्यापिन्यास्ते गौणाः संति । मुख्यगुणकीर्तनं चानुवाद एवेति स्तुतिरिति भावः । यद्वा स्तव्यपरा परोक्तिः स्तुतिरित्युक्तं । न चासौ निर्वहति । भवत्याः सर्वव्यापित्वेनास्माभिर्भेदाभावात्तस्या भेदसाध्यत्वात् । नह्येकं कर्म कर्तृ वा स्यात् । अथवा का कीदृशी अनिर्वचनीया त्वमिति स्यात्तर्हि प्रस्तुतमित्याह । ते स्तुतिरिति । स्तुतिरेवेयं तेषां चाभ्युपगमेन क्रिया हरति नाप्रस्तुतमित्याशयः । यद्वा ते तव स्तुतिरपि त्वमेव । कुत इत्यत आह । स्तव्यपरापरोक्तिः पराभिधाना वाक् का सापि यतस्त्वमेव । यदाह । 'चितिप्रत्यवमर्शार्था परा वाक्सरसोदिता । सैषा सारतया चोक्ता हृदये परमेष्ठिनः' इति । एवमपरोक्तिः सूक्ष्मा पश्यन्ती मध्यमा वैखरीरूपा च । लक्षणं चागमान्तरे प्रसिद्धं । तथाच 'सूक्ष्मा कुण्डलिनी मध्ये ज्योतिर्मात्रा ह्यणीयसी । आश्रोत्रविषया तस्मादुद्गच्छन्नूर्ध्वगामिनी । स्वयंप्रकाशा पश्यन्ती सुषुम्णामाश्रिता भवेत् । सैव हृत्पङ्कजं प्राप्य मध्यमा नादरूपिणी । अन्तःसंकल्पमात्रा स्यादविभक्तोर्ध्वगामिनी । सैवोरःकण्ठतालुस्था शिरोघ्राणं द्विजोत्तमाः । जिह्वामूलोष्ठनिश्च्यूतवर्णव्यूहपरिग्रहा ।

शब्दप्रपञ्चजननी श्रोत्रग्राह्या तु वैखरी' । इति सेयं चतुर्विधा वाक् श्रुतावपि पठ्यते 'चत्वारि वाक् परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः । गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वचो मनुष्या वदन्ति' इति । एवं परस्वभावापि भवती-शब्दभावेनापि निवर्तत इति स्तुतिरपीति भावः ॥ ५ ॥

**( ३ शान्तनवी )** हे देवि समस्ताः श्रुत्यादयो विद्याः तवैव भेदाः त्वत्प्रकारा एव त्वदंशा एव तस्मात्तव च विद्यानां च परस्परं पार्थक्याभावात् ते का स्तुतिः प्रवर्ततां । न कापि । कीदृशी स्तुतिः । स्तवमर्हति स्तव्यं । 'दण्डादिभ्यो यः' । अन्यथा अचो यतं बाधित्वा 'एतिस्तु'सूत्रेण क्यपि सति स्तुत्यमित्येव स्यात् । स्तव्यपरापरोक्तिः स्तव्ये स्तवार्हे वस्तुनि विषये परा च अपरा चेति पृथक्त्वेनोक्तिर्यस्यां सा स्तव्यपरापरोक्तिः तस्मात् हे देवि त्वं विद्यारूपा सरस्वतीरूपेति इयं स्तुतिः पार्थक्याभावात् न घटते । स्तुतिस्तुत्ययोः पृथक्त्वे खलु स्तुतिः प्रवर्तते लोके । एकत्वे का स्तुतिरस्तिति भावः । तर्हि त्वं ब्राह्मी त्वं लक्ष्मीः त्वं शर्वाणी त्वमिन्द्राणी इत्याद्या स्तुतिरित्येषापि तस्याश्च देव्याः पृथक्त्वेन सा न घटत इत्याह । स्त्रियः समस्ताः सकलाः कलासहिताः सकलाश्चतुःषष्टिकलोपेता पातिव्रत्यादिधर्मोपेताः सर्गस्थितिसंहारादिप्रतिनियतनैपुण्योपेताश्च ब्राह्म्याद्याः स्त्रियश्च वनिताः तवैव भेदास्तवैवांशाः इति का ते स्तुतिः प्रवर्ततां । न कापि । कीदृशी स्तुतिः । स्तव्यपरापरोक्तिः । स्तव्ये वस्तुनि विषये परा चापरेति पृथक्त्वेनोक्तिर्यस्यां सा स्तव्यपरापरोक्तिः । स्तव्यं स्तुतेः परं पृथक् स्तव्याच्च स्तुति-रपरा पृथगिति पार्थक्यनिबन्धना स्तुतिर्लोके प्रवर्तते । अत्र तु ब्राह्म्यादिभ्यः स्त्रियः देव्याः पार्थक्याभावादैक्यत्वात् स्तव्य-स्तवयोरैक्यत्वे का ते स्तुतिः स्यात् । न कापीति भावः । अन्यदीयगुणानामन्यत्रारोपेण गुणवर्णनं स्तुतिः । गुणाधिकरणमे-कमेवेति स्तुतेरपृथग्वृत्तिरिति भावः । इह किं बहुनोक्तेन जगच्च त्वयैकया अम्बया मात्रा एव पूरितं आप्यायितं पूर्णीकृतं । त्वमेव जगत् जगदेव त्वमित्येव ते का स्तुतिः प्रवर्ततां । न कापीत्यर्थः । अत्र तु सैव देवी सैव विद्येति सैव देवी सैव च ब्राह्म्यादिस्त्रीति सैव च देवी तदेव देव्यात्मकं जगच्चेति पार्थक्याभावात्स्तव्यपरापरोक्तिः स्तुतिर्न प्रवर्तते इति भावः । यद्वा स्तवनीये न्यूने वस्तुनि परा श्रेष्ठा उक्तिः स्तुतिरुच्यते । परा उक्तिः परमोक्तिरित्यर्थः । देवी न्यूना न भ-वतीति स्वभावतः श्रेष्ठोक्तिरस्त्येव तस्यामिति का ते स्तुतिरित्युक्तं । न्यूनमधिकीकृत्योक्तिः स्तुतिरित्यपि स्तुतिलक्षणं । देवी च न्यूना न भवतीति स्वतोऽधिकैवेत्यप्युक्तं का ते स्तुतिरिति ॥ ५ ॥

**( ४ नागोजीभट्टी )** विद्या इति । 'अङ्गानि ६ वेदाश्चत्वारो ४ मीमांसा ११ न्यायविस्तरः १२ । पुराणं १३ धर्म-शास्त्रं १४ च विद्या ह्येताश्चतुर्दश । आयुर्वेदधनुर्वेदगन्धर्वार्थशास्त्रैः सहाष्टादश भेदाः अंशाः सकलाश्चतुःषष्टिकलोपेताः पाति-व्रत्यसौन्दर्यतारुण्याद्युपेताः समस्ताः स्त्रियोऽपि तवांशाः । त्वयैकयैतत्पूरितं अन्तर्बहिश्च व्याप्तं । एवं च त्वत्तः पृथग्भूतस्या-भावात् । अतस्ते स्तुत्ये विषये परापरा गौणी मुख्या च या उक्तिस्तद्रूपा स्तुतिः केत्यर्थः । यद्वा उक्तिरूपा त्वमेवातः का ते स्तुतिः ॥ ५ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** विद्याः समस्ता इति ६ ॥ ५ ॥

**( ६ दंशोद्धारः )** विद्या इति । वेदादयः समस्ता अष्टादशाऽपि । तदुक्तं । 'अङ्गानि वेदाश्चत्वारो मीमांसा न्यायवि-स्तरः । धर्मशास्त्रं पुराणं च विद्याश्चैताश्चतुर्दश । आयुर्वेदो धनुर्वेदो गान्धर्वश्चेति ते त्रयः । अर्थशास्त्रं चतुर्थं च विद्या ह्यष्टादशैव ताः' इति । समस्ता इति । स्त्रियोऽपि तवैव भेदा इत्यनुषङ्गः । किंभूताः । सकलाः कलाभिश्चतुःषष्टिभिः सहिताः ताश्च । शैवतन्त्रे उक्ताः । यथा । गीतं १ वाद्यं २ नृत्यं ३ नाट्यं ४ आलेख्यं ५ तिलकं ६ तण्डुलकुसुमबलीविकारा ७ पु-ष्पास्तरणं ८ दशनवसनाङ्गानां रागः ९ मणिभूमिकर्म १० शयनरचनं ११ उदकवाद्यं १२ चित्रयोगः १३ चित्रमाल्यग्रथन-विकल्पः १४ शेखरापीडयोजनं १५ नेपथ्ययोगः १६ कर्णपत्रभङ्गिः १७ सुगन्धयुक्तिः १८ भूषणयोजनं १९ ऐन्द्रजालं २० कौचुमारयोगः २१ हस्तलाघवं २२ चित्रशाखापूपभुक्तविकारक्रिया २३ पानकरसरागासवयोजनं २४ सूचिवयनकर्म २५ सूत्रक्रीडा २६ डमरुकवीणावाद्यानि २७ प्रहेलिका २८ प्रतिमाला २९ दुर्वचकयोगः ३० पुस्तकवाचनं ३१ नाटका-ख्यायिकादर्शनं ३२ काव्यसमस्यापूरणं ३३ पट्टिकावेत्रबाणविकल्पाः ३४ तर्ककर्माणि ३५ तक्षणं ३६ वास्तुविद्या ३७ रूप्यरत्नपरीक्षा ३८ धातुवादः ३९ मणिरागज्ञानं ४० आकारज्ञानं ४१ वृक्षायुर्वेदयोगाः ४२ मेषकुक्कुटलावकयुद्धविधिः ४३ शुकसारिकाप्रलापनं ४४ उत्सादनं ४५ केशमार्जनं ४६ अक्षरमुष्टिकाकथनं ४७ म्लेच्छितकविकल्पः ४८ देशभाषाज्ञानं ४९ पुष्पशकटिका ५० निमित्तज्ञानं ५१ यन्त्रमातृका ५२ धारणमातृका ५३ संवाच्यं ५४ मानसीकाव्यक्रिया ५५ अभि-धानकोशः ५६ छन्दोज्ञानं ५७ क्रियाविकल्पः ५८ छलितकयोगः ५९ वस्त्रगोपनानि ६० द्यूतविशेषः ६१ आकर्षणक्रीडा ६२ बालक्रीडनकानि ६३ वैनायिकीनां वैयासिकीनां च विद्यानां ज्ञानं ६४ इति चतुःषष्टिकलाः प्रसङ्गादुपन्यस्ताः । प्रकृतमनुस-रामः । अतः का ते स्तुतिर्न कापीत्यर्थः । असद्गुणारोपणं हि स्तुतिः । सर्वात्मिकायां त्वयि स्तुतिरयुक्तेति भावः । कुत इत्यत आह । स्तव्येति । यतस्तव्या स्तुत्यविषयिणी परा अपरा च पश्यन्तीमध्यमारूपा उक्तिश्च वैखरीरूपा त्वमेव । मूला-

धारे कुण्डलिन्यां तेजोमयी सूक्ष्मतमा परा । तत उद्गता नाभिस्था सूक्ष्मतरा पश्यन्ती । ततोऽपि हृत्स्था नादरूपा सूक्ष्मा मध्यमा । सैव पुनः कण्ठमभिहत्य ताल्वोष्ठपुटव्यापारजन्याश्रयणविषया वैखरी । एते च परादिभेदास्तन्त्रान्तरे प्रसिद्धाः । तथाहि सूक्ष्मकुण्डलिनीमध्ये तेजोमात्रा ह्यणीयसी । अश्रोत्रविषया तस्मादुद्गता चोर्ध्वगामिनी । स्वयंप्रकाशा पश्यन्ती सुषुम्णामाश्रिता भवेत् । सैव हृत्पङ्कजं प्राप्य मध्यमा नादरूपिणी । अन्तः संकल्पमात्रा स्याद्विभक्ता चोर्ध्वगामिनी । सैवोरःकण्ठतालुस्था शिरोघ्राणद्विजोपगा । जिह्वामूलौष्ठनिस्सृतवर्णव्यूहपरिग्रहा । शब्दप्रपञ्चजननी श्रोत्रग्राह्या तु वैखरी' इति श्रूयते 'चत्वारि वाक् परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः । गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति' इति ॥ ५ ॥

**सर्वभूता यदा देवी स्वर्गमुक्तिप्रदायिनी । त्वं स्तुता स्तुतये का वा भवन्तु परमोक्तयः ॥ ६ ॥**

**( १ गुप्तवती )** इममेवार्थं विवृण्वन्नाह । सर्वभूतेति । सर्वस्येत्याद्याः षोडशश्लोका नारायणीलिङ्गकाः क्वचिदष्टादश पठ्यन्ते तत्र द्वयमनाकरं । क्वचिदेकोनविंशतिः पठ्यन्ते तदपि तथैव तन्त्रान्तरोक्तसंख्यायां वा तेषां प्रवेशोऽस्तु ॥ ६ ॥

**( २ चतुर्धरी )** सर्वं भूतं प्राप्तं यया सा । तथा स्वर्गो दिव्यमनुभाव्यं सुखं मुक्तिः कायत्वापायः ते प्रदातुं शीलं यस्याः । एवं यदातदास्माभिः स्तुता त्वमित्यन्वयः । यदेति वेत्यर्थे । वाशब्दः पक्षान्तरे । अथवा काः परमोक्तयः प्रधाना वाचस्तव स्तुतये भवन्तु । न का अपीति यावत् । कश्चिदाह । सर्वभूता यदा सर्वप्राणिनां शुभावहा भाग्यदा त्वमिति ॥ ६ ॥

**( ३ शान्तनवी )** पुनरपि देव्याः स्तुतिर्न घटत इत्याह । परमोक्तिः स्तुतिरिति स्तुतिलक्षणं । तत्र देवी सर्वभूता इतीदं स्तुतिपदं । एवंच सति ब्रूमः । हे देवि भुक्तिमुक्तिप्रदायिनी त्वं यदा सर्वभूतासि सर्वात्मासि सर्वीभूतासि विश्वरूपासीति स्तुता संस्तुताऽभूस्तदा स्तुतये स्तुत्यै स्तुत्यर्थाः का वा नाम परमाः श्रेष्ठाः उक्तयः वर्णनाः स्तुतयः भवन्ति । न का अपि स्युः । इह हि परमा श्रेष्ठा उक्तिर्वर्णनं स्तुतिरिति स्तुतिलक्षणं । ततश्च तच्च किंचित्स्वरूपं भावाभावात्मकं संभवेत्तन्नाम सर्वमित्युच्यते । शङ्का च कारणाभावात् । ततश्च सर्वनाम देव्यैव । देवीरूपमेव देवीरूपं नाम सर्वमेव । एवं सिध्यति सर्वभूता देवीति यदा स्तुता तदा सर्वस्य च देव्याश्च ऐक्याद्भेदाभावात् किं स्तुत्यं का वा स्तुतिः स्यादिति तात्पर्यादाह । का भवन्ति परमोक्तयः इति । का परमोक्तयः याभिः स्तूयते देवी न कापि । 'युक्ते क्ष्मादावृते भूतं प्राण्यतीते समे त्रिषु' । सर्वभूता सर्वेण विश्वेन समेत्यर्थः । कीदृशी देवी अयदा शुभावहविधिदा । भुक्तिर्भोगः भुज्यते वा भोगः स्वर्गादिभुक्तिः । मोक्षोऽपवर्गः तौ प्रददाति मुक्तिदा । यद्वा भुक्तेर्मुक्तिर्वैराग्यं तां भुक्तिमुक्तिं प्रददाति भुक्तिमुक्तिप्रदा । प्रेदाज्ञ कः । अयते गच्छति व्याप्नोत्ययती । 'कृत्यल्युटो बहुलं' इति कर्तरि ल्युट् । यद्वा दय दाने । भुक्तिमुक्ती प्रदयते भुक्तिमुक्तिप्रदायिनी । यद्वा प्रा पूरणे । भुक्तिमुक्ती प्राति लोकेभ्यः पूरयति भुक्तिमुक्तिप्रा । 'आतोऽनुपसर्गे कः' दयिष्यते रक्षिष्यति दयिनी । 'भविष्यदाधमर्ण्ययोर्णिनिः' भुक्तिमुक्तिप्रा चासौ दायिनी रक्षिका चेति कर्मधारयः । व्याहारा उक्तयः । परमाः श्रेष्ठाः स्तुतयः । तादर्थ्ये चतुर्थी ॥ ६ ॥

**( ४ नागोजीभट्टी )** पुनरपि स्तुतेरघटनामाह । सर्वेति । सर्वभूता विश्वात्मिका देवी द्योतनशीला स्वर्गमुक्त्योः प्रकर्षेण दात्रीति यदा त्वं स्तुता तदा वा स्तुतये परमा अधिका उक्तयः का भवन्तु । न कापीत्यर्थः ॥ ६ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** सर्वभूतेति ७ ॥ ६ ॥

**( ६ दंशोद्धारः )** सर्वभूतेति । सर्वभूतं प्राप्तं यदा । यदेत्यव्ययं । वेदये यदि त्वं स्वर्गमोक्षप्रदा तदा तदास्माभिः स्तुतेत्यन्वयः । सर्वात्मिकायाः स्तोतुमशक्यत्वादिति भावः । वाशब्दः पक्षान्तरे । अथवा का वाचस्तव स्तुतये भवन्तु । न कापीत्यर्थः । यद्वा सर्वभूतानां अयदा शुभभाग्यदा त्वं अतः का वाचस्तव स्तुतये समर्था इत्यर्थः । 'अयः शुभावहो विधिः' ॥ ६ ॥

**सर्वस्य बुद्धिरूपेण जनस्य हृदि संस्थिते । स्वर्गापवर्गदे देवि नारायणि नमोऽस्तु ते ॥ ७ ॥**

**( १ गुप्तवती )** ॥ ७ ॥

**( २ चतुर्धरी )** तथाप्युपगम्य स्तूयस एवेत्याह । सर्वस्येति । अपवर्गो मुक्तिः । नारा आपो अयनं यस्येति नारायणः परमात्मा तस्येयं शक्तिर्नारायणी तस्याः संबुद्धौ । ते तुभ्यम् ॥ ७ ॥

**( ३ शान्तनवी )** हे देवि सर्वस्य जनस्य जन्तोः हृदि चेतसि बुद्धिरूपेण संस्थिते हे सर्वजनहृदयस्थिते बुद्धिबुद्धिरूपे हे स्वर्गापवर्गदे हे नारायणि नमस्तेस्तु । हे देवि संस्थिते सम्यगवस्थिते । 'संस्थाधारे स्थितौ मृतौ' स्वर्गं चापवर्गं मोक्षं च ददाति स्वर्गापवर्गदा । 'आतोऽनुपसर्गे कः' । नरः कश्चिदृषिः । नरस्यापत्यं नारायणः । 'नडादिभ्यः फक्' । फस्यानयः । नारायणस्य स्त्री मायोपचारात् नारायणी । विष्णुमायेत्यर्थः । यद्वा 'आपो नारा इति प्रोक्ताः' । नारसम्मयमयनमस्य नारायणः । संज्ञायां णत्वं । यद्वा नराणां समूहो नारमयनमस्य नारायणः । तस्य स्त्री नारायणी लक्ष्मी तत्संबुद्धौ हे नारायणि । 'का-

त्यायनीं तुष्टुवुरिष्टलाभात्' इति कात्यायन्याः स्तुतौ प्रकृतायां नारायणीनमस्कृतिः स्त्रियः समस्ताः कात्यायन्यंशा एवेति प्राक्प्रणीतत्वात्कार्यभेदमात्रभिन्नत्वेपि तयोरैक्यादविरुद्धत्वमवगन्तव्यम् ॥ ७ ॥

**( ४ नागोजीभट्टी )** तथाप्युपगम्याप्याह । सर्वस्येति । बुद्धिर्निश्चयात्मकज्ञानं तद्द्वारैव स्वर्गापवर्गदा त्वं नारायणस्य विष्णोः शक्तिर्नारायणी तत्संबोधने शुद्धसत्त्वप्रधाना वैष्णवी त्वमिति ध्वन्यते । ते तुभ्यं । यद्वा नारस्य जीवसमूहस्यायनी स्थानभूता तद्रूपा तत्साधनम् ॥ ७ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** सर्वस्येति ८ ॥ ७ ॥

**( ६ दंशोद्धारः )** अतः केवलं तव नामभिर्नमस्कारमेव कुर्मह इत्याहुः । सर्वस्येत्यादि । बुद्धिरूपेण अध्यवसाय-कार्यन्तःकरणरूपेण नारायणि नारा आपोऽयनं यस्येति नारायणः । यद्वा नराणां समूहो नारं 'तस्य समूहः' इत्यण् । तदयनं यस्येति नारायणः सर्वान्तर्यामी । यद्वा नारस्य जीवसमूहस्याऽयनं प्रवृत्तिर्यस्मात् । अथवा न विद्यन्ते अरा दोषा यस्मिंस्तन्नारं श्वेतद्वीपं वैकुण्ठं वा तदयनं यस्येति नारायणः । नारं जीवसमूहमयते जानाति वा नारायणः । अयतेर्गत्यर्थ-त्वाद्गत्यर्थानां ज्ञानार्थत्वात् नारमयति प्रवर्तयतीति ण्यन्तादपि बाहुलकात्कर्तरि ल्युट् । नारायण इति केचित् । अरा दो-षास्तद्भिन्ना नारा गुणास्तेषामाश्रय इति वार्थः । यद्वा नराणां संबन्धः नारो ब्रह्मा । संबन्धश्चोत्पाद्योत्पादकत्वं तस्याऽयनं सर्वान्तर्यामित्वात्सोऽयनं यस्येऽत्यर्थो वा । यद्वा नरस्य वसुदेवस्यापत्यं नारायणः । नडादित्वात्फक् 'पूर्वपदात्संज्ञायाम्' इति णत्वं । तस्य शक्तिर्नारायणी तत्संबुद्धिः । ते तुभ्यम् ॥ ७ ॥

## कलाकाष्ठादिरूपेण परिणामप्रदायिनि । विश्वस्योपरतौ शक्ते नारायणि नमोऽस्तु ते ॥ ८ ॥

**( १ गुप्तवती )** कलाकाष्ठेति । परिणामेति षड्भावविकाराणामुपलक्षणम् ॥ ८ ॥

**( २ चतुर्धरी )** कला त्रिंशत्काष्ठात्मकः कालः । काष्ठाः अष्टादश निमेषात्मकः । आदिशब्दो निमेषमुहूर्ताद्युपसंग्रहार्थः । विश्वस्य जगतः परिणामोऽन्यथाभावः । भावान्तरापत्तिरिति यावत् । विश्वस्य उपरतौ नाशे शक्ते आसक्ते । प्रवृत्ते इति या-वत् । तालव्यपाठे शक्ते समर्थे ॥ ८ ॥

**( ३ शान्तनवी )** 'अष्टादशनिमेषास्तु काष्ठा त्रिंशत्तु ताः कला' इत्यभिधानात्काष्ठाख्यः कालः अष्टादशनिमेषकः । कलाख्यस्तु कालः त्रिंशत्काष्ठात्मकः इति काष्ठा कलातो न्यूनेति कला काष्ठाकलादिरूपेणेति पाठः सभ्यः । हे काष्ठाकलादि-रूपेण परिणामप्रदायिनि । विश्वस्य खलु काष्ठाकलाक्षणमुहूर्ताहोरात्रपक्षमासर्त्वयनसंवत्सरादिकालरूपेण परिणामप्रदायिनि बाल्ययौवनवार्धकादिवयोविशेषपरिणामकारिणि । तथा विश्वस्य उपरतौ विषये विश्वस्यावसाने च विषये या शक्तिः तत्सं-बुद्धौ हे शक्ते । यद्वा विश्वस्योपरतौ विषये शक्ता समर्था रुद्ररूपा तत्संबुद्धौ हे शक्ते हे समर्थे हे नारायणि नमोऽस्तु ते नमस्ते तुभ्यमस्तु । नारायणीति । अय गतौ । इण् गतौ । इ गतौ । अय्यते इयते वा अयनः परमात्मा । कर्मणि ल्युट् । पुल्लिङ्गता तु प्रयोगतः । 'लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य'इति वचनात् । नराणामयनः नारायणः ।'पूर्वपदात्संज्ञायामगः' इति णत्वं । नारायणस्य परमात्मनः इयं माया नारायणी विष्णुमाया । अन्यथा नारायणस्य विष्णोरियं नारायणीयेति 'वृद्धाच्छः' स्यात् । तस्मात्संबन्धेऽणेव । तत्संबुद्धौ हे नारायणि । नमनं नमो नतिः प्रह्वीभावः परिणामः प्राणिकायावयवोपचयलक्ष-णावृद्धिः तां प्रददाति परिणामप्रदायनी । 'सुप्यजातौ णिनिः' । 'आतो युक् चिण्कृतोः' ज्ञापकसिद्धमनित्यमिति क्वचि-त्सोपसर्गादपि णिनिः । दुग्धं दधिरूपेण परिणमतीत्यादौ परिणामो रूपान्तरावाप्तिर्दुग्धादिस्वरूपाद्विवर्तः । परिणामप्रदायि-नीति तु पाठे परितो मानमियत्तया परिच्छेदः प्राणिकायादेः कालकृताशरीरावस्थायौवनादिवयः तस्य परिच्छेदः परिमाणं एतावत्कालपरिमितमिदं बाल्यमेतावत्कालपरिमितं यौवनमित्यादिशरीरावस्थापरिच्छेदः तत् प्रददाति परिणामप्रदायिनी तत्संबुद्धौ हे परिणामप्रदायिनि ॥ ८ ॥

**( ४ नागोजीभट्टी )** कलेति । कलेति त्रिंशत्काष्ठाः । अष्टादशनिमेषाः काष्ठा । आदिना क्षणमुहूर्तादयः । परि-णामो जनानामवस्थाविशेषः तेनाखण्डकालरूपत्वं । तदेव पुनराह । विश्वस्योपरतौ नाशे शक्तिः । नानाशक्तिमतीत्यर्थः । कालस्यैव जगद्भक्षकत्वात् ॥ ८ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** कलाकाष्ठादीति ९ ॥ ८ ॥

**( ६ दंशोद्धारः )** कलेति । त्रिंशत्काष्ठात्मकः कालः कला । काष्ठापञ्चदशनिमेषात्मकः । आदिना मुहूर्तादीनां सं-ग्रहः । तद्रूपेण परिणामस्याऽन्यथाभावस्य रूपान्तरापत्तेः प्रदायिनी उपरतौ नाशे शक्ते समर्थे । सक्ते इति पाठे प्रवृत्ते इत्यर्थः ॥ ८ ॥

**सर्वमङ्गलमाङ्गल्ये शिवे सर्वार्थसाधिके । शरण्ये त्र्यम्बके गौरि नारायणि नमोऽस्तु ते ॥ ९ ॥**

**( १ गुप्तवती )** ॥ ९ ॥

**( २ चतुर्धरी )** सर्वेषां मङ्गलादीनां यन्माङ्गल्यं मङ्गलस्वभावस्तद्रूपे । मङ्गलानामपि मङ्गलं त्वमेवेत्यर्थः । शिवे कल्याणकारिणि शरण्ये शरणार्हे । आश्रयणीये इतियावत् । त्रीण्यम्बकानि नेत्राणि यस्याः 'स्त्रियां दृष्टिदृशौ देवदीपो लोचनमम्बकं' इत्यभिधानात् । गौरि गौरवर्णे ॥ ९ ॥

**( ३ शान्तनवी )** सर्वाणि मङ्गलानि शुभानि यतः स्युः सा सर्वमङ्गला उमा रमा च । मङ्गलेभ्यो हिता मङ्गल्या 'उगवादिभ्यो यत्' । सर्वमङ्गलमाङ्गल्ये इति वृद्धिपाठपक्षे तु मगि गतौ मङ्ग्यते मङ्गलानि मङ्गलेभ्यो हिता मङ्गल्या मङ्गल्यैव माङ्गल्या । 'अन्येषामपि दृश्यते' इति दीर्घः पुरुषवत् । कश्चित्त्वाह । 'गुणवचनब्राह्मणादिभ्यः कर्मणि च' इति कर्मणि ष्यञिति तन्न । तस्य हि अर्थसङ्गत्याभावस्तावदास्तां । स्त्रियां टापं बाधित्वा षित्वात् ङीषि माङ्गलीत्येव स्यात् । ननु मङ्गल्येति रूपसिद्धिरिति तदुपेक्षणीयं प्रेक्षावद्भिः । शिवा भवानी रुद्राणी तस्याः संबुद्धौ हे शिवे । यद्वा शिवा मङ्गलोपेतेति रमापि शिवा भवति । हे शिवे हे रमे सर्वेषामर्थानां साधिका साधयित्री उमा रमा च । हे सर्वार्थसाधिके । 'अर्थोभिधेयरैवस्तु प्रयोजननिवृत्तिषु' 'शरणं गृहरक्षित्रोः' शरणेषु गृहरक्षितृषु साधुः प्रवीणा योग्या च शरण्या उमा रमा च । 'तत्र साधुः' इति यत् । हे शरण्ये हे रक्षितृषु प्रवीणेषु सोमसूर्याग्निरूपाणि त्रीण्यम्बकानि अक्षीणि यस्याः सा त्र्यम्बका उमा । त्रयोऽम्बकाः पितरो रक्षकाः ब्रह्मविष्णुमहेश्वररूपाः परिवारभूता यस्याः सा त्र्यम्बका उमा रमा च हे त्र्यम्बके । त्रयाणां लोकानां अम्बकः पितेत्यागमः । गौरी उमा । यद्वा गुङ् अव्यक्ते शब्दे । गूयते अव्यक्तं गुप्तं शब्दयते मनसा गृह्यते ध्यायते गौरी उमा रमा च । 'ऋज्रेन्द्र' इत्युणादिसूत्रेण रनिप्रत्यये गुङो वृद्धिर्निपात्यते । 'गौरोऽरुणे सिते पीते' गौरादित्वान्ङीप् । नारायणस्य भगवतः स्त्री नारायणी लक्ष्मीः । यद्वा अयः शुभावहो विधिः । यत्र परमात्मनि स अयनः परमात्मा । पामादित्वान्मत्वर्थीयो नः । नृ नये । नयो नीतिः । भावे ऋदोरप् । नरणं नरः नरेण नयेन अयनः नरायणः परमात्मा नरायणस्य परमात्मनः इयं माया नारायणी विष्णुमाया उमा रमा च हे नारायणि नमोऽस्तु ते । 'नमः स्वस्ति' इति चतुर्थी ९

**( ४ नागोजीभट्टी )** सर्वेति । सर्वमङ्गलानां मङ्गलत्वरूपे शिवे कल्याणकर्त्रि शरण्ये शरणार्हे त्र्यम्बके त्रिनेत्रे गौरि गौरवर्णे । अनेन शैवीत्वमप्यस्याः ध्वनितम् ॥ ९ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** सर्वमङ्गलेति १० ॥ ९ ॥

**( ६ दंशोद्धारः )** सर्वेषां मङ्गलानां यन्मङ्गल्यं मङ्गलभावस्तद्यस्याः । भावे ष्यञि वृद्ध्यऽभाव आर्षः । माङ्गल्य इति पाठः सुगमः । शिवे कल्याणकारिणि शरण्ये शरणाऽर्हे त्रीणि अम्बकानि नेत्राणि यस्याः । 'स्त्रियां दृष्टिदृशौ देवदीपो लोचनमम्बकं' इत्यभिधानात्संज्ञाशब्दानामव्युत्पन्नत्वेन प्रत्ययस्थत्वाभावादित्वं न । अम्बिकेति पाठे अबि शब्दे । पचाद्यच् । त्रयो अम्बाः वर्णाः अकारोकारमकाराः प्रतिपादका यस्याः । प्रणवप्रतिपाद्ये इत्यर्थः । स्वार्थे कः । गौरि गौरवर्णे ॥ ९ ॥

**सृष्टिस्थितिविनाशानां शक्तिभूते सनातनि । गुणाश्रये गुणमये नारायणि नमोस्तु ते ॥ १० ॥**

**( १ गुप्तवती )** ॥ १० ॥

**( २ चतुर्धरी )** सृष्ट्यादीनां शक्तयो ब्रह्महरिहरात्मकाः तद्भूते तत्स्वरूपे सनातनि नित्ये गुणाश्रये गुणभावने । स हि प्रधानोपहितः सत्वाद्यधिकरणं भवति गुणमयप्रकृतिभावेन । सा हि सत्वरजस्तमसां साम्यावस्था । यद्वा गुणाश्रया व्योमादिभावेन । गुणमया शब्दादिभावेन । स्वरूपे मयड्विधानात्तद्धिता नानाविधाः प्रत्ययाः स्युरिति महाभाष्यस्मरणात् डाप् प्रत्ययः ॥ १० ॥

**( ३ शान्तनवी )** जगतां सृष्टेः सर्गस्य स्थितेर्वर्तमानस्य विनाशस्य प्रलयस्य हे शक्तिभूते शक्तिरित्येवंभूता जाता । हे शक्तिरूपे । जगतः सर्गस्थितिसंहारकरणविषये या शक्तिः शक्तता सामर्थ्यरूपा तद्भूता देवी तत्संबुद्धौ हे शक्तिभूते । यद्वा ब्राह्मी शक्तिः सृष्टौ वैष्णवी शक्तिः स्थितौ माहेश्वरीशक्तिर्विनाशे तद्भूता त्रिशक्तिभूता या शक्तिः सा सामान्येन शक्तिभूता हे शक्तिभूते । यद्वा शक्तीनां भूः कारणभूतिः परमात्मा तेन ऊता गुम्फिता तन्तुनेव प्रोता । ऊयी तन्तुसंताने वूः । यद्वा शक्तीनां भूतिरवताररूपा शक्तिर्भूतिः हे शक्तिभूते । यद्वा शक्तीनां भुवः भूमयः ब्रह्मविष्णुमहेश्वराः तेषां ऊतिः संघट्टना तन्तुनेव गुम्फन सन्ततनं शक्तिभूतिः । वेञः स्त्रियां क्तिन् । हे शक्तिभूते हे सनातनि 'सायं चिरं' इत्यादिसूत्रेण ल्युस्तुट्च । स्त्रियां टित्वान्ङीप् । 'सनात्सनातना नित्ये' 'शाश्वतस्तु ध्रुवो नित्यसदातनसनातनाः' हे शाश्वति । हे गुणाश्रये गुणाः आश्रयो यस्याः सा गुणाश्रया । गुणाः सत्वं रजस्तमश्चेति त्रयः । गुणेषु वर्तमानेत्यर्थः । यद्वा गुणानामाश्रयो यत्र सा गुणाश्रया हे गुणाश्रये । यद्वा

---

१ 'मङ्गल्ये' इत्यपि पाठः ।

सत्वादिगुणयुक्ता गुणाः यथायोगं ब्रह्मादयस्ते आश्रयो यस्याः सा गुणाश्रया हे गुणाश्रये हे गुणमये । मय गतौ । मयते गच्छति लोकान्माया । पचाद्यचि स्त्रियां टाप् । गुणैर्मया गुणमया । गुणैर्गतिमतीत्यर्थः । यद्वा हे अगुणमये अगुणं ब्रह्म मयते मया अगुणेन ब्रह्मणा मया गमनपरा अगुणमया हे अगुणमये । ब्रह्मतत्त्वेन मयमाने इत्यर्थः । गुणाश्रये गुणमयि इति पाठे तु गुणानां विकारः गुणमयी । यथायोगं हे गुणमयि । 'मयड्वैतयोर्भाषायां' इत्यादिना मयट् । स्त्रियां टिदन्तत्वान्ङीप् । यद्वा गुणेभ्यो हेतुभ्य आगता गुणमयी । हे गुणमयि । 'हेतुमनुष्येभ्यः' इत्यधिकृत्य 'मयट् च' इति मयट् । यद्वा गुणाः प्रकृता उच्यन्तेऽस्यां गुणमयी देवी हे गुणमयि । 'तत्प्रकृतवचने मयट्' । यद्वा हे अगुणमयि हे नारायणि नमोस्तु ते । नारायणस्य स्त्री नारायणी लक्ष्मीः हे लक्ष्मि नमस्तेस्तु । यद्वा अय्यते ईयते गम्यते प्राप्यते अयना मुक्तिः । ऋशब्द अदितीवाची । अरोऽपत्यानि पुमांसः आरा देवाः । नशब्दो नञ्समानार्थोऽननुबन्धकः । न सन्त्ययाप्यारा देवाः साधकत्वेन यत्र सा नारा । नारा चासौ अयनी चेति नारायणी मुक्तिः । देवैरप्ययापि दुष्प्राप्येत्यर्थः । तत्संबुद्धौ हे नारायणि हे मुक्ते नमोऽस्तु ते ॥ १० ॥

**( ४ नागोजीभट्टी )** सृष्टीति । आद्यार्धेन ब्रह्मादीनां सृष्ट्यादिशक्तिः त्वमेवेत्युक्तं । सनातनि नित्ये गुणानां महदादीनां आश्रयभूते अगुणमये अविद्यमानगुणकृतविकारे ॥ १० ॥

**( ५ जगच्चन्द्रचन्द्रिका )** सृष्टिस्थितीति ११ ॥ १० ॥

**( ६ दंशोद्धारः )** सृष्टीति । सृष्ट्यादीनां शक्तयो विधिहरिहररूपाः तद्भूते तद्रूपे सनातनि नित्ये गुणाश्रये पुरुषरूपे गुणमये सत्वाद्यात्मकप्रकृतिरूपे । मयष्टित्वान् ङीषि प्राप्तेपि छान्दसत्वादाप् । यद्वा डुमीञ् प्रक्षेपे । ण्यच् मयः प्रक्षेपः । गुणानां मयोऽस्त्यस्यां । अगुणमये निर्गुणे इति वा छेदः ॥ १० ॥

## शरणागतदीनार्तपरित्राणपरायणे । सर्वस्यार्तिहरे देवि नारायणि नमोऽस्तु ते ॥ ११ ॥

**( १ गुप्तवती )** ॥ ११ ॥

**( २ चतुर्धरी )** शरणेति । दीना व्याध्यादिदुःखभाजः । आर्तास्तस्करादिपीडिताः । शरणागता ये दीनार्तास्तेषां परित्राणमेव परायणमभीष्टं यस्याः 'परायणमभीष्टे स्यात्तत्पराश्रययोरपि' इति नामशासनात् ॥ ११ ॥

**( ३ शान्तनवी )** 'शरणं गृहरक्षित्रोः' । शरणं रक्षितारं आगताः रक्ष रक्षेति प्रपन्नं प्राप्ताः शरणागताः त एव दीनाः आर्ताश्च दुःखिताः लोकाः तेषामापद्भ्यो दुःखेभ्यः परित्राणं परिरक्षणं तदेव परं मुख्यमुद्दिश्यमयनं वर्त्म प्रसरणं च यस्याः सा तत्संबुद्धौ शरणागतदीनार्तपरित्राणपरायणे । सर्वस्य लोकस्य आर्तिहरे पीडादूरीकर्त्रि । 'हरतेरनुद्यमनेच्' हे दुःखहारिणि हे भगवति हे नारायणि नारायणस्य स्त्रि हे लक्ष्मि हे वैष्णवप्रकृते नमस्तेस्तु । यद्वा न आरायणि न मः अः तुते इति छेदः । न इति देवमाता मः शिवः अः विष्णुः । द्वौ प्रतिषेधौ प्रकृतमप्रतिषिद्धमर्थं गमयतः । उर्देवमातुरपत्यानि । पुमांसः आराः ऋभवः देवाः । आय्यते ईयते अयनी आराणां देवानामयनी आराधनीया ध्यातव्या देवता आरायणी 'पूर्वपदात्संज्ञायामगः' इति णत्वं । हे आरायणि त्वां मः शिवः अः विष्णुः न तुते अपितु स्तुते नौत्येव । 'मः शिवश्चन्द्रमाश्च स्यात्' । 'अकारो वासुदेवः स्यात्' । ष्टुञ् स्तुतौ लङात्मनेपदम् ॥ ११ ॥

**( ४ नागोजीभट्टी )** शरणेति । दीनाः सर्गादिदुःखभाजः । आर्ताः तस्करादिपीडिताः । परायणस्तत्परः तदुपपादकमार्तिहरे इति नियताः । आर्तेः पीडायाः हन्त्रीत्यर्थः ॥ ११ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** शरणेति १२ ॥ ११ ॥

**( ६ दंशोद्धारः )** शरणेति । दीनाः कार्श्यादिदुःखभाजः । आर्तास्तस्करादिपीडिताः तेषां परित्राणं रक्षणमेव परायणमभीष्टमस्याः । 'परायणमभीष्टं स्यात्तत्पराश्रययोरपि' इत्यभिधानात् ॥ ११ ॥

## हंसयुक्तविमानस्थे ब्रह्माणीरूपधारिणि । कौशाम्भःक्षरिके देवि नारायणि नमोऽस्तु ते ॥१२॥

**( १ गुप्तवती )** कौशेति । कुशं जलं तस्येदं कमण्डलु कौशं तद्गताम्भःसेचिके ॥ १२ ॥

**( २ चतुर्धरी )** कुशस्येदमम्भः कौशाम्भः कुशमन्त्रितं जलं तत् क्षरतीति वुण्प्रत्ययः ॥ १२ ॥

**( ३ शान्तनवी )** हंसैर्युक्तं विमानं देवतायानं तत्र तिष्ठति हंसयुक्तविमानस्था तत्संबुद्धौ हे हंसयुक्तविमानस्थे । यद्वा हंसैर्यतिविशेषैः सूर्यैश्च युक्तं समाश्रितं यत् विमानं विगताहंकारं परब्रह्मतत्त्वं तत्र तिष्ठति हंसयुक्तविमानस्था हे हंसयुक्तविमानस्थे हे परब्रह्मतत्त्वस्थे । 'हंसः श्वेतगरुत्सूर्ययतिप्राणात्मसु स्मृतः' । हे ब्रह्माणीरूपधारिणि । अण शब्दार्थः । 'वेदस्तत्त्वं तपो ब्रह्म ब्रह्मा विप्रः प्रजापतिः' । ब्रह्म आणति पठति । यद्वा ब्रह्म अणयति पठयति ब्रह्माणी । ब्रह्मशक्तिर्देवता । अणेतराणयतेर्वा(?) कर्मण्यणि स्त्रियां ङीप् । ब्रह्माण्याः रूपमाकृतिः तत् धरति धारयति वा ब्रह्माणीरूपधारिणी तत्संबुद्धौ हे ब्रह्माणीरूपधारिणि । रूप रूपक्रियायां चुरादिः । रूप्यते कथ्यते रूपं । प्रातिपदिकं गृह्यतेऽत्र नतु प्रशंसायां रूपप्प्रत्ययः ।

अन्यथा ब्राह्मणिरूपा इतिवत् घरूपकल्पसूत्रेण ह्रस्वत्वं स्यात् । हे कौशाम्भःक्षरिके । कुशो दर्भः तस्येदं कौशं कौशं च तत् अम्भश्च कौशाम्भः । क्षर संचलने । क्षरणं क्षरः । घञि संज्ञापूर्वको विधिरनित्य इत्यत उपधाया वृद्ध्यभावः । यद्वा 'घञर्थे कविधानं' । कौशाम्भसः क्षरः सेचनं कौशाम्भक्षरः तं करोति इति णिचि ण्वुल् । वोरकः स्त्रियां टाप् । 'प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुपः' इति इत्वं । तत्संबुद्धौ हे कौशाम्भःक्षरिके शत्रुषु कुशोदकक्षेपणं कुर्वित्यर्थः । यदुक्तं । 'कमण्डलुजलाक्षेपहतवीर्यान्हतौजसः । ब्रह्माणी चाकरोच्छत्रून्येन येन स्म धावति' । यद्वा क्षरं करोति क्षरयति क्षरिका आसेक्त्री । कौशाम्भसः क्षरिका । अणिजन्तस्येति भावः । क्षरतेस्तु ण्वुलि क्षारिका । यद्वा कौशाम्भः क्षरत्यासिञ्चति कौशाम्भःक्षरी । कर्मण्यण् । ङीप् । स्वार्थे कः । 'केणः' इति ह्रस्वः । यद्वा कुशसंबन्धी अम्भसः क्षरः आयुधत्वेन यस्याः सा कौशाम्भःक्षरिका । 'शेषाद्विभाषा'इति कप् । अत्र पक्षे आप् सुपः पर इति इत्वं न भवति । ब्रह्माणीरूपमुक्तं प्राक् । 'हंसयुक्तविमानस्था साक्षसूत्रकमण्डलुः । आयाता ब्रह्मणः शक्तिर्ब्रह्माणी साभिधीयते' । हे देवि हे भगवति हे नारायणि नारायणस्य स्त्रि लक्ष्मि नमस्तेऽस्तु । यद्वा नारायणि नमोस्तुते । ना अ आ ऋ आ अयनि न मा उः स्तुते इति छेदः । ना पुरुषः । 'अकारो वासुदेवः स्यादाकारस्तु पितामहः' । ऋ इति देवमाता । ऋभुशब्दप्रयोगदर्शनात् । आ इति आङुपसर्गः । अयनि इति संबुद्ध्यन्तं पदं । न मा इति द्वौ प्रतिषेधौ । उकारस्तु महेश्वरः । स्तुते इति । ष्टुञ् स्तुतौ इत्यत्र आत्मनेपदं । अय गतौ इण् गतौ 'कृत्यल्युटो बहुलं' इति कर्मणि ल्युट् । आसमन्तादय्यते ईयते वा आयनी उपासनी इष्टदेवता । ऋर्देवमातुः आयनी 'इको यणचि' । रायनी 'पूर्वपदात्संज्ञायामगः' इति णत्वं । तत्संबुद्धौ हे रायणि हे देवि हे देवमातुरदितेरभीष्टदेवते त्वं आश्च ब्रह्मा अश्च विष्णुः उश्च महेश्वरः इति त्रिमूर्तिलक्षणो ना पुरुषः मा न स्तुते न स्तुते इति मा । अपि तु परां देवतां त्वां स्तौत्येव ॥ १२ ॥

( ४ **नागोजीभट्टी** ) हंसेति । हंसयुक्तविमानस्थिते ब्रह्माणीरूपधारिके कुशं जलं तस्यायं कौशः कमण्डलुः तदम्भसः क्षरिके सेचिके ॥ १२ ॥

( ५ **जगच्चन्द्रचन्द्रिका** ) हंसयुक्तेति १३ ॥ १२ ॥

( ६ **दंशोद्धारः** ) हंसेति । कुशस्येदं कौशं । कुशप्रोक्षितमिति यावत् । तदम्भः क्षरति सिञ्चतीति कौशाम्भःक्षरिका । ण्वुलि वृद्ध्यभाव आर्षः । यद्वा कौशाम्भसः क्षरतेः पचाद्यच् । सैव कौशाम्भःक्षरिका । स्वार्थे कः ॥ १२ ॥

**त्रिशूलचन्द्राहिधरे महावृषभवाहिनि । माहेश्वरीस्वरूपेण नारायणि नमोऽस्तु ते ॥ १३ ॥**

( १ **गुप्तवती** ) ॥ १३ ॥

( २ **चतुर्धरी** ) चन्द्रश्चन्द्रैकदेशः । अहिः सर्पः । माहेश्वरीस्वरूपेणेति पूर्वार्धेनान्वयः ॥ १३ ॥

( ३ **शान्तनवी** ) 'अस्त्री शूलं रुगायुधं' । धृञ् धारणे भ्वादिः । धरतीति धरा । पचाद्यच् । त्रिशूलचन्द्राहीनां धरा । अन्यथा कर्मण्यणि आत्स्यात् । त्रिशूलं च चन्द्रश्च अहिश्च धरतीति विग्रहश्रवणात् । त्रिशूलमायुधं । चन्द्रोऽत्रैककलात्मकः । किरीटभूषणौचित्यात् । अहयः फणिनः । द्वन्द्वे घि । बहुष्वनियमः । तत्संबुद्धौ हे त्रिशूलचन्द्राहिधरे हे महावृषभवाहिनि महान् वृषभः महावृषभेण वाहिनी वाहनवती । 'ऋन्नेभ्यो ङीप्' । यद्वा महावृषभेण वाहयति स्वं महावृषभवाहिनी । महावृषभो वाहनं यस्याः सा इति बहुव्रीहौ तु महावृषभवाहनेति स्यात् । यद्वा वृषभं वाहयति वृषभवाहिनी । महती वृषभवाहिनी महावृषभवाहिनी । हे महावृषभवाहिनि । महेश्वरस्येयं शक्तिः देवता माहेश्वरी तस्याः स्वरूपमाकारः तेन ध्येयतया संभाविते हे नारायणि नमोस्तु ते । हे नारायणस्य भगवतः स्त्रि हे लक्ष्मि नमस्तेऽस्तु । यद्वा अन चेति अन धातुः प्राणनार्थः । अननं अनिः 'इकृष्यादिभ्यः' स्त्रियां 'कृदिकारादक्तिनः' इति ङीप् । अनी इः कामः एः कामस्य तद्दैवताकस्य वा बीजस्य अनी प्राणरूपायनी । कामः प्राणप्रतिष्ठात्मा । अं विष्णुं राति रक्षकत्वेन गृह्णाति अरा त्रिलोकी अरायाः त्रिलोक्याः यनी अरायणी । अरायः शरणीकृतविष्णोः त्रिलोक्याः कामः प्राणप्रतिष्ठाभूतः त्वां भगवतीं उः शिवः ना पुरुषः शिवाख्यपुरुषः । न मा स्तुते अपितु स्तुते स्तौति जपति । द्वौ निषेधौ प्रकृतमर्थं गमयतः ॥ १३ ॥

( ४ **नागोजीभट्टी** ) त्रिशूलेति । माहेश्वरीस्वरूपेणेति पूर्वार्धान्वयि ॥ १३ ॥

( ५ **जगच्चन्द्रचन्द्रिका** ) त्रिशूलेति १४ ॥ १३ ॥

( ६ **दंशोद्धारः** ) त्रिशूलेति । चन्द्रश्चन्द्रैकदेशः । अहिः सर्पः । माहेश्वरीस्वरूपेणेति पूर्वार्धेनान्वेति ॥ १३ ॥

**मयूरकुक्कुटवृते महाशक्तिधरेऽनघे । कौमारीरूपसंस्थाने नारायणि नमोऽस्तु ते ॥ १४ ॥**

( १ **गुप्तवती** ) मयूरेति । तस्य कुक्कुटः पुत्रः पिच्छं वा । 'कुक्कुटः कुकुभे पिच्छे पुत्रे च चरणायुधे' इति मेदिनीति बहवः । वस्तुतस्तु मयूरः कुक्कुटश्चेति द्वे अपि स्कन्दस्य तृतीयावरणस्थदेवते । तदुक्तं शिवार्चनचन्द्रिकायां सुब्रह्मण्यमनुप्रकरणे 'दलाग्रेषु च पूर्वादि यजेद्देवाननन्तरं । देवसेनापतिं शक्तिं विघ्नं कुक्कुटमेव च । मेधां मयूरं वज्रं च द्वीपं लोके-

श्वरांस्ततः' इति । स्कन्देन हतः शूरपद्मासुर एव मयूरः कुकुटश्चेति रूपद्वयं बिभ्रत्स्वामिनो वाहनं ध्वजश्चेति क्रमेणाभवदिति स्कान्दे कथा च ॥ १४ ॥

**( २ चतुर्धरी )** मयूरैः कुकुटैश्च वृते वेष्टिते इति पाठे मयूरकुकुटौ धरतीति कर्तरि क्तः । अघं पापं दुःखं च तद्धीना अनघा तत्संबुद्धिः ॥ १४ ॥

**( ३ शान्तनवी )** हे अनघे हे कौमारीरूपसंस्थाने अतएव महाशक्तिधरे अतएव हे मयूरकुक्कुटवृते नमोस्तु ते नारायणस्य भगवतः विश्वरूपस्य इयं आकृतिः नारायणीमूर्तिः । छान्दसत्वाद्वृद्ध्याच्छमनाश्रित्य सामान्यतोऽणेव । हे नारायणि । यद्वा नराणामयनं नरायणं धर्मार्थकाममोक्षलक्षणं तस्येयं साधिका तत्र जातावतीर्णा तत्साधयितुं वा । शैषिकोण् । नारायणी भगवती । हे नारायणि नमो नमस्तेस्तु । न विद्यते अघं यतः सा अनघा हे अनघे । यद्वा न विद्यते अः विष्णुः पूज्यो येषां ते अनाः दैत्याः तान् अनान् हन्ति अनघा हे अनघे । 'सप्तम्यां जनेर्डः' 'अन्येष्वपि दृश्यते' इत्यत्र अपिशब्दः सर्वोपाधिव्यभिचारार्थः । तेन धात्वन्तरादपि कारकान्तरेपि डो भवति । डित्यभस्यापि टेर्लोपः । पृषोदरादित्वात् हकारस्य घत्वं । हे विष्णुद्वेषिघातिनि हे कौमारीरूपसंस्थाने 'संस्थाधारे स्थितौ मृतौ' रूपस्य स्वरूपस्य आकारस्य संस्थितिः सम्यक्अवस्थानं सन्निवेशः संस्थानं । यद्वा कौमारी षण्मुखीरूपसंस्थानं शरीरावयवसन्निवेशविशेषो यस्याः सा कौमारीरूपसंस्थाना तत्संबुद्धौ हे कौमारीरूपसंस्थाने । अतएव हे महाशक्तिधरे महती शक्तिरायुधं महाशक्तिः धरतीति धरा महाशक्तेर्धरा महाशक्तिधरा । अन्यथा तु विग्रहे कर्मण्यण् स्यात् । महाशक्तिरतिसामर्थ्यं तस्या धरा हे मयूरकुकुटवृते । मीञ् हिंसायां । क्र्यादिः । मीनात्यहीन् मयूरः । मीनातेरूरन् । 'मयूरो बर्हिणो बर्ही कुकुटश्चरणायुधः' कुगुच्चारणेन कुकुटः । कुट कौटिल्ये । पचाद्यच् । मयूरा वाहनीभूताः क्रीडार्थाश्च वर्धिताः कुकुटाश्च युद्धचातुर्यदिदृक्षौचित्यादुपार्जिताः तैर्मयूरैः कुकुटैश्च वृता वेष्टिता यत इयं कौमारी । तेन बाल्योचिता कुकुटकुतुकक्रीडोक्ता । हे मयूरकुकुटक्रीडारसरते इत्यर्थः । यद्वा मयूरैः कुकुटैश्च वृतिरावरणं यस्याः सा तथोक्ता । क्तिन्नन्तं रूपं । यद्वा क्रौञ्चव्यूहचक्रव्यूहादिवत् मयूरव्यूहकुकुटव्यूहौ च संग्रामोचितसैन्यसन्निवेशौ संविज्ञेयौ । यदभ्यधुः । 'व्यूहस्तु बलविन्यासो भेददण्डादयो युधि' । 'दण्डो मण्डलभोगौ चाप्युत्सन्नश्चावलो दृढः । व्यूहस्तेषां विशेषाः स्युश्चक्रव्यूहादयोऽपि च' इति । तत्रादिग्रहणादिष्टाः क्रौञ्चस्य कार्श्येन मयूरकुकुटकूर्मकुररादयो व्यूहा ग्राह्याः । ततश्च मयूरव्यूहकुकुटव्यूहौ ताभ्यां वृता वेष्टिता परिवारिता कौमारी हे मयूरकुकुटव्यूहवृते इत्यर्थः । यद्वा वाहनीभूतत्वान्मयूरैः कौमारी वृता परिवेष्टिता अथ चेयं कुकुटाख्यालंकारैरावृतत्वात्कुकुटवृता । कुकुटाख्यस्वर्णभूषणभूषितेत्यर्थः । दयभ्यधुः । 'कुकुटस्ताम्रचूडेति भूषायामपि दृश्यते' । यद्वा मयूराः कुकुटा इव चित्रपुच्छविवर्जिताः मयूरकुकुटास्तैरावृता । दयभ्यधुः । 'आरक्तनेत्रपिच्छाग्रो मयूरः कुकुटः स्मृतः । बर्हेण वर्जितो बर्ही यः स मयूरकुकुटः' इति यादवप्रकाशः । कुमारः पुमान् मयूरमारोहति कौमारी तु मयूरीमारुह्यतीति भावः । यद्वा मा लक्ष्मीः आः पितामहः इः कामः उः शिवः । उस्त्राता रक्षको विष्णुः रोऽग्निः तैरावृता परिवेष्टिता मयूरवृता अथच सा कुकुटवृता कुक वृक आदाने स्वादिरात्मनेपदी । ततः कर्तरि क्विप् । कोकन्ते कौमार्याः आज्ञामाददते गृह्णन्ति । दैत्यैः सह संग्रामयितुं कुंकि देवसैन्यानि तान्येव कुटन्ति कुटिलगतीनि भवन्ति वक्रबुद्धीनि दैत्यैः सह. निरुद्धबुद्धीनि भवन्तीति कुटानि । पचाद्यच् । ततः कर्मधारयः । कुंकि च तानि कुटानि च कुकुटानि देवसैन्यानि तैरावृता परिवेष्टिता इति सिद्धं मयूरकुकुटवृते इति ॥ १४ ॥

**( ४ नागोजीभट्टी )** मयूरेति । मयूरकुकुटं तत्पिच्छं तेन वृते कुकुटैः ककुभेऽपि ध्वजेन शिखिबर्हाणामुच्छ्रितेन समावृतेति हरिवंशोक्तेः । अनघे अघरहिते कुमारशक्तेरिव रूपं संस्थानं अवयवसन्निवेशश्च यस्याः ॥ १४ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** मयूरेति १५ ॥ १४ ॥

**( ६ दंशोद्धारः )** मयूरेति । धृते इति पाठे मयूरकुकुटयोर्धृतं धारणमस्याः ॥ १४ ॥

**शङ्खचक्रगदाशार्ङ्गगृहीतपरमायुधे । प्रसीद वैष्णवीरूपे नारायणि नमोऽस्तु ते ॥ १५ ॥**

**( १ गुप्तवती )** शङ्खचक्रादिभिः सह गृहीतपरमायुधे खड्गबाणरूपे यया सा ॥ १५ ॥

**( २ चतुर्धरी )** शङ्खादीनि हीनानि परमायुधानि च यथा । विविधायुधे इति पाठः ॥ १५ ॥

**( ३ शान्तनवी )** गृहीतविविधायुधे इति क्वचित्पाठः । हे वैष्णवीरूपे अतएव हे शङ्खचक्रगदाशार्ङ्गगृहीतपरमायुधे हे नारायणि हे देवि प्रसन्ना भव । हे नारायणि नमोऽस्तु ते । शङ्खश्च चक्रं च गदा च शार्ङ्गं च धनुः । सेनाङ्गत्वादेकवद्भावः । शङ्खचक्रगदाशार्ङ्गं तेन हेतुना गृहीतानि परमाण्यायुधानि शङ्खादीनि यया सा तथोक्ता तत्संबुद्धौ हे शङ्खचक्रगदाशार्ङ्गगृहीतपरमायुधे । विष्णोरियं शक्तिर्देवता वैष्णवी जगदवनपरप्रादुर्भावात्तस्या इव रूपमाकृतिर्यस्याः सा तथोक्ता हे वैष्णवीरूपे । यद्वा वैष्णव्येव शक्तिः रूपं यस्याः सा तथोक्ता हे वैष्णवीरूपे हे नारायणि । आय्यते ईयते वा अयनी मुक्तिः नराणामयनी न-

रायणी नरायण्या मुक्तेरियं कारणीभूता नारायणी ब्रह्मविद्या 'ज्ञानादेव तु कैवल्यं' इति सिद्धान्ततः । तत्संबुद्धौ हे नारायणि हे ब्रह्मविद्ये हे उपनिषदुत्थितब्रह्मगोचरज्ञानरूपे प्रसीद प्रसन्ना भव । नमश्च ते तुभ्यमस्तु ॥ १५ ॥

**( ४ नागोजीभट्टी )** शङ्खेति शङ्खादीनि गृहीतानि परमायुधानि यया ॥ १५ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** शङ्खचक्रेति १६ ॥ १५ ॥

**( ६ दंशोद्धारः )** ॥ १५ ॥

## गृहीतोग्रमहाचक्रे दंष्ट्रोद्धृतवसुन्धरे । वराहरूपिणि शिवे नारायणि नमोऽस्तु ते ॥ १६ ॥

**( १ गुप्तवती )** ॥ १६ ॥

**( २ चतुर्धरी )** उग्रदंष्ट्रया उद्धृता वसुन्धरा यया सा वराहरूपिणि शिवे नमोऽस्तु ते ॥ १६ ॥

**( ३ शान्तनवी )** गृहीतमुपात्तं उग्रं रौद्रं महत् चक्रं वैष्णवायुधं यया सा तथोक्ता तत्संबुद्धौ हे गृहीतोग्रमहाचक्रे दंष्ट्रया उद्धृता वसुन्धरा भूमिर्यया सा तथोक्ता तत्संबुद्धौ हे दंष्ट्रोद्धृतवसुन्धरे । वराहस्य भगवतो विश्वरूपस्य विष्णोः रूपमाकृतिः तद्वति वराहरूपिणि । यद्वा रूप रूपक्रियायां चुरादिः । वराहं रूपं यस्याः कृत्यात्मनः वराहरूपिणी । वराहसदृशरूपाहमिति दर्शयतीत्यर्थः । 'सत्यापपाश' इति सूत्रेण रूपाद्दर्शने णिच् । वराहमेवात्मनो रूपं पश्यति वराहरूपिणी तत्संबुद्धौ हे वराहरूपिणि हे शिवे हे सर्वमङ्गले हे नारायणि नराणामयं नारस्त्रीवर्गः धर्मार्थकामस्तोमलक्षणः नारस्य त्रिवर्गस्य अयनी प्राप्त्युपयोगदेशिनी सर्वजननी भगवती नारायणी हे नारायणि नमस्ते तुभ्यमस्तु । दशन्ति यया दंष्ट्रा 'दाम्नीशस' इत्यादिना दशतेः करणे ष्ट्रन् । षिद्गौरादिभ्यश्च । ङीष् अनित्यः तेन स्त्रियां टाप् ॥ १६ ॥

**( ४ नागोजीभट्टी )** ॥ १६ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** गृहीतोग्रेति १७ ॥ १६ ॥

**( ६ दंशोद्धारः )** ॥ १६ ॥

## नृसिंहरूपेणोग्रेण हन्तुं दैत्यान्कृतोद्यमे । त्रैलोक्यत्राणसहिते नारायणि नमोऽस्तु ते ॥ १७ ॥

**( १ गुप्तवती )** ॥ १७ ॥

**( २ चतुर्धरी )** कृत उद्यम उद्योगो यथा । त्राति त्राणं । हितेन सह वर्तत इति सहिता त्रैलोक्यत्राणसहिता चेति विग्रहः ॥ १७ ॥

**( ३ शान्तनवी )** उग्रेण रौद्रेण नृसिंहरूपेण नृसिंहस्य भगवतो रूपेण दैत्यान् हन्तुं कृतोद्यमे कृतः उद्यमो यया सा हे रचितोद्योगे त्रैलोक्यत्राणसहिते लोकत्रयस्य त्राणेन सहिते पूजिते । यद्वा त्रैलोक्यत्राणसहिते लोकत्रयत्राणदत्तावधाने लोकपरिपालनोद्योगयुक्ते हे नारायणि नमस्ते तुभ्यमस्तु । अय गतौ । इण् गतौ । अय्यते ईयते वा अयनं चतुर्भद्रं नराणां प्राप्तव्यमयनं । कर्मणि ल्युट् । नरायणस्य चतुर्भद्रस्येयं प्रापयित्री साधयित्री भगवती परदेवता नारायणीत्युच्यते । हे नारायणि नमोऽस्तु ते । 'त्रिवर्गो धर्मकामार्थैश्चतुर्वर्गः समोक्षकैः । सबलैस्तैश्चतुर्भद्रं' चतुर्णां भद्राणां समाहारश्चतुर्भद्रं तैः धर्मकामार्थैः सबलैः कृत्वा चतुर्भद्रं 'आहुश्चत्वारि भद्राणि बलं धर्मः सुखं धनं' ॥ १७ ॥

**( ४ नागोजीभट्टी )** नृसिंहेति । त्रैलोक्यत्राणाय सम्यक्हिते ॥ १७ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** नृसिंहरूपेणेति १८ ॥ १७ ॥

**( ६ दंशोद्धारः )** नृसिंहेति । हितेन सह वर्तमाना सहिता त्रैलोक्यत्राणं चासौ सहितमिति विग्रहः । त्रैलोक्यत्राणेन सहिते इति वा ॥ १७ ॥

## किरीटिनि महावज्रे सहस्रनयनोज्ज्वले । वृत्रप्राणहरे चैन्द्रि नारायणि नमोऽस्तु ते ॥ १८ ॥

**( १ गुप्तवती )** ॥ १८ ॥

**( २ चतुर्धरी )** महान्वज्रो यस्याः । वृत्रो विश्वकर्मणोऽपत्यम् ॥ १८ ॥

**( ३ शान्तनवी )** किरीटं मुकुटं यस्याः सा किरीटिनी हे किरीटिनि महत् वज्रमायुधं यस्याः सा महावज्रा महाहीरा च हे महावज्रे । 'वज्रोऽस्त्री हीरके पवौ' । किरीटिनि महत् वज्रमायुधं यस्याः सा महावज्रा सहस्रं नयनानि समाहृतानि सहस्रनयनं । पात्रादित्वादस्त्रीत्वान्ङीप् न भवति । तेन उज्ज्वलति प्रकाशते सहस्रनयनोज्ज्वले । यद्वा सहस्रनयने ज्वले इति छेदः सहस्रं नयनानि यस्याः सा सहस्रनयना हे सहस्रनयने । ज्वलति ज्वला पचाद्यच् हे ज्वला । यद्वा सहस्रनयना चासावुज्ज्वला चेति कर्मधारयः । हे सहस्रनयनोज्ज्वले । अनुपसर्गादेव ज्वलतिकसन्तेभ्यो णस्तु वा । तेन णेन मुक्ते । सोपसर्गादनुप-

सर्गाच्च ज्वलतेः पचाद्यच् भवत्येव । हे वृत्रप्राणहरे । वृत्रो नाम कश्चिदसुरः तस्य प्राणाः तान् हरतीति वृत्रप्राणहरा । 'हरतेरनुद्यमनेच्' टाप् । तत्संबुद्धिः हे वृत्रप्राणहरे । चकार उक्तमनुक्तं च समुच्चिनोति । इन्द्रस्येयमैन्द्री शक्तिर्देवता । हे ऐन्द्रि हे नारायणि नमस्ते तुभ्यमस्तु । नृ नये । नृणन्ति विधयः स्वर्गं नयन्ति लम्भयन्ति पुरुषानेभिरिति नराक्रतयः । ऋदुरोरधिकरणे अप् । अय्यन्ते ईयन्ते वा श्रुतयोऽनयेति करणे ल्युट् । अयनी श्रुतिर्वेदत्रयी । तस्या इयमधिकरणभूता अकाराद्यक्षरमयी मातृका या सर्वमन्त्रमयी सा भगवती नारायणी तत्संबुद्धौ हे नारायणि नमस्ते तुभ्यमस्तु ॥ १८ ॥

**( ४ नागोजीभट्टी )** महावज्रे महत् वज्रं यस्याः ॥ १८ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** किरीटिनीति १९ ॥ १८ ॥

**( ६ दंशोद्धारः )** ॥ १८ ॥

## शिवदूतीस्वरूपेण हतदैत्यमहाबले । घोररूपे महारावे नारायणि नमोऽस्तु ते ॥ १९ ॥

**( १ गुप्तवती )** ॥ १९ ॥

**( २ चतुर्धरी )** हतं दैत्यानां महाबलं यया ॥ १९ ॥

**( ३ शान्तनवी )** चण्डिकाशरीराद्विनिर्गता या शक्तिर्देवता सा शिवदूतीनाम देवता दूतं करोति दूतयति । 'तत्करोति तदाचष्टे' इति णिच् । दूती इति णिजन्तो धातुः । शिवं दूतयति संदेशहरं करोतीति शिवदूती । कर्मण्यणि स्त्रियां ङीप् । शिवदूती इति स्वरूपं तेन शिवदूतीस्वरूपेण । यद्वा शिवदूत्याः स्वरूपं स्वभावः तेन साधनेन । हे हतदैत्ये हताः दैत्या यया सा हतदैत्या । हे हतदैत्ये । महद्बलं सामर्थ्यं सैन्यं च यस्याः सा महाबला । हे महाबले । 'स्थौल्यसामर्थ्यसैन्येषु बलं ना काकसीरिणोः' । यद्वा महान् बलिरुपहारः पूजोपकरणं यस्याः सा महाबला तत्संबुद्धौ हे महाबले । 'करोपहारयोः पुंसि बलिः प्राण्यङ्गजे स्त्रियां' । घोरं भयानकं रूपमाकारो यस्याः सा तथोक्ता । हे घोररूपे । महान् आरावः शब्दो यस्याः सा महारावा शृगालपरिवारत्वान्महाध्वनिः हे महारावे हे नारायणि । अन प्राणने । अननं अनिः । स्त्रियां 'इकृष्यादिभ्यः' कृदिकारादक्तिनो वा ङीप् । अनि इर्लक्ष्मीः तस्याः अनी यनी अः विष्णुः तेन सहिता यनी अयनी नराणां यनी नरायणी नरायण्याः इयमधिदेवता अधिष्ठात्री नारायणी हे नारायणि नमस्ते तुभ्यमस्तु ॥ १९ ॥

**( ४ नागोजीभट्टी )** शिवेति । हतं दैत्यानां महाबलं यया सा ॥ १९ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** शिवदूतीति २० ॥ १९ ॥

**( ६ दंशोद्धारः )** ॥ १९ ॥

## दंष्ट्राकरालवदने शिरोमालाविभूषणे । चामुण्डे मुण्डमथने नारायणि नमोऽस्तु ते ॥ २० ॥

**( १ गुप्तवती )** ॥ २० ॥

**( २ चतुर्धरी )** ॥ २० ॥

**( ३ शान्तनवी )** दंष्ट्राभिः करालं दन्तुरं तुङ्गं भयंकरं च वदनं यस्याः सा तथोक्ता । हे शिरोमालाविभूषणे । मुण्डं दैत्यं मथ्नाति मुण्डमथना । मथे विलोडने । नन्द्यादित्वाल्ल्युः । यद्वा कर्तरि बहुलं ल्युट् । बाहुलकात् ङीबभावः । योगविभागादिष्टसिद्धिरिति तत्संबोधनं हे मुण्डमथने हे चामुण्डे हे कालि हे नारायणि नमोऽस्तु ते । नृ नये । नयो नीतिः नृणन्ति नराः । पचाद्यच् । नयवर्तिनः क्रतुभुजो देवाः तेषामयनी वाञ्छितार्थकरी गतिः नारायणी भगवती हे नारायणि ॥ २० ॥

**( ४ नागोजीभट्टी )** ॥ २० ॥

**( ५ जगच्चन्द्रचन्द्रिका )** दंष्ट्राकरालेति २१ ॥ २० ॥

**( ६ दंशोद्धारः )** ॥ २० ॥

## लक्ष्मि लज्जे महाविद्ये श्रद्धे पुष्टि स्वधे ध्रुवे । महारात्रि महामाये नारायणि नमोऽस्तु ते ॥ २१ ॥

**( १ गुप्तवती )** ॥ २१ ॥

**( २ चतुर्धरी )** लक्ष्मीति ह्रस्वपाठो बहुसंमतः । केचित्तु लक्ष्मीति पठित्वा संबुद्धावपि औणादिकप्रत्ययान्ततया सिलोपह्रस्वत्वयोरभावं समर्थयन्ति । महद्ब्रह्म तत्प्राप्तिहेतुर्विद्या महाविद्या । उपनिषद्रूपेति यावत् । स्वधा पितृहविर्दानमन्त्रः तस्याः संबुद्धौ ध्रुवे स्थिरे । महती रात्रिर्महारात्रिः द्विपरार्धावसानजा । महाप्रलयरूपेत्यर्थः । महती विद्या महती अविद्या सा च नित्याशुचिदुःखानि नित्याशुचिगुणसुखानुत्याति: दुःखात्मख्यातिः । महत्त्वं चास्याः सर्वावरणसामर्थ्यं ॥ २१ ॥

**( ३ शान्तनवी )** नृ नये पचाद्यच् । नृणन्ति नराः । नराणामयनी वृत्तिः नारायणी । तस्याः इयं साधिका धनादिरूपा अधिदेवता च नारायणी हे नारायणि हे लक्ष्मि नमोऽस्तु ते । हे नारायणि हे लज्जे नमोस्तु । हे नारायणि हे महाविद्ये महति विद्ये परमात्मगोचरज्ञानरूपे नमोस्तु ते । हे नारायणि हे श्रद्धे आस्तिक्यबुद्धिस्वभावे नमोऽस्तु ते । हे नारायणि हे पुष्टे शरीराद्यवयवोपचयरूपे नमोऽस्तु ते । हे नारायणि हे स्वधे पितृतृप्तिस्वरूपे नमोऽस्तु ते । हे नारायणि हे ध्रुवे हे शाश्वति हे ब्रह्मरूपे नमोऽस्तु ते । हे नारायणि हे महारात्रे हे महति रात्रे हिरण्यगर्भावसानकालरूपे नमोऽस्तु ते । यद्वा महतीरात्रिः हे हिरण्यगर्भोदयकालरूपे नमोऽस्तु ते । यद्वा हे महारात्रे अनल्पतमोधिकरणरूपे । यद्वा महारात्रिरिति सर्वप्राणिमोहकरी देव्येवोच्यते । अतएव हे महामाये हे महति माये सर्वजगत्कारणीभूते । यद्वा हे महति अमाये हे नारायणि नमोऽस्तु ते । महारात्रि इति पाठे तु 'रात्रेश्चाजसौ' इति संज्ञायां ङीप् । छन्दसेव । तिमिरपटलैरवगुण्ठिता रात्र्य इति तु जसन्तः प्रयोगो बाह्वादौ कृदिकारादक्तिनो वा ङीष् वक्तव्य इति ज्ञेयः । उणादावदेस्त्रिन् अत्रिः मुनिः । बाहुलकात् रात्रेरपि त्रिन् । रात्रिः रात्री च राति सुखं रात्रिः ॥ २१ ॥

**( ४ नागोजीभट्टी )** हे लक्ष्मि महाविद्या उपनिषत् । श्रद्धा आस्तिक्यबुद्धिः । पुष्टिसहिते स्वधे महती अविद्या सर्वावरणसमर्थो महामोहः तद्रूपे ॥ २१ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** लक्ष्मि लज्जेति २२ ॥ २१ ॥

**( ६ दंशोद्धारः )** लक्ष्मीति । महती ब्रह्मप्रापिका विद्या उपनिषद्रूपा महारात्रिः कल्पान्ते प्रलयात्मिका महती ब्रह्मादिमोहिका अविद्या च ॥ २१ ॥

## मेधे सरस्वति वरे भूति बाभ्रवि तामसि । नियते त्वं प्रसीदेशे नारायणि नमोऽस्तु ते ॥२२॥

**( १ गुप्तवती )** भूतिबाभ्रवीत्येकं पदं । 'बभ्रुस्तु नकुले विष्णौ' इत्यमरः । बभ्रू रजोगुण इति केचित् ॥ २२ ॥

**( २ चतुर्धरी )** मेधा बहुग्रन्थधारणशक्तिः । सरस्वती वाग्देवता । वरे श्रेष्ठे भूतिः सत्वं । कारणे कार्योपचारात् तद्योगाद्भूतिः सात्विकी तस्याः । बाभ्रवीति बभ्रुशब्देनात्र रजोगुणो विवक्ष्यते । तद्योगाद्बाभ्रवी राजसीत्यर्थः । तस्याः संबुद्धौ । तामसी तमोगुणवती तस्याः संबुद्धौ अथवा भूतिरुत्तरोत्तरसंपत्तिः बाभ्रवी बभ्रुवंशभवा या देवीत्यर्थः । अन्य आह भूतिर्देवयोनिः बाभ्रवी वैष्णवी 'विपुले नकुले विष्णौ बभ्रुर्ना कपिले त्रिषु' इत्यभिधानात् । तामसी निद्रा पुष्टिर्भूतीति छान्दसत्वादेकत्वाभावः । नियते निश्चये दीक्षेति यावत् । प्राचीनं कर्म अवश्यंभावो वा तस्याः संबुद्धौ ॥ २२ ॥

**( ३ शान्तनवी )** हे नारायणि हे मेधे नमोऽस्तु ते । 'धीर्धारणावती मेधा' । अण शब्दार्थः । अण्यन्ते कथ्यन्ते अणिः मेधादिः । 'इकृष्यादिभ्यः' कृदिकारादक्तिनो वा ङीप् । अणी मेधादिः ई इत्यस्याः लक्ष्म्याः अणी मेधादिः यणी नराणां समूहो नारं नारेण आसमन्तात् श्रिता यणी नारायणी हे नारायणि हे मेधे हे धारणारूपे हे भूते अतीते । यद्वा 'भूतिर्भस्मनि संपदि' भूतिर्जन्म च । हे नारायणि हे संपद्रूपे ऐश्वर्यादिरूपे नमोऽस्तु ते । हे नारायणि हे बाभ्रवि बिभर्ति बभ्रुः विष्णुः तस्येयं भगिनी बाभ्रवी वैष्णवी हे बाभ्रवि नमोऽस्तु ते । 'विपुले नकुले विष्णौ बभ्रुर्ना कपिले त्रिषु' । हे तामसि हे तमोगुणसंबन्धिनि हे जगत्संहारकारिणि हे नारायणि नमोऽस्तु ते । नितरां यता नियता हे नियते । यद्वा 'दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्विधिः' । हे नियते हे नारायणि नमोऽस्तु ते । हे ईशे हे स्वामिनि त्वं प्रसीद । हे ईशे हे नारायणि नमोऽस्तु ते । ईष्टे ईशा । पचाद्यच् ॥ २२ ॥

**( ४ नागोजीभट्टी )** मेधे इति । मेधा धाराणावती बुद्धिः । सरस्वती वाग्देवता । वरे श्रेष्ठे । भूतिः सत्वप्रधाना । छान्दसो गुणाभावः । अनेन सात्विकीत्वम् । बभ्रू रजोगुणः तद्युक्ते । तामसि तमोगुणयुक्ते । इदं मूलशक्तत्रयभिप्रायेण नियतिरुक्ता । तद्रूपे ईशे समर्थे ॥ २२ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** मेधे सरस्वतीति २३ ॥ २२ ॥

**( ६ दंशोद्धारः )** मेधे इति । मेधा बहुग्रन्थधारणाशक्तिः । सरस्वती वाग्देवता । वरे श्रेष्ठे । भूतिः संपत्तिः । बभ्रुर्विष्णुः 'बभ्रुर्ना कपिले विष्णौ बभ्रू नकुलपिङ्गलौ' इति विश्वः । तस्येयं बाभ्रवी शक्तिः सा चासौ भूतिबाभ्रवी तत्संबुद्धिरिति समस्तं पदं । पृथक्पदत्वे भूते इति स्यात् । यद्वा बभ्रुर्यादवः तद्वंशभवत्वाद्बाभ्रवी यादवीत्यर्थः । यद्वा भूतिः सात्विकी बाभ्रवी राजसी । बभ्रुशब्दस्य पिङ्गलार्थत्वात् रजसश्च पिङ्गलत्वात् तामसी चेति गुणत्रयात्मिके इत्यर्थः । आद्यपक्षे तामसि निद्रारूपे । नियतिर्दैवं तद्रूपे नियता नित्या तत्संबुद्धिर्वा ॥ २२ ॥

## सर्वस्वरूपे सर्वेशे सर्वशक्तिसमन्विते । भयेभ्यस्त्राहि नो देवि दुर्गे देवि नमोऽस्तु ते ॥ २३ ॥

**( १ गुप्तवती )** भयेभ्य इति दुर्गे इति च वाक्यभेदेन देवीति संबुद्धिद्वयम् ॥ २३ ॥

( २ चतुर्धरी ) ॥ २३ ॥

( ३ शान्तनवी )

सर्वतःपाणिपादान्ते सर्वतोक्षिशिरोमुखे ।
सर्वतःश्रवणघ्राणे नारायणि नमोऽस्तु ते ॥ २४ ॥[1]

'अन्तो नाशे स्वरूपे च निश्चयेऽवयवेऽवधौ । समीपेऽवसितौ बन्धे यमे मूल्यावनेहसि' । सर्वतः सर्वत्र पाणिपादं अन्तोऽवयवो यस्याः सा तथोक्ता । हे सर्वतःपाणिपादान्ते । पाणयश्च पादाश्च पाणिपादं । प्राण्यङ्गत्वादेकवद्भावः । सर्वतः-पाणिपादान्त्रे इति तु पाठे सर्वतः पाणयश्च पादाश्च अन्त्राणि च पुरीतत्संज्ञानि प्राणसूत्राणि यस्याः सा तथोक्ता । हे तथोक्ते नारायणि प्राणिरूपे तुभ्यम् नमोस्तु ते । अयन्ते यन्ति वा अनया ज्ञानविशेष इति अयनी पाणिपादाद्युपचितिः । नराणामयनी नरायणी । नरायण्या इयमधिदेवता नारायणी । हे नारायणि नमोस्तु ते । तथा सर्वतः श्रवणानि श्रोत्राणि घ्राणानि च गन्धग्राहीणि यस्याः सा तथोक्ता । हे तथोक्ते हे नारायणि हे देवि नमोऽस्तु ते । अनेन देव्याः सर्वप्राणिरूपतामुक्त्वा स्थावरजङ्गमात्मकविश्वरूपतामाह । सर्वजगत्त्रयं स्वरूपं यस्याः सा तथोक्ता । हे तथोक्ते हे सर्वस्वरूपे । यद्वा सर्वसु अरूपं यस्याः सा तथोक्ता । हे तथोक्ते । ईष्टे ईशा पचाद्यच् । सर्वस्य ईशा स्वामिनी हे सर्वेशे । सर्वशक्तयः सामर्थ्यलक्षणा ब्रह्मादिशक्तिलक्षणाश्च ताभिः समन्विता तत्संबुद्धौ हे सर्वशक्तिसमन्विते हे देवि हे भगवति त्वं भयेभ्यः नः देवान् त्राहि त्रायस्व । त्रैङ् पालने छान्दसं परस्मैपदं । यद्वा त्रायते त्राः क्विपि रूपं । त्राः इवाचर त्राहि रक्षकेवाचर । सर्वप्रातिपदिकेभ्यः क्विवाचारे वा । यद्वा त्राहीति विभक्तिप्रतिरूपकमव्ययं । हे दुर्गे हे देवि नमस्ते तुभ्यमस्तु । भिन्नवाक्यस्थत्वात् देवीपदद्वयं पौनरुक्त्येन न दुष्यति ॥ २३ ॥

**( ४ नागोजीभट्टी )** सर्वेति । देवीत्यस्य द्विरुक्तिः प्रसादने । त्राहीत्यार्षम् ॥ २३ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** सर्वस्वरूप इति २४ ॥ २३ ॥

**( ६ दंशोद्धारः )** सर्वस्वरूप इति । देविदेवीति प्रसादने द्विरुक्तिः ॥ २३ ॥

## एतत्ते वदनं सौम्यं लोचनत्रयभूषितम् । पातु नः सर्वभूतेभ्यः कात्यायनि नमोऽस्तु ते ॥२४॥

( १ गुप्तवती ) ॥ २४ ॥

**( २ चतुर्धरी )** ॥ २४ ॥

**( ३ शान्तनवी )** हे देवि हे चण्डिके एतत् प्रत्यक्षसिद्धं ते देव्या मुखं वदनं सौम्यं सुन्दरं लोचनत्रयेण सोमसूर्याग्निमयेन भूषितं अलंकृतं कर्तृ नः अस्मान् देवान् सर्वभीतिभ्यः समस्तेभ्यो भयेभ्यः कालत्रयसंभविभ्यः । यद्वा सर्वा इति तोयोषध्यभावादन्नाद्यज्ञभवाद्यज्ञभागभुजां भयाभावः प्रार्थनीयः । कात्यायनीति कतः कश्चिदृषिः तस्यापत्यं स्त्रीति गर्गादियञन्तात् कात्यशब्दात् । 'यञश्च' 'प्राचां ष्फ तद्धितः' इत्यधिकृत्य 'सर्वत्र लोहितादिकतन्तेभ्यः' इति स्त्रियां ष्फः । फस्यायनादेशः षित्वात् ङीष् कात्यायनी । यद्वा कश्च ब्रह्मा अश्च विष्णुः तावततः सततं यथाक्रमं गच्छतः प्राप्नुतः इति कात्यौ सरस्वती च रमा च । कर्मण्यण् । वाणीरमयोरासमन्तात् अयनी परमा गतिः परमाधिष्ठानशक्तिरधिदेवता कात्यायनी 'सौम्यं स्यात्सुन्दरे सोमदेवताके बुधे ग्रहे' ॥ २४ ॥

**( ४ नागोजीभट्टी )** सर्वभूतेभ्यः सर्वभूतविकारेभ्यः प्राणिभ्यश्च । कात्यायनि तदाश्रमभवे ॥ २४ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** एतत्ते वदनमिति २५ ॥ २४ ॥

**( ६ दंशोद्धारः )** ॥ २४ ॥

## ज्वालाकरालमत्युग्रमशेषासुरसूदनम् । त्रिशूलं पातु नो भीतेर्भद्रकालि नमोऽस्तु ते ॥ २५ ॥

( १ गुप्तवती ) ॥ २५ ॥

**( २ चतुर्धरी )** कात्यायनि कात्यायनाश्रमभवे । भीतेर्भयात् । नोऽस्मान् ॥ २५ ॥

**( ३ शान्तनवी )** भद्रा च सा काली च भद्रकाली हे भद्रकालि हे चण्डिके ज्वालाभिः करालं तुङ्गं ज्वालाकरालं 'करालो दन्तुरे तुङ्गे' अत्युग्रं अतिरौद्रं अशेषाणां असुराणां सूदनं हिंसकं ते तव त्रिशूलमायुधं कर्तृ। नोऽस्मान्देवान् भीतेर्भयात् पातु रक्षतु । हे भद्रकालि हे चण्डिके हे देवि नमस्ते तुभ्यमस्तु । ज्वलति ज्वाला । ज्वलितिकसन्तेभ्यो णो वा । तेन मुक्ते पचाद्यच् । ज्वलः 'वह्नेर्द्वयोर्ज्वालकीलौ' । स्त्रियां टाप् । 'अस्त्री शूलं रुगायुधं' । सूदन इति षूद क्षरणे हिंसायां च अनुदात्तेत् । सूदते

[1] इदं पद्यं केवलं शान्तनव्यामेव दृश्यते नान्यासु टीकाखिलस्य न मध्ये निवेशः कृतः ।

हिनस्ति सूदनं । नन्यादित्वाल्ल्युः । अन्यथा 'अनुदात्तेतश्च हलादेः' इति प्राप्तस्य युचः 'सूददीपदीक्षश्च'इति प्रतिषेधात्सूदकं इति स्यात् ॥ २५ ॥

**( ४ नागोजीभट्टी )** ज्वालेति । नोऽस्मान्भीतेर्भयात् ॥ २५ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** ज्वालाकरालमिति २६ ॥ २५ ॥

**( ६ दंशोद्धारः )** ॥ २५ ॥

## हिनस्ति दैत्यतेजांसि स्वनेनापूर्य या जगत्। सा घण्टा पातु नो देवि पापेभ्यो नः सुतानिव २६

**( १ गुप्तवती )** अनः सुतानिव । प्राणवाननः । मातृपरोप्यनःशब्दोस्तीति कश्चित् ॥ २६ ॥

**( २ चतुर्धरी )** पापेभ्यः प्रतिकूलेभ्यः अनः प्राणी । अनः शकटः । सुतान्पोतान् पाति पापेभ्यः दुष्टेभ्यः तेन पिहितत्वात् । यद्वा नः सुतान् दुष्टसुतानिवेत्यर्थः । णस कौटिल्ये कर्तरि क्विप् ॥ २६ ॥

**( ३ शान्तनवी )** हे देवि या तावकी घण्टा कर्त्री स्वनेन नादेन साधनेन जगत् कर्म । लोकत्रयीं आपूर्य पूरयित्वा दैत्यतेजांसि हिनस्ति नाशयति सा तावकी घण्टा अस्मान्देवान् पापेभ्यो दुरितेभ्यः दैत्येभ्यश्च पातु रक्षतु । किं केभ्यः कानिव । जगत् कर्तृ लोकः अनः सुतानिव अनोभ्यः शकटेभ्यः सुतानिव । अत्र छान्दसत्वेन पुराणप्रयोगस्य अनस्शब्दात्पञ्चमीबहुवचनं भ्यस् । तस्य 'सुपां सुलुक्' इत्यादिना लुक् । यथा लोकः अनोभ्यः शकटेभ्यः सुतान्पुत्रान्पाति तथा सा घण्टा शब्दायमाना सती नोऽस्मान्सुतानिव पात्वित्यर्थः । यद्वा पापेभ्यो नः सुतानिव 'जनन्यां शकटेप्यनः' । 'जनके शकटे अनः' । यथा अनः माता पिता च स्वान्सुतान्पापेभ्यो दुरितेभ्यः पाति निवारयति रक्षति तथा सा घण्टा नः अस्मान्मातेव पातु सुतानिव वा पात्वित्यर्थः । यद्वा अन प्राणने पचाद्यच् । अनिति अनः । यथा अनः प्राणी सुतान् स्वकीयान्पुत्रान्पापेभ्यः कष्टेभ्यः पाति रक्षति परिरक्षति तथा नः अस्मान्देवान् सा घण्टा पातु रक्षत्वित्यर्थः । पापेभ्यः स्वसुतानिवेति पाठे यथा लोकः पापेभ्यः स्वसुतान्पाति तथा सा घण्टा नः अस्मान्देवान्पात्वित्यर्थः । 'क्लीबेऽनः शकटोऽस्त्री स्यात्' ॥ २६ ॥

**( ४ नागोजीभट्टी )** हिनस्तीति । अनः प्राणिर्माता वा सुतानिव नोऽस्मान्पापेभ्यः पात्वित्यर्थः । अनितेः पचाद्यच् २६

**( ५ जगच्चन्द्रचन्द्रिका )** हिनस्तीति २७ ॥ २६ ॥

**( ६ दंशोद्धारः )** हिनस्तीति । अनः माता सुतानिव घण्टा नः पापेभ्यः प्रतिकूलेभ्यः पात्वित्यन्वयः । 'अनः क्लीबं जले शोके मातृस्यन्दनयोर्द्वयोः' इति स्वररुद्रौ । यद्वा नः सुतानिति समस्तं पदं । णस कौटिल्ये कर्तरि क्विप् । नसः दुष्टान्सुतानिव नोऽस्मानित्यर्थः ॥ २६ ॥

## असुरासृग्वसापङ्कचर्चितस्ते करोज्ज्वलः । शुभाय खड्गो भवतु चण्डिके त्वां नता वयम् ॥२७॥

**( १ गुप्तवती )** ॥ २७ ॥

**( २ चतुर्धरी )** असृक् रुधिरं वसा मेदः असृग्वसे पङ्क इव तेन चर्चितो लिप्तः । करं हस्तमुज्ज्वलयतीति करोज्ज्वलः २७

**( ३ शान्तनवी )** हे चण्डिके हे देवि असुराणां असृक् रुधिरं वसा मेदः तद्रूपः पङ्कः तेन चर्चितः व्याप्तः ते तव करो हस्तः उज्ज्वलः । यद्वा करैः करणैः उज्ज्वलो भासुरो देदीप्यमानः खड्गः नोऽस्माकं जगतां वा शुभाय भवतु । हे चण्डिके त्वां भगवतीं वयं देवाः नताः प्रणताः प्रह्वीभूताः वर्तामहे । त्वदेकशरणास्त्वां भजामहे इत्यभिप्रायः । 'रुधिरेऽसृग्लोहितास्ररक्तक्षतजशोणितं' 'मेदस्तु वपा वसा' 'बलिहस्तांशवः कराः' ॥ २७ ॥

**( ४ नागोजीभट्टी )** असुरेति । चर्चितो लिप्तः । करं हस्तं उज्ज्वलयति करैः किरणैरुज्ज्वलो वा ॥ २७ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** असुरेति २८ ॥ २७ ॥

**( ६ दंशोद्धारः )** असुरेति । असृग्वसे रुधिरमेदसी पङ्क इव तेन चर्चितो लिप्तः करमुज्ज्वलयति दीपयतीति तथा॥

## रोगानशेषानपहंसि तुष्टा रुष्टा तु कामान्सकलानभीष्टान् ।
## त्वामाश्रितानां न विपन्नराणां त्वामाश्रिता ह्याश्रयतां प्रयान्ति ॥ २८ ॥

**( १ गुप्तवती )** ॥ २८ ॥

**( २ चतुर्धरी )** रोगानुपद्रवान्रुजयन्तीति व्युत्पत्त्या रुष्टा कुपिता तु पुनः कामान्मनोरथान् अपहंसीत्यनुषज्यते । अभीष्टानतिप्रियान् । विपत् इष्टवियोगलक्षणा विपत्तिः । हीति विशेषार्थे 'हि हेतौ स्यात् विशेषार्थे एवार्थे पादपूरणे' इत्यभिधानात् । विशेषतो ये त्वामाश्रितास्तेप्यन्येषां आश्रयतां प्रयान्तीत्यन्वयः ॥ २८ ॥

**( ३ शान्तनवी )** नृ नये । नृणन्ति नयेन न्यायेन अनुज्झितस्वधर्मेण व्यवहरन्ति इति नराः। पचाद्यच् । हे देवि त्वं त्वदाराधनेन तुष्टा सती त्वामाश्रितानां अशेषान् रोगान् अपहंसि नाशयसि । हे देवि त्वं त्वदाराधनेन तुष्टा सती त्वामाश्रितानां नराणां सकलानभीष्टान्कामान्काम्यमानानर्थान्ददासि । रजकस्य वस्त्रं ददाति । कर्मकरस्य वेतनं ददाति इतिवत्संप्रदानत्वाभावात्संबन्धे षष्ठ्येव । हे देवि त्वां आश्रितानां नराणां न विपत् आपत् न विद्यते । 'हि हेताववधारणे' । हे देवि त्वां आश्रिताः आश्रयवन्तो नराः आश्रयन्ते आश्रियमाणतां प्रयान्ति । आश्रीयन्ते आश्रयाः । कर्मण्येरच् । आश्रयाणां भावः आश्रयता तां प्राप्नुवन्ति । अन्यैराश्रियमाणतां सेव्यमानतां भजन्तीत्यर्थः । ये त्वां भजन्ति ते अन्यैराश्रयन्ते हि आश्रीयन्त इव । राजभूयं देवभूयं वा प्राप्नुवन्तीति भावः । तुष्टेति तु पाठे तुष्टा सकामानिति द्रष्टव्योयं ग्रन्थः । तुष्टा रोगानपहंसि रुष्टा तु कामान्सकलानभीष्टानर्थानपहंसीति योज्यम् ॥ २८ ॥

**( ४ नागोजीभट्टी )** रोगानिति अभीष्टान् अपहंसीत्याकृष्यत इति यत् इष्टवियोगलक्षणा विपत्तिः । यतस्त्वामाश्रिता अन्येषामाश्रयतां प्रयान्ति ॥ २८ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** रोगानशेषेति २९ ॥ २८ ॥

**( ६ दंशोद्धारः )** रोगानिति । रुजन्तीति रोगा उपद्रवास्तान् हि विशेषतस्त्वामाश्रिता अन्येषामाश्रयतां प्रयान्तीत्यन्वयः ॥ २८ ॥

**एतत्कृतं यत्कदनं त्वयाद्य धर्मद्विषां देवि महासुराणाम् ।**
**रूपैरनेकैर्बहुधात्ममूर्तिं कृत्वाम्बिके तत्प्रकरोति कान्या ॥ २९ ॥**

**( १ गुप्तवती )** ॥ २९ ॥

**( २ चतुर्धरी )** कदनं मरणं रूपैरनकैर्ब्रह्माण्यादिलक्षणैः । प्रकृत्यादित्वात्तृतीया । बहुधा बहुप्रकारात्कृत्वेत्यन्वयः । अन्या त्वदितरा का तत्प्रकरोति प्रकर्तुमर्हति । न कापीत्यर्थः ॥ २९ ॥

**( ३ शान्तनवी )** हे अम्बिके हे चण्डिके हे देवि अद्येदानीं संप्रति त्वया आत्ममूर्तिं निजतनुं बहुधा बह्वीभिर्विधाभिः प्रकारैः अनेकै रूपैः कृत्वा ब्रह्माण्यादिशक्तिरूपैः कृत्वा धर्मद्विषां यज्ञादिकर्मद्विषां शुम्भादीनां महासुराणां यत् कदनं विशसनं विनिहननं निहिंसनं कृतं तदेतत् अन्या स्त्री त्वत्तोऽपरा का देवता प्रकरोति का प्रकर्तुं शक्नोति । न कापि । त्वमेव कर्तुं शक्नोषीति भावः । 'व्यापादनं विशसनं कदनं च निशुम्भनं' 'मूर्तिः काठिन्यकाययोः' धर्मोऽत्र वैदिकः । यत् पारमर्षं सूत्रं 'अथातो धर्मजिज्ञासा' 'चोदनालक्षणोऽर्थो धर्मः' इति ॥ २९ ॥

**( ४ नागोजीभट्टी )** एतदिति । कदनं नाशः । धर्मद्विषोऽसुराः । अद्य अधुना आत्ममूर्तिमेव अनेकैः रूपैः ब्रह्माण्यादिकाल्यादिलक्षणैः । अभेदे तृतीया । बहुधा बहुप्रकारा अन्या त्वदितरा का । न कापीत्यर्थः ॥ २९ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** एतत्कृतमिति ३० ॥ २९ ॥

**( ६ दंशोद्धारः )** एतदिति । कदनं हननं अनेकैर्ब्राह्मयादिभी रूपैरिति 'प्रकृत्यादिभ्यः' इति तृतीया । बहुधा बहुप्रकारां कृत्वा यन्महासुराणां कदनं कृतं तत्त्वदन्या का प्रकरोतीत्यन्वयः ॥ २९ ॥

**विद्यासु शास्त्रेषु विवेकदीपेष्वाद्येषु वाक्येषु च का त्वदन्या ।**
**ममत्वगर्तेऽतिमहान्धकारे विभ्रामयत्येतदतीव विश्वम्[१] ॥ ३० ॥**

**( १ गुप्तवती )** आद्येषु वाक्येषु वेदेषु ॥ ३० ॥

**( २ चतुर्धरी )** विद्यासु इन्द्रजालादिलक्षणासु । शास्त्रेषु वेदेतरविद्यास्थानेषु विवेकस्तत्त्वसाक्षात्कारस्तं दीपयन्ति बोधयन्ति इति विवेकदीपा वेदान्तास्तेषु आद्येषु वाक्येषु कर्मकाण्डेषु तेषामुपनिषद्भ्यः प्राचीनत्वात् । यद्वा आद्येषु वाक्येषु वेदेषु । किंभूतेषु विवेकदीपेषु ज्ञानप्रकाशेषु । ममत्वस्य गर्त इव गर्तो ममत्वाश्रयः संसार इत्यर्थः । तस्मिन्निति । महान्धकारे महतामपि ज्ञानविभावके कालविशेषे एतेषु विद्यादिषु एतद्विश्वं त्वदन्या का विभ्रामयति पुनःपुनः प्रवर्तयति । किंतु त्वमेव विभ्रामयसीत्यन्वयः । 'संज्ञापूर्वको विधिरनित्यः' इत्यनित्यत्वात्सानुबन्धलेपि न दोषः । अथवा ममत्वगर्ते संसारे ये विद्यादयः पदार्थास्तेषु । समानमन्यत् ॥ ३० ॥

**( ३ शान्तनवी )** हे देवि विवेकदीपेषु विवेकयुक्ताः विचारा दीपा इव महत्तमःपटलपाटनपटवः तेषु । विद्यासु चतुर्दशसु दीपायमानासु । यद्वा आन्वीक्षिक्यादिषु । यद्वा विद्यासु ज्ञानप्रदमन्त्ररूपासु । शास्त्रेषु मनुस्मृत्यादिषु प्रवृत्तिकरेषु निवृत्तिकरेषु दीपायमानेषु च । तथा आद्येषु वाक्येषु वैदिकेषु दीपायमानेषु तथा पुराणेषु च विद्यमानेषु । अनादरे सप्तमीयं ।

१ 'विभ्रामयस्येतदतीव' इति पाठः ।

तान्यनादृत्य तज्जन्यविवेकमपनीय। अतिमहान्धकारे ममत्वगर्ते एतद्विश्वं कर्म। अतीव विभ्रामयति या सा त्वदन्या का। त्वमेव विष्णुमाया महामाया विश्वं मोहयसि ममत्वे योजयसि नान्या। विभ्रामयतीति अनित्यो मितां ह्रस्वः। अपरा तु योजना। हे देवि आद्येषु वाक्येषु आद्यानि वैदिकानि वाक्यानि तेषु च सुष्ठु शोभनानि च तानि शास्त्राणि च धर्मसूत्राणि पारमर्षाणि तेषु या वित् संवित् विदुषी वा ज्ञात्री सा त्वत्तः देवीतः विवेकं दीपयन्ति प्रकटयन्ति विवेकदीपानि। कर्मण्यण्। तेषु शास्त्रेषु च अन्या देवता का। न कापि। त्वमेव वित् नान्येति भावः। अथ च हे देवि एतत् विश्वं त्रिभुवनं कर्म। अतिमहान्धकारे अतितरां महान्धकारस्तमोगुणश्च अज्ञानरूपो यस्मिन्स तथोक्तः। ममेत्यव्ययं। ममत्वं गर्त इव तस्मिन्ममत्वगर्ते मोहरूपे अतीव सुतरां विभ्रामयति व्यालोडयति या सा त्वदन्या कास्ति। न कापि। काप्यस्ति सा भ्रामिका जगतां त्वमेव नान्येति भावः। विभ्रामयतीति अन्यशब्दस्य शेषत्वात्प्रथमपुरुषः। 'त्वदन्यः को भुङ्क्ते मदन्यः को भुङ्क्ते। मदन्योन्यो भुङ्क्ते त्वदन्योन्यो भुङ्क्ते' इतिवत्॥ ३०॥

**( ४ नागोजीभट्टी )** विद्यास्विति। विद्यासु ज्ञानेषु उपायभूतानि यानि शास्त्रादीनि तेषु मन्वाद्युक्तेषु विवेकदीपेषु उपनिषत्सु आद्येषु वाक्येषु कर्मकाण्डपरवेदवाक्येषु च सत्स्वेवं ममत्वगर्ते तदाश्रये महान्धकारे संसारे एतद्विश्वं त्वदन्या का अतीव विभ्रामयति। न कापीत्यर्थः॥ ३०॥

**( ५ जगच्चन्द्रचन्द्रिका )** विद्यासु शास्त्रेष्विति ३१॥ ३०॥

**( ६ दंशोद्धारः )** विद्यास्विति। विद्यासु इन्द्रजालादिरूपासु शास्त्रेषु वेदेतरविद्यास्थानेषु विवेकस्तत्त्वज्ञानं तद्दीपयन्तीति तथा तेषु वेदान्तेषु आद्येषु वाक्येषु कर्मकाण्डविषयवेदेषु तेषामुत्तरमीमांसातः पूर्वत्वात्। विवेकदीपेष्विति विशेषणं वा। च पुनः ममत्वमेव गर्तः दुरुद्धरत्वेन गर्तसाम्यं। अतिमहान्मोहरूपोऽन्धकारो यस्मिन् अतिमहताऽमप्यन्धकारो यस्मिन्निति चतुर्भुजोक्तिरुपेक्षिता। वैयधिकरण्येनात्वाप्राप्ते येषु पदार्थेषु एतद्विश्वं त्वदन्या का विभ्रामयति पुनः पुनः प्रवर्तयति। यद्वा ममत्वगर्ते संसारे वेदविद्यादयस्तेषु। शेषं प्राग्वत्। अमन्तत्वान्मित्वेप्यार्षत्वाद्ध्रस्वाभावः। संज्ञापूर्वकविधेरनित्यत्वाद्वा ३०

**रक्षांसि यत्रोग्रविषाश्च नागा यत्रारयो दस्युबलानि यत्र।**
**दावानलो यत्र तथाब्धिमध्ये तत्र स्थिता त्वं परिपासि विश्वम्॥ ३१॥**

**( १ गुप्तवती )** ॥ ३१॥

**( २ चतुर्धरी )** रक्षांसि राक्षसादीनि उग्रविषाः महाविषधरा नागाः सर्पाः यत्र। अरयः शत्रवः दस्युबलानि चौरसैन्यानि दावानलः वडवाग्निः अब्धिमध्ये समुद्रमध्ये तत्र स्थिता सती हे अम्ब त्वं अखिलं विश्वं ब्रह्माण्डं परिपासि रक्षां कुरु॥ ३१॥

**( ३ शान्तनवी )** हे देवि त्वं तत्र तत्र च स्थिता सती विश्वं परिपासि परिरक्षसि। क्व क्वेति। यत्र च रक्षांसि। यत्र च दैत्याः च। यत्र उग्रविषा नागास्तक्षकादयः फणिनः। यत्र च अरयः शत्रवः। यत्र च दस्युबलानि चौरसमूहाः। यत्र च दावानलः दावाग्निः वनाग्निः। तथा यत्र चाब्धिमध्ये च सर्वत्र तत्तदुपद्रवप्रसङ्गे स्मृता सती परितो रक्षसीति भावः। 'दवदावौ वनारण्यवह्नी'॥ ३१॥

**( ४ नागोजीभट्टी )** रक्षांसीति। नागाः सर्पाः। अत्र यत्रेत्यनुकृष्यते। दस्यवः चौराः। दावो वनम्। तथाब्धिमध्ये यत्रौर्वाग्न्यादयः तत्र त्वमेव व्यापकत्वात्स्थिता विश्वं परिपासीत्यन्वयः॥ ३१॥

**( ५ जगच्चन्द्रचन्द्रिका )** रक्षांसि यत्रेति ३२॥ ३१॥

**( ६ दंशोद्धारः )** सर्वसंकटेष्वपि त्वमेव रक्षिकेत्याहुः। रक्षांसीति। नागाः सर्पाः। दस्युबलानि चौरबलानि॥ ३१॥

**विश्वेश्वरी त्वं परिपासि विश्वं विश्वात्मिका धारयसीति विश्वम्।**
**विश्वेशवन्द्या भवती भवन्ति विश्वाश्रया ये त्वयि भक्तिनम्राः॥ ३२॥**

**( १ गुप्तवती )** ॥ ३२॥

**( २ चतुर्धरी )** विश्वेश्वरीति। विश्वात्मिका सर्वात्मिका सर्वजगत्स्वरूपा। इतीदं प्रकाशमानं। विश्वेशवन्द्या ब्रह्मणोऽपि स्तव्या भवती त्वं। ये त्वयि भक्तिनम्राः ते विश्वाश्रया भवन्तीत्यन्वयः॥ ३२॥

**( ३ शान्तनवी )** हे देवि त्वं विश्वेश्वरीति यत् अतस्त्वं विश्वं परिपासि। यद्वा हे देवि त्वं विश्वेश्वरी विश्वव्यापिन्यसि। अत एव त्वं विश्वं परिपासि यतो रक्षसि। 'अश्नोतेराशुकर्मणि वरट्चेचोपधायाः'। विश्वेश्वरि इति संबुद्ध्यन्तपाठे तु हे देवि हे विश्वेश्वरि हे विश्वव्यापिनि त्वं विश्वं परिपासि। हे देवि त्वं विश्वात्मिकासि। इति हेतुना विश्वं धारयसि। हे देवि भगवती विश्वेशवन्द्या वर्तते। विश्वस्य ईशः स्रष्टा संरक्षिता संहर्ता च ब्रह्मादिः स्वामी तस्य वन्द्या अभिवादनीया

स्तुत्या च वर्तते । भवच्छब्दप्रयोगे शेषे प्रथमपुरुषः । हे देवि त्वयि विषये ये भक्तिनम्राः स्युस्ते विश्वाश्रयाः विश्वस्य आश्रयाः आधारभूताः जगतां धारयितारो भवन्तीत्यर्थः । विश्वेशवन्द्या भवती भवायेति पाठे हे देवि त्वयि ये भक्तिनम्राः भक्त्या प्रह्वाः ते विश्वेशवन्द्या भवन्ति विश्वाश्रयाश्च भवन्ति । हे देवि भवती च भवाय संपदे भवति । हे देवि भवती भक्तवर्गाणां भवाय संपदे प्रसन्ना भवतु इत्यर्थः ॥ ३२ ॥

**( ४ नागोजीभट्टी )** यतस्त्वं विश्वेश्वरी अतो विश्वं परिपासि । यतः त्वं विश्वात्मिका अतस्त्वं तद्धारयसि । यतो भवती विश्वेशानां इन्द्रब्रह्मादीनामपि स्तुत्या अतस्त्वयि भक्तिनम्राः एते विश्वाश्रयाः भवन्ति ॥ ३२ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** विश्वेश्वरीति ३३ ॥ ३२ ॥

**( ६ दंशोद्धारः )** विश्वेश्वरीति । इतीत्यन्वयमिदमित्यर्थे । विश्वेशस्य ब्रह्मणोऽपि वन्द्या भवती त्वं । त्वयि भक्तिनम्राः विश्वाश्रया भवन्तीत्यन्वयः । उत्पाता अनिष्टसूचकास्तेषां पाकेन परिणामेन जनितानुपसर्गानुपद्रवान् ॥ ३२ ॥

**देवि प्रसीद परिपालय नोऽरिभीतेर्नित्यं यथाऽसुरवधादधुनैव सद्यः।**
**पापानि सर्वजगतां प्रशमं नयाशु उत्पातपाकजनितांश्च महोपसर्गान् ॥ ३३ ॥**

**( १ गुप्तवती )** उत्पातानां पाके फलकाले जातानुपसर्गान्विघ्नान् ॥ ३३ ॥

**( २ चतुर्धरी )** नोऽस्मान् अरिभीतेः शत्रुभीतेः अधुना संप्रति सद्यस्तत्क्षणात् शममुपशमं उत्पाता अनिष्टसूचका उल्कापातादयः तेषां पाकः परिणतिः पर्यवसायिता तज्जनितान्महोपसर्गान्मारिकादिलक्षणान् ॥ ३३ ॥

**( ३ शान्तनवी )** हे देवि त्वं नोऽस्माकं देवानां प्रसीद प्रसन्ना भव । हे देवि त्वयैव अधुना इदानीं सद्यः सपदि तत्क्षणे असुरवधात् शुम्भादिदैत्यहननाद्धेतुतः नोऽस्मान्देवाञ्शुम्भादिशत्रुभीतेः शुम्भाद्यसुरभयात्परिपालय । तथैव अग्रेऽपि काले भविष्यमाणायाः अरिभीतेः शत्रुभीतितः नित्यं शश्वत् नः अस्मान्देवान्परिपालय परितो रक्ष । अथ च हे देवि नित्यं सर्वजगतां सर्वेषां लोकानां पापानि प्रशमं प्रशान्तिं आशु क्षिप्रं नय । नयतिर्द्विकर्मकः । दुरितानि नाशं प्रापय । अथ च हे देवि त्वं जगतां लोकानां उत्पातपाकजनितानुत्पातपाकसमुत्थितान् । अत्र ह्यधर्म उत्पातशब्देन विवक्षितः । उत्पातहेतुत्वात् । अधर्मस्य तस्य पाकः परिणामः तेन जनितानुपसर्गानुपद्रवान्महोपसर्गान्वज्रपातादीनुपद्रवान् आशु प्रशमं प्रशान्तिं नय प्रापय । इति वयं देवाः त्वदेकशरणाः प्रार्थयामहे । तस्मात्प्रसीदेति भावः । वाक्यसंधिर्वैवक्षिकः । अन्यथा आशु उत्पातेति अकः सवर्णे दीर्घत्वेऽत्र छन्दोभङ्गोपि स्यात् । आशु ह्युत्पातेति क्वचित्पाठः ॥ ३३ ॥

**( ४ नागोजीभट्टी )** देवीति । हे देवि नोऽस्मान्सद्यः क्षणमात्रेण शत्रुभीतेः पालय । यथाधुनैव संप्रत्येवासुरवधात्पालितवत्यसि तथेत्यर्थः । सर्वजगतां पापानि आशु शीघ्रं प्रशमं नय । उत्पातानां पाकः फलदानकालस्तेन जनितान्महोपसर्गान्मार्यादींश्च प्रशमं नयेति ॥ ३३ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** देवि प्रसीदेति ३४ ॥ ३३ ॥

**( ६ दंशोद्धारः )** ॥ ३३ ॥

**प्रणतानां प्रसीद त्वं देवि विश्वार्तिहारिणि । त्रैलोक्यवासिनामीड्ये लोकानां वरदा भव ॥ ३४॥**

**( १ गुप्तवती )** ॥ ३४ ॥

**( २ चतुर्धरी )** हे ईड्ये स्तव्ये देवि त्वं विश्वपीडोपशमनि ॥ ३४ ॥

**( ३ शान्तनवी )** विश्वस्य आसमन्तात् आर्तिं पीडां हरत्यपनुदतीति विश्वार्तिहारिणी तत्संबुद्धौ तथोक्ते हे देवि त्वं प्रणतानां भक्तिनम्राणां प्रसीद प्रसन्ना भव । त्रयो लोकास्त्रैलोक्यं । चातुर्वर्ण्यादित्वात्स्वार्थे ष्यञ् । तत्र वसन्ति त्रैलोक्यवासिनस्तेषां ईड्ये । ईड स्तुतौ । 'कृत्यानां कर्तरि वा' इति षष्ठी । हे ईड्ये हे स्तवनीये हे देवि त्वं लोकानां वरदा भव । लोकेभ्यो वरान्ददाना भवेत्यर्थः ॥ ३४ ॥

**( ४ नागोजीभट्टी )** प्रणतानामिति । ईड्ये स्तव्ये ॥ ३४ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** प्रणतानामिति ३५ ॥ ३४ ॥

**( ६ दंशोद्धारः )** ॥ ३४ ॥

**देव्युवाच ।**

**वरदाहं सुरगणा वरं यन्मनसेच्छथ । तं वृणुध्वं प्रयच्छामि जगतामुपकारकम् ॥ ३५ ॥**

**( १ गुप्तवती )** ॥ ३५ ॥

**( २ चतुर्धरी )** वरोऽभीप्सितोऽर्थः । हे सुरगणाः देवसमूहाः वरान्वृणुध्वं प्रार्थयध्वम् । यदित्यव्ययं । यत् यं वरमित्यर्थः । यमिति पाठः ॥ ३५ ॥

**( ३ शान्तनवी )** देवी चण्डिका तैः स्तुता सती तान्देवानुचितां वाचमूचे । वरं ददातीति वरदा । हे सुरगणाः हे देवसङ्घाः अहं युष्माकं वरदास्मि प्रीतास्मि । यं वरं मनसा यूयं इच्छथ वाञ्छथ तं जगतामुपकारकं वरं वृणुध्वं । अहं प्रयच्छामि ददामि । दाणो यच्छः । वृञ् वरणे । आत्मनेपदं ध्वं । 'सवाभ्यां वामौ' 'स्वादिभ्यः श्नुः' वृणीध्वमिति पाठे वृञ् वरणे क्र्यादिः लोटो ध्वं । ईहल्यघोः । प्वादीनां ह्रस्वः । यं तं इति पुंसि । 'देवाद्वृते वरः श्रेष्ठे त्रिषु क्लीबं मनाक् प्रिये' । वृणुध्वं प्रार्थयध्वमित्यर्थः ॥ ३५ ॥

**( ४ नागोजीभट्टी )** देव्युवाच । वरदेति । यं वरं यमभीप्सितार्थं तं वृणुध्वं प्रार्थयध्वम् ॥ ३५ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** देव्युवाच ३६ । वरदाहमिति ३७ ॥ ३५ ॥

**( ६ दंशोद्धारः )** वरदेति । यदित्यव्ययं यमित्यर्थे । यमिति वा पाठः ॥ ३५ ॥

## देवा ऊचुः ।

## सर्वाबाधाप्रशमनं त्रैलोक्यस्याखिलेश्वरि । एवमेव त्वया कार्यमस्मद्वैरिविनाशनम् ॥ ३६ ॥

**( १ गुप्तवती )** सर्वाश्च ता आबाधाश्च सर्वाबाधाः ॥ ३६ ॥

**( २ चतुर्धरी )** ॥ ३६ ॥

**( ३ शान्तनवी )** हे देवि अखिलेश्वरि अखिलस्य विश्वस्य ईश्वरि व्यापके । 'अश्नोतेराशुकर्मणि वरट्चोपधायाः' । हे त्रैलोक्यस्वामिनि त्वया भगवत्या देव्या त्रैलोक्यस्य त्रयाणां लोकानां । स्वार्थे घञ् । सर्वबाधाप्रशमनं सर्वदुःखोपशमः । सर्वाबाधेति पाठे तु महती बाधा आबाधा । आङ् अभिव्याप्तौ । आसमंताद्बाधा आबाधा । अस्मद्वैरिविनाशनं । वैरिणः शत्रवः दैत्याः तेषां विनाशनं विध्वंसो वधः एवमीदृग्विधं एतत् अदः उपन्यस्तं कार्यं एवंविधं इदं त्वया जगदुपकारकं कर्म एतत् एवंविधं कार्यं कर्तव्यं । कीदृशं तत् । सर्वबाधानां प्रशमनं । प्रकृष्टं शमनं यत्र तत्तथोक्तं । यद्वा शमयतीति शमनं नन्द्यादित्वाल्ल्युः । बाहुलकात्कर्तरि वा ल्युट् । पुनः कीदृशं । अस्माकं वैरिणो दैत्याः तान्विनाशयतीत्यस्मद्वैरिविनाशनम् ३६

**( ४ नागोजीभट्टी )** देवा ऊचुः । सर्वाबाधेति । सर्वा चासौ बाधा चेत्यर्थः । इदं वैरिविनाशनस्य विशेषणम् । एवमेव शुम्भादिनाशनवदेव ॥ ३६ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** देवा ऊचुः ३८ । सर्वाबाधेति ३९ ॥ ३६ ॥

**( ६ दंशोद्धारः )** ॥ ३६ ॥

## देव्युवाच ।

## वैवस्वतेऽन्तरे प्राप्ते अष्टाविंशतिमे युगे । शुम्भो निशुम्भश्चैवान्यावुत्पत्स्येते महासुरौ ॥ ३७ ॥

**( १ गुप्तवती )** युगे चतुर्युगे तत्रापि कलिद्वापरसन्धौ ॥ ३७ ॥

**( २ चतुर्धरी )** वैवस्वतेऽन्तरे वैवस्वतमनोरधिकारोपलक्षिते काले सप्तमे मन्वन्तरे इत्यर्थः । अष्टाविंशतिमे अष्टाविंशतिसंख्ये । अपवादविषये क्वचिदुत्सर्गस्यापि समावेशः । अष्टाविंशतिर्मीयते संख्यायते इति वा । युगे चतुर्युगे ॥ ३७ ॥

**( ३ शान्तनवी )** रक्तबीजवधादनन्तरं यस्मिन्काले देवैः सह देवी इदं वाक्यं उक्तवती तं कालमारभ्य भविष्यद्वैवस्वतमन्वन्तरे काले नन्दगोपकुले देव्याः प्रादुर्भावोऽनेन श्लोकेनोच्यते । हे देवाः शृणुत । पूर्वं जगदुपकृत्यै मया देव्या हेतुकर्त्र्या । मधुकैटभौ विष्णुना मारितौ तदनु स्वल्पान्तरे महिषासुरो मया देव्या निपातितः । तदनु चण्डमुण्डधूम्रलोचनरक्तबीजशुम्भनिशुम्भाः ससैन्याः संग्रामे सन्निपातिताः । संप्रति नन्दन्तु मदनुग्रहतो लोकाः । अतः परमेष्यतोऽपि मत्कर्तव्याद्बहुशो जगदुपकारात् भवत्परितोषार्थात्कथयाम्यधुना । वैवस्वतेऽन्तरे वैवस्वतमन्वन्तरे भविष्यत्यष्टाविंशतिमे युगे प्राप्ते सति शुम्भो निशुम्भश्च अन्यावेव प्राक् निहतौ यौ शुम्भनिशुम्भौ नाम रक्तबीजेनोपलक्षितौ ततोऽन्यावेव महासुरौ शुम्भनिशुम्भनामानौ दैत्यावुत्पत्स्येते उद्भविष्येते । अष्टाभिरधिका विंशतिरष्टाविंशतिः । 'द्व्यष्टनः संख्यायाम्' इत्यात्वं । अष्टाविंशतेर्युगानां कृतादीनां पूरणं पूरकं यद्युगं विष्णोरष्टमावतारोपलक्षितं तदष्टाविंशतिमं । 'तस्य पूरणे डट्' इति डट्प्रत्ययस्य 'विंशत्यादिभ्यस्तमडन्यतरस्यां' इति तमडागमः । तत्र पृषोदरादित्वात्तशब्दस्य लोपः । यत्तु कश्चिदाह । माङ् माने । स्त्रियां भावे संपदादित्वात्क्विप् । मानं मा अष्टाविंशन्तिः मानं मा यस्य युगस्येति वा । अष्टाविंशतेरिव मानं यस्य युगस्येति वा विगृह्य बहुव्रीहौ नपुंसके ह्रस्वत्वे अष्टाविंशतिमं युगं । ततः सप्तम्येकवचने अष्टाविंशतिमे इति । तत्र तावत् । मानेः क्विपि घुमास्थादिना इत्वप्रसंगो दुर्निवारस्तिष्ठतु । युगमन्यपदार्थः कथं स्यात् । एतावता युगानामष्टाविंशतिः तत्परिमिता अपि युगरूपा अष्टाविंशतिसंख्याका एवान्यपदार्था इति अष्टाविंशतितममेव युगं द्वापरं तद्रूपं कलियुगादिरूपं न सेत्स्यतीति । यथा

१ 'सर्वबाधाप्रशमनं' इति पाठः ।

पञ्चसु पाण्डवेषु पञ्चमः सहदेवः । तत्र मागमः । पञ्चमः मानं यस्य स इत्युक्ते पञ्चानां पूरणः सहदेवोऽन्यपदार्थत्वेन न गृह्यते । किंतु पञ्चापि ते मिलिताः पञ्चत्वसंख्यापरिमिताः पञ्चमा इति युधिष्ठिरादयः पञ्चाप्यन्यपदार्थतया गृह्यन्ते नतु सहदेव एव । तस्मात्प्रागुक्तैवाष्टाविंशतिमेया व्युत्पत्तिः । पृषोदरादित्वेन सैव सभ्या । अष्टाविंशतिमे युगे द्वापरान्ते कलियुगादौ प्राप्ते । 'यामाद्यङ्गे युगः पुंसि युगं युग्मे कृतादिषु' ॥ ३७ ॥

( ४ नागोजीभट्टी ) देव्युवाच । वैवस्वते इति । अन्तरे मन्वन्तरे अष्टाविंशतिमे अष्टाविंशतिसंख्याके । डटो मडागमश्छान्दसः । युगे चतुर्युगे । तत्र कलिद्वापरसंधावनयोरुत्पत्तिः ॥ ३७ ॥

( ५ जगच्चन्द्रचन्द्रिका ) देव्युवाच ४० । वैवस्वतेन्तर इति ४१ ॥ ३७ ॥

( ६ दंशोद्धारः ) वैवस्वते इति । अष्टाविंशत्या मीयते तदष्टाविंशतिमं तस्मिन्नष्टाविंशतिसंख्याके इत्यर्थः । युगे चतुर्युगे ॥ ३७ ॥

**नन्दगोपगृहे जाता यशोदागर्भसंभवा । ततस्तौ नाशयिष्यामि विन्ध्याचलनिवासिनी ॥ ३८ ॥**

( १ गुप्तवती ) विन्ध्याचले तत्रापि गङ्गातीरे निवासिनी ॥ ३८ ॥

( २ चतुर्धरी ) यशोदा नन्दगोपगृहिणी तस्या अहं गर्भसंभवा विन्ध्यवासिनी ॥ ३८ ॥

( ३ शान्तनवी ) ततो देवी नन्दगोपस्य कुले गृहे 'कुलं वंशे गृहेपि तत्' जाता उत्पन्ना यशोदायाः गर्भसंभवा गर्भात्संभवो जन्म यस्याः सा तथोक्ता । विन्ध्याचलनिवासिनी सती तौ शुम्भनिशुम्भाख्यावसुरौ नाशयिष्यामि परासूकरिष्यामि व्यापादयिष्यामि ॥ ३८ ॥

( ४ नागोजीभट्टी ) नन्देति । नन्दगोपस्य एषा महालक्ष्म्यंशभूता 'नन्दा भगवती नाम या भविष्यति नन्दजा । कनकोत्तमकान्तिः सा सुकान्तिकनकाम्बरा । कमलाङ्कुशपाशाब्जैरलंकृतचतुर्भुजा । इन्दिरा कमला लक्ष्मीः सा श्री रुक्माम्बुजासना' इति रहस्योक्तेः ॥ ३८ ॥

( ५ जगच्चन्द्रचन्द्रिका ) नन्दगोपेति ४२ ॥ ३८ ॥

( ६ दंशोद्धारः ) ॥ ३८ ॥

**पुनरप्यतिरौद्रेण रूपेण पृथिवीतले । अवतीर्य हनिष्यामि वैप्रचित्तांश्च दानवान् ॥ ३९ ॥**

( १ गुप्तवती ) वैप्रचित्तान्विप्रचित्तिवंश्यान् ॥ ३९ ॥

( २ चतुर्धरी ) वैप्रचित्तान्विप्रचित्तिवंश्यान् ॥ ३९ ॥

( ३ शान्तनवी ) अहं देवी पुनरपि वैवस्वतमन्वन्तरे एव अष्टाविंशतिमे युगे द्वापरेऽतीते कलियुगे प्राप्ते विरुद्धा प्रजासु चित्तिर्ज्ञानं यस्य दानवस्य स विप्रचित्तिर्नाम कश्चिद्दानवः तस्य विप्रचित्तेः दानवस्य अपत्यानि पुमांसः वैप्रचित्ताः तान्वैप्रचित्तान्दानवान् अतिरौद्रेण रूपेण भयंकरेण उग्रेण वपुषा पृथिवीतले अवतीर्य प्रादुर्भावमुपेत्य तु हनिष्यामि व्याहनिष्याम्येव । 'तु स्याद्भेदेऽवधारणे' पुनरपि इत्येतद्धरिष्यामि इत्यनेन संबध्नाति । वैप्रचित्तान्पुनरप्युद्धतान्हनिष्यामीत्यर्थः । 'ऋद्धनोः स्ये' इत्यडागमः । 'पुनरप्रथमे भेदे' ॥ ३९ ॥

( ४ नागोजीभट्टी ) पुनरपीति । इयमपि द्वापरेऽतीते तत्रैव चतुर्युगेऽवतीर्णेत्याहुः । वैप्रचित्तान्विप्रचित्तिवंशीयान् ३९

( ५ जगच्चन्द्रचन्द्रिका ) पुनरप्यतीति ४३ ॥ ३९ ॥

( ६ दंशोद्धारः ) पुनरिति । वैप्रचित्तान्विप्रचित्तिवंशोद्भवान् ॥ ३९ ॥

**भक्षयन्त्याश्च तानुग्रान्वैप्रचित्तान्महासुरान् । रक्ता दन्ता भविष्यन्ति दाडिमीकुसुमोपमाः ॥ ४० ॥**

( १ गुप्तवती ) सर्वावयवावच्छेदेन रक्ताया अपि रक्तचामुण्डात्वेन प्रसिद्धाया एव दन्तांशे रक्तिमाधिक्याद्रक्तदन्तीति नामेत्याहुः ॥ ४० ॥

( २ चतुर्धरी ) रक्ता लोहिताः ॥ ४० ॥

( ३ शान्तनवी ) तान् वैप्रचित्तान्महासुरानुग्रान् रौद्रान् भक्षयन्त्याः मम देव्याः दन्ताः रक्ता आरक्ता एव भविष्यन्ति । अत एव ते मे दन्ताः दशनाः दाडिमीकुसुमोपमाः भविष्यन्ति दाडिमीपुष्पवदरुणवर्णाः संपत्स्यन्ते ॥ ४० ॥

( ४ नागोजीभट्टी ) ॥ ४० ॥

---

१ 'वैप्रचित्तांस्तु' इति शान्तनवी ।

( ५ जगच्चन्द्रचन्द्रिका ) भक्षयन्त्या इति ४४ ॥ ४० ॥
( ६ दंशोद्धारः ) ॥ ४० ॥

**ततो मां देवताः स्वर्गे मर्त्यलोके च मानवाः । स्तुवन्तो व्याहरिष्यन्ति सततं रक्तदन्तिकाम् ४१**

( १ गुप्तवती ) ॥ ४१ ॥

( २ चतुर्धरी ) ॥ ४१ ॥

( ३ शान्तनवी ) ततो हेतुतः वैप्रचित्तासुरभक्षणजनितारुणवर्णदशनत्वान्मां स्तुवन्त्यो देवता देवगणाः स्वर्गे सततं शश्वद्रक्तदन्तिकासंज्ञया रक्तदन्तिकेत्यनया व्याहरिष्यन्ति । यतो हेतुतः रक्ताः मे दन्ताः । स्वार्थे तल् । तथा मानवाश्च मर्त्यलोके भुवि मां सततं स्तुवन्तः सन्तः रक्तदन्तिकां व्याहरिष्यन्ति । यतो मे दन्ता रक्ताः भविष्यन्ति ततो मां संज्ञयान्वर्थया रक्ता दन्ताः यस्याः सा रक्तदन्तिका तां स्तोष्यन्ति देवाः मानवाश्चेति भावः ॥ ४१ ॥

( ४ नागोजीभट्टी ) तत इति । एषा रक्तदन्तिका काल्यंशभूता । अत्र दन्तेत्युपलक्षणं । केशायुधसर्वावयवेषु रक्तत्वमस्याः । अत एवास्या रक्तचामुण्डात्वेन व्यवहारः । अत्र सर्वत्राहमिति निर्देशः परस्परमपि शाक्तानामभेदाभिप्रायेण ॥ ४१ ॥

( ५ जगच्चन्द्रचन्द्रिका ) ततो मामिति ४५ ॥ ४१ ॥

( ६ दंशोद्धारः ) ॥ ४१ ॥

**भूयश्च शतवार्षिक्यामनावृष्ट्यामनम्भसि । मुनिभिः संस्मृता भूमौ संभविष्याम्ययोनिजा॥४२॥**

( १ गुप्तवती ) ॥ ४२ ॥

( २ चतुर्धरी ) शतवर्षभवा शतवार्षिकी । उत्तरपदवृद्धिः । अनम्भसि खातादिजलशून्यायां भूमौ ॥ ४२ ॥

( ३ शान्तनवी ) भूयश्च पुनरपि शतं वर्षाणि परिपूरणा यस्याः शतवार्षिकी । 'तदस्य परिमाणं' इति वुञ् । तद्धितार्थे समासः । 'वर्षस्याभविष्यति' इत्युत्तरपदवृद्धिः । 'वर्षाल्लुक्' इति पाक्षिको लुक् । स्त्रियां ङीप् । तस्यां अनावृष्टौ सत्यां अनम्भसि नदीतडागादावपि जलशून्यायां भूमौ मुनिभिः संस्तुता संनुता सती अहं देवी अयोनिजा संभविष्यामि स्वयमेवाविर्भविष्यामि । न आसमन्ताद्वृष्टिरनावृष्टिः । यद्वा नास्त्येवासमन्ताद्वृष्टिर्यस्यामीतौ सा अनावृष्टिस्तस्यामनावृष्ट्यां । संस्तुता संस्मृता इति पाठद्वयम् ॥ ४२ ॥

( ४ नागोजीभट्टी ) भूयश्चेति । अनम्भसि कृष्यादिजलशून्यायामपीत्यर्थः । अयोनिजा यथेदानीं पार्वतीदेहाविर्भाव एवमपि चेत्यर्थः ॥ ४२ ॥

( ५ जगच्चन्द्रचन्द्रिका ) भूयश्चेति ४६ ॥ ४२ ॥

( ६ दंशोद्धारः) भूय इति । अनम्भसि खातादिजलरहितायां भूमौ ॥ ४२ ॥

**ततः शतेन नेत्राणां निरीक्षिष्यामि यन्मुनीन् । कीर्तयिष्यन्ति मनुजाः शताक्षीमिति मां ततः ४३**

( १ गुप्तवती ) शताक्षीशाकम्भरीदुर्गानां स्थानानि तु कृष्णावेणीतुङ्गभद्रयोर्मध्यभागे सह्याद्रेरीषत्प्राच्यां प्रसिद्धानि॥४३॥

( २ चतुर्धरी ) यत् यस्मात् । ततस्तस्माद्भविष्यति ॥ ४३ ॥

( ३ शान्तनवी ) ततः मत्प्रादुर्भावादनन्तरं नेत्राणां शतेन मुनीन्संस्तोतॄन्संस्मर्तॄनृषीन्निरीक्षिष्यामीति यत् ततो हेतोर्मां देवीं मनुजाः मनुष्याः शताक्षीं शतमक्षीणि यस्याः सा शताक्षी तां इति इत्थमन्वर्थसंज्ञया कीर्तयिष्यन्ति कथयिष्यन्ति । ईक्ष दर्शने । अनुदात्तेत् । छान्दसं परस्मैपदं । 'व्यत्ययो बहुलं' इति । निरीक्षिष्ये यतो मुनीनिति क्वचित्पाठः ॥४३॥

( ४ नागोजीभट्टी ) तत इति । यद्यस्मात् मुनीन्निरीक्षिष्यामि तत्तस्मात् ॥ ४३ ॥

( ५ जगच्चन्द्रचन्द्रिका ) ततः शतेनेति ४७ ॥ ४३ ॥

( ६ दंशोद्धारः ) ॥ ४३ ॥

**ततोऽहमखिलं लोकमात्मदेहसमुद्भवैः । भरिष्यामि सुराः शाकैरावृष्टेः प्राणधारकैः ॥ ४४ ॥**

( १ गुप्तवती ) ॥ ४४ ॥

( २ चतुर्धरी ) हे सुराः आवृष्टेः वृष्टिपर्यन्तम् ॥ ४४ ॥

( ३ शान्तनवी ) हे सुराः ततः शताक्षीति कीर्तनादनन्तरं अहं देवी आत्मदेहसमुद्भवैः मम देव्याः शरीरात्समु-

त्पद्यमानैः प्राणधारकैः शाकैः हरितकैः पत्राद्यैः साधनैरावृष्टेः आभविष्यतीं वृष्टिमवधिं कृत्वा यावद्वृष्टिर्भवति तावत्तावन्तं कालं अखिलं समस्तं लोकं भरिष्यामि पोषयिष्यामि । 'अस्त्री शाकं हरितकं' 'शाकाख्यं पत्रपुष्पादि' । यदाहुः 'पत्रमूलकरीराग्रफलकाण्डास्थिरूढकाः । त्वक् पुष्पं कवकं चेति शाकं दशविधं स्मृतं' । भरिष्यामि । डुभृञ् धारणपोषणयोः । 'ऋद्धनोः स्ये' इडागमः । प्राणधारकैः जीवयितृभिः ॥ ४४ ॥

**( ४ नागोजीभट्टी )** वैवस्वतमन्वन्तर एव चत्वारिंशत्तमे युगे शताक्षी शाकम्भर्यवतारः । 'तस्मिन्नेवान्तरे शक्र चत्वारिंशत्तमे युगे' इति लक्ष्मीतन्त्रोक्तेः । तत्रैव दुर्गमासुरवधः । 'शाकम्भरीं स्तुवन्ध्यायञ्शक्रं संपूजयन्नमन् । अक्षयामश्नुते भूतिमन्नं पानं भवान्तरे' इति च तत्रैव ॥ ४४ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** ततोऽहमिति ४८ ॥ ४४ ॥

**( ६ दंशोद्धारः )** तत इति । आवृष्टेरिति पृथक् पदं । वृष्टेः आ । वृष्टिपर्यन्तमित्यर्थः । दुर्गो वधविषयोऽस्त्यस्या इत्यर्थे अर्शआद्यचि दुर्गेति साधुः ॥ ४४ ॥

## शाकम्भरीति विख्यातिं तदा यास्याम्यहं भुवि । तत्रैव च वधिष्यामि दुर्गमाख्यं महासुरम् ॥४५॥

**( १ गुप्तवती )** ॥ ४५ ॥

**( २ चतुर्धरी )** अत्रैव अनावृष्ट्यां दुर्गमाख्यं दुर्गमनामानम् ॥ ४५ ॥

**( ३ शान्तनवी )** तदा शाकैरखिललोकोदरभरणकाले भुवि अहं देवी शाकम्भरीति विख्यातिसंप्राप्तिकाल एव दुर्गमाख्यं दुर्गम इति आख्या संज्ञा यस्य स दुर्गमाख्यः तं । दुःखेन गम्यते दुर्गमः दुःखेन गच्छन्त्यत्रेति दुर्गः । 'सुदुरोरधिकरणे' दुर्ग एव दुर्गमः । पर्यायत्वात् 'जनिवध्योश्च' इति निर्देशाद्वधिः प्रकृत्यन्तरमस्तीति विज्ञेयं । वध हिंसायां । भ्वादिः परस्मैपदी । क्वचित्तु तत्रैव च हनिष्यामि इति पाठेपि स एवार्थः । शाकमिति मान्तमव्ययं चास्ति । बिभर्तीति भरिः । सर्वधातुभ्य इन् । कृदिकारादक्तिनो वा ङीष्वक्तव्यः । सुप्सुपेति समासः । शाकम्भरिः देवी । यद्वा 'फलेग्रहिरात्मंभरिश्च' इति चकारोऽनुक्तसमुच्चयार्थस्तेन लोकरक्षणार्थं स्वशरीरोद्भवानि शाकानि बिभर्तीति शाकम्भरी । इन्प्रत्ययः । उपपदस्य मुमागमश्च । स्त्रियां कृदिकारादक्तिनो वा ङीष् । 'पाठा व्याख्याश्च धातूनां दृश्यन्ते स्वैरिणः क्वचित् । प्रयोग एव भगवांस्तांस्तान्प्रस्थापयेत्पथि' ॥ ४५ ॥

**( ४ नागोजीभट्टी )** शाकम्भरीति । एषा पार्वत्यंशा एव शाकम्भरी । नीलवर्णेत्याद्युक्तेः । दुर्गमनामाऽसुरः तत्रैव शाकम्भर्यवतार एव 'शाकम्भरी शताक्षी सा सैव दुर्गा प्रकीर्तिता । उमा गौरी सती चण्डी कालिकेशा च पार्वती' इति । 'पत्रमूलकरीराग्रमूलकाण्डाधिरूढकाः । त्वक् पुष्पं कवकं चेति शाकं दशविधं स्मृतम् ॥ ४५ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** शाकम्भरीति ४९ ॥ ४५ ॥

**( ६ दंशोद्धारः )** ॥ ४५ ॥

## दुर्गादेवीति विख्यातं तन्मे नाम भविष्यति । पुनश्चाहं यदा भीमं रूपं कृत्वा हिमाचले ॥४६॥

**( १ गुप्तवती )** ॥ ४६ ॥

**( २ चतुर्धरी )** भीमं भयंकरम् ॥ ४६ ॥

**( ३ शान्तनवी )** किंच तस्माद्दुर्गमासुरवधाद्धेतुतः विख्यातं प्रसिद्धं मे दुर्गादेवीति नाम नामधेयं भविष्यति । दुर्गासुरमस्यति संहरिष्यति दुर्गादेवी । पृषोदरादित्वादकारलोपः । यद्वा दुर्गासुरो हन्तव्यत्वेन यस्याः सा दुर्गा । अर्शआदित्वान्मत्वर्थीयोऽच् । स्त्रियां टाप् । हे देवाः पुनश्च पुनरपि अहं देवी यदा हिमाचले तुहिनाद्रौ भीमं घोरं रूपं कृत्वा रक्षोभ्यस्त्रस्तानां मुनीनां त्राणकारणाद्धेतोः ॥ ४६ ॥

**( ४ नागोजीभट्टी )** दुर्गेति । भीमं भयंकरम् ॥ ४६ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** दुर्गादेवीति ५० ॥ ४६ ॥

**( ६ दंशोद्धारः )** ॥ ४६ ॥

## रक्षांसि भक्षयिष्यामि मुनीनां त्राणकारणात् । तदा मां मुनयः सर्वे स्तोष्यन्त्यानम्रमूर्तयः ४७

**( १ गुप्तवती )** ॥ ४७ ॥

**( २ चतुर्धरी )** ॥ ४७ ॥

**( ३ शान्तनवी )** रक्षांसि राक्षसान्भक्षयिष्यामि । क्षययिष्यामि इति पाठे क्षयं प्रापयिष्यामि इति 'प्रातिपदिकाद्धा-

त्वर्थे बहुलमिष्ठवच्च' इति णिच् अथवा । क्षिप प्रेरणे । चुरादिः । प्रेरयिष्यामीत्यर्थः । तदा मां देवीं आनम्रमूर्तयः भक्तिप्रह्व-कायाः सन्तः सर्वेऽपि मुनयः वसिष्ठादयः स्तोष्यन्ति वदिष्यन्ति ॥ ४७ ॥

( ४ **नागोजीभट्टी** ) भक्षयिष्यामीत्यन्तस्य पदद्वयं विशिष्टम् ॥ ४७ ॥

( ५ **जगच्चन्द्रचन्द्रिका** ) रक्षांसीति ५१ ॥ ४७ ॥

( ६ **दंशोद्धारः** ) ॥ ४७ ॥

**भीमादेवीति विख्यातं तन्मे नाम भविष्यति । यदारुणाख्यस्त्रैलोक्ये महाबाधां करिष्यति ॥४८॥**

( १ **गुप्तवती** ) भीमादेव्यवतारस्तु नाद्यापि जातः । वैवस्वत एव मन्वन्तरे पञ्चाशत्तमे चतुर्युगे भविष्यतीति लक्ष्मी-तन्त्रादिति केचित् । वस्तुतस्तु रक्तदन्त्यादयः षडप्यवतारा भाविन एव । मूले पुनरपि, भूयश्च, पुनश्चाहं, यदारुणाख्यः, इत्येभिः पदैरुत्तरोत्तरकालस्यैव कीर्तनात् । 'तस्मिन्नेवान्तरे शक्र चत्वारिंशत्तमे युगे' इत्युपक्रम्य शताक्ष्यवतारस्य तत्रा-न्तरे कथनात् । तस्मिन्नेवेत्यस्य वैवस्वत इत्यर्थः । चतुर्युगेऽत्र पञ्चाशत्तमे मुनिभिरर्चितेत्युपक्रम्य भीमादेवीकथनाच्च । त-त्रैव 'युगे षष्टितमे कश्चिदरुणो नाम दानवः' इत्यादिकथनाच्च । परंतु सांप्रतिकाच्छ्वेतवराहकल्पात्प्राक्तनकल्पेष्वपि देव्यव-ताराणामेतेषां मन्वन्तरयुगभेदेन जातत्वाच्छाकम्भर्यादीनां तत्तत्कुलदेवतात्वेनार्चनमधुनातनानां संगच्छत एव ॥ ४८ ॥

( २ **चतुर्धरी** ) अरुणे अक्षिणी यस्य सः । अरुक्ष इति वा पाठः । अरुणनामेत्यर्थः ॥ ४८ ॥

( ३ **शान्तनवी** ) तत्तस्माद्भीमेन रूपेण रक्षोपक्षपणाद्धेतुतः विख्यातं प्रसिद्धं भीमादेवीति विश्रुतं नाम मे देव्याः नामधेयं भविष्यति संपत्स्यते । बिभ्यत्यस्मादिति भीमं । 'भीमादयोऽपादाने' इति निपातिताः । हे देवाः यदा त्रैलोक्ये लोक-त्रये त्रिष्वपि लोकेषु अरुणाख्य अरुणसंज्ञकः अरुणो नाम महासुरः महाबाधां महतीं पीडां करिष्यति लोकान्वधिष्यते-ऽतितराम् ॥ ४८ ॥

( ४ **नागोजीभट्टी** ) भीमेति । 'भीमापि नीलवर्णेव दंष्ट्रादशनभासुरा । चन्द्रहासं च डमरुं शिरः पात्रं च बिभ्रती । एकवीरा कालरात्रिर्निद्रा तृष्णा दुरत्यया' इत्युक्तेरियं काल्यंशा एव । पञ्चाशत्तमे चतुर्युगे वैवस्वतमन्वन्तरे एव भीमावतार इति लक्ष्मीतन्त्रे । अरुणाख्योऽरुणो नाम ॥ ४८ ॥

( ५ **जगच्चन्द्रचन्द्रिका** ) भीमादेवीति ५२ ॥ ४८ ॥

( ६ **दंशोद्धारः** ) ॥ ४८ ॥

**तदाहं भ्रामरं रूपं कृत्वा संख्येयषट्पदम् । त्रैलोक्यस्य हितार्थाय वधिष्यामि महासुरम् ॥४९॥**

( १ **गुप्तवती** ) अरुणस्यासुरस्यापत्यं पुमान् आरुण इति तु छेदे अतइञं बाधित्वा शिवादित्वादण् वा ॥ ४९ ॥

( २ **चतुर्धरी** ) भ्रामरं भ्रमरसमूहात्मकं असंख्येया अगणनीयाः षट्पदाः भ्रमरा यस्मिन्रूपे तत् ॥ ४९ ॥

( ३ **शान्तनवी** ) तदाहं देवी असंख्येयषट्पदं भ्रामरं रूपं भ्रमरसंबन्धिनीं मूर्तिं कृत्वा त्रैलोक्यस्य त्रयाणां लोकानां हितार्थाय त्रैलोक्यस्य रक्षणाय तदा । सर्वतः सर्वत्र ॥ ४९ ॥

( ४ **नागोजीभट्टी** ) तदेति । भ्रामरं पाणिधृतभ्रमरं । असंख्येयाः षट्पदाः यस्मिन्रूपे तत् ॥ ४९ ॥

( ५ **जगच्चन्द्रचन्द्रिका** ) तदाहं भ्रामरमिति ५३ ॥ ४९ ॥

( ६ **दंशोद्धारः** ) ॥ ४९ ॥

**भ्रामरीति च मां लोकास्तदा स्तोष्यन्ति सर्वतः । इत्थं यदा यदा बाधा दानवोत्था भविष्यति५०**

( १ **गुप्तवती** ) भ्रामरी तु भीमरथिकाकिन्योः संगमेऽनुगुण्ठाख्यक्षेत्रे ततः प्राच्यां सन्निति क्षेत्रे च चन्द्रला परमे-श्वरीति नाम्ना प्रसिद्धा सैवास्माकं कुलदेवता ॥ ५० ॥

( २ **चतुर्धरी** ) सर्वतः सर्वत्र वा ॥ ५० ॥

( ३ **शान्तनवी**) मां देवीं भ्रामरीति च भ्रामरीत्येव स्तोष्यन्ति कीर्तयिष्यन्ति । भ्रमरस्येयमाकृत्या भ्रामरी देवी । भ्रमरस्येदं भ्रामरं रूपमाकारः । कथंभूतं भ्रामरं रूपं असंख्येयाः संख्यातुमशक्याः गणनातीताः षट्पदाः भ्रमराः यस्मिंस्तदसंख्येयषट्पदं भ्रामररूपविशेषणं । देवी असंख्यभ्रमररूपमूर्तिर्भूत्वा अरुणं नाम महासुरं लोकरक्षणार्थं हनिष्यामि । यतः ततः सा भ्राम-रीति नाम्ना लोके संकीर्तयिष्यन्ति सर्वत्रेति भावः । इदानीं देव्याः अवतारान्तराणां तत्कार्याणां चानन्त्यात्साकल्येन वक्तु-मशक्यत्वात्संक्षिप्य तत्कथामुपसंहरति । हे देवाः इत्थमुक्तानुसारेण प्रकारेण यदा यदा दानवेभ्यः उत्तिष्ठति दानवोत्था दा-नवेभ्यः समुद्भवा बाधा पीडा लोकानां भविष्यति उत्पत्स्यते ॥ ५० ॥

( ४ नागोजीभट्टी ) भ्रामरीति । 'तेजोमण्डलदुर्धर्षा भ्रामरी चित्रकान्तिभृत् । चित्रभ्रमणपाणिः सा महामारीति गीयते । महामाया महाकाली महामारी क्षुधा तृषा' इत्युक्तेरियमपि काल्यंशा एव । सर्वतः सर्वत्र वैवस्वतेन्तर एव षष्टितमे चतुर्युगे भ्रामर्यवतार इति लक्ष्मीतन्त्रे । इत्थमित्याद्युत्तरान्वयि ॥ ५० ॥

( ५ जगच्चन्द्रचन्द्रिका ) भ्रामरीति ५४ ॥ ५० ॥

( ६ दंशोद्धारः ) यदेति । अरुणाख्यः अरुणनामा । अरुणाक्ष इति वा पाठः । भ्रामरं भ्रमरसमूहात्मकं । असंख्येया अगण्याः षट्पदा भ्रमरा यस्मिन् रूपे ॥ ५० ॥

## तदा तदावतीर्याहं करिष्याम्यरिसंक्षयम् ॥ ५१ ॥

## इति श्रीमार्कण्डेयपुराणे देवैः कृता नारायणीस्तुतिर्नामैकादशोऽध्यायः ॥ ११ ॥

( १ गुप्तवती ) तदा तदावतीर्य एलाम्बा तुलजैकवीरायोगलादिनाम्नाऽवतीर्य । एताः पद्मपुराणेऽष्टशतदेवीतीर्थमालाध्याये गणितास्तत एवावगन्तव्याः । ऋषिर्देवी देवा देवीति चत्वार एवोवाचमन्त्राः यथास्थानमेव सन्ति । स्तोत्रारम्भे तु देवा ऊचुरिति नास्ति ॥ ५१ ॥ इति श्रीगुप्तवत्यां मन्त्रव्याख्याने एकादशोऽध्यायः ॥ ११ ॥

( २ चतुर्धरी ) ॥ ५१ ॥ इति श्रीसप्तशतीचतुर्धरीटीकायां नारायणीस्तुतिर्नामैकादशोऽध्यायः ॥ ११ ॥

( ३ शान्तनवी ) तदा तदा अहं देवी तत्तत्कार्यानुरूपमवतीर्य प्रादुर्भावमवाप्य अरिसंक्षयं शत्रुविनाशं करिष्यामि । दानवोत्थेति । सुपिस्थः कर्तरि ॥ ५१ ॥ इति श्रीमद्राजाधिराजश्रीमत्तोमरान्वयश्रीमदुद्धरणात्मजश्रीशन्तनुचक्रवर्तिविरचितायां शान्तनव्यां श्रीचण्डिकामाहात्म्यटीकायां नारायणीस्तुतिविध्युपलक्षित एकादशोऽध्यायः ॥ ११ ॥

( ४ नागोजीभट्टी ) तदेति स्पष्टम् ॥ ५१ ॥ इति शिवभट्टसुतसतीगर्भजनागोजीभट्टकृते सप्तशतीव्याख्याने एकादशोऽध्यायः ॥ ११ ॥

( ५ जगच्चन्द्रचन्द्रिका ) अथ अर्धश्लोकात्मको मन्त्रः । तदा तदावतीर्याहं करिष्याम्यरिसंक्षयमिति ५५ ॥ ५१ ॥ इति सप्तशतीटीकायां जगचन्द्रचन्द्रिकाख्यायां एकादशोऽध्यायः ॥ ११ ॥

( ६ दंशोद्धारः ) ॥ ५१ ॥ इति श्रीमद्बुल्लो० विरचितसप्तशतीदंशोद्धाराख्यटीकायां एकादशोऽध्यायः ॥ ११ ॥

---

# द्वादशोऽध्यायः १२

## देव्युवाच ।

## एभिः स्तवैश्च मां नित्यं स्तोष्यते यः समाहितः । तस्याहं सकलां बाधां नाशयिष्याम्यसंशयम् १

( १ गुप्तवती ) देवीति इत । उत्तरो भागश्चरित्रत्रयशेषोऽप्युत्तमचरित्र एवाव्यवहितत्वादन्तर्भवति । एवं प्रथमचरित्रस्य योगनिद्रां यदा विष्णुरित्यादेः पूर्वभागेऽपि ज्ञेयम् ॥ १ ॥

( २ चतुर्धरी ) एभिर्मधुकैटभवधादिलक्षणैः । समाहितोऽनन्यमनाः ॥ १ ॥

(३ शान्तनवी) श्रीदेव्युवाच । यद्यपि प्रागपि देवान् देव्येवोवाच तथाप्यध्यायादौ देवीवचनस्य प्राधान्यं ध्वनयितुं देवीमाहात्म्याध्ययनश्रवणादिफलश्रुतिप्रामाण्यं च दर्शयितुं देव्येव भगवती वाक्यमुचितां वाचं देवानुक्तवती । यः पुरुषः समाहितः भक्तिश्रद्धान्वितो भूत्वा एभिः प्रागुक्तैः स्तवैः स्तोत्रैः च पुनः पुनश्च नित्यं अविकल्पितं यथा भवति तथा श्रद्धा मां देवीं जगज्जननीं स्तोष्यते तस्य पुंसः अहं सकलां बाधां शमयिष्यामि । असंशयं संशयाभावः । अर्थाभावेऽव्ययीभावः । यद्वा असंशयं यथा स्यात्तथा अहं सकलां पीडां नाशयिष्यामि । स्तोष्यते । क्रियाफले कर्तृगते जित्वादात्मनेपदं । एभिरिति ब्रह्मकृतैरिन्द्रादिदेवकृतैश्च । हंसः सूर्यः परमात्मा । 'असावादित्यो ब्रह्म' इति श्रुतेः । हंसस्य कला हंसकला । बाध्यन्ते प्राणिनोऽनया बाधा संसृतिः । अविद्यमाना हंसकला परब्रह्मकला ब्रह्मविद्या यस्यां संसृतौ ममतायां सा अहंसकला बाधा मोहरूपा ममतासंसृतिः तां बाधां असंशयं शमयिष्यामि इत्यपि मुक्तिकामैरवगन्तव्यं । 'रविश्वेतच्छदौ हंसौ' । यद्वा य एभिः स्तवैरपि स्तोष्यते तस्य अहं अहंकारकृतां सकलां सर्वबाधां मोहमयीं ममतां संसृतिं शमयिष्यामि॥१॥

( ४ नागोजीभट्टी ) देव्युवाच । एभिरिति । मधुकैटभवधादिलक्षणैरित्यर्थः । सकलां ऐहिकीं पारलौकिकीं च । समाहितोऽनन्यमनाः ॥ १ ॥

( ५ जगच्चन्द्रचन्द्रिका ) अष्टत्रिंशच्छ्लोकयुक्तेप्यध्याये द्वादशात्मके । एकचत्वारिंशतं तु मन्त्रास्तत्राहुतिद्वयं । अर्ध-

श्लोकात्मकश्लोकाः सप्तत्रिंशन्मिता इति। अष्टभिरधिकास्त्रिंशच्छ्लोकाः अष्टत्रिंशच्छ्लोकाः द्वादशात्मकेऽध्याये एकेन अधिका चत्वारिंशत्। एकचत्वारिंशदधिकं विंशतिद्वयमित्यर्थः। मन्त्रा मनवो वर्तन्ते इति शेषः। तत्राहुतिद्वयं आहुत्योर्द्वयं अर्धश्लोकात्मकं अर्धश्लोकमन्त्रौ। श्लोकाः श्लोकरूपा मन्त्राः सप्तत्रिंशन्मिताः सप्त अधिका त्रिंशन्मिताः परिमिताः। ऋषिः देव्युवाचेति चैकैकमिति ऋषिरुवाच देव्युवाचेति च एकैकं पृथक् द्वौ मन्त्रौ भवतः। एवं संख्या स्फुटोदितेति। एवंप्रकारेण संख्या एकचत्वारिंशत् स्फुटाः प्रव्यक्ताः। 'स्फुटं प्रव्यक्तमुल्वणं' इत्यमरः। उदिताः कथिताः। तथाहि देव्युवाच स्वाहा॥१॥ एभिः स्तवैरिति २॥ १॥

(६ दंशोद्धारः) एभिरिति। एभिः मधुकैटभवधादिलक्षणैः। समाहितः एकाग्रचित्तः॥ १॥

**मधुकैटभनाशं च महिषासुरघातनम्। कीर्तयिष्यन्ति ये तद्वद्वधं शुम्भनिशुम्भयोः॥ २॥**

**(१ गुप्तवती)** मधुकैटभेति चरित्रत्रयोपलक्षणम्॥ २॥

**(२ चतुर्धरी)** एभिरित्युक्तमेव विशेषं निर्दिशति। मधुकैटभेति॥ २॥

**(३ शान्तनवी)** श्लोकत्रयमेकान्वयं त्रयाणामन्वयैक्यं द्रष्टव्यं। ये पुरुषा एकचेतसः सन्तः सावधानाः सन्तः अष्टम्यां च नवम्यां च चतुर्दश्यां च पक्षद्वयेपि विशेषानुक्तितः यथा क्रममनपेक्ष्य मधुकैटभनाशं च महिषासुरघातनं च तद्वत् शुम्भनिशुम्भयोश्च वधं भक्त्या कीर्तयिष्यन्ति पठिष्यन्ति। तद्वदेव ये श्रोष्यन्ति आकर्णयिष्यन्ति भक्त्या मम माहात्म्यमुत्तमं पुण्यतमं सर्वकामदुघं तेषां कीर्तयिष्यतां पुंसां च श्रोष्यतां च तेषां दुष्कृतोत्थाः दुष्कृतं दुरितं पूर्वचितं न किंचिदपि भविष्यति। दुष्कर्मसमुद्भूताः आपदश्च न भविष्यन्ति। विनश्यन्तीत्यर्थः। न च तेषां उभयेषां दारिद्र्यं दरिद्रता भविष्यति। आढ्या एव ते भविष्यन्तीत्यर्थः। न च तेषां इष्टैः सह चेतनेतरचैतन्यैश्च पुत्रादिभिर्धनादिभिश्च वियोजनं वियोगो विश्लेषो भविष्यति। सदैव इष्टैः सह मोदिष्यन्ते इत्यर्थः। मधुकैटभयोर्नाशो यस्मिन् ग्रन्थे स तथोक्तः। तं हननं घातस्य कारणं घातनं। ण्यन्ताल्ल्युट्। महिषासुरस्य घातनं सूदनं हिंसनं मारणं यस्मिन् ग्रन्थे स तथोक्तः तं। केचित्तु घातनस्थाने सूदनं पेठुः। षूद क्षरणे हिंसायां च। तद्वत्तथैवेत्यर्थः। वधो यस्मिन् ग्रन्थे प्रतिपाद्यत्वेन विद्यते स वधः। अर्श आदित्वादच्। शुम्भनिशुम्भयोरिति द्विवचनेन वधः सूच्यते। तेन वधानां वैषम्यात् अष्टम्यादिदिनत्रयेण यथाक्रमं कीर्तनशङ्कापि दूरीकृता। यद्वा मधुकैटभौ द्वौ एको महिषः शुम्भनिशुम्भौ द्वौ इति तेषां वधः पञ्च। अष्टमीचतुर्दशीनवम्यस्तिस्रोऽपि पक्षद्वयगतत्वेन षडिति न भविष्यति यथाक्रमेण कीर्तनप्रसङ्गदोषः। एकमनन्यवृत्ति चेतो येषां ते तथोक्ताः भजनं भक्तिरनन्यशरणताश्रयणतया। महान्तः आत्मानः अवताराः यस्याः सा महात्मा तस्या भावः माहात्म्यं। उत्तमं श्रेष्ठतमं दुःखफलकं कर्म दुष्कृतं आसमन्तात् पद्यन्ते गच्छन्त्याक्षिपन्ति दुःखानीत्यापदः दुस्थितयः। दरिद्रस्याकिंचनस्य भावो दारिद्र्यं निधनत्वं इष्टैः सह वियोजनं। वियोगो विश्लेषः॥ २॥

**(४ नागोजीभट्टी)** तदेवाह। मध्विति॥ २॥

**(५ जगच्चन्द्रचन्द्रिका)** मधुकैटभेति ३॥ २॥

**(६ दंशोद्धारः)** उक्तं स्फुटयति। मधुकैटभेत्यादि॥ २॥

**अष्टम्यां च चतुर्दश्यां नवम्यां चैकचेतसः। श्रोष्यन्ति चैव ये भक्त्या मम माहात्म्यमुत्तमम्॥३॥**

**(१ गुप्तवती)** ॥ ३॥

**(२ चतुर्धरी)** ॥ ३॥

**(३ शान्तनवी)** पूर्वश्लोकेन सहास्य श्लोकस्य व्याख्या कृतास्ति॥ ३॥

**(४ नागोजीभट्टी)** श्रोष्यन्ति चात्पठिष्यन्ति। अष्टम्यामित्यादिमुख्यकालकथनम्॥ ३॥

**(५ जगच्चन्द्रचन्द्रिका)** अष्टम्यां चेति ४॥ ३॥

**(६ दंशोद्धारः)** अष्टम्यामित्यादिमुख्यकालकथनम्॥ ३॥

**न तेषां दुष्कृतं किंचिद्दुष्कृतोत्था न चापदः। न भविष्यति दारिद्र्यं न चैवेष्टवियोजनम्॥ ४॥**

**(१ गुप्तवती)** ॥ ४॥

**(२ चतुर्धरी)** ॥ ४॥

**(३ शान्तनवी)** ॥ ४॥

**(४ नागोजीभट्टी)** न तेषामिति। दुष्कृतं पापं। दरिद्रशब्दाद्ष्यञि दारिद्र्यम्॥ ४॥

**(५ जगच्चन्द्रचान्द्रिका)** न तेषां दुष्कृतमिति ५॥ ४॥

**(६ दंशोद्धारः)** ॥ ४॥

**शत्रुतो न भयं तस्य दस्युतो वा न राजतः । न शस्त्रानलतोयौघात्कदाचित्संभविष्यति ॥ ५ ॥**

(१ गुप्तवती) ॥ ५ ॥

**(२ चतुर्धरी)** ॥ ५ ॥

**(३ शान्तनवी)** ये मम माहात्म्यं कीर्तयिष्यन्ति श्रोष्यन्ति वा तेषां कदाचिदपि शत्रुतो भयं न संभविष्यति । दस्युतः तस्करतोऽपि वा । न राजतोपि नृपान्न । न शस्त्रतः नायुधतः न अनलतः । नाग्नितः । न तोयौघान्न जलप्रवाहात् । न संभविष्यतीत्यनेन सर्वत्र संबध्नाति । शत्रुत इति । 'अपादाने चाहीयरुहोः' इति पञ्चम्यास्तसिः । एवं दस्युत इत्यादि । शस्त्रं च अनलश्च तोयौघाश्च सर्वो द्वन्द्वो विभाषैकवद्भवति ॥ ५ ॥

**(४ नागोजीभट्टी)** शत्रुत इति । न शस्त्रेति संग्रामभीरुविषयम् ॥ ५ ॥

**(५ जगच्चन्द्रचन्द्रिका)** शत्रुतो न भयमिति ६ ॥ ५ ॥

**(६ दंशोद्धारः)** ॥ ५ ॥

**तस्मान्ममैतन्माहात्म्यं पठितव्यं समाहितैः । श्रोतव्यं च सदा भक्त्या परं स्वस्त्ययनं महत् ॥ ६ ॥**

**(१ गुप्तवती)** तस्मान्ममैतदिति । अस्य पठनश्रवणविधिरूपत्वेऽपि मन्त्रत्वं वसन्ताय कपिञ्जलानालभेतेत्यादिविधीनामिव न विरुध्यते । एवमेतत्पूर्वोत्तराणां कालफलोद्देशेन कर्मविधिरूपाणामपि मन्त्रत्वं । श्रोतव्यं चेति चकारः पादपूर्णार्थमेव न समुच्चयार्थः । पाठाशक्तौ शृणुयाद्वेत्यर्थः । श्रवणे फलाधिक्यमिति तु कश्चित् ॥ ६ ॥

**(२ चतुर्धरी)** परमुत्कृष्टं स्वस्ति कल्याणं तस्यायनं मार्गः स्वस्त्ययनं महद्विनाशरहितं । हि तदिति पाठे हिर्हेतौ । माहात्म्यं कर्तृ सम्यक् ॥ ६ ॥

**(३ शान्तनवी)** तस्मात् वाञ्छितार्थसाधनत्वात् हेतुतः समाहितैः सावधानैः कृतप्रयत्नैः पुंभिः परं प्रकृष्टफलदं श्रेष्ठं महत्पूजनीयं योगक्षेमकरं अयनं वर्त्म ऐहिकामुष्मिकफलसाधनं शरणं मम देव्याः एतन्माहात्म्यं माहात्म्यप्रतिपादकग्रन्थसंदर्भरूपं भक्त्या भजनेन पठितव्यं सदैवाभ्यसनीयं सदा सर्वदैव भक्त्या समाहितैः श्रोतव्यं च श्रवणीयं । एतन्माहात्म्यमिति बहुव्रीहिरयं ग्रन्थरूपोन्यपदार्थः । शब्दस्यैव पाठश्रवणयोग्यत्वेन विषयभावात् । एतदिति तु पृथक्पदत्वे माहात्म्यं प्रतिपाद्यं तद्यत्रास्ति ग्रन्थवृन्दे तदप्युपचारान्मन्वर्थीयेन अर्शआद्यचा माहात्म्यशब्देनोच्यत इति पठनश्रवणयोग्यं द्रष्टव्यं । 'स्वस्त्याशीःक्षेमपुण्येषु मङ्गलेष्वव्ययं स्मृतं' । स्वस्त्ययनं क्षेमपुण्यावाप्तिमित्यर्थः ॥ ६ ॥

**(४ नागोजीभट्टी)** सदा नित्यम् । हि यतः तन्माहात्म्यं स्वस्ति कल्याणं तस्यायनं मार्गः ॥ ६ ॥

**(५ जगच्चन्द्रचन्द्रिका)** तस्मान्ममैतदिति ७ ॥ ६ ॥

**(६ दंशोद्धारः)** तस्मादिति । परं श्रेष्ठं स्वस्ति कल्याणस्यायनं स्थानं महदविनाशि । हि तदिति पाठो वा ॥ ६ ॥

**उपसर्गानशेषांस्तु महामारीसमुद्भवान् । तथा त्रिविधमुत्पातं माहात्म्यं शमयेन्मम ॥ ७ ॥**

**(१ गुप्तवती)** त्रिविधमुत्पातं दिव्यभौमान्तरिक्षभेदेन आध्यात्मिकाधिदैविकाधिभौतिकभेदेन वा ॥ ७ ॥

**(२ चतुर्धरी)** उपसर्गान्महामारीसमुद्भवात् महाजनक्षयात् । सम्यक् उद्भवो जन्म येषामुपसर्गाणामुत्पातमकुशलं त्रिविधं दिव्यान्तरिक्षभौमभेदादाधिदैविकाधिभौतिकाध्यात्मिकभेदात् त्रिविधं । आधिदैविकं वज्रादि । आधिभौतिकं उपसर्गादि । आध्यात्मिकं ज्वरादि शोकादि च । माहात्म्यं कर्तृ । सम्यक् पाठादवधारणे वा ॥ ७ ॥

**(३ शान्तनवी)** मम देव्याः माहात्म्यं कर्तृ भक्तितः पठतां भक्तितः शृण्वतां च पुंसां महामारीसमुद्भवानशेषान्सर्वानुपसर्गानुपद्रवाञ्शमयेद्दूरीकुर्यात् । न केवलमुपसर्गानेव शमयेदपि तु तथा तद्वत् तेषां पुंसां त्रिविधं त्रिःप्रकारं उत्पातं शुभं वाशुभं वा सूचयन्त्युत्पाताः । इह तु दुष्कर्मफलमशुभं सूचयन्तं हेतुं च शमयेत् । त्रिविधं आध्यात्मिकं आधिभौतिकं आधिदैविकं चेति त्रिःप्रकारं । आध्यात्मिकं शरीरोत्पन्नं रागद्वेषादिकं च । आधिभौतिकं प्रेतादिजनितं भयभ्रमादिकं । आधिदैविकं देवकृतं वज्रपातादिकं दारिद्र्यादिकं च । यद्वा भूर्भुवःस्वःसंभवमुत्पातत्रयं शमयेत् । 'भूर्लोकोऽयं स्मृतो भूमिरन्तरिक्षं भुवः स्मृतं । स्वराख्यश्च तथा स्वर्गस्त्रैलोक्यं तदिदं स्मृतं' । भूकम्पादि भौममुत्पातं शमयेत् । अन्तरिक्षजनितमुत्पातमनभ्रगर्जनं शमयेत् । स्वर्लोकजनितमुत्पातमसकृदनेकोडुपतनं शमयेत् । महामारीसमुद्भवानिति । मृङ् प्राणत्यागे । स्त्रियां 'इकृष्यादिभ्यः' । छान्दसो गुणः । यद्वा औणादिकः सर्वधातुभ्य इन् । स्त्रियां कृदिकारादक्तिनो वा ङीष् । महती मारी महामारी । 'अन्येषामपि दृश्यते' इति पूरुषवद्दीर्घः । महामार्या समुद्भवाः महामारीसमुद्भवाः तान् शमयेत् । यद्वा मारयति मारः कालः । पचाद्यच् । मारस्य कालस्य भावः मार्यं । भावे ष्यञ् । मार्यमेव मारी । स्त्रियां षिद्गौरादिभ्यश्च ङीष् । महती मारी तस्यैव समुद्भवान् शमयेत् ॥ ७ ॥

**( ४ नागोजीभट्टी )** उपसर्गानिति । माहात्म्यं कर्ता । महामारी जनक्षयकरी देवता तस्याः समुद्भवो येषां तानुपसर्गानुपद्रवान् तथा त्रिविधं । व्याधिरागद्वेषाधिरूपं आध्यात्मिकं । भूतप्रेतादिजं भयभ्रमाद्याधिभौतिकं । दैवकृतवज्रपातदारिद्र्याद्याधिदैविकं । तद्रूपमुत्पातमनिष्टं दिव्यं भौममान्तरिक्षं चेति त्रिविधमुत्पातं च ॥ ७ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** उपसर्गानिति ८ ॥ ७ ॥

**( ६ दंशोद्धारः )** उपसर्गानिति । महती मारी जनक्षयः स एव सम्यगुद्भवो येषां तानुपद्रवान् । त्रिविधं भौमान्तरिक्षदैवभेदेन उत्पातमनिष्टसूचकं । यद्वा त्रिविधमाध्यात्मिकाधिभौतिकाधिदैविकभेदेन उत्पातमकुशलम् । आध्यात्मिकं चिन्तादि । आधिभौतिकं परचक्रादि । अधिदैविकं वज्रादि । माहात्म्यं कर्तृ ॥ ७ ॥

## यत्रैतत्पठ्यते सम्यङ्नित्यमायतने मम। सदा न तद्विमोक्ष्यामि सान्निध्यं तत्र मे स्थितम् ॥ ८ ॥

**( १ गुप्तवती )** ॥ ८ ॥

**( २ चतुर्धरी )** न विमोक्ष्यामि न त्यक्ष्यामि ॥ ८ ॥

**( ३ शान्तनवी )** यत्र मम देव्याः आयतने गृहे शक्तिप्रतिमादिमन्दिरे मद्रूपदेवतालये एतत्प्रागुक्तचरित्रत्रयोपेतं माहात्म्यं नित्यं प्रतिदिनं सम्यक् अर्थतः पदतश्च शुद्धं पठ्यते भक्तितः पुंभिः तत् आयतनं गृहं सदा सर्वदा न विमोक्ष्यामि । तत्र गृहे खलु मे देव्याः सान्निध्यं सन्निधानं समवस्थानं स्थितं स्थितिमदभूत् । स्वस्थानादित्यर्थः ॥ ८ ॥

**( ४ नागोजीभट्टी )** यत्रेति । यत्रायतने गृहे मम मत्संबन्ध्येतत्सम्यगर्थावधारणपूर्वकं अस्खलितवर्णादि च ॥८ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** यत्रैतत्पठ्यत इति ९ ॥ ८ ॥

**( ६ दंशोद्धारः )** यत्रेति । सम्यक् अर्थावधारणपूर्वकं यथोक्तप्रकारेण । प्रकारश्चोक्तो हरगौरीसंवादे वाराहीतन्त्रे । 'आधारे स्थापयित्वा तु पुस्तकं वाचयेत्ततः । हस्तसंस्थापनाद्देवी निहन्त्यर्धफलं यतः । यावन्न पूर्यतेऽध्यायस्तावन्न विरमेत्पठन् । अनुक्रमं पठेद्देवि शिरःकम्पादिकं त्यजेत् । प्रमादध्यायमध्ये चेद्विरामो भवति प्रिये । पुनरध्यायमारभ्य पठेत्सर्वं मुहुस्ततः । हुनेत्प्रदीपिते वह्नौ तिलधान्यादितण्डुलान् । धर्मकामार्थसंसिध्यै मोक्षार्थी पायसं हुनेत्' इत्यादि विस्तरस्तन्त्रान्तरेषु बोध्यः । ग्रन्थविस्तरभयान्नेह प्रपञ्चितः ॥ ८ ॥

## बलिप्रदाने पूजायामग्निकार्ये महोत्सवे। सर्वं ममैतच्चरितमुच्चार्यं श्राव्यमेव च ॥ ९ ॥

**( १ गुप्तवती )** पुरुषार्थत्वेन विधाय क्रत्वर्थतयापि विधत्ते । बलिप्रदान इति । तत्र (तथा न) दध्ना जुहुयादिति वदङ्गाङ्गिभावो द्रष्टव्यः ॥ ९ ॥

**( २ चतुर्धरी )** बलिप्रदाने पश्वाद्युपहारोपढौकने पूजायां गन्धादिदाने अग्निकार्ये अग्निहवने महोत्सवे पुत्रोत्पत्तिविवाहादौ उच्चार्यं पठनीयम्) ॥ ९ ॥

**( ३ शान्तनवी )** बलिप्रदाने पूजायां अग्निकार्ये महोत्सवे च सर्वं समस्तं एतत् मम देव्याश्चरितं चरित्रं उच्चार्यं अवश्यं पठनीयं । ऋहलोर्ण्यत् । श्राव्यं अवश्यं श्रोतव्यं च । 'ओरावश्यके' ण्यत् । यद्वा ण्यन्तादचो यत् । श्राव्यं श्रावयितव्यं सर्वं जपनीयं । एकदेशजपे तु छिद्रता स्यात् । महानवम्यादौ छागमेषमहिषमहापशुभिर्बलिदानं देवतोद्देशेन पशुसमर्पणं । ददातेर्ल्युट् । यद्वा दो अवखण्डने । पूजा पुष्पोपहारदीपादिसमर्पणं । यद्वा अलंकरणं वस्त्रस्रक्चन्दनवाहनछत्रचामरादिभिः कुमारीसुवासिन्योः समर्चनं पूजा । अग्निकार्यं फाल्गुने मासि अग्निज्वालार्चनं । यद्वा देवी माहात्म्यरूपमालामन्त्रपुरश्चरणान्ते विहितहोमाग्निकार्यं । एतल्लक्षणो महोत्सवः । यद्वा चैत्रे वसन्तोत्सवः १ वैशाखे वारणपुष्पप्रचायिकोत्सवः २ ज्येष्ठे जलक्रीडोत्सवः ३ आषाढे इन्द्रध्वजोत्थानोत्सवः ४ श्रावणे दोलान्दोलोत्सवः ५ भाद्रपदे इन्द्र(पा)मणिधनुरर्चनोत्सवः ६ आश्वयुजि शारदोत्सवः ७ कार्तिके दीपोत्सवः ८ मार्गशीर्षे मनूदयोत्सवः ९ पौषे निधिपूजोत्सवः १० माघे मेरूत्सवः ११ फाल्गुने गन्धर्वोत्सवः १२ एतेषु संपूर्णं देवीचरितं पठनीयमिति भावः । तथा श्रवणीयं च । यद्वा महोत्सवः सर्वश्रुतिपारायणं । यद्वा वदतेः कर्तरि क्विप् । वदतीष्टदेवतामित्युद्देवीप्रणवः । महान् उत् मन्त्रो यस्मिन्स महोत् स चासौ सवश्चेति महोत्सवो मन्त्रदीक्षाख्यो यज्ञः तस्मिन् । यद्वा उन्दी क्लेदने । उन्दनं उत् । स्त्रियां भावे संपदादिभ्यः क्विब्वा वक्तव्यः । उदः सवो दीक्षायज्ञः उत्सवः सुधोत्सवः महानुत्सवः सुधोत्सवो यस्मिन्ननुग्रहे स महोत्सवः तस्मिन्॥९॥

**( ४ नागोजीभट्टी )** बलीति । बलिप्रदानं देवतोद्देशेन पश्वाद्युपहारः । पूजा गन्धादिनार्चनम् । अग्निकार्यं देवीदैवत्यो होमः । महोत्सवः पुत्रजन्मविवाहादि उच्चार्यं इति द्विजविषयम् ॥ ९ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** बलिप्रदाने इति १० ॥ ९ ॥

**( ६ दंशोद्धारः )** बलीति । बलिप्रदाने पश्वाद्युपहारे पूजायां गन्धादिना अग्निकार्ये हवने महोत्सवे पुत्रोत्पत्तिविवाहादौ उच्चार्यं पठनीयम् ॥ ९ ॥

**जानताऽजानता वापि बलिपूजां तथा कृताम् । प्रतीक्षिष्याम्यहं प्रीत्या वह्निहोमं तथा कृतम् १०**

**( १ गुप्तवती )** कृतूपकारकत्वेनाङ्गत्वं द्रढयति । जानतेति । 'ज्ञात्वा कर्माणि कुर्वीत' इति वचनादिना ज्ञानस्य कर्माङ्गत्वेन तत्स्वरूपमजानता कृतानां बल्यादिकर्मणां यद्वैगुण्यं तदेतस्य पठनश्रवणान्यतरेण निवर्तत इति भावः । प्रतीक्षिष्यामि गृह्णामि ॥ १० ॥

**( २ चतुर्धरी )** जानता विधिज्ञेन अजानता तदज्ञेन । तथा तेन प्रकारेण विधिनेत्यर्थः । बलिना पूजया बलिसहिता वा पूजा तां प्रति प्रतीक्षिष्यामि ग्रहीष्यामि । मन्माहात्म्योदीरणेनेति भावः ॥ १० ॥

**( ३ शान्तनवी )** तथा तेन प्रकारेण शास्त्रोक्तप्रकारेण इतिकर्तव्यतां गुरूपदिष्टेष्टदेवताराधनसाधनसामग्रीं संभावनीयोपक्रमोपसंहृतिक्रियाक्रमं जानताऽजानतापि वा भक्तिमता पुंसा कृतं बलिं पशुबलिप्रदानं तथा तेन कृतां पूजां च । तथा तेन कृतं वह्निहोमं वह्नौ त्रि(तिल)मध्वादिहोमद्रव्यप्रक्षेपं च प्रीत्याऽहं देवी प्रतीक्षिष्यामि प्रतिग्रहीष्यामि स्वीकरिष्यामि । पतच्छ्रितं प्रतीच्छं स्यात् । पतच्छ्रयणं प्रतीच्छा । प्रतीच्छास्त्यस्य प्रतीच्छः कश्चित् । अर्शआदित्वादच् । ततस्तद्वदाचरतीत्याचारे क्विप् । सनाद्यन्तत्वाद्धातुत्वात्प्रतीच्छधातोर्भविष्यति काले लृट् स्यप्रत्ययः इडागमः । 'अतो लोपः' । 'इण्कोः' । 'आदेशप्रत्यययोः' इति षत्वं । प्रतीक्षिष्यामीति पाठे ईक्ष दर्शने । अनुदात्तेत्त्वनिबन्धनमात्मनेपदविधानमनित्यमिति चक्षिङो ङित्करणं ज्ञापकमित्युक्तत्वात्परस्मैपदं । बलिपूजामित्येकपदत्वपाठे तु बलिना पशुविशसनेन सह कृता पूजा बलिपूजा तां । बलिरूपा वा पूजा सत्कारः बलिपूजा ताम् ॥ १० ॥

**( ४ नागोजीभट्टी )** तत्फलमाह । जानतेति । जानता विधिज्ञेन अजानता तदज्ञेन बलिसहितां पूजां तथा वेद्यावेद्यप्रकारेण मन्माहात्म्योदीरणादौ सति यथाकथंचिदपि कृतमेतत्प्रतीक्षिष्यामि । अङ्गीकरिष्यामीत्यर्थः ॥ १० ॥

**( ५ जगच्चन्द्रचन्द्रिका )** जानताऽजानतेति ११ ॥ १० ॥

**( ६ दंशोद्धारः )** जानतेति । जानता विधिज्ञेन अजानता अविधिज्ञेन । मन्माहात्म्योदीरणेन कृतां बलिपूजां बलिसहितां पूजां वह्निहोमं च प्रतीक्षिष्यामि ग्रहीष्यामि ॥ १० ॥

**शरत्काले महापूजा क्रियते या च वार्षिकी । तस्यां ममैतन्माहात्म्यं श्रुत्वा भक्तिसमन्वितः ११**

**( १ गुप्तवती )** शरत्काले शारदानवरात्रे वार्षिकी वर्षस्य वत्सरस्यारम्भे क्रियमाणा । चैत्रनवरात्र इत्यर्थः । चकाराद्आषाढपौषनवरात्रयोरपि ग्रहणं । तयोरपि देवीभागवतादौ प्रसिद्धत्वात् । 'प्रतिसंवत्सरं कुर्याच्छारदं वार्षिकं तथा' इति तन्त्रान्तरे द्वयोरेव ग्रहणमुपलक्षणमित्यपि सुवचं । 'आषाढस्य प्रथमदिवसे मेघमाश्लिष्टसानुम्' इति व्यवहारादिभिः वार्षिकपदं वृष्ट्यारम्भे क्रियमाणपरमित्यपि सुवचमेव । प्रतिवर्षेति क्रियमाणेति व्याख्या तु नातीव स्वरसा ॥ ११ ॥

**( २ चतुर्धरी )** महापूजा दुर्गोत्सवरूपा । वार्षिकी प्रतिवर्षभवा ॥ ११ ॥

**( ३ शान्तनवी )** अदः श्लोकद्वयमेकान्वयं वेदितव्यं । या च प्रसिद्धा वार्षिकी महापूजा शरत्काले क्रियते तस्यां विषये मम देव्याः एतन्माहात्म्यं चरित्रं यत्र लक्षणपूर्वकं संपूर्णं भक्तिसमन्वितः मनुष्यः पठित्वा श्रुत्वा च यथायोगं मत्प्रसादेन सर्वबाधाविनिर्मुक्तः धनधान्यसमन्वितः । यद्वा धनधान्यसुतान्वितः भविष्यति । संशयो नात्र कर्तव्यः । वर्षेण निर्वृत्ता वार्षिकी सांवत्सरिकी पूजा । 'तेन निर्वृत्तम्' इति ठक् । स्त्रियां ङीप् । सर्वाबाधेति पाठे तु आसमन्ताद्बाधा आबाधा महती पीडा तया विनिर्मुक्तः । ततो वा शरत्कालेपितृपक्षादनन्तरं प्रतिपदमारभ्य दशमीपर्यन्तं देव्या महापूजा । संशयो नेति शास्त्रप्रामाण्यकीर्तनमेतत् ॥ ११ ॥

**( ४ नागोजीभट्टी )** शरदिति । शरत्काले आश्विनशुक्लप्रतिपदमारभ्य क्रियमाणा दुर्गोत्सवरूपा । या च वार्षिकी । वर्षशब्दो वर्षादौ लाक्षणिकः । तेन चैत्रशुक्लप्रतिपदमारभ्य क्रियमाणा इत्यर्थः ॥ ११ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** शरत्काले इति १२ ॥ ११ ॥

**( ६ दंशोद्धारः )** शरत्काल इति । शरत्काले शारदनवरात्रे महापूजा दुर्गोत्सवरूपा । वार्षिकी प्रतिवर्षभवा ॥ ११ ॥

**सर्वबाधाविनिर्मुक्तो धनधान्यसुतान्वितः । मनुष्यो मत्प्रसादेन भविष्यति न संशयः ॥ १२ ॥**

**( १ गुप्तवती )** ॥ १२ ॥

**( २ चतुर्धरी )** ॥ १२ ॥

**( ३ शान्तनवी )** अयं श्लोकः पूर्वश्लोकेन सह व्याख्यातः ॥ १२ ॥

**( ४ नागोजीभट्टी )** ॥ १२ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** सर्वाबाधेति १३ ॥ १२ ॥

**( ६ दंशोद्धारः )** ॥ १२ ॥

**श्रुत्वा ममैतन्माहात्म्यं तथा चोत्पत्तयः शुभाः। पराक्रमं च युद्धेषु जायते निर्भयः पुमान् ॥१३॥**

**( १ गुप्तवती )** ॥ १३ ॥

**( २ चतुर्धरी )** उत्पत्तय इति अध्यवसायात् कर्मणि प्रथमा। ममैतन्माहात्म्यं तथा उत्पत्तयश्च एतच्छ्रुत्वेति साध्याहारोऽन्वय इति कश्चित् ॥ १३ ॥

**( ३ शान्तनवी )** एतत् त्रिविधं चरित्रत्रयलक्षणं मम देव्या माहात्म्यं महान्तं प्रभावं भक्तितः श्रुत्वा गुरुतो गृहीत्वार्थावबोधपर्यन्तं अधीत्य च पुमान् युद्धेषु निर्भयो जायते। तथा मम देव्याः शुभाः जगदभ्युदयकरीः पृथक् उत्पत्तीः ब्रह्माण्यादिमहाशक्तिरूपप्रादुर्भूतीः श्रुत्वा हृद्याकलय्य पुमान् युद्धेषु निर्भयो जायते। तथा मम देव्याः पराक्रमांश्च वीरकर्माणि च श्रुत्वा युद्धेषु निर्भयो जायते। यद्वा युद्धेषु मम पराक्रमांश्च श्रुत्वा निर्भयो जायते पुमान्। तथा चोत्पत्तयः शुभाः इति पाठे 'व्यत्ययो बहुलं' इति शसः प्रसङ्गे जसः प्रयोगः छान्दसः। युद्धेष्वपि बहुवचनमन्येष्वपि भयकारणेषु निर्भयत्वार्थं। यु मिश्रणे अदादिः। संपदादित्वाद्भावे स्त्रियां क्विप्। यवनं युत् मिश्रणं पापसंपर्कः तस्यां युति। यद्वा युञ् बन्धने क्र्यादिः। यवनं युत् बन्धनं तस्यां युति। ओहाङ् गतौ। जुहोत्यादिसंपदादित्वात्क्विप्। हीनं हाः निरयादिगतिः तस्यां यति। इः कामः तस्मिन्विषये निर्भयः पुमान् जायते। अथच युद्धेषु संग्रामेषु निर्भयो जायते। 'निर्निश्चयनिषेधयोः'। 'शक्त्युद्योगौ पराक्रमौ' ॥ १३ ॥

**( ४ नागोजीभट्टी )** उत्पत्तयः प्रादुर्भावान्। द्वितीयार्थे प्रथमा। पराक्रमं चेति पूर्वान्वयि। युद्धेष्वित्युपलक्षणम् १३

**( ५ जगच्चन्द्रचन्द्रिका )** श्रुत्वा ममैतदिति १४ ॥ १३ ॥

**( ६ दंशोद्धारः )** श्रुत्वेति। मम एतच्छ्रुत्वा। एतत्किम्। माहात्म्यं उत्पत्तयश्चेति योज्यं। श्रुत्वेत्यत्रान्वये तूत्पत्तिरिति कर्मणि द्वितीया स्यात् ॥ १३ ॥

**रिपवः संक्षयं यान्ति कल्याणं चोपपद्यते। नन्दते च कुलं पुंसां माहात्म्यं मम शृण्वताम् १४**

**( १ गुप्तवती )** ॥ १४ ॥

**( २ चतुर्धरी )** नन्दते वर्धते। कुलं वंशः ॥ १४ ॥

**( ३ शान्तनवी )** भक्तितः मम देव्याः माहात्म्यं शृण्वतां आकर्णयमानानां पुंसां नृणां रिपवः शत्रवः संक्षयं नाशं यान्ति। कल्याणं च मङ्गलं उपपद्यते। कल्याणं कर्तृ। पद गतौ। दिवादिः। उप समीपं गच्छति। उपजायत इति पाठे तु उद्भवतीत्यर्थः। कुलं गोत्रं च नन्दते। टुनदि समृद्धौ। परस्मैपदी। कर्तरि कर्मव्यतिहारे त्वात्मनेपदं। यद्वा ण्यन्तात्कर्मकर्तरि यगात्मनेपदं च। नन्दते च कुलं पुंसां इति च पाठः। नन्द्यते च कुलैः पुंसामिति पाठे भावे यक् आत्मनेपदं च। 'संततिर्गोत्रजननकुलान्यभिजनान्वयौ' 'कुलं गृहे च वंशे च भूमिग्राहिणि च त्रिषु' ॥ १४ ॥

**( ४ नागोजीभट्टी)** उपपद्यते प्राप्यते। कुलं च नन्दते वर्धते ॥ १४ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** रिपव इति १५ ॥ १४ ॥

**( ६ दंशोद्धारः )** ॥ १४ ॥

**शान्तिकर्मणि सर्वत्र तथा दुःस्वप्नदर्शने। ग्रहपीडासु चोग्रासु माहात्म्यं शृणुयान्मम ॥ १५ ॥**

**( १ गुप्तवती )** नैमित्तिकत्वेनाप्येतद्विधत्ते। शान्तीति। शृणुयादिति पाठस्याप्युपलक्षणम् ॥ १५ ॥

**( २ चतुर्धरी )** शान्तिकर्मण्युपसर्गादिनिवर्तते। दुःस्वप्नोऽनिष्टसूचकः स्वप्नः। उग्रासु तीव्रविपाकासु ग्रहपीडासु बुधादिकृतविपाकेषु ॥ १५ ॥

**( ३ शान्तनवी )** उत्पातसूचितोपद्रवाणां सर्वत्र सर्वस्मिञ्शान्तिकर्मणि तथा दुःस्वप्नदर्शने दुष्टफलकस्वप्नदर्शने उग्रासु अत्यनिष्टफलासु ग्रहकृतासु पीडासु मम देव्या माहात्म्यं शृणुयात्पुरुषः। तच्छ्रवणादेव तस्यापि पुंसः सर्वबाधोपशान्तिर्भवति। सर्वेष्वर्थसिद्धिश्चेति भावः ॥ १५ ॥

**( ४ नागोजीभट्टी )** शान्तिकर्म उपसर्गादिनिवर्तकं कर्म तस्मिन्। तत्स्थान इत्यर्थः। अन्ये सप्तम्यौ विषयार्थे १५

**( ५ जगच्चन्द्रचन्द्रिका )** शान्तिकर्मणीति १६ ॥ १५ ॥

**( ६ दंशोद्धारः )** शान्तीति। शान्तिकर्मणि उपसर्गनिवर्तने। दुःस्वप्नोऽनिष्टसूचकः स्वप्नः ॥ १५ ॥

**उपसर्गाः शमं यान्ति ग्रहपीडाश्च दारुणाः। दुःस्वप्नं च नृभिर्दृष्टं सुस्वप्नमुपजायते ॥ १६ ॥**

**( १ गुप्तवती )** दुःस्वप्नमिति। दुष्टोऽसत्फलप्रदः स्वप्नो यस्य दर्शनस्य विषयस्तद्दृष्टं दर्शनं सुस्वप्नं सत्फलप्रदस्वप्नविषयकं भवति। नृभिरित्यस्य पठितृश्रोतृमनुष्यपरत्वेन तद्विशेषणांशस्य करणत्वाभिप्रायेण विशिष्टे तृतीया। दृष्टमिति तु

भावे क्तः । दुःस्वप्नादिपदयोर्बहुव्रीह्योस्तद्विशेषणत्वान्नपुंसकता । छान्दसो लिङ्गव्यत्यय इति तु केचित् । लक्षणया तत्फलपरत्वान्नपुंसकतेति कतिपयानां समर्थनं तु चिन्त्यमेव । गङ्गापदस्य तीरपरत्वेपि नपुंसकदर्शनात् ॥ १६ ॥

**( २ चतुर्धरी )** ॥ १६ ॥

**( ३ शान्तनवी )** पूर्वोक्तं पुनर्व्यनक्ति । मम देव्याः माहात्म्यश्रवणादुपसर्गाः बाधाः अतिवृष्ट्यादयः शमं यान्ति । यद्वा उपसर्गाः उत्पाताः प्रकृतिविरुद्धेतयः ताः बाधाश्च शमं प्रकृतिं यान्ति । ततः 'अजन्यं क्लीव उत्पात उपसर्गः समं त्रयं' । तथा तत एव दारुणाः भयानकाः ग्रहपीडाः आदित्यादिग्रहकृताः बाधाश्च शमं यान्ति । तत एव च नृभिर्दृष्टं दुःस्वप्नं दुष्टः स्वप्नो यस्मिंस्तद्दुःस्वप्नं सुस्वप्नं शोभनः स्वप्नो यस्मिन् फले तत् सुस्वप्नं उपजायते संपद्यते । दुःस्वप्नसूचितं यत् दुष्टं फलमेष्यत्तत् सुस्वप्नसूचितमेव फलं संपद्यत इति भावः । अतर्कितप्राप्यफलो हि मणिमन्त्रौषधिदेवताप्रभावः । दुःस्वप्नसुस्वप्नयोर्नियतपुल्लिङ्गत्वेपि बहुव्रीहौ फलेऽन्यपदार्थे विवक्षिते नपुंसकतोपपत्तिः । अथवा दौःस्वप्नशब्दो नास्त्येव । अन्यथाऽस्य नपुंसकतोपपद्यते । दुःस्वप्नश्च नृभिर्दृष्टः सुस्वप्न उपजायत इत्यपि पाठे नास्त्येवार्थभेदः ॥ १६ ॥

**( ४ नागोजीभट्टी )** तदेव विवृणोति । उपसर्गा इति । दुःस्वप्नशब्दस्तु फले इति नपुंसकत्वम् ॥ १६ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** उपसर्गा इति १७ ॥ १६ ॥

**( ६ दंशोद्धारः )** ॥ १६ ॥

## बालग्रहाभिभूतानां बालानां शान्तिकारकम् । संघातभेदे च नृणां मैत्रीकरणमुत्तमम् ॥ १७ ॥

**( १ गुप्तवती )** संघातभेदे सजातीयानां यूथ्यानां मिथो वैमनस्ये ॥ १७ ॥

**( २ चतुर्धरी )** बालग्रहा मातृग्रहादयः । संघातभेदे मैत्रीविघटने ॥ १७ ॥

**( ३ शान्तनवी )** बालानां माणवकानां शिशूनां ग्रहाः पीडाकराः हिंस्राः भूताः पूतनादयः श्मशानादिवासिनो दृष्टिबन्धिहृद्बन्धिगलबन्धिअन्त्रबन्धिनाभिमबन्धिशुक्रबन्ध्युपस्थबन्धिरुधिरबन्धिपिशितबन्धिशोषिमूत्रशोषिलालाशोषिप्रभृतयश्च तैरभिभूतानामाक्रान्तानां तिरस्कृतानां बालानां शान्तिकारकं उपशमनकारकं मम देव्याः माहात्म्यश्रवणं उत्तममाश्रयणीयं । किंच नृणामेककार्यकारिणां कथंचित्परकृतोच्चाटनप्रयोगतः संघातभेदे मित्रत्वभेदे प्रसक्ते सति मन्माहात्म्यश्रवणमेवोत्तमं मैत्रीत्वकरणं भवति नान्यदिति भावः ॥ १७ ॥

**( ४ नागोजीभट्टी )** बालग्रहाः पूतनाद्याः । संघातभेदे मैत्रीविघटने ॥ १७ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** बालग्रहेति १८ ॥ १७ ॥

**( ६ दंशोद्धारः )** बालेति । बालग्रहाः डाकिन्यादयः संघातभेदे मैत्रीभेदे ॥ १७ ॥

## दुर्वृत्तानामशेषाणां बलहानिकरं परम् । रक्षोभूतपिशाचानां पठनादेव नाशनम् ॥ १८ ॥

**( १ गुप्तवती )** दुर्वृत्तानामिति । 'वादी मूकति रङ्कति क्षितिपतिर्वैश्वानरः शीतति क्रोधी शान्तति दुर्जनः सज्जनति क्षिप्रानुगः खञ्जति' इत्यादिश्लोकप्रसिद्धफलप्रद इत्यर्थः ॥ १८ ॥

**( २ चतुर्धरी )** ॥ १८ ॥

**( ३ शान्तनवी )** दुष्टं वृत्तं चरितं येषां ते दुष्टाचाराः दुर्वृत्ताः प्राणिनः तेषामशेषाणां परं श्रेष्ठं बलहानिकरं बलविनाशरूपं मन्माहात्म्यमुत्तमं कृञो हेतौ टः । किंच रक्षसां मायोपजीविनां लंकादिवासिनां भूतानां बालग्रहादीनां पिशाचानां पिशिताशिनां तामसानां च पीडकानां अदृश्यरूपाणां मम माहात्म्यस्य पठनादेव नाशनं दूरीकरणं भवति ॥ १८ ॥

**( ४ नागोजीभट्टी )** दुर्वृत्तानां दुष्टानां व्याघ्रसूचकानाम् ॥ १८ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** दुर्वृत्तानामिति १९ ॥ १८ ॥

**( ६ दंशोद्धारः )** ॥ १८ ॥

## सर्वं ममैतन्माहात्म्यं मम सन्निधिकारकम् । पशुपुष्पार्घधूपैश्च गन्धदीपैस्तथोत्तमैः ॥ १९ ॥

**( १ गुप्तवती )** ॥ १९ ॥

**( २ चतुर्धरी )** अर्घोऽष्टाङ्गः । 'आपः क्षीरकुशाग्राणि दधि चन्दनमक्षताः । तिला यवाश्च सिद्धार्था अष्टाङ्गोर्घः प्रकीर्तितः' ॥ १९ ॥

**( ३ शान्तनवी )** सर्वं कृत्स्नं एतदादिमध्यावसानलक्षणं मम देव्याः सान्निध्यभावस्य कारकं नैकट्यकारकं मम सान्निध्यादिकारकं प्रापकं पठ्यमानं सदिति भावः । श्लोकद्वयमिदमेकान्वयं वेदितव्यं । पुंभिरेभिः प्रकारैर्वत्सरेण यत्क्रियते मे मह्यं देव्यै प्रीतिः सा अस्मिन्माहात्म्ये सकृदेकवारमेव उच्चरिते पठिते वा श्रुते वा भक्तिमद्भिः सर्वकामदुघोपार्जितैव स्यात् । पशुभिश्च-

तुष्पाद्भिः छागमेषमहिषमातङ्गादिभिः । द्विपाद्भिः महापशुभिश्च नरैः पुष्पैः सुरभिसंभूतैः अर्घैः पूजाङ्गैः मधुघृतादिभिः धूपैः कर्पूरागुरुमृगमदादिगर्भितैः बहुरूपादिभिः नानाकृतिगन्धैः । चशब्दात् श्रीवासादिभिर्धूपा गृह्यन्ते । तैः गन्धैः गन्धसारघनसाररक्तचन्दनमृगमदकल्केन कङ्कोलागुरुकुङ्कुमादिभिः दीपैः कर्पूरघृतादिप्रवर्तितैर्माणिक्यमहोभिरुपकल्पितैः सूर्यमहोभिश्चन्द्रमहोभिरुडुमहोभिः परमात्मपरज्योतिभिश्चोपकल्पितैरर्पितैः अत एवंविधैः उत्तमैः श्रेष्ठतमैः । तथा उत्तमैः विविधैः विप्राणां कर्तव्यैर्भोजनैः षड्रसोपेतैः भोज्यैः अन्नादिभिरुचितैः तथा विविधैर्होमैः तथाहर्निशं दिवानिशं विविधैः प्रेक्षणीयैर्दर्शनीयैर्नृत्यगीतवाद्यैः तथा अन्यैश्च विविधैर्भोगैः तथा दानैः मत्प्रीत्यर्थैर्विविधैः दानैर्वितरणैः । चशब्दाद्वस्त्रालंकारपूजादिभिः साधनैः वत्सरेण संवत्सरेण या मे प्रीतिः सकलकामदुघा भक्तैः क्रियते सा अस्मिन् प्राज्ञप्रपञ्चिते मम माहात्म्ये सकृदेकवारं भक्त्योच्चारिते पठिते श्रुते वा साधयितुं सुगमेत्यर्थः । यद्वा सकृत् सर्वदा । यद्वा सकृत् सह द्वित्रैः पुंभिः पञ्चषैः सप्ताष्टैः एकद्वित्रिचतुरैरेकेन वोचरिते श्रुते वेत्यर्थः। 'सहार्थे चैकवारे च सदार्थे चाव्ययं सकृत्' । सकृत्सुचरिते श्रुते इति पाठे श्रुतशब्दतः श्रवणस्य प्राधान्यं । सुचरिते देव्याः शोभने त्रैलोक्यहिते चरिते सकृदेव श्रुते तस्याः प्रीतिः सर्वार्थसाधनी भवति । भक्तवर्गस्येति भावः । प्रोक्षणीयैरहर्निशमिति पाठे तु कश्चिदाह । मन्त्रपूतजलोक्षणसंस्कृतहतच्छागादिपशुबलिभिरिति तन्न । पशुपुष्पार्घधूपैरिति पशुग्रहणेन पौनरुक्त्यप्रसङ्गात् । तत इत्थंत्वर्थोऽत्र वेदितव्यः । उक्ष सेचने । प्रत्यहं पञ्चामृताभिषेकैरविच्छिन्नपीयूषधाराभिषेकैर्वेति ॥ १९ ॥

**( ४ नागोजीभट्टी )** पश्चित्यादिश्लोकद्वयमेकान्वयम् । पशुर्बलिः । अर्घोऽष्टाङ्गः । 'आपः क्षीरं कुशाग्राणि दध्यक्षततिलानि च । यवाः सिद्धार्थकाश्चैव ह्यष्टाङ्गोऽर्घः प्रकीर्तितः' ॥ १९ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** सर्वं ममैतदिति ॥ १९ ॥

**( ६ दंशोद्धारः )** पश्चिति । अर्घोऽष्टाङ्गः । 'आपः क्षीरं कुशाग्राणि दध्यक्षतफलानि च । यवाः सिद्धार्थकाश्चैवमष्टाङ्गोऽर्घः प्रकीर्तितः' प्रोक्षणीयैः मन्त्रसंस्कृतजलेन प्रोक्षितुमर्हैः पश्चादिभिः एतैश्चान्यैश्च भोगैर्वत्सरेण या मे प्रीतिः क्रियते साऽस्मिन्सकृदुच्चरिते श्रुते च क्रियत इत्युत्तरेणान्वयः ॥ १९ ॥

**विप्राणां भोजनैर्होमैः प्रोक्षणीयैरहर्निशम्[1] । अन्यैश्च विविधैर्भोगैः प्रदानैर्वत्सरेण या ॥ २० ॥**

**( १ गुप्तवती )** प्रोक्षणीयैः पञ्चामृतवन्नीरादिमहाभिषेकैः ॥ २० ॥

**( २ चतुर्धरी )** प्रोक्षणीयैर्मन्त्रादिसंस्कृतजलेन प्रोक्षणयोग्यैः । पश्वाद्यैः वत्सरेण या मे प्रीतिः क्रियते साऽस्मिन् सुचरिते सकृदेकवारं श्रुते तत्क्रियत इत्यर्थः । सकृच्चरिते इति वा पाठः ॥ २० ॥

**( ३ शान्तनवी )** अस्य श्लोकस्यार्थः पूर्वश्लोकेन सह व्याख्यातः ॥ २० ॥

**( ४ नागोजीभट्टी )** विप्राणमिति । प्रोक्षणीयैः पञ्चामृताभिषेकादिभिः एतैरन्यैर्विविधा भोगाः स्रगादयः तेषां प्रदानैः वासोलंकारादिभिः एतैरहर्निशं क्रियमाणैर्या वत्सरेण प्रीतिर्भवति ॥ २० ॥

**( ५ जगच्चन्द्रचन्द्रिका )** विप्राणामिति २१ ॥ २० ॥

**( ६ दंशोद्धारः )** अन्यैरिति । सकृदेकवारं सकृत्सुचरिते इति सकृच्च चरित इति च क्वचित्पाठः ॥ २० ॥

**प्रीतिर्मे क्रियते सास्मिन्सकृदुच्चरिते श्रुते । श्रुतं हरति पापानि तथारोग्यं प्रयच्छति ॥ २१ ॥**

**( १ गुप्तवती )** ॥ २१ ॥

**( २ चतुर्धरी )** तथा चास्मिन्माहात्म्ये उच्चरिते पठिते ॥ २१ ॥

**( ३ शान्तनवी )** मम देव्याः माहात्म्यस्य श्रुतं श्रवणं कर्तृ । पापानि हरत्यपनयति । नपुंसके भावे क्तः । तद्योगे षष्ठ्येव । छात्रस्य विद्यामितिवत् । यद्वा मम देव्याः माहात्म्यं कर्तृ । श्रुतं सत् पापानि हरति भजतां आरोग्यं प्रयच्छत्यरोगतां जनयति । दानप्रतिग्रहाभावात् सुतस्य कशिपुं प्रयच्छति पितेतिवच्चतुर्थ्यभावाच्छेषे षष्ठ्येव ॥ २१ ॥

**( ४ नागोजीभट्टी )** सास्मिन्सुचरिते सकृच्छ्रुत इत्यर्थः । श्रवणमुपलक्षणं । श्रवणेऽधिकफलत्वमिति कश्चित् । श्रुतमित्याद्युत्तरान्वयि ॥ २१ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** प्रीतिर्मेति २२ ॥ २१ ॥

**( ६ दंशोद्धारः )** ॥ २१ ॥

---

१. 'प्रेक्षणीयैः' इति पाठः शान्तनव्याम् ।

**रक्षां करोति भूतेभ्यो जन्मनां कीर्तनं मम । युद्धेषु चरितं यन्मे दुष्टदैत्यनिबर्हणम् ॥ २२ ॥**

**( १ गुप्तवती )** ॥ २२ ॥

**( २ चतुर्धरी )** जन्मनामवताराणाम् ॥ २२ ॥

**( ३ शान्तनवी )** मम देव्याः जन्मनां उत्पत्तीनां ब्रह्माण्यादिशक्तिरूपेण प्रादुर्भावानां अवताराणां कीर्तनं कथनं कर्तृ । भूतेभ्यः भूतप्रेतपिशाचशत्रुसिंहव्याघ्रादिग्रहादिभिः भक्तानां रक्षामन्नपानादिना करोति । जन्मिनामिति पाठे तु मम देव्याः कीर्तनं उच्चारणं नामग्रहणं कर्तृ । जन्मिनां जन्मभाजां पुंसां भूतेभ्यः रक्षां करोति । पालनं विदधातीत्यर्थः । युद्धेषु देवीदानवसंग्रामेषु यत् दुष्टदैत्यनिबर्हणं मे देव्याश्चरितं शस्त्रप्रयोगलक्षणं संग्रामं कौशलमभूत् ॥ २२ ॥

**( ४ नागोजीभट्टी )** मम जन्मनां कीर्तनं श्रुतं सदित्यर्थः । युद्धेष्वित्युत्तरान्वयि ॥ २२ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** रक्षां करोतीति २३ ॥ २२ ॥

**( ६ दंशोद्धारः )** ॥ २२ ॥

**तस्मिन् श्रुते वैरिकृतं भयं पुंसां न जायते । युष्माभिः स्तुतयो याश्च याश्च ब्रह्मर्षिभिः कृताः २३**

**( १ गुप्तवती )** युष्माभिरिति । अत्र प्रथमचरणे देवीसूक्तनारायणीसूक्ताख्यस्यात्रनिर्देशः । द्वितीयचरणे ब्रह्मणा च ऋषिभिश्चेति द्वन्द्वान्महिषान्तकरीसूक्ताख्यस्य तत्र ऋषीणामपि द्रष्टृत्वोक्तेरिति व्याचक्षते । ब्रह्मर्षिणा सुमेधसा कृतं 'तथापि ममतावर्ते' इत्यादिकमित्यपि कश्चित् । तृतीयचरणे 'विश्वेश्वरीं जगद्धात्रीं' इति सूक्तस्य निर्देशः । लक्ष्मीतन्त्रे एतेषां स्तवानां अनादित्वस्मरणात् कृता इत्यस्य दृष्टा इत्येवार्थ इत्याहुः । वस्तुतः षडङ्गानामिव सकर्तृकाणामपि प्रवाहणादिना न विरुध्यते ॥ २३ ॥

**( २ चतुर्धरी )** ॥ २३ ॥

**( ३ शान्तनवी )** तस्मिन् श्रुते सति तत् शृण्वतां पुंसां युद्धेषु ततोऽन्यत्र च वैरिकृतं शत्रुनिमित्तं भयं न जायते नोत्पद्यते । निबर्हयति नाशयति निबर्हणं । नन्द्यादित्वाल्ल्युः । दुष्टानां दैत्यानां निबर्हणं चरितं चरित्रं दुष्टदैत्यनाशकरं सुमेधसा मार्कण्डेयेन च तत्पूर्वैश्च ब्रह्मर्षिभिः मयि देव्यां विषये याश्च स्तुतयः कृताः 'तथापि ममतावर्ते मोहगर्ते निपातिताः । महामायाप्रसादेन संसारस्थितिकारिणा' इत्यादयः ताश्च शुभां गतिं प्रयच्छन्ति । पठ्यमानाः पठद्भ्यः पुंभ्यः इत्यग्रिमेणान्वयः ॥ २३ ॥

**( ४ नागोजीभट्टी )** तस्मिन्निति । ब्रह्मर्षिभिः कृताः स्तुतयः तथापि ममतावर्त्ते इत्यादयः । ब्रह्मर्षिः सुमेधाः । बहुवचनं पूजायां । वस्तुतस्तु युष्माभिः स्तुतयो याश्चेत्यनेन नारायणीसूक्तम् । तथा ब्रह्मणा ऋषिभिः सह या युष्माभिः कृताः । महिषान्तकरीसूक्तरूपा इत्यर्थः । यथा तत्स्तुतौ ऋषीणामपि कर्तृत्वं । तथा प्रागेव निरूपणात् । कृता इति च दृष्टा इत्यर्थकं लक्ष्मीतन्त्रैकवाक्यत्वादित्यवधेयं । एवं चैतानि सर्वाणि स्तोत्राण्यकर्तृकाणीति बोध्यम् ॥ २३ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** तस्मिन् श्रुते इति २४ ॥ २३ ॥

**( ६ दंशोद्धारः )** ॥ २३ ॥

**ब्रह्मणा च कृतास्तास्तु प्रयच्छन्ति शुभां[1] मतिम् । अरण्ये प्रान्तरे वापि दावाग्निपरिवारितः २४**

**( १ गुप्तवती )** प्रान्तरे दूरशून्याध्वनि ॥ २४ ॥

**( २ चतुर्धरी )** शुभां मतिं मोक्षाभ्युदयसाधनं ज्ञानं । प्रान्तरे दूरशून्यमार्गे ॥ २४ ॥

**( ३ शान्तवी )** याश्च मयि विषये ब्रह्मणा च मधुकैटभभीतेन कृताः स्तुतयः 'विश्वेश्वरीं जगद्धात्रीं स्थितिसंहारकारिणीं । स्तौमि निद्रां भगवतीं विष्णोरतुलतेजसः' इत्यादयः । ताश्च शुभां गतिं प्रयच्छन्ति । पठ्यमानाः पठद्भ्यः । हे देवाः मयि देव्यां विषये याश्च स्तुतयः युष्माभिः कृताः 'देव्या यया ततमिदं जगदात्मशक्त्या' इत्यादयः । अथ च युष्माभिरेव याः स्तुतयः कृताः 'नमो देव्यै महादेव्यै' इत्यादयः । अथ च युष्माभिरेव याश्च स्तुतयः कृताः 'देवि प्रपन्नार्तिहरे प्रसीद' इत्यादयश्च तास्त्रिविधाः स्तुतयः शुभां गतिं प्रयच्छन्ति । पठ्यमानाः पठद्भ्यः पुंभ्यः अरण्येत्यादि श्लोकचतुष्टयमेकान्वयं । अरण्ये विपिने वर्तमानः । मम देव्याः एतच्चरितं कर्म । स्मरन् नरः संकटाद्दुर्घटनात्संबन्धात् मुच्येत स्वयमेव । 'संकटं ना तु संबाधः' कर्मकर्तरि मुचेर्लिङ् । तथा प्रान्तरे वापि दूरे जनशून्ये मार्गे 'प्रान्तरं दूरशून्योऽध्वा । तथा दावाग्निपरिवारितः सन्नपि वा । 'दवदावौ वनारण्यवह्नी' ॥ २४ ॥

---

[1] 'शुभां गतिम्' इति शान्तनवीसंमतः पाठः ।

**( ४ नागोजीभट्टी )** ब्रह्मणेति । 'त्वं स्वाहा' इत्यादिरात्रिसूक्तरूपां । शुभां मोक्षाभ्युदयसाधनीं प्रयच्छन्ति ददति । अरण्य इत्यादिश्लोकचतुष्टयमेकान्वयि । प्रान्तरे दूरशून्यमार्गे । अरण्य इत्यस्य दावाग्नीत्यादिनान्वयः । प्रान्तर इत्यस्य दस्युभिरित्यादिनान्वयः ॥ २४ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** ब्रह्मणेति २५ ॥ २४ ॥

**( ६ दंशोद्धारः )** अरण्ये इति । प्रान्तरे दूरशून्यमार्गे ॥ २४ ॥

**दस्युभिर्वा वृतः शून्ये गृहीतो वापि शत्रुभिः । सिंहव्याघ्रानुयातो वा वने वा वनहस्तिभिः २५**

**( १ गुप्तवती )** ॥ २५ ॥

**( २ चतुर्धरी )** शून्ये निर्जनप्रदेशे कुद्धवने इति । वा समुच्चये । वध्यो मार्यः ॥ २५ ॥

**( ३ शान्तनवी )** तथा दस्युभिस्तस्करैर्वृतः वेष्टितो वा । तथा शून्ये निर्जनप्रदेशे शत्रुभिर्गृहीतो वा । तथा सिंहव्याघ्रानुयातो वा सिंहेन व्याघ्रेण अनुयातोऽनुद्रुतस्तथा वनहस्तिभिर्वृतो वा हन्तुं अनुयातोऽनुद्रुतः ॥ २५ ॥

**( ४ नागोजीभट्टी )** वनहस्तिभिरित्यस्य वृतो वेति शेषः ॥ २५ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** दस्युभिरिति २६ ॥ २५ ॥

**( ६ दंशोद्धारः )** शून्ये निर्जनप्रदेशे शत्रुभिर्गृहीत इत्यन्वयः ॥ २५ ॥

**राज्ञा क्रुद्धेन चाज्ञप्तो वध्यो बन्धगतोऽपि वा । आघूर्णितो वा वातेन स्थितः पोते महार्णवे ॥२६॥**

**( १ गुप्तवती )** ॥ २६ ॥

**( २ चतुर्धरी )** आघूर्णित आकुलितः । पोते व्यामब्धोः ॥ २६ ॥

**( ३ शान्तनवी )** तथा क्रुद्धेन राज्ञा वध्योयं वधार्होऽयमिति आज्ञप्तः हन्तुमाज्ञापितो वा । तथा बन्धगतो बद्धोऽपि वा । तथा वातेन आघूर्णितः व्याकुलितः व्याधितोपास्तितो वा तथा महार्णवे समुद्रे पोते समुद्रमध्ये नौकाविशेषे याने। सांयात्रिकाः पोतवणिजः कथ्यन्ते । तत्र स्थितोऽपि वा । 'यानमात्रे शिशौ पोतः' ॥ २६ ॥

**( ४ नागोजीभट्टी )** राज्ञेति । क्रुद्धेन राज्ञा च वध्य इत्याज्ञप्त इत्यन्वयः । सर्वत्र वा समुच्चये । महार्णवे पोते स्थितो वातेनाघूर्णित आकुलितश्च ॥ २६ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** राज्ञा क्रुद्धेनेति २७ ॥ २६ ॥

**( ६ दंशोद्धारः )** आघूर्णित आकुलितः । सर्वबाधेति । मुच्येते इति कर्मकर्तर्यात्मनेपदम् ॥ २६ ॥

**पतत्सु चापि शस्त्रेषु संग्रामे भृशदारुणे । सर्वबाधासु[1] घोरासु वेदनाभ्यर्दितोऽपि वा ॥ २७ ॥**

**( १ गुप्तवती )** ॥ २७ ॥

**( २ चतुर्धरी )** ॥ २७ ॥

**( ३ शान्तनवी )** तथा भृशदारुणे अत्यर्थभीषणे संग्रामे शस्त्रेषु आयुधेषु पतत्सु सत्सु वा अतिशयेन दारुणं संग्रामस्तस्मिन् । तथा सर्वाबाधासु सर्वा आ समन्तात् बाधाः महाबाधाः घोराः तासु । सर्वाबाधासु इत्यपि पाठे स एवार्थो भवत्यदूरविप्रकर्षात् । घोरासु वर्षपीडासु वर्तमानो वा तथा वेदनासु संततं दुःखानुभावेषु अभ्यर्दितः वर्तमानः । यद्वा तीव्रवेदनया अभ्यर्दितः हिंसितो वा ॥ २७ ॥

**( ४ नागोजीभट्टी )** पतत्सु चेति । सर्वासु बाधासु महापीडासु वेदनया दुःखेनाभ्यर्दितश्च ॥ २७ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** पतत्सु चापि शस्त्रेषु इति २८ ॥ २७ ॥

**( ६ दंशोद्धारः )** ॥ २७ ॥

**स्मरन्ममैतच्चरितं नरो मुच्येत संकटात् । मम प्रभावात्सिंहाद्या दस्यवो वैरिणस्तदा ॥ २८ ॥**

**( १ गुप्तवती )** ॥ २८ ॥

**( २ चतुर्धरी )** संकटाद्दुःखान्मुच्यते । कर्मकर्तर्यात्मनेपदम् ॥ २८ ॥

**( ३ शान्तनवी )** सर्वत्र एतन्मम देव्याश्चरितं स्मरन् नरः संकटाद्दुःस्तरात् दुःखात् मुच्येत । स्वयमेवेति योजनीयं।

---

१ 'सर्वाबाधासु' इति शान्तवी ।

इह अरण्ये प्रान्तरे वापीत्यतः श्लोकात्पूर्वं सिंहव्याघ्रानुयातो वेति श्लोकं प्रपठन्ति केचित् । अतश्च मम प्रभावात्सिंहाद्या इत्येतदुपपन्नं भवति । मम देव्याः प्रभावात्सामर्थ्यतः सिंहाः दस्यवः तस्कराः तथा वैरिणश्च शत्रवः ॥ २८ ॥

**( ४ नागोजीभट्टी )** स्मरन्निति । मुच्येते इति कर्मकर्तरि लङ् । संकटं दुःखं । उत्तरार्धमुत्तरान्वयि ॥ २८ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** स्मरन्ममैतदिति २९ ॥ २८ ॥

**( ६ दंशोद्धारः )** ॥ २८ ॥

**दूरादेव पलायन्ते स्मरतश्चरितं मम ।**

**ऋषिरुवाच । इत्युक्त्वा सा भगवती चण्डिका चण्डविक्रमा ॥ २९ ॥**

**( १ गुप्तवती )** ॥ २९ ॥

**( २ चतुर्धरी )** चण्डो दारुणो विक्रमो यस्याः ॥ २९ ॥

**( ३ शान्तनवी )** मम देव्याः चरितं स्मरतः पुरुषात्सकाशात् दूरादेव दूरत एव पलायन्ते दूरीभवन्ति । ऋषिरुवाच । सुमेधाः सुरथं वाचमुचितामूचे । इतीत्थमुक्त्वा व्याहृत्य सा भगवती चण्डविक्रमा प्रकटपराक्रमा चण्डिका देवी २९

**( ४ नागोजीभट्टी )** दूरादेवेति । मम चरितं स्मरतः मम प्रभावाद्दूरात्पलायन्त इत्यन्वयः । उत्तरार्धस्य ऋषिरुवाचेत्यादिः । चण्डो दारुणः ॥ २९ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** दूरादेव पलायन्ते स्मरतश्चरितं मम स्वाहा ३० । ऋषिरुवाच ३१ । इत्युक्त्वा सेति ३२ ॥ २९ ॥

**( ६ दंशोद्धारः )** इत्युक्त्वा चण्डो दारुणो विक्रमो यस्याः ॥ २९ ॥

**पश्यतामेव देवानां तत्रैवान्तरधीयत । तेपि देवा निरातङ्काः स्वाधिकारान्यथापुरा ॥ ३० ॥**

**( १ गुप्तवती )** पश्यतामेवेति षष्ठी चानादरे ॥ ३० ॥

**( २ चतुर्धरी )** पश्यतामित्यनादरे षष्ठी । निरातङ्का निर्भयाः ॥ ३० ॥

**( ३ शान्तनवी )** पश्यतामेव देवानां तत्रैव पुरोभागे अन्तरधीयत अन्तर्धानमगात् । श्रदन्तरोरुपसर्गवद्वृत्तिर्व्याख्येया । अन्तःपूर्वाद्धातेः कर्मकर्तरि लिङ् । अदृश्यतामगात्स्वयमेवेत्यर्थः । यद्वा सा देवी पश्यतामेव देवानां तत्रैव संचरती तान्देवान्त्रायते रक्षति तत्र पालयन्ती सत्येव स्वयमन्तरधीयत । आतोऽनुपसर्गे कः । यद्वा सा देवी पश्यतां देवानामेव तत्रैव देवशरीरेष्वेवान्तरधीयत । स्वयमेव देवशरीरे सैवान्तर्व्यलीयतेत्यर्थः । पश्यतामेवेत्यनादरे षष्ठीति पक्षे यथा जननी सुतान्व्याजतोऽनादृत्यालोकनादन्तर्धत्ते तथेयमपि सर्वजननी देवदर्शनतोऽन्तरधीयत । स्वयमेवेति भावः । अथ ते देवाः सर्वे देव्या निहतारयः विनाशितशत्रवः अत एव यथापुरा पूर्वस्मिन्काले इव निरातङ्काः कृच्छ्रजीवनतो निर्भयाः ॥ ३० ॥

**( ४ नागोजीभट्टी )** पश्यतामिति । अनादरे षष्ठी । निरातङ्काः निर्भयाः ॥ ३० ॥

**( ५ जगच्चन्द्रचन्द्रिका )** तेऽपि देवा इति ३३ ॥ ३० ॥

**( ६ दंशोद्धारः )** पश्यतामित्यनादरे षष्ठी । तेपि निरातङ्का निर्भयाः ॥ ३० ॥

**यज्ञभागभुजः सर्वे चक्रुर्विनिहतारयः । दैत्याश्च देव्या निहते शुम्भे देवरिपौ युधि ॥ ३१ ॥**

**( १ गुप्तवती )** ॥ ३१ ॥

**( २ चतुर्धरी )** ॥ ३१ ॥

**( ३ शान्तनवी )** यज्ञभागभुजः यज्ञांशान्भुञ्जानाः सन्तः स्वाधिकारान्यथापुरा पूर्ववच्छुम्भनिशुम्भाद्युदयतः प्रागेव स्वान्स्वान्व्यापारांश्चक्रुः कृतवन्तः । निशुम्भे च महावीर्ये शेषाः पातालमाययुः । युधि संग्रामे देव्या तस्मिन् ॥ ३१ ॥

**( ४ नागोजीभट्टी )** दैत्याः अवशेषा दैत्याः ॥३१ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** अन्तरधीयत । कर्मकर्तरि लङ् ३४ ॥ ३१ ॥

**( ६ दंशोद्धारः )** ॥ ३१ ॥

**जगद्विध्वंसिनि तस्मिन्महोग्रेऽतुलविक्रमे। निशुम्भे च महावीर्ये शेषाः पातालमाययुः ॥ ३२ ॥**

**( १ गुप्तवती )** ॥ ३२ ॥

**( २ चतुर्धरी )** शेषा दैत्या इत्यन्वयः ॥ ३२ ॥

**( ३ शान्तनवी )** जगद्विध्वंसिनि त्रैलोक्यभञ्जिनि महोग्रे अतिरौद्रे अतुलविक्रमे अनुपमशक्तौ देवरिपौ ससैन्ये शुम्भे च महावीर्ये ससैन्ये निशुम्भे च निहते सति शेषा अवशिष्टा दैत्याः पातालमाययुः बलिसद्म प्राविशन् । वीर्यं बलं प्रभावश्च । पतन्त्यस्मिन्पातालम् ॥ ३२ ॥

**( ४ नागोजीभट्टी )** आययुः प्राविशन् ॥ ३२ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** निशुम्भे इति ३५ ॥ ३२ ॥

**( ६ दंशोद्धारः )** ॥ ३२ ॥

**एवं भगवती देवी सा नित्यापि पुनः पुनः । संभूय कुरुते भूप जगतः परिपालनम् ॥ ३३ ॥**

**( १ गुप्तवती )** ॥ ३३ ॥

**( २ चतुर्धरी )** संभूय कायमादाय ॥ ३३ ॥

**( ३ शान्तनवी )** सुमेधाः सुरथं बोधयति । हे भूप एवं प्रागुक्तभणित्याः सा भगवती देवी नित्यापि ध्रुवा अविनश्वरा अविकारापि सती पुनःपुनः संभूय आविर्भूय प्रादुर्भावं अवतारं अवाप्य जगतः त्रैलोक्यस्य परिपालनं परितो रक्षणं कुरुते सर्वजननी इति एतत्प्रागपि अभाषि 'नित्यैव सा जगन्मूर्तिः' इति 'देवानां कार्यसिद्ध्यर्थमाविर्भवति सा यदा । उत्पन्नेति तदा लोके सा नित्याप्यभिधीयते' इति ॥ ३३ ॥

**( ४ नागोजीभट्टी )** एवमिति । संभूय दृश्यशरीरात्प्रादुर्भूय ॥ ३३ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** संभूय कुरुत इति ३६ ॥ ३३ ॥

**( ६ दंशोद्धारः )** एवमिति । संभूय कायमादाय ॥ ३३ ॥

**तयैतन्मोह्यते विश्वं सैव विश्वं प्रसूयते। साऽयाचिता च विज्ञानं तुष्टा ऋद्धिं प्रयच्छति ॥ ३४ ॥**

**( १ गुप्तवती )** प्रसूयते प्रसूते । सा अयाचितेति छेदः । निष्कामाराधितेति तदर्थः । विज्ञानं विशिष्टमुत्कृष्टं ज्ञानं कैवल्यजनकं । 'विज्ञानं शिल्पशास्त्रयोः' इत्यस्याश्रयणे तु याचितेत्येव छेदः ॥ ३४ ॥

**( २ चतुर्धरी )** विज्ञानं विशिष्टं ज्ञानं मोक्षोपयोगि ज्ञानमित्यन्वयः । ऋद्धिं ऐश्वर्यं तस्य ऋद्धिमिति विवक्षाहि संधिः ॥ ३४ ॥

**( ३ शान्तनवी )** सैव देवी विश्वं कर्म सूयते जनयति । षूङ् प्राणिप्रसवे दिवादिः । तयैव देव्या हेतुभूतया एतद्विश्वं मोह्यते । मुह वैचित्ये । दिवादिः । अविवेकेन योज्यते । अविवेको ममता तत्सहितं क्रियते । सा देवी भक्तैः याचिता सती विज्ञानं विवेकपूर्वकं ज्ञानं च प्रयच्छति । सैव देवी तुष्टा सती तपसा जनितसंतोषा वृद्धिं संपदं च महतीं प्रयच्छति ददाति । तुष्टा ऋद्धिमिति पाठे तु असंहितया निर्देशः कृतः । 'ऋत्यकः' इति तु प्रकृतिभावे तस्य अकः स्थाने ह्रस्वे सति तुष्टा ऋद्धिं प्रयच्छति इति स्यात् । खट्वऋश्य इतिवत् । सा याचितार्थविज्ञानमिति पाठे तु अर्थेषु विज्ञानमिति संग्रहः एतत्प्रागभ्यभाणि । 'तन्नात्र विस्मयः कार्यो योगनिद्रा जगत्पतेः । महामाया हरेश्चैषा तया संमोह्यते जगत् ॥ ज्ञानिनामपि चेतांसि देवी भगवती हि सा । बलादाकृष्य मोहाय महामाया प्रयच्छति ॥ तया विसृज्यते विश्वं जगदेतच्चराचरम् । सैषा प्रसन्ना वरदा नृणां भवति मुक्तये' इति ॥ ३४ ॥

**( ४ नागोजीभट्टी )** पृष्टं मोहकारणमुपसंहरति । तया इति । प्रसूयते जनयति । अयाचिता फलमुद्दिश्य कृतभक्तिर्विज्ञानमात्मतत्त्वज्ञानं यच्छति । तुष्टा फलोद्देशेन क्रियमाणकर्मणा ऋद्धिं प्रयच्छति । संहिताया अविवक्षितत्वान्न संधिः ॥ ३४ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** सा याचितेति ३७ ॥ ३४ ॥

**( ६ दंशोद्धारः )** तयेति । विशिष्टं मोक्षोपयोगि ज्ञानं । ऋद्धिमैश्वर्यं । तुष्टा ऋद्धिमित्यत्र संहिताया अविवक्षणान्न संधिः ॥ ३४ ॥

---

१ 'जगद्विध्वंसके तस्मिन्' इत्यपि पाठः । २ 'तुष्टा वृद्धिं प्रयच्छति' इति शान्तनवी ।

**व्याप्तं तयैतत्सकलं ब्रह्माण्डं मनुजेश्वर । महाकाल्या महाकाले महामारीस्वरूपया ॥ ३५ ॥**

**( १ गुप्तवती )** ॥ ३५ ॥

**( २ चतुर्धरी )** व्याप्तं वैभवेन महतो ब्रह्मादीन्कलयति अधिकारेषु प्रवर्तयतीति महाकाली तया महाकाले प्रलये । महाकालो मृत्युरिति दर्शनात् । महती मारी संहृतिक्रिया तत्स्वरूपया ॥ ३५ ॥

**( ३ शान्तनवी )** सुमेधाः सुरथं राजानं बोधयति । हे मनुजेश्वर हे सुरथ महामारीस्वरूपया तया महाकाल्या महातामस्या महादेव्या एतत्सकलं ब्रह्माण्डं त्रैलोक्यगर्भकं स्थानं व्याप्तं महाकाले प्रलयसमये । महांश्चासावकलश्चेति महाकालः अनिष्टकालः अकालः कालाग्निरुद्रः तस्मिन्नुपस्थिते महाकाले संहारसमये समुपस्थिते सति । महांश्चासौ कालः कालाग्निरुद्रः संहारकमहाकालः तस्येयं स्त्री महाकाली तया मारयति संहरति मारः । पचाद्यच् । महांश्चासौ मारश्च संहारकः महामारः कालाग्निरुद्रः तस्येयं स्त्री महामारी सा स्वरूपं यस्याः सा देवी महामारीस्वरूपा तया महामारीस्वरूपया । यद्वा 'मह उद्धव उत्सवः' महान् उत्सववान् आसमन्तान्मारयति नाशयति महामारी महाप्रलयानलज्वाला तस्या इव स्वरूपं यस्याः सा महामारीस्वरूपा 'मृत्युजिह्वा माहामारी जगत्संहारकारणी । महारात्रिर्महानिद्रा महाकाल्यतितामसी । सैव कालानलज्वाला सैव विद्या तमःप्रसूः ॥ सैव मोहप्रसूर्मृत्युः सैव सर्वाधिदेवता' । ब्रह्मणो हिरण्यगर्भात्सकाशात् अमतिः निःसरति ब्रह्माण्डं लोके लमति । निःसरत्यस्मात्पात इत्यण्डं । 'पेशी कोशो द्विहीनेण्डम्' ॥ ३५ ॥

**( ४ नागोजीभट्टी )** व्याप्तमिति । महतो ब्रह्मादीनपि कलयति अधिकारेषु वर्तयति सा महाकाली तया महाकाले प्रलये महामारी संहारक्रिया तद्रूपया तयैतत्सकलं व्याप्तमित्यन्वयः ॥ ३५ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** महाकाल्येति ॥ ३८ ॥ ३५ ॥

**( ६ दंशोद्धारः )** व्याप्तमिति । महतो ब्रह्मादीन्कालयति वशीकरोतीति महाकाली । तथा महाकाले महाप्रलये महामारी संहृतिः ॥ ३५ ॥

**सैव काले महामारी सैव सृष्टिर्भवत्यजा । स्थितिं करोति भूतानां सैव काले सनातनी ॥३६॥**

**( १ गुप्तवती )** ॥ ३६ ॥

**( २ चतुर्धरी )** काले द्विपरार्धलक्षणे । महती मारी महामारी । अजा जन्महीना काले स्थितिसमये सनातनी विनाशहीना ॥ ३६ ॥

**( ३ शान्तनवी )** अजा जन्मरहिता सनातनी नित्या सैव शाश्वती देवी काले भूतानां महाप्रलयसमये तमोगुणमयी सती महामारीति कथ्यते । तथा काले उत्पत्तिकाले सैव भूतानां सर्गसमये सत्वगुणप्रधाना सृष्टिर्भवति सृष्टिकारणभूता भवति । तथा सैव देवी काले भूतानां परिपालनसमये रजोगुणप्रधाना स्थितिं करोति । सदाभवा सनातनी । न जायते अजा ॥ ३६ ॥

**( ४ नागोजीभट्टी )** सैवेति । काले प्रलये । महामारी संहारशक्तिः । सृष्टिः सर्गशक्तिः । अजा जन्महीना । काले स्थितिकाले सनातनी नाशहीना ॥ ३६ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** स्थितिं करोतीति ३९ ॥ ३६ ॥

**( ६ दंशोद्धारः )** सैवेति । काले द्विपरार्धान्ते । महतो ब्रह्मादीनपि मारयतीति महामारी । काले स्थितिसमये॥३६॥

**भवकाले नृणां सैव लक्ष्मीर्वृद्धिप्रदा गृहे । सैवाभावे तथालक्ष्मीर्विनाशायोपजायते ॥ ३७ ॥**

**( १ गुप्तवती )** भवकाले वैभवकाले । अभावे विपत्काले अलक्ष्मीरिति छेदः ॥ ३७ ॥

**( २ चतुर्धरी )** भवकाले संपत्समये । वृद्धिप्रदेति लक्ष्मीविशेषणं । अभावे विपत्काले ॥ ३७ ॥

**( ३ शान्तनवी )** भवकाले देवी सान्निध्यसंभवकाले नृणां गृहे सैव देवी लक्ष्मीर्वृद्धिप्रदा संपद्भावप्रदा' । लक्ष्मीः संपत् वृद्धिः उपचयः तत्प्रदा भवति । प्रेदाज्ञः कः । तथा सैव अभावे देवीसान्निध्याभावेऽलक्ष्मीविनाशाय लक्ष्म्याः संपदः विनाशाय अभावाय उपजायते संपदभावस्वरूपा उपजायते । यत्र लक्ष्मीः संपत् तत्र देव्याः सान्निध्यं । यत्र च तदसान्निध्यं न तत्र संपदपि नेत्यन्वयव्यतिरेकौ वेदितव्यौ ॥ ३७ ॥

**( ४ नागोजीभट्टी )** भवकाले संपत्समये । वृद्धिप्रदेति लक्ष्मीविशेषणम् । अभावेप्यापत्काले ॥ ३७ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** सैवाभाव इति ४० ॥ ३७ ॥

**( ६ दंशोद्धारः )** भवेति । भवकाले संपत्काले । अभावे विपत्काले ॥ ३७ ॥

**स्तुता संपूजिता पुष्पैर्धूपगन्धादिभिस्तथा । ददाति वित्तं पुत्रांश्च मतिं धर्मे गतिं शुभाम् ॥३८॥**

**इति श्रीमार्कण्डेयपुराणे देव्याश्चरितमाहात्म्यं नाम द्वादशोऽध्यायः ॥ १२ ॥**

**( १ गुप्तवती )** तादृशकाले तन्निरसनोपायमाह । स्तुतेत्यादिना ॥ ३८ ॥ इति श्रीगुप्तवत्यां द्वादशोऽध्यायः ॥१२॥

**( २ चतुर्धरी )** गन्धैश्चन्दनैः धूपदीपादिभिः पूजिता सती वित्तं द्रव्यम् । पुत्रपौत्रादीन् सन्मतिं ददाति ॥ ३८ ॥ इति श्रीचतुर्धरीव्याख्याने फलश्रुतिर्नाम द्वादशोऽध्यायः ॥ १२ ॥

**( ३ शान्तनवी )** नित्यं देवीसान्निध्यकारणं तत्फलं चोपदिशति सुमेधा ऋषिः । हे देवि स्तुता स्तावकैः पदैः संकीर्तिता च तथा पुष्पैः संपूजिता च तथा गन्धैः कर्पूरचन्दनमृगमदादिभिर्लिप्ता तथा धूपैर्बहुविधैर्धूपिता तथा आदिग्रहणाद्वस्त्रालंकारताम्बूलादिभिरानन्दिता भक्तिप्रणता च सती साधु प्रार्थितैव भक्तवर्गेभ्यः वित्तं धनं पुत्रांश्च आयुरारोग्यमैश्वर्यं च चशब्दसूचितां । धर्मे मतिं शुभां गतिं च ददाति । यदुक्तं प्राक् 'सा विद्या परमा मुक्तेर्हेतुभूता सनातनी । संसारबन्धहेतुश्च सैव सर्वेश्वरेश्वरी' इति ॥ ३८ ॥ इति श्रीमद्राजाधिराजश्रीमत्तोमरान्वयश्रीमदुद्धारणात्मजश्रीशन्तनुचक्रवर्तिविरचितायां श्रीचण्डिकामाहात्म्यटीकायां तत्पठनश्रवणफलनिरूपणविध्युपलक्षितो देव्याराधनफलविधिनिरूपणोपलक्षितश्च द्वादशोऽध्यायः समाप्तः ॥ १२ ॥

**( ४ नागोजीभट्टी )** पुष्पैर्धूपगन्धदीपाद्यैः संपूजितेत्यर्थः ॥ ३८ ॥ इति शिवभट्टसुतसतीगर्भजनागोजीभट्टकृते सप्तशतीव्याख्याने द्वादशोऽध्यायः ॥ १२ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** ददाति वित्तं पुत्रांश्च मतिं धर्मे तथा शुभां स्वाहा ४१ ॥ ३८ ॥ इति श्रीसप्तशतीटीकायां जगच्चन्द्रचन्द्रिकाख्यायां द्वादशोऽध्यायः ॥ १२ ॥

**( ६ दंशोद्धारः )** ॥ ३८ ॥ इति श्रीमदुल्लोपनामढुण्ढीराजकृतदंशोद्धारे द्वादशोऽध्यायः ॥ १२ ॥

---

## त्रयोदशोऽध्यायः १३

**एतत्ते कथितं भूप देवीमाहात्म्यमुत्तमम् । एवंप्रभावा सा देवी ययेदं धार्यते जगत् ॥ १ ॥**

**( १ गुप्तवती )** ॥ १ ॥

**( २ चतुर्धरी )** ॥ १ ॥

**( ३ शान्तनवी )** हे भूप हे सुरथ एतत् उत्तमं अत्युत्तमं देव्या माहात्म्यं श्रेष्ठतमं सर्वार्थसाधनं सर्वकामधुक् मया सुमेधसा ब्रह्मर्षिणा ते तुभ्यं कथितं व्याहृतं । सा च देवी भगवती एवंप्रभावा ईदृग्विधसामर्थ्या वर्तते । येति यया देव्या सर्वजनन्या सर्वपोषिण्या सर्वसंहारिण्या इदं जगत् विश्वं धार्यते सृज्यते पाल्यते च । प्रलयवसीयते च यथाकालं । धृङ् अवस्थाने णिच् । कर्मणि यगात्मनेपदं च । लटः 'क्रियावाचित्वमाख्यातुमेकोऽत्रार्थः प्रदर्शितः । प्रयोगतोऽनुसर्तव्या अनेकार्था हि धातवः' महात्मनो महामूर्तेर्देव्या भावे कर्मणि वा । ब्राह्मणादित्वात्ष्यञि 'नस्तद्धिते' इति टिलोपे माहात्म्यमिति सिद्धम् ॥१॥

**( ४ नागोजीभट्टी )** ऋषिरुवाच । एतदिति । एवमुक्तप्रकारेण धार्यत इति सृष्टिप्रलययोरुपलक्षणं । हे भूपेति सुरथविशेषणम् ॥ १ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** अथ त्रयोदशाध्यायः प्रारभ्यते । त्रयोदशे सार्धसप्तदशश्लोकाः प्रकीर्तिताः इति । त्रयोदशेऽध्याये अर्धश्लोकसहिताः सप्तदशश्लोकाः प्रकीर्तिताः । एकादशार्धाहुतय इति एकेनाधिका दश एकादश अर्धाहुतयः अर्धश्लोकरूपा मन्त्राः । पादद्वयात्मका इत्यर्थः । श्लोकपञ्चकस्य दशाहुतयः अर्धश्लोकस्यान्ये च द्वादशश्लोकमन्त्रका इति । द्वाभ्यामधिका दश द्वादश श्लोकमन्त्राः श्लोकरूपा मन्त्राः । सर्वैर्मिलित्वा त्रयोविंशतिमन्त्रा जाता इत्यर्थः । उवाचवचनैः षड्भिर्मन्त्रा एकोनत्रिंशदिति । षड्भिः षट्संख्याकैः उवाचवचनैः उवाचवाक्यैः सह एकेन ऊना त्रिंशत् एकोनत्रिंशत् मन्त्राः मनवः स्युरिति शेषः । मार्कण्डेयद्वयमिति । मार्कण्डेय उवाचेति द्वौ मन्त्रौ । देवीद्वयमिति देव्युवाचेति द्वौ मन्त्रौ स्तः । एको ऋषिर्भवेदिति एको मन्त्रो भवेत् । एवं कात्यायनीतन्त्रस्य रीत्या विभाजनं मन्त्रविभागः प्रोक्तं कथितं । तथाहि ऋषिरुवाच स्वाहा १ । एतत्ते कथितमिति स्वाहा २ ॥ १ ॥

**( ६ दंशोद्धारः )** ॥ १ ॥

**विद्या तथैव क्रियते भगवद्विष्णुमायया । तया त्वमेष वैश्यश्च तथैवान्ये विवेकिनः ॥ २ ॥**

**( १ गुप्तवती )** ॥ २ ॥

**( २ चतुर्धरी )** तथैवेति समुच्चये । विद्या मोक्षोपयोगि ज्ञानं क्रियते प्रबोध्यते । त्वं सुरथः । वैश्यः समाधिः । अन्ये च विवेकिनः तथैव मोह्यन्ते इत्यन्वयः । एष वैश्य इति पाठः ॥ २ ॥

**( ३ शान्तनवी )** भगवद्विष्णुमाययैव चण्डिकयैव विद्या ज्ञानं क्रियते उत्पाद्यते । परमात्मज्ञानसाधनं देव्युपनिषद्रूपेति भावः । विष्णोर्माया विष्णुमाया भगवद्विष्णुमाया तया । यद्वा भगवान्विष्णुः भगवद्विष्णुः तस्य माया तया । यदुक्तं 'सा विद्या परमा मुक्तेर्हेतुभूता सनातनी' । 'ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः । वैराग्यस्याथ मोक्षस्य षण्णां भग इतीरणा' । हे राजन् तया मोहरूपया देव्या त्वं विवेकी सन्नपि ॥ २ ॥

**( ४ नागोजीभट्टी )** विद्या तत्त्वज्ञानं । तथैवेति समुच्चये । तया देव्या त्वं सुरथः एष वैश्यः समाधिः । उत्तरार्धमुत्तरान्वयि । तथैवान्ये । अन्ये चेत्यर्थः । विवेकिनः अधिगतलोकशास्त्राः ॥ २ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** विद्या तथैवेति ३ ॥ २ ॥

**( ६ दंशोद्धारः )** विद्येति । मोक्षोपयोगिज्ञानं क्रियते बोध्यते । तथैवेति समुच्चये । तयैवेति पाठे तु ययेदं जगद्धार्यते तयैवेति पूर्वेणानुषङ्गः । त्वं सुरथः । वैश्यः समाधिः । मोह्यन्त इत्यादिना कालत्रयेऽपि मोहकत्वं सूचितम् ॥२॥

**मोह्यन्ते मोहिताश्चैव मोहमेष्यन्ति चापरे । तांमुपैहि[1] महाराज शरणं परमेश्वरीम् ॥ ३ ॥**

**( १ गुप्तवती )** ॥ ३ ॥

**( २ चतुर्धरी )** मोह्यन्ते संप्रति । मोहिताः प्राक् । मोहमेष्यन्ति पश्चात् । सैवेत्येवकारो यस्मादर्थे । उपैहीति उपपूर्वस्येणो रूपम् ॥ ३ ॥

**( ३ शान्तनवी )** संप्रति मोह्यसे । प्राक् मोहितोऽभूः । भविष्यति काले मोहमेष्यसि च । तथैव एषः वैश्यः समाधिः नाम तथैव मोह्यते मोहितश्च मोहमेष्यति च । तथैव युवाभ्यां अन्येपि विवेकिनः पुमांसः अधिगतशास्त्राः सन्तोप्यपरे च तेभ्यश्चान्ये च सर्वे तथैव देव्या मोह्यन्ते । मोहिताश्च मोहमेष्यन्ति प्राप्स्यन्ति । यदुक्तं । 'तथापि ममतावर्ते मोहगर्ते निपातिताः । महामायाप्रभावेन संसारस्थितिकारिणा । तन्नात्र विस्मयः कार्यो योगनिद्रा जगत्पतेः । महामाया हरेश्चैषा तया संमोह्यते जगत् । ज्ञानिनामपि चेतांसि देवी भगवती हि सा । बलादाकृष्य मोहाय महामाया प्रयच्छति । इति प्राक् राजा । 'भगवंस्त्वामहं प्रष्टुमिच्छाम्येकं वदस्व तत्' इति यद्रहस्यं पृष्टं तदिदानीमृषिरुद्देष्टुमाह । हे महाराज हे सुरथ त्वं तां परमेश्वरीं देवीं शरणं रक्षयित्रीमुपैहि उप एहि । आद्गुणः । उपगच्छ शरणं व्रज । उपपूर्व इण् गतौ 'सेर्ह्यपिच्च' उप इति स्थिते 'एत्येधत्यूठ्सु' इति वृद्धिर्न तद्विधावेचीत्यनुवृत्तेः । तत आद्गुण एव बाधकाभावात् । आङ्पूर्वत्वेऽपि आ इहि एहि। उप एहि इति स्थिते वृद्धिं बाधित्वा 'ओमाङोश्च' इति पररूपत्वे सति उपेहि इत्येव रूपं । उपैहि इति तु कृतवृद्धिपाठः छान्दसः । क्वचिच्च 'सर्वे विधयश्छन्दसि विकल्पन्त' इति वचनात् । यद्वा एहि इत्येतद्विभक्तिप्रतिरूपकमव्ययं । पृषोदरादित्वाद्वा साधु । उप एहि उपैहि महाराज । 'राजाहःसखिभ्यष्टच्' 'न पूजनात्' पूजायां स्वस्तिग्रहणं । 'अक्ष्णोतिराद्युकर्मणि वरट्चेचोपधायाः'। परमामीश्वरीं हे कौष्टिक हे मुने आकर्णय ॥ ३ ॥

**( ४ नागोजीभट्टी )** मोह्यन्त इति । मोहो मिथ्याज्ञानं । उपैहीति वृद्धिश्छान्दसी ॥ ३ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** मोह्यन्त इति ४ ॥ ३ ॥

**( ६ दंशोद्धारः )** तामिति । उपैहीति । एदादिपाठे वा छन्दसीति पित्वेन गुणे एहीति स्थिते उपेत्यनेन वृद्धिः । उपेहेतिपाठः सुगमः । भोग ऐहिकसुखं । स्वर्गः पारलौकिकसुखं । अपवर्गो मोक्षः ॥ ३ ॥

**आराधिता सैव नृणां भोगस्वर्गापवर्गदा ।**

**मार्कण्डेय उवाच । इति तस्य वचः श्रुत्वा सुरथः[2] स नराधिपः ॥ ४ ॥**

**( १ गुप्तवती )** ॥ ४ ॥

**( २ चतुर्धरी )** भोगः ऐहिकः । स्वर्गानुभवः पारत्रिकः । अपवर्गः कायद्वयापायः । तस्य मेधसो मुनेः ॥ ४ ॥

**( ३ शान्तनवी )** सैव देवी भगवत्येव आराधिता तपसा तोषिता सती नृणां पुंसां भोगस्वर्गापवर्गदा भुवि भोगदा जन्मान्तरे स्वर्गदा मोक्षदा ज्ञानदा भवति । अत एव मोक्षदा 'ज्ञानादेव तु कैवल्यं' इति सिद्धान्तः । संप्रदानत्वाभावाद्रजकस्य वस्त्रं ददातीतिवत्संबन्धे षष्ठ्येव । नृणामिति । इति प्रोक्तेन प्रकारेण तस्य सुमेधसो ब्रह्मर्षेः वचः श्रुत्वा देवीमाराधय इति वाक्यं उपदेशमाकर्ण्य सुरथो नाम सः नराधिपः ॥ ४ ॥

**( ४ नागोजीभट्टी )** आराधितेति । सैवेत्यनेन सर्वत्र फलदात्री इयमेवेति सूचितम् । भोग ऐहिकः । मार्कण्डेय उवाच ३ । इतीति ॥ ४ ॥

---

१ 'तामुपेहि' इति पाठस्यापि दंशोद्धारे गतिः कृतास्ति । २ 'सुरथः क्षत्रियर्षभः' इति जगच्चन्द्रचन्द्रिका ।

**( ५ जगच्चन्द्रचन्द्रिका )** आराधितेति ५ । मार्कण्डेय उवाच ६ । इति तस्य वचः श्रुत्वा सुरथः क्षत्रियर्षभः स्वाहा ७ ॥ ४ ॥

**( ६ दंशोद्धारः )** इतीति । तस्य सुमेधसः मुनेः ॥ ४ ॥

**प्रणिपत्य महाभागं तमृषिं संशितव्रतम् । निर्विण्णोऽतिममत्वेन राज्यापहरणेन च ॥ ५ ॥**

**( १ गुप्तवती )** ॥ ५ ॥

**( २ चतुर्धरी )** संशितव्रतं तीव्रनियमं । निर्विण्णा दुःखाकुलाः । ममत्वमस्मत्सुखावहाध्यवसायः ॥ ५ ॥

**( ३ शान्तनवी )** तं सुमेधसं महाभागं संशितव्रतं ऋषिं प्रणिपत्य प्रणामैराराध्य पुत्रमित्रकलत्रादाविति ममत्वेन अतिमोहेन शत्रुभिः राज्यापहरणेन च हेतुना निर्विण्णः दुःखितः सन् ॥ ५ ॥

**( ४ नागोजीभट्टी )** प्रणिपत्येति संशितव्रतं तीव्रव्रतम् । निर्विण्णो दुःखाकुलः । ममत्वं स्वीयत्वाध्यवसायः ॥ ५ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** प्रणिपत्येति ८ ॥ ५ ॥

**( ६ दंशोद्धारः )** संशितव्रतं तीव्रनियमो यस्य निर्विण्ण इति । अतीति पृथक्पदं । ममत्वेनातिनिर्विण्णोऽतिदुःखाकुलः ॥ ५ ॥

**जगाम सद्यस्तपसे स च वैश्यो महामुने । संदर्शनार्थमम्बाया नदीपुलिनमास्थितः ॥ ६ ॥**

**( १ गुप्तवती )** अम्बाया इति । तुरीयाया इत्यर्थः । देवीसूक्तजपाल्लिङ्गात् । प्रत्यक्षं प्राह चण्डिकेति वाक्यशेषाच्च । नदीपुलिनं तत्तीरभागम् ॥ ६ ॥

**( २ चतुर्धरी )** सद्यस्तत्क्षणं । नद्याः पुलिनमेतत्कालं जलाभ्यक्ते कूले संस्थितः ॥ ६ ॥

**( ३ शान्तनवी )** तपसे जगाम । अम्बायाः जगज्जनन्याः देव्याः संदर्शनार्थं प्रत्यक्षीकरणाय । नदीपुलिनसंस्थितः नद्याः पुलिने द्वीपे तटविशेषे वा संस्थितः सैकतदेशे सम्यगवस्थितः ॥ ६ ॥

**( ४ नागोजीभट्टी )** जगामेति । स राजा वैश्यश्चेत्यर्थः । एवमग्रेऽपि ॥ ६ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** जगाम सद्य इति ९ ॥ ६ ॥

**( ६ दंशोद्धारः )** संदर्शनार्थमिति ॥ ६ ॥

**स च वैश्यस्तपस्तेपे देवीसूक्तं परं जपन् । तौ तस्मिन्पुलिने देव्याः कृत्वा मूर्तिं महीमयीम् ॥ ७ ॥**

**( १ गुप्तवती )** स च राजा च देवीसूक्तं बह्वृचेष्वतिप्रसिद्धमेकं तन्त्रान्तरेष्वध्यायत्रयात्मकं प्राच्येषु प्रसिद्धकल्पमपरं मालामन्त्रात्मकमपि गद्यात्मकं क्वचित्प्रसिद्धमन्यत् लक्ष्मीतन्त्रे व्यवहारदर्शनान्नमो देव्या इत्यादिकमितरत् इति चत्वार पक्षा व्याख्याभेदेनोक्ता यथासंप्रदायं व्यवस्थिता ज्ञेयाः ॥ ७ ॥

**( २ चतुर्धरी )** देवीसूक्तं देवीमाहात्म्यवाचकाम्नायं । ॥ ७ ॥

**( ३ शान्तनवी )** स राजा च सुरथः स वैश्यश्च समाधिर्नाम परं श्रेष्ठं सर्वार्थप्रदं केवलं देवीसूक्तं वैदिकमृग्विशेषं मन्त्रं देव्यधिदैवतं देव्यां सुष्ठु शोभनमुक्तं प्रणीतं देव्यां वा विषये सूक्तमुपदिष्टमाचार्यैरागमीयं देवीप्रणवमभिगर्भं वा एतदेव वा चण्डिकायाः चरितत्रयं जपन् तपस्तेपे तपश्चकार । केचित्तु वाग्ग्रहणादम्बा माता मातृकेति मातृकामन्त्ररूपं देवीसूक्तमाहुः । अपरे तु देवीसूक्तं पृथगस्ति रहस्ये तज्जपन् इत्याहुः । अन्ये त्वाहुः । श्रुतिस्मृतिपुराणोक्तानि देवीसूक्तानीति । 'संस्थाधारे स्थितौ मृतौ' । 'तपस्तपःकर्मकस्यैव' इति तपःकर्ता कर्मवद्भवति । उपवासादीनि तपांसि तापसं तपन्ति दुःखयन्ति स तापसस्त्वगस्थिभूतः । स्ववाञ्छितस्वर्गाद्यर्थं तपांसि तप्यते तपांसि उपार्जयन्ति । तप संतापे । लिटि तपस्तेपे तपोर्जितवानित्यर्थः । अन्यकर्मकत्वे तु उत्तपति स्वर्णं सुवर्णकारः । तौ द्वौ राजा सुरथः वैश्यश्च समाधिर्नाम तस्मिन् नद्याः पुलिने तटविशेषे 'तोयोत्थितं तत्पुलिनं' । तत्र देव्याः मूर्तिं आकृतिं महीमयीं कृत्वा मृण्मयीं विधाय 'मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः' इति विकारावयवायाः मह्या मयट् ॥ ७ ॥

**( ४ नागोजीभट्टी )** देवीसूक्तं ऋग्वेदप्रसिद्धमित्येके । वस्तुतो देवीसूक्तं नमो देव्या इत्यादिकं पञ्चमाध्यायस्थं स्तुतिरूपं । तत्र सर्वदेवतायाः कूटस्थायाः महालक्ष्म्याः स्तोत्रं शुम्भादिवधार्थिभिर्दृष्टं सर्वक्लेशपरिहारैश्वर्यादिफलकं तत्काभ्यां ताभ्यां जप्तं । अनुपदश्रुतत्वात् बुद्धिसन्निहितत्वाच्चेदमेव देवीसूक्तं देवीपदेन च ग्रहीतुमुचितम् । लक्ष्मीतन्त्रसंमतश्चायमर्थः । इति प्रागेव निरूपितमित्यपरे । 'प्रणाधः संस्थितं बीजं व्योमबीजं हुताशनः । त्रिकोणबिन्दुनादाढ्यं प्रणवादिनमोन्तकम् । अम्बिकासिद्धिदं ज्ञेयं देवीसूक्तं परं स्मृतम्' इति क्वचित्पठ्यते ॥ ७ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** स च वैश्य इति १० ॥ ७ ॥

**( ६ दंशोद्धारः )** देवीसूक्तं देवीमाहात्म्यसूचकं श्रीसूक्ताद्याम्नायविशेषम् ताविति । महीमयीं वालुकामयीम् ॥ ७ ॥

**अर्हणां चक्रतुस्तस्याः पुष्पधूपाग्नितर्पणैः । निराहारौ यताहारौ तन्मनस्कौ समाहितौ ॥ ८ ॥**

**( १ गुप्तवती )** आदौ यताहारौ कतिपयकालोत्तरं निराहारौ ॥ ८ ॥

**( २ चतुर्धरी )** अर्हणां पूजां । निराहारौ त्यक्ताहारौ यताहारौ अल्पाहारौ लघुभोजनौ । तन्मनस्कौ तस्यां मानसमाहितं ययोस्तौ जितेन्द्रियौ ॥ ८ ॥

**( ३ शान्तनवी )** तस्या देव्याः अम्बिकायाः पुष्पधूपाग्नितर्पणैः पुष्पैः धूपैः तर्पणैः अग्निभिः अग्निकार्यैः होमैः तर्पणैश्च विहितैस्तैस्तैरुचितैः अर्हणां पूजां आराधनं चक्रतुः चक्राते । पृथक् पृथक् विदधाते । 'मूर्तिः काठिण्यकाययोः' 'पूजा नमस्यापचितिः सपर्यार्चार्हणाः समाः' पुष्पाणि धूपाः अग्नयः तर्पणानि च तैस्तैः 'निर्निश्चयनिषेधयोः' । निराहारौ हविष्यादिना तावन्निश्चिताशनौ । ततः क्रमशो मूलाशनौ फलाशनौ पर्णाशनौ अब्भक्षौ वायुभक्षौ । ततश्च मरणे कृतनिश्चयौ निराहारौ निवारिताहारौ अनशनौ । यतात्मानौ विषयेभ्यो व्यावर्तितमनोनेत्रादिज्ञानेन्द्रियौ निर्जितेन्द्रियग्रामौ 'तावज्जितेन्द्रियो न स्याद्विजितान्येन्द्रियः पुमान् । न जयेद्रसनं यावज्जितं सर्वं जिते रसे' । तन्मनस्कौ तस्यामेवाध्यातुं मनो ययोस्तौ तथोक्तौ देवीध्यानपरौ । समाहितौ गुरूपदिष्टार्थे सावधानौ । निरस्तसंशयौ बहुविघ्नपरिहारपरौ नियमपरायणौ ॥८॥

**( ४ नागोजीभट्टी )** अर्हणां पूजां अग्नितर्पणं होमः । पुष्पधूपौ गन्धदीपाद्युपलक्षकौ । आदौ यताहारौ अल्पाहारौ ततो निराहारौ । अनेन हठयोगः सूचितः । तन्मनस्कौ देवीमनस्कौ । समाहितौ त्यक्तबाह्यचेष्टौ ॥ ८ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** अर्हणामिति ११ ॥ ८ ॥

**( ६ दंशोद्धारः )** अर्हणां पूजां । अग्निर्दीपः । तर्पणं नैवेद्यादि । यद्वा अग्नितर्पणं हवनम् । यताहाराविति । यतात्मानौ[1] जितमनस्कौ । यताहाराविति पाठे कदाचिदल्पाहारौ ॥ ८ ॥

**ददतुस्तौ बलिं चैव निजगात्रासृगुक्षितम् । एवं समाराधयतोस्त्रिभिर्वर्षैर्यतात्मनोः ॥ ९ ॥**

**( १ गुप्तवती )** ब्राह्मणेतरवर्णत्वेन निषेधाभावादाह । निजगात्रेति ॥ ९ ॥

**( २ चतुर्धरी )** जितेन्द्रियौ जितानि इन्द्रियाणि ययोस्तौ । बलिमुपहारं बलिदानं निजगात्रासृजा स्वदेहशोणितेन उक्षितं सेचितं । यतात्मनोर्जितचित्तयोः ॥ ९ ॥

**( ३ शान्तनवी )** तौ सुरथवैश्यौ निजगात्रासृगुक्षितं तपश्चरणकाले परहिंसापराङ्मुखत्वात् स्वशरीरोद्भवरक्तमेव अन्नमयं बलिं च ददतुः । ऊरुजं बाहुजं वापि रक्तमांसमयं बलिं । भक्त्यावेशान्महाशूरो महीमायार्थमुत्सृजेत्' । चशब्दान्निजशरीरजरुधिररक्तचन्दनविलेपनं च देव्यै ददाते । एतेन शरीरं वा पातयामि मन्त्रं वा साधयामि इति हठयोगः सूचितः । एवमुक्तप्रकारेण समाराधयतोः क्षत्रियवैश्ययोः त्रिभिर्वर्षैर्यतात्मनोः देव्यामवहितचेतसोः तयोः क्षत्रियवैश्ययोः ॥ ९ ॥

**( ४ नागोजीभट्टी )** तौ बलिं च पशुकूष्माण्डाद्युपहारं ददतुरेवेत्यस्य राजेत्यादि । राजैव निजरुधिरसिक्तं । एतेन वैश्यस्य तत्त्वज्ञानेच्छया सात्विकत्वेन कथं राजसपूजायां प्रवृत्तिरित्यपास्तम् । राजसपूजाधिकारत्वेन ततस्तस्य सात्विकफले बाधकाभावाच्च ब्राह्मणस्य सात्विकपूजया राजसफलवत् । यतात्मनोर्जितचित्तयोः ॥ ९ ॥

**( ५ जगच्चन्द्रचन्द्रिका )** ददतुस्ताविति १२ ॥ ९ ॥

**( ६ दंशोद्धारः )** बलिमुपहारं निजगात्रासृजा स्वदेहशोणितेनोक्षितं प्रोक्षितम् ॥ ९ ॥

**परितुष्टा जगद्धात्री प्रत्यक्षं प्राह चण्डिका ।**

**देव्युवाच । यत्प्रार्थ्यते त्वयाभूप त्वया च कुलनन्दन ॥ १० ॥**

**( १ गुप्तवती )** कुलनन्दनेति वैश्यस्य संबुद्धिः ॥ १० ॥

**( २ चतुर्धरी )** प्रत्यक्षमिति क्रियाविशेषणम् ॥ १० ॥

**( ३ शान्तनवी )** परितुष्टा तत्कृतेन तपसा अतिप्रीता जगतां धात्री चण्डिका देवी प्रत्यक्षं प्रकटीभूय प्राह कथयामास । प्राहेति तिङन्तप्रतिरूपकमव्ययं । यतश्चण्डिका जगद्धात्री ततस्तयोः कृततपसोः प्रत्यक्षीबभूव । अन्यथा तत्कृतेन घोरेण तपसाग्निनेव जगन्ति दह्येरन्नेवेति भावः । जगन्ति दधाति जगद्धा । आतोऽनुपसर्गे कः । अद भक्षणे । तृन् तज्वा । यद्वा ओहाङ्गतौ । जगन्ति जिहिते जगद्धा । आतोऽनुपसर्गे कः । वर्गचतुर्थः । अत्री संहर्त्री । अतएव ओहक् त्यागे । अतोपि के जगति जहान्ति जगद्धा । ततोत्री भोक्त्री । देव्युवाच । हे भूप त्वया यत्प्रार्थ्यते । हे कुलनन्दन कुलवर्धन वैश्य त्वया च यत्प्रार्थ्यते याच्यते ॥ १० ॥

---

१ 'यतात्मानौ' इत्यपि पाठः ।

(४ नागोजीभट्टी) प्रत्यक्षमिति क्रियाविशेषणं । देव्युवाच । यदित्युत्तरार्धम् । कुलनन्दनेति वैश्यसंबोधनं। ज्ञानार्थित्वेन प्रशस्तत्वात् ॥ १० ॥

(५ जगच्चन्द्रचन्द्रिका) परितुष्टा जगद्धात्री प्रत्यक्षं प्राह चण्डिका स्वाहा १३ । देव्युवाच १४ । यत्प्रार्थ्यते त्वया भूप त्वया च कुलनन्दन स्वाहा १५ ॥ १० ॥

(६ दंशोद्धारः) यदिति । मत्तो मत्सकाशात्प्राप्यतां अङ्गीक्रियतां । अर्थाद्युवाभ्यामिति इति प्रत्येकमन्वेति । वामिति पाठः सुगमः ॥ १० ॥

**मत्तस्तत्प्राप्यतां सर्वं परितुष्टा ददामि वाम् ।**

**मार्कण्डेय उवाच । ततो वव्रे नृपो राज्यमविभ्रंश्यन्यजन्मनि ॥ ११ ॥**

(१ गुप्तवती) ॥ ११ ॥

(२ चतुर्धरी) मत्तो मत्सकाशात्प्रार्थ्यतां स्वीक्रियतां । अविभ्रंशि विच्युतिहीनम् ॥ ११ ॥

(३ शान्तनवी) तत्सर्वं मत्तः देवीतः सकाशात्प्राप्यतां लभ्यतां अवाप्यतां । अहं परितुष्टास्मि । तच्च तच्च ते च ते च क्षत्रियाय च वैश्याय च ददामि । कुलस्य नन्दन वैश्य । यतोसौ कुलात्सकाशाल्लक्ष्मीं न ग्रहीष्यति मोक्षकामत्वाद्वैराग्यभाक्त्वादिति भावः । द्वितीयार्थे प्रार्थ्यतामिति तु क्वचित्पाठः स पुनरुक्तः । प्राप्यतामिति तु पाठ्यतां । यद्वा वैश्यापेक्षाया न पौनरुक्त्यं । त्वया च प्रार्थ्यतामिति । ददामि तत् ददामि ते इति च पाठद्वयं क्वापि दृश्यते । मार्कण्डेय उवाच । मत्तः देवीतः ततः देव्युक्त्यनन्तरं वा नृपः सुरथः अन्यजन्मनि एतज्जन्मापेक्षया अन्यदग्रिमसंभवि यज्जन्म तस्मिन्नन्यजन्मनि अविभ्रंशि अविचलं । राज्ञो भावः कर्म वा राज्यं वव्रे प्रार्थयामास । अविभ्रंशि राज्यं मन्वन्तरत्वप्राप्तिसाध्यं । अथ च अत्र अस्मिन्नपि च जन्मनि अविभ्रंशि । भ्रंश अधःपतने णिनिः । न विभ्रंशः अविभ्रंशः तद्युक्तं वा ॥ ११ ॥

(४ नागोजीभट्टी) मत्त इति । प्राप्यतां स्वीक्रियतां । तत्प्रार्थ्यमानं । मार्कण्डेय उवाच । तत इत्युत्तरार्धम् । अविभ्रंशि चिरस्थायि ॥ ११ ॥

(५ जगच्चन्द्रचन्द्रिका) मत्तस्तत्प्राप्यतां सर्वं परितुष्टा ददामि तत्स्वाहा १६ । मार्कण्डेय उवाच स्वाहा १७ । ततो वव्रे नृपो राज्यमविभ्रंश्यन्यजन्मनि स्वाहा १८ ॥ ११ ॥

(६ दंशोद्धारः) तत इति । अविभ्रंशि स्थिरं अन्यजन्मनि सावर्णिमनुरूपे ॥ ११ ॥

**अत्रापि च निजं राज्यं हतशत्रुबलं बलात् । सोऽपि वैश्यस्ततो ज्ञानं वव्रे निर्विण्णमानसः १२**

(१ गुप्तवती) ॥ १२ ॥

(२ चतुर्धरी) अत्रास्मिञ्जन्मनि हतं शत्रुबलं यत्र राज्ये । ज्ञानं ब्रह्मवेदनम् ॥ १२ ॥

(३ शान्तनवी) अत्रैव निजे नगरे बलात् हतशत्रुबलं निजं आत्मीयं राज्यमेव वव्रे प्रार्थयामास । हतं शत्रुबलं यत्र तत्तथोक्तं । वृञ् वरणे । कर्तरि लिङ्गात्मनेपदं । वव्रे 'स्थौल्यसामर्थ्यसैन्येषु बलं ना काकसीरिणोः' ततो देवीतः ततो देव्युक्त्यनन्तरं वा प्राज्ञः मोक्षकाङ्क्षित्वादतितरां बुद्धिमान् । निर्विण्णमानसः संसारदुःखोद्विग्नचेतस्कः सः समाधिर्नाम वैश्योप्यतिविरक्तः सन् ज्ञानं मोक्षबुद्धिं वव्रे प्रार्थयामास ॥ १२ ॥

(४ नागोजीभट्टी) अत्रापि चेति । अत्राप्यस्मिन् जन्मन्यपि बलाद्धतशत्रुबलमिति राज्यविशेषणं । ज्ञानं तत्त्वज्ञानं । निर्विण्णमानसः संसाराद्विरक्तमानसः ॥ १२ ॥

(५ जगच्चन्द्रचन्द्रिका) अत्रापि चेति १९ ॥ १२ ॥

(६ दंशोद्धारः) अत्रास्मिञ्जन्मनि सुरथरूपे हतं शत्रुबलं यत्र तन्निजं राज्यम् । सोपीति । ज्ञानमात्मविषयं । किंभूतं । ममेत्वस्वीये स्वीयत्वाभिमानं अहमित्यनात्मन्यात्मत्वाभिमानः इतीदृशस्य सङ्गस्य विच्युतौ नाशे कारणं । ननु सुरथवदयमपि वैषयिकसुखमेव किं न याचितवानतो विशेषणद्वयं । निर्विण्णमानसः विरक्तचित्तः । प्राज्ञश्च प्रकृष्टा ज्ञा वेदविषयज्ञानं तदस्यास्तीति प्राज्ञः । प्रज्ञाश्रद्धेति णः । तथा च श्रूयते । किं प्रज्ञया करिष्यामो येषामयं लोक इति । 'असुर्या नाम ते लोका अन्धेन तमसा वृताः । तांस्ते प्रेत्याभिगच्छन्ति ये केचात्महनो जनाः' । इति । आत्महनो विषयासक्ताः ॥ १२ ॥

---

१ 'तत्' इत्यपि पाठः ।

**ममेत्यहमिति प्राज्ञः सङ्गविच्युतिकारकम्।**
**देव्युवाच। स्वल्पैरहोभिर्नृपते स्वं राज्यं प्राप्स्यते भवान्॥ १३॥**

**(१ गुप्तवती)** ममेति। ममताहन्ताभ्यां प्रकर्षेणाज्ञः सन्नित्यर्थः। समस्तमर्धमेकमेव समस्तपदं तन्मध्ये बुद्धिमद्वाचकस्य प्राज्ञपदस्य निवेशः। छान्दसो नराशंसमित्यत्रेवेति केचित्। तत्र स्वदेशे आधिपत्यं भविष्यति॥ १३॥

**(२ चतुर्धरी)** ममेत्यस्वीये स्वीयाभिमानः। अहमित्यनात्मन्यात्माभिमानः। इतिशब्दावुपदर्शनार्थौ। ईदृशो यः सङ्गस्तस्य विच्युतिकारकमिति ज्ञानविशेषणं। एवंविधज्ञानप्रार्थनायां हेतुमाह। निर्विण्णमानस इति। विरक्तचित्तत्वादित्यर्थः। अत्राप्यहं प्राज्ञ इति। प्रज्ञा श्रौतज्ञानं तया चरतीति प्राज्ञः। तादृशो हि श्रुतौ श्रूयते 'किं प्रजया करिष्यामो एषामयं लोक' इति। एतैरेव यतो ज्ञानमुदेति येनायं विरज्यते ततो ज्ञानमवाप्यापवृत्यत इति। तथाच महाभारते 'ज्ञानादेव हि वै राजन् ज्ञेयं वैराग्यलक्षणम्' इति। स्वल्पैरिति। अहोभिर्दिनैः॥ १३॥

**(३ शान्तनवी)** कीदृशं ज्ञानं ममेत्यहमित्येवं सङ्गविच्युतिकारकं ममायं पुत्रोऽहं पिता। ममेदं कलत्रमहं भर्ता। ममेदं धनं अहं स्वामी तस्येत्यादौ व्यासञ्जितः सङ्गः तस्य सङ्गस्य विच्युतिः क्षरणं विलयः तस्याः कारणं कारकं ममत्वं नाम मोहः संसृतिः तद्विलयकारकं ब्रह्मज्ञानमिति भावः। अतस्मिंस्तद्बुद्धिरध्यासः। तेन निःसङ्गस्यैवात्मनो ममत्वाविर्भावः सर्वदुःखावहो भवति। ममता चाहंता च सङ्गः संसर्गापेक्षाबुद्धिः द्वैतज्ञानं भेदनिबन्धनं तस्य विच्युतिकारकं विच्छेदजनकं मोक्षोपयोगिज्ञानं हे नृप हे सुरथ भवान् स्वल्पैरहोभिर्दिवसैः कतिपयैर्वासरैः रिपून्हत्वा स्थितवतः अस्खलितं अविचलितं अविभ्रंशि तव तत् राज्यं प्राप्स्यते लप्स्यते। आप्लृ व्याप्तौ। 'व्यत्ययो बहुलं' इत्यात्मनेपदं। 'शेषे प्रथमः'॥ १३॥

**(४ नागोजीभट्टी)** ममेत्यहमिति च यः सङ्गस्तद्विच्युतिस्तन्नाशस्तत्करमिति ज्ञानविशेषणं। समासो न छान्दसः। प्राज्ञत्वं मुक्तीच्छयातिबुद्धिमत्त्वाच्च। स्वल्पैरिति स्वं राज्यमित्यसमस्तम्॥ १३॥

**(५ जगच्चन्द्रचन्द्रिका)** ममेत्यहमिति प्राज्ञः सङ्गविच्युतिकारकं स्वाहा २०। देव्युवाच २१। स्वल्पैरहोभिर्नृपते स्वं राज्यं प्राप्स्यसे भवान् स्वाहा २२॥ १३॥

**(६ दंशोद्धारः)** स्वल्पैरिति॥ १३॥

**हत्वा रिपूनस्खलितं तव तत्र भविष्यति। मृतश्च भूयः संप्राप्य जन्म देवाद्विवस्वतः॥ १४॥**

**(१ गुप्तवती)** ॥ १४॥

**(२ चतुर्धरी)** तत्र राज्ये तव अस्खलितं राज्यं भविष्यतीत्यर्थः। अपशब्द एवायं निषेधः। 'नञ्नोनायं' इत्यभिधानात्। भूयः पश्चात्॥ १४॥

**(३ शान्तनवी)** अस्खलितं तव सुरथस्य अग्रिमे जन्मनि तत् राज्यं भविष्यति। तव राज्यं तव तच्च तव तत्र इति पाठत्रयं। तत्र नगरे जन्मान्तरे च। हे भूप भवान् मृतः सन्नपि एतच्छरीरं परित्यक्तवानपि भूयः पुनरपि विवस्वतः सूर्याद्देवात् सवर्णायाश्च तत्पत्न्याः जन्म उत्पत्तिं संप्राप्य॥ १४॥

**(४ नागोजीभट्टी)** हत्वेति। तत्र राज्येति वाऽस्खलितमस्खलनं भविष्यति। उत्तरार्धमुत्तरान्वयि॥ १४॥

**(५ जगच्चन्द्रचन्द्रिका)** हत्वा रिपूनिति २३॥ १४॥

**(६ दंशोद्धारः)** तत्र राज्ये तवाऽस्खलितमस्खलनं भविष्यति। आ इति निषेधार्थकमव्ययं वा पृथक् पदम्॥ १४॥

**सावर्णिको नाम मनुर्भवान्भुवि भविष्यति। वैश्यवर्य त्वया यश्च वरोऽस्मत्तोऽभिवाञ्छितः॥ १५॥**

**(१ गुप्तवती)** ॥ १५॥

**(२ चतुर्धरी)** वैश्यवर्य वैश्यश्रेष्ठ॥ १५॥

**(३ शान्तनवी)** सावर्णिको नाम मनुः राजा भुवि भविष्यति। सावर्णिरेव सावर्णिकः। संज्ञायां कन्। वर्णेन सहिता सवर्णा। ततः स्त्रीभ्यो ढकं बाधित्वा बाह्वादिपाठादिञि सावर्णिः सूर्यतनयो यो मनुः कथ्यतेऽष्टमः। हे वैश्य हे वर्य। यद्वा हे वैश्यवर्य वैश्येषु श्रेष्ठ त्वया अस्मत्तः देवीतः यः वरः अभिवाञ्छितः अस्ति॥ १५॥

**(४ नागोजीभट्टी)** सावर्णिक इति। यद्वाचकं नाम तदुपलक्षितो मनुरित्यर्थः। वैश्येत्याद्युत्तरान्वयि। अस्मत्त इति बहुवचनं स्वस्य सार्वात्म्यद्योतकम्॥ १५॥

**(५ जगच्चन्द्रचन्द्रिका)** सावर्णिको नाम मनुरिति २४॥ १५॥

**(६ दंशोद्धारः)** भविष्यति। भवीष्यसीत्यर्थः। वैश्यवर्येति॥ १५॥

---

१ 'मनुर्नाम' इति शान्तनवीःस्थ पाठः.

**तं प्रयच्छामि संसिद्ध्यै तव ज्ञानं भविष्यति।**

**मार्कण्डेय उवाच। इति दत्त्वा तयोर्देवी यथाभिलषितं वरम् ॥ १६ ॥**

**( १ गुप्तवती )** ॥ १६ ॥

**( २ चतुर्धरी )** संसिद्ध्यै मोक्षाय ॥ १६ ॥

**( ३ शान्तनवी )** तं वरं संसिद्ध्यै परमात्मरूपसंगत्यै प्रयच्छामि । ततश्च वरप्रदानतः तव ज्ञानं भविष्यति। मोक्षे धीर्ज्ञानमुच्यते । अस्मत्त इति पञ्चमीबहुवचनस्य तसिल्। अतश्चैकत्वाभावात् 'प्रत्ययोत्तरपदयोश्च' इति मादेशाभावः। ननु च अस्मत्त इति बहुवचनोपक्रमात्प्रयच्छाम इति बहुवचनेन भाव्यं । ततः कथं प्रयच्छामीत्येकवचनं स्यात्। एवं तर्हि अस् मत्तः। असु क्षेपणे। अस्यति क्षिपति संसारं निराकरोति अस्। क्विपि रूपं। वरस्य विशेषणं। एकत्वात् मादेशः। अयस्मयादित्वाभावात्पदत्वाभावात् रुत्वाद्यभावः। केचित्तु वैश्यवर्य त्वया मत्तो वरो यश्चाभिवाञ्छितः इति पाठः। यद्वा 'व्यत्ययो बहुलं' इति एकवचनस्य बहुवचनं। ततश्च अस्मत्त इत्येव पाठः। वरणीयो वर्यः। 'क्लीबे प्रधानं प्रमुखप्रवेकानुत्तमोत्तमाः। मुख्यवर्यवरेण्याश्च प्रवर्होऽनवरार्ध्यवत्'। मार्कण्डे उवाच। मुनिः स्वशिष्यं वाचमुक्तवान्। हे क्रोष्टुकिमहर्षे इति प्रकारेण तयोः क्षत्रियवैश्ययोः सुरथस्य समाधेश्च यथाभिलषितं वरं अभिवाञ्छितं वाञ्छितमनतिक्रम्य अभीष्टं वरं दत्त्वा ॥ १६ ॥

**( ४ नागोजीभट्टी )** तमिति। संसिध्यै मुक्तये। तादर्थ्ये चतुर्थी। ज्ञानं ब्रह्मज्ञानं। मार्कण्डेय उवाच। इतीति॥१६॥

**( ५ जगच्चन्द्रचन्द्रिका )** तं प्रयच्छामि संसिद्ध्यै तव ज्ञानं भविष्यति स्वाहा २५। मार्कण्डेय उवाच स्वाहा २६। इति दत्त्वा तयोर्देवी यथाभिलषितं वरं स्वाहा २७ ॥ १६ ॥

**( ६ दंशोद्धारः )** संसिद्ध्यै मोक्षाय ॥ १६ ॥

**बभूवान्तर्हिता सद्यो भक्त्या ताभ्यामभिष्टुता।**
**एवं देव्या वरं लब्ध्वा सुरथः क्षत्रियर्षभः।**
**सूर्याज्जन्म समासाद्य सावर्णिर्भविता मनुः ॥ १७ ॥**

**इति श्रीमार्कण्डेयपुराणे सुरथवैश्ययोर्वरप्रदानं नाम त्रयोदशोऽध्यायः ॥ १३ ॥**

**( १ गुप्तवती )** सावर्णिर्भविता सूर्यसावर्णिदक्षसावर्णिब्रह्मसावर्णिधर्मसावर्णिरुद्रसावर्णिरौच्यभौत्येषु सप्तसु भाविषु प्रथमो मनुर्भविष्यति। अत्र षडुवाचमन्त्रा यथास्थानं संलेखेति शिवं ॥ १७ ॥ इति श्रीगुप्तवत्यां मन्त्रव्याख्याने त्रयोदशोऽध्यायः ॥ १३ ॥

**( २ चतुर्धरी )** क्षत्रियाणां ऋषभः श्रेष्ठः सुरथः राजा भगवत्याः वरं वरदानं प्राप्य सावर्णिर्नाम मनुः सूर्यसुतो भविता। मनुरिति वाक्यशेषः । स च मनुरष्टममन्वन्तराधिपो भविष्यतीत्यन्वयः । सावर्णिर्भविता मनुरिति पुनरावृत्तिः समाप्तिं द्योतयति ॥ १७ ॥ तथा च संप्रदायसंभवात् अनुष्टुभां चात्र देवीमाहात्म्ये मार्कण्डेय उवाचेति मधुकैटभादिनिर्बन्धनैश्च सार्धोना विंशतिरित्येव त्रयोविंशत्यधिकानि षट्शतानि भवन्ति । तथाहि । प्रथमेऽध्याये नवसप्ततिश्लोकाः। द्वितीयेऽष्टषष्टिः एकचत्वारिंशत्तृतीये चतुर्थे पञ्चाशत्। पञ्चमे नवसप्ततिः । सप्तमे पञ्चविंशतिः । अष्टमे सार्धैकषष्टिः। नवमे नवत्रिंशत् । दशमे सार्धसप्तविंशतिः । एकादशे पञ्चपञ्चाशत् । द्वादशे अष्टत्रिंशत् । त्रयोदशे सार्धसप्तदश। मार्कण्डेय उवाचेति मधुकैटभवधादिनिबन्धनश्च सार्धमूनविंशतिरित्येवं त्रयोविंशत्यधिकषट्शतानि सप्तशतव्यवहारः षट्शताधिकतयैवोपपद्यते इतितत्वं। तथाहि। नन्दा त्रयो वसुभवः कुवेदो वह्निः शरो नन्दगोपाश्चवानाश्रिताः (?)सार्धशशाङ्ककाला नन्दादयः नदाग्नयः। सार्द्रनगाश्रिताश्च पञ्चेषवः सार्धके चन्द्रा इति चण्डीमानं। इत्थं त्रयोदश त्रयोविंशतिसप्तयुक्ता अनुष्टुभाः षट्कथिता दशम्या । देवीमाहात्म्यतात्पर्यटीका दुर्गावबोधिनी । दुर्गाभक्तिप्रदानेन कृतिरास्तामियं चिरं ॥ ॥ इति श्रीचतुर्धरमिश्रविरचितायां देवीमाहात्म्यतात्पर्यटीकायां सुबोधिन्यां सप्तशतीभाष्यं संपूर्णम् ॥ १३ ॥

**( ३ शान्तनवी )** भक्त्या ताभ्यां लब्धवराभ्यां अभिष्टुता त्वं जगतां स्रष्ट्री रक्षित्री संहर्त्री जननी चेति संस्तुता सती सद्यः सा देवी भगवती चण्डिका सपदि अन्तर्हिता बभूव अन्तर्धानमगात् ॥ १७ ॥ एवं देव्या वरं लब्ध्वा सुरथक्षत्रियर्षभः। सूर्याज्जन्म समासाद्य सावर्णिर्भविता मनुः ॥१३॥ इति श्रीमद्राजाधिराजश्रीमत्तोमरान्वयश्रीमदुद्धारणात्मजश्रीःशन्तनुचक्रवर्तिविरचितायां श्रीचण्डिकामाहात्म्यटीकायां सुरथवैश्यवरप्रदानविधिनिरूपणोपलक्षितत्रयोदशोऽध्यायः॥१३॥

(**४ नागोजीभट्टी**) बभूवेति । देव्या इत्यपादाने पञ्चमी । सूर्यादिति । सावर्णिर्भविता मनुरित्यस्य पुनरावृत्तिः आचारात् । वक्ष्यमाणकात्यायनीतन्त्राच्च । अन्त्ये मनुरित्यनेन सावर्णिरित्यारभ्य सावर्णिर्भविता मनुरित्यन्तोयं महामालामन्त्र इति सूचयतीति । तदुक्तं लक्ष्मीतन्त्रे । 'सम्यक्हृदि स्थिता सेयं जन्मकर्मावलिस्तुतिः । एतां द्विजमुखात् ज्ञात्वा अधीयानो नरः सदा । विधूय निखिलां मायां सम्यक् ज्ञानं समश्नुते । सर्वसंपद आप्नोति धुनोति सकलापदः । इति सर्वेष्टसिद्धिः ॥ ॥ १७ ॥ इति कालोपनामक शिवभट्टसुतसतीगर्भजनागोजीभट्टकृते सप्तशतीव्याख्याने त्रयोदशोऽध्यायः ॥ १३ ॥

(**५ जगच्चन्द्रचन्द्रिका**) बभूवान्तर्हिता इति २८ । सूर्याजन्म समासाद्य सावर्णिर्भविता मनुः स्वाहा ॥ २९ ॥ १७ ॥ इति श्रीकूर्माचलेन्द्रश्रीज्ञानचन्द्रात्मजश्रीकुमारजगच्चन्द्राश्रितसोमपायिपुरोहितबलभद्रपण्डितगोत्रापत्यहर्षदेवात्मजावसथिभगीरथविरचितकण्वगोविन्दकृतसप्तशतीमन्त्रहोमविधिकारिकाव्याख्यायां त्रयोदशोऽध्यायः ॥ १३ ॥ ॥ ब्रह्मैको भगवानेको मार्कण्डेयस्तु मार्गणः । देवाः पञ्च ऋषिस्त्रिशद्देवीद्वादशकं तथा । पुनर्वैश्यः पुनर्द्वौ द्वौ राजोवाचेति वर्णतः । अर्धानि पूर्वापरयोर्मध्ये षोडश षोडश । अर्धानि सप्त च द्वे च श्लोकाः पञ्चशतं तथा । श्लोकाश्च चतुराशीतिरध्यायाश्च त्रयोदश । एवमाहुतयः सप्तशती स्युस्तर्पणस्य च । दुर्गाहोमविधानेन श्लोकश्लोकैकमाहुतिः । रक्षां च कवचं मन्त्रं होमं तत्र न कारयेत् । यो मूर्खः कवचं हुत्वा प्रतिवाचं नरेश्वरं । स्वदेहपतनं तस्य नरकं च प्रपद्यते । अन्धकश्च महादैत्यो दुर्गाहोमपरायणः । कवचाहुतिप्रभावेन महेशेन निपातितः ॥ ॥ इति कण्वगोविन्दकृतसप्तशतीमन्त्रहोमविभागकारिकाणां भगीरथविरचिता जगच्चन्द्रचन्द्रिका संपूर्णा ॥ १३ ॥

(**६ दंशोद्धारः**) उक्तमुपसंहरति । एवमिति । देव्याः सकाशात्सावर्णिर्मनुः अष्टममन्वन्तराधिपो भविता । क्वचित्पुस्तके सावर्णिर्भविता मनुरित्यस्यावृत्तिः समाप्तिं बोधयतीति सर्वमनवद्यम् ॥ १७ ॥ ॥ सप्तशत्या मया यस्तु दंशोद्धारो यथामति । निबद्धस्तेन गिरिजा प्रीयान्नः कुलदैवतम् १८ इति श्रीमत्समस्तगद्यपद्याद्यनेकानवद्यविद्योद्द्योतोद्द्योतितदिक्चक्रश्रीमद्भुल्लोपनामढुंढिराजभट्टसूरिसूनुराजारामेण विरचिते सप्तशतीदंशोद्धारे त्रयोदशोऽध्यायः ॥ १३ ॥

( समाप्तोयं दंशोद्धारः )

---

# यामलोक्तमन्त्रविभागविचारः ।

एवं कात्यायनीतन्त्रे प्रतिमन्त्रं विशिष्यविभागो विस्तरेण वर्णितः । यामले त्वीषत्प्रकारभेदेन चतुःश्लोक्या संक्षिप्य दर्शितः । यथा । नवार्णेन हुनेदादौ षोडशाहुतिभिस्तथा । चण्ड्येका वैश्य एवैको ब्रह्मैको भगवानपि । मार्कण्डेयास्तथा पञ्च राजानो वेदसंमिताः । षड्विंशतिस्तु ऋषयो देव्य एकादश स्मृताः । देवौ द्वावथ दूतौ द्वावध्यायास्तु त्रयोदश । श्लोकाः पञ्चशतानि स्युः सप्तपञ्चाशदुत्तराः । श्लोकार्धानि चतुश्चत्वारिंशत्संख्यानि निर्दिशेत् । सर्वान्ते तु नवार्णेन षोडशाहुतयः पुनरिति । अत्र चण्ड्येका देव्य एकादशेति विभज्य निर्देशेऽपि देवीत्वैनैक्याद्द्वादश देव्युक्तय इत्येव द्रष्टव्यं । केचित्तु विभज्येति बलात्सर्वारम्भे ॐनमश्चण्डिकायै इत्यस्य मन्त्रान्तरत्वमिच्छन्ति । तत्पक्षे मकारादिर्नुकारान्त इति वचनं विरुध्यते । कतमो देव्युवाचमन्त्रो निरसनीय इत्यनिर्धारणं च स्यात् । अयमपि पक्षो निष्कृष्य शतश्लोक्यां संगृहीतः सार्धैरष्टभिः श्लोकैः । यामले तु त्रिपान्मन्त्रः पुनरुक्तश्च नेष्यते ॥ ७२ ॥

वाङ्मन्त्रेषु त्रयं न्यूनमर्धेषु क्रतुबोधिकाः । विंशतिः श्लोकसंख्यायामध्याया अपि मन्त्रकाः । आद्यन्तयोर्नवार्णस्योक्तयः षोडशषोडश । एकोऽधिकः श्लोकपिण्डे शेषः सर्वोपि पूर्ववत् । तथाहि प्रथमो वैश्यश्चरमर्षिश्च नादिमे । प्रीतौ स्वस्तव युद्धेनेत्यर्धश्लोकात्मको मनुः । आवां जहीत्यर्थतः प्राक् पञ्चमे नास्ति देववाक् । दशमे जज्वलुश्चेति मनुरर्धोऽधिकोऽन्तिमः । एवंप्रभावा सा देवी तामुपैहीति पद्ययोः । द्वे द्वे अर्धे पृथङ्मन्त्राविति भेदस्त्रयोदशे । तेन ब्रह्मा भगवान् वैश्यश्चैकैकशश्चतू राजा द्विर्द्विर्दूतो देवाः मार्कण्डेयाम्बिके शरार्कमिते । षड्विंशतिश्च ऋषयस्त्रयोदशाध्यायवाक्यानि । श्लोकास्तु सप्तपञ्चाशदधिकशतपञ्चकप्रमिताः । अर्धानि चतुश्चत्वारिंशत्तत्साष्टषट्शतकं । षोडशनवार्णमन्त्रैः पुटितं चेद्यामलोक्तसप्तशती ॥ ८० ॥

कात्यायनीतन्त्रे विभागस्य सामस्त्येनोक्तेरितरतन्त्रयोरपूर्णतयोक्तेर्दर्शसौर्ययोरिव साक्षात्प्रकृतिविकृतिभावः । प्रकृतौ च पञ्चविधा मन्त्रसंख्या त्रिविधा पिण्डसंख्या चेति पूर्वं प्रदर्शितं । इदानीं विकारांशमात्रं प्रदर्शयति । पञ्चमाध्यायस्थैर्या देवीत्यादिभिर्द्वाविंशतिश्लोकैः षट्षष्टिमन्त्रा निष्पादितास्ते यामलपक्षे न सन्ति । विभजनाभावाद्द्वाविंशतिः श्लोकमन्त्रा एव । इति दत्वा तयोर्देवीति श्लोकद्वयं सकृदेव पठनीयं न द्विः । उवाचमन्त्रेषु प्रथमाध्याये वैश्यर्षिद्वयं पञ्चमे स्तोत्रारम्भे देवा ऊचुरित्येकमिति मन्त्रत्रयं नास्तीति संहत्य प्रकृतित एकसप्ततिमन्त्रा न्यूनाः । तत्संपत्त्यर्थं यादेवीति द्वाविंशत्यां विंशतिः श्लोकाः प्राकृतश्लोकमन्त्रेषु वर्धिताः । अवशिष्टद्वयस्य प्रत्याम्नायरूपमेवंप्रभावा तामुपैहीति प्राकृतश्लोकमन्त्रद्वयं

गृहीत्वा चत्वारोऽर्धमन्त्राः कृताः । प्रीतौ स्वस्तव युद्धेन श्लाघ्यस्त्वं मृत्युरावयोरित्यर्धं प्रथमाध्याये । जज्वलुश्चाग्नयः शान्ताः शान्तादिग्जनितस्वना इत्यर्धं । दशमाध्यायान्ते च प्रकृतावविद्यमानमेव निक्षिप्तमिति षड्भिरर्धैः प्राकृतार्धमन्त्रसंख्यापि वर्धिता । एवं षड्विंशतिः । अध्यायवाक्यानां त्रयोदशानां मन्त्रत्वं प्रकृतावविद्यमानं स्वीकृतं । तानि तु इति मार्कण्डेयपुराणे सावर्णिके मन्वन्तरे देवीमाहात्म्ये मधुकैटभवध इत्यादिरूपाण्येव संप्रदायात् । न तु प्रथमोऽध्याय इत्यादिरूपाणि । पुराणे तस्य चतुःसप्ततितमाऽध्यायत्वेन प्रथमादिपदप्रक्षेपे मानाभावात् । देवीमाहात्म्यान्तर्गतत्वेन प्राथम्यादिसमर्थनेपि स्वकल्पितपदप्रक्षेपे मन्त्रत्वहान्यापत्तेः । ऊहप्रापकन्यायाभावात् । एवमूनचत्वारिंशदवशिष्टद्वात्रिंशत्संख्यापूर्त्यर्थं नवार्णमन्त्र एव पुनः पुनरावृत्त्या शरणीकृतः । अप्राकृतार्धद्वयप्रयुक्तैकश्लोकः । प्राकृतश्लोकपिण्डसंख्यायामभिवृद्धः अवशिष्टार्धविशेषनिर्धारणादिकं प्रकृतिवदेवेत्यर्थः । साष्टषष्टिषट्शतकमित्येतावन्मात्रं मकारादिनुकारान्तमन्वंतरगतमन्यत्तु बहिष्ठादानेयमिति प्रकृतितो गौणोयं वैकृतो विभाग इति ध्वननाय पार्थक्येन तावन्मात्रं समुदायीकृत्य प्रदर्शितं । किंच नमो देव्या इति श्लोकपञ्चके कस्यापि त्रयस्यार्धीकरणसंभवान्नारायणीस्तुतौ सर्वतःपाणिपादान्त इति श्लोकस्य तैस्तैः पठ्यमानस्य निवेशसंभवान्न्यायविरोधाभावेनानध्यवसाये दोषः । निश्चायकस्पष्टतन्त्रवचनादर्शनात् । संप्रदायपारम्पर्यस्योच्छिन्नकल्पत्वाच्च पुनः प्राकृत एव मन्त्रविभागे निष्कम्पप्रवृत्तिर्युक्तेति । इति गुप्तवत्यां यामलतन्त्रोक्तमन्त्रविभागनिष्कर्षः ॥ ॥

---

## अथ तन्त्रस्था चतुःश्लोकी ।

ब्रह्मैको भगवानेको मार्कण्डेयास्तु मार्गणाः । दूतवैश्यौ पुनर्द्वौ द्वौ राजोवाचेति शाखिनः । देवाः पञ्चर्षयस्त्रिंशद्देव्युवाचेति भास्कराः । श्लोकाश्चतुरशीतिस्तु तथा पञ्चशतान्यपि । अर्धानि सप्त च द्वेत्र अध्यायास्तु त्रयोदश । पदानि पूर्वपदयोस्तथा षोडश षोडश । तानि श्वेताननादीनि सत्यन्तानीति षोडश ॥ एते मिलित्वा मन्त्राः स्युः सप्तशत्यभिधानकाः । इति । शाखिनो वेदाश्चत्वारः सप्त च द्वे च नवेवेत्यर्थः । अयमपि पक्षः शतश्लोक्या निष्कृष्य पञ्चदशभिः श्लोकैः संगृह्योक्तः ॥

अथ तन्त्रान्तरे नेष्टौ पुनरुक्तत्रिपान्मनू । एकोनत्रिंशदूनानि मन्त्रार्थेष्वथ वाञ्मनौ । पञ्चाधिकाः सप्तचत्वारिंशत् श्लोकमनुष्वपि । आद्यन्तयोर्वैकृतिकरहस्यं पठितं द्विशः । श्वेताननादिसत्यन्तनामषोडशकं पठेत् । सार्धा दशश्लोकाः पिण्डेऽध्यायमन्त्रादि पूर्ववत् । प्रकृतितो द्वौ षट्षष्टिरूनत्रिंशच्चेति मिलित्वा सप्तनवतिर्मन्त्रा न्यूनाः । तत्प्रयुक्ता द्वाविंशतिः सार्धचतुर्दश चेति श्लोका लब्धाः सार्धदशश्लोका अप्राकृता निक्षिप्ता इति सप्तचत्वारिंशत् श्लोकमन्त्राः । पञ्चशत्युत्तरसप्तत्रिंशद्रूपप्राकृतश्लोकमन्त्रसंख्यायां वर्धिताः ते च षोडशनाम्नां द्वैगुण्येनाध्यायमन्त्रत्रयोदशकेनोवाचमन्त्रपञ्चकेन च वर्धितेन मिलिताः सप्तनवतिः संपद्यन्ते । नवार्धप्रयुक्तसार्धश्लोकचतुष्टयस्य च योगेन श्लोकपिण्डसंख्या पञ्चशतानि सार्धाष्टाशीतिश्च भवन्तीति प्राकृतपिण्डसंख्यातः सार्धदशकमपि वृद्धं भवतीत्यर्थः ॥

एतदेवाध्यायभेदेन व्यवस्थापयितुमाह । तथाहि प्रथमे सोऽचिन्तयदित्यर्धमन्त्रकः । अन्येऽष्टसप्ततिः श्लोकमन्त्रा एव नवाधिकाः । प्रीतौ स्व इति योगेन श्लोक आवां जहीत्यपि । द्वितीये सप्तमश्लोकात्परतो वाग्यषेर्मता । चतुर्थप्रथमश्लोकात्परतो देववागपि । म्रियतां त्रिदशा इत्यस्योत्तरार्धे ददाम्यहं । ततः कर्तव्यमित्यर्धं वृद्धयेर्धं यथास्थितं । पञ्चमे धृतिपुष्टिभ्यां द्वौ श्लोकावधिकौ मनू । भक्ष्यमाणास्त्वया चोग्रा इत्यर्धमनुरष्टमे । तत्पश्चाद्दपिवाक्योक्ताः श्लोकाः सर्वे ततः परे । अध्याये दशमे श्लोकत्रयोत्तरमृषेर्वचः । तत्रापि सेत्यर्धमेव जज्वलुश्चार्धमंत्र न । एकादशे तु प्रथमश्लोकान्ते देववाग् भवेत् । द्वाविंशात्सर्वतःपाणिपादेति श्लोककोऽधिकः । शाकम्भरीति विख्यातिमित्यर्धात्मैव मन्त्रकः । द्वादशे द्वावर्धमन्त्रौ व्यवधानेन संस्थितौ । सर्वं ममैतदित्येको निशुम्भे च महापरः । एतत्ते कथितं भूपेत्यर्धमन्त्रस्त्रयोदशे । इत्थं त्रयोदशाध्यायेष्वर्धमन्त्रा नवैव हि । श्लोक( वृद्धं )षट्कं यथासंप्रदायमन्विष्य निक्षिपेत् ॥ ६३ ॥

चतुर्थाध्याये म्रियतामित्यर्धस्योत्तरं । ददाम्यहमतिप्रीत्या स्तवैरेभिः सुपूजिता । कर्तव्यमपरं यच्च दुष्करं तन्निवेद्यतां । इत्येकः श्लोकः । पञ्चमे लक्ष्मीरूपेणेत्यस्योत्तरं धृतिरूपेणेति तुष्टिरूपेणेत्यस्योत्तरं पुष्टिरूपेणेति च द्वौ श्लोकौ । एकादशे सर्वतःपाणीपादान्ते सर्वतोक्षिशिरोमुखे । सर्वतःश्रवणघ्राणे नारायणि नमोऽस्तु ते । इत्येक इति चत्वारः श्लोका बहुसंवादानिक्षेप्या एव । प्रीतौ स्व इत्यर्धं जज्वलुश्चेत्यर्धं चेति द्वयमपि यद्यपि बहुसंवादेव तथापि तयोराद्यमेव निक्षेप्यं । न द्वितीयं नवैवार्धानीति । तथाहि प्रकृतावष्टमदशमैकादशत्रयोदशाध्यायगतश्लोकसंख्यानामेव सार्धत्वाच्चत्वार्यर्धान्यनयोद्यानि । तथा प्रथमे सोऽचिन्तयदित्येकमावां जहीत्यन्यदिति द्वे । चतुर्थे म्रियतां वृद्धयेऽस्मदिति द्वे । द्वादशे सर्वं ममैतन्निशुम्भे चेति द्वे । इत्येवं षडर्धान्यर्धान्तरेण संपर्काभावादव्यवहितश्लोकमन्त्रावयवेन मेलने बहूनां मन्त्राणां वाक्यलक्षणभङ्गापत्तेः कतिपयश्लोकगर्भपूर्वाचमन्त्रप्रक्षेपापत्तेश्चानयनोद्यान्येवेति दशानामावश्यकत्वापत्तिः । एतद्द्योतनायैव व्यवधानेन संस्थिताविसेकत्रो-

क्तमपि विशेषणं योग्यतया सर्वार्थान्वयि । अतः प्रीतौ इत्यस्याजहीत्येतत्समीपे पाठे पतितयोरान्तरवाक्यरूपयोर्महा-वाक्यरूपैकमन्त्रत्वसंभवात् । तथा स्वीकारेण नवार्धवत्त्वमुपपाद्यं । इतरार्धानि तु प्रथमाध्याये द्वाविंशतिस्त्रयोदशे षडि-त्यष्टाविंशतिरवशिष्यन्ते । तानि परस्पराव्यवधानेन चतुर्दशयुग्मरूपाण्येव संपद्यन्त इति श्लोकमन्त्रेष्वेव तन्निवेश इति स्थितिः ॥

अत एवाशयेन जज्वलुश्चार्धमन्त्रतेत्युक्तं । एवं चावशिष्टाः षट्श्लोकास्तत्र तत्र दृश्यमाना बहुशोऽस्माभिः पूर्वं लिखिता अपि विसंवादभूयस्त्वादग्रे निर्णयतया संप्रदायलाभोत्तरमेव विश्वसनीया इत्याशयेन श्लोकषट्कं यथासंप्रदायमन्विष्येत्युक्तं । एतेनास्मिन्पक्षेप्यनध्यवसायापनयेन प्रकृतिपक्ष एव निष्कम्पप्रवृत्तिर्युक्तेति । किंच कर्तव्यमपरं यच्चेत्यर्धस्यापि क्वचिद्देशे पाठाभावदर्शनाद्ध्रियतामित्यर्धस्य ददाम्यहमित्यर्धान्तरयोजनेन श्लोकत्वात्तावताप्यर्धनवकोपपत्तेरनध्यवसाय एवेति ध्वनितं । अत एवोवाचमन्त्रेषु वरप्रार्थनारम्भस्थदेवोक्तिद्वयमेव स्वीकृत्य तृतीयादेव प्रथमाध्याये चरममृषिं प्रथमवैश्यं च परित्यज्य द्वितीयाष्टमदशमाध्यायेष्वधिकत्वेन तन्त्रान्तरोक्तमृषिवाक्यं मन्त्रत्रयं स्वीकर्तुं न्याय्यमपि प्रत्यक्षवचनविरोधा-त्तन्त्रद्वयसांकर्येण कल्पितपक्षान्तरस्य समञ्जसस्याप्यविश्वसनीयत्वाच्च त्यक्तव्यमेवेत्यपि ध्वनितं ॥

वचनेन न्यायानामाभासीकरणादिति । यद्यल्पसंवादेनैव षडपि श्लोका निर्धार्यास्तदा पञ्चमेऽध्याये बुद्धिरूपेणेति मन्त्रात्परतो द्वौ मन्त्रौ स्फूर्तिमेधापदघटितौ योज्यौ । एवं सप्तमे उत्थाय च महासिंहमिति श्लोकोत्तरमेकः श्लोकः । छिन्ने शिरसि दैत्येन्द्रश्चक्रे नादं सुभैरवं । तेन नादेन महता त्रासितं भुवनत्रयमिति । अष्टमेऽध्याये । योद्धुमभ्याययौ क्रुद्धो रक्तबीजो महासुरः इत्यस्योत्तरं भागिनेयो महावीर्यस्तयोः शुम्भनिशुम्भयोः । क्रोधवत्याः सुतो ज्येष्ठो महाबलप-राक्रमः । इति एकः श्लोकः ॥

एकादशेऽध्याये नारायणीस्तुतौ द्वौ श्लोकौ । दंष्ट्राकरालवदना इति श्लोकोत्तरं । कालरात्रिस्वरूपेण त्रैलोक्यमथनोद्यमे । महाकालि महामाये नारायणि नमोस्तुते । महालक्ष्मी शिवे शान्ते सर्वसिद्धे पराजिते । महारात्रि महावीर्ये नारायणि नमोस्तुते । इति । एतान् षट्श्लोकान् क्वचिद्देशे कैश्चिदादृतत्वाद्वा संख्यापूरणाय गृह्णीयादित्याह द्वाभ्यां । अथवा पञ्चमे स्फूर्तिमेधे बुद्धेः परौ मनू सप्तमेप्यथ मुण्डात्प्राक् छिन्ने शिरसि इति । रक्तबिन्दुर्यदेति प्राग् भागिनेयो महाष्टमे । कालरा-त्रिमहालक्ष्म्यौ विंशादेकादशे परौ ॥

अथ समुदितसंख्यामाह । विधिभगवन्तौ दूतविशौ देवमृकण्डुजौ शशिद्विशराः । नृपदेव्यृषयोऽप्यर्कत्रिंशत्संख्यास्त्रयो-दशाध्यायाः ॥ ९६ ॥ श्लोकाः स्युः पञ्चशतानि चतुराशीतिर्नवार्धानि । नाम्नां षोडशभिः संपुटिता तन्त्रान्तरोक्तसप्त-शती ॥ ९७ ॥

अथ संग्रह एवावशिष्टाः षट्श्लोकः । आसु तु तिसृषु प्रथमा प्राच्योदीच्यप्रतीच्यसूरिमता । दक्षिणदेश्यैरन्ये आदृतदेश्ये विलुप्तदेश्ये च ॥ ९८ ॥ एवं वाक्यं मन्त्रोऽध्याहृत्यानुषक्तिभिः सुयोज्यापि । न पुनर्मन्त्रान्तरगतपदसाकाङ्क्षो विना वचनं ॥ ९९ ॥ इतिमत्वैष परिश्रम इह रचितो मन्त्रलक्षणानुसृतः । तदिमं विज्ञाय ज्ञा अज्ञाकलितं विभागमुज्झन्तु । इति मन्त्रपरिच्छेदो भास्करसंख्यावदात्मनैव कृतः । देव्युक्तपरिच्छेदे भास्करसंख्यावदात्मनैव यतः ॥ १०१ ॥ चण्डिस्तववि-भागांशे बालोप्युत्कण्ठितो यदि । स्यादनेन निबन्धेन शतश्लोकेन पण्डितः ॥१०२॥ इति श्रीधीरगम्भीररायसोमसुतः सुतः । भारत्यधाच्छतश्लोकीं काशीस्थो बह्वृचोग्निचित् ॥ १०३ ॥ आदृतदेश्ये इत्यनयोरीषदपरिसमाप्तौ प्रत्ययः । विलुप्तदेश्ये किं-चिदूनो विशेषलोप इत्यल्पादरस्तयोरित्यर्थः । आज्ञाकलितं उक्तमन्त्रस्वरूपानभिज्ञकृतकारिकोक्तं देव्युक्तिपदेन देवीकर्मको-क्तिरूपश्चण्डीस्तवो देवीकर्तृकोक्तिप्रतिपादको देव्युवाचेति मन्त्रश्च श्लिष्टौ । उभयोरपि मन्त्रत्वादेकत्र परिच्छेदपदेन विभजन-परा शतश्लोकी । अन्यत्रेयत्तारूपसंख्यया परिच्छेदः । भास्करेत्यादेरेकत्र तन्नामकविद्वदात्मा । अन्यत्र द्वादशसंख्याक-भेदः । एवकारस्यैकत्राज्ञकृतविभागस्यासारत्वमन्यत्र देव्युवाचेति भास्करा इति तन्त्रान्तरोक्तवचनार्थे सर्वेषामैककण्ठ्येन विसंवादराहित्यं च ध्वन्यं । बह्वृच इति विशेषणेन काण्वबुद्धिसिद्धवदापातग्राहिबुद्धिमथितेयं भवतीति ध्वनितं । इति गुप्त-वत्यां तन्त्रान्तरोक्तमन्त्रविभागनिष्कर्षः ।

# अथ रहस्यत्रयम् ।

## प्राधानिकरहस्यम् ।

अस्य श्रीरहस्यत्रयस्य ब्रह्माऽच्युतरुद्रा ऋषयः । नवदुर्गा देवता ॥ अनुष्टुप् छन्दः महालक्ष्मीर्बीजं । श्रीः शक्तिः । अभीप्सितफलसिद्ध्यर्थे जपे विनियोगः ।

राजोवाच ।

**भगवन्नवतारा मे चण्डिकायास्त्वयोदिताः । एतेषां प्रकृतिं ब्रह्मन्प्रधानं वक्तुमर्हसि ॥ १ ॥**

**आराध्यं यन्मया देव्याः स्वरूपं येन तद्द्विज । विधिना ब्रूहि सकलं यथावत्प्रणतस्य मे ॥ २ ॥**

( १ गुप्तवती ) अथ रहस्यव्याख्या ॥ सुमेधसं प्रति राज्ञः प्रश्नः । भगवन्निति उपास्यदेवताया मुख्यारूपमुपासनेति-कर्तव्यतां च वदेत्यर्थः ॥ १ ॥ २ ॥

ऋषिरुवाच ।

**इदं रहस्यं परममनाख्येयं प्रचक्षते । भक्तोसीति न मे किंचित्तवावाच्यं नराधिप ॥ ३ ॥**

( १ गुप्तवती ) भक्तोसीति । देव्या गुरोश्चेत्यर्थः ॥ ग्रन्थारम्भे वर्णितं धर्मरूपं ब्रह्मैव चण्डिकापदवाच्यमुपास्यस्वरूपं तस्याश्च व्यष्टिरूपाणि त्रीणि महाकाली महालक्ष्मीर्महासरस्वती । तेन समष्टिरूपैव चण्डिका तुरीया धर्मिरूपा निर्गुणा किन्तु पञ्चमीति स्थितिः । आसु व्यष्टित्रयकथनेनैव तदभिन्नायाः समष्टेस्तुर्यायाः कथितप्रायत्वात्तामनिर्दिश्यैव व्यष्टिष्वन्यतममेव तुरीयासमानयोगक्षेमतयोत्तमत्वेन त्रिगुणेति निराकारेत्यलक्ष्येत्यवतारत्रयान्तर्गतेति च निर्दिशन् शुद्धसत्त्वस्वरूपां सगुणातुर्यामपहृत्य त्रयान्यतमात एवेतरे द्वे निःसृते इत्यादिरीत्या सृष्टिं कथयितुमारभते ॥ ३ ॥

**सर्वस्याद्या महालक्ष्मीस्त्रिगुणा परमेश्वरी । लक्ष्यालक्ष्यस्वरूपा सा व्याप्य कृत्स्नं व्यवस्थिता ॥ ४ ॥**

( १ गुप्तवती ) सर्वस्याद्येत्यादिना । त्रिगुणा सात्विकराजसतामसमूर्तित्रयसमष्टिरेव सर्वप्रपञ्चादिकारणं । केचित्तु महालक्ष्मीरिति व्यष्टित्रयान्यतमा अपि तु तुरीयायाश्चण्डिकाया एव नामान्तरं । 'सदाशिवाङ्कमारूढा शक्तिरित्याह्वया शिवा । महालक्ष्मीरिति ख्याता सर्वदेवगुणान्विता' इति शिवपुराणादित्याहुः । एतत् । न यज्ञेष्वन्तर्गतमहालक्ष्म्याः पार्थक्येनेह रजोभूयिष्ठतया नामदशकेन चेतरयोरिव कथनाभावात्तदर्थमध्याहारादिक्लेशस्तुल्य एव । 'लक्ष्या' सगुणा 'अलक्ष्या' निर्गुणा यस्या ग्रहणं नोपलक्ष्यते तस्मादुच्यतेऽलक्ष्येति । देव्यथर्वशीर्षश्रुतेः स्वाविषयकज्ञानस्वरूपेति तदर्थः । वृत्तिज्ञाननिरासाय स्वाविषयकेति तेषां घटमहं जानामीत्येवकारात्, ब्रह्मणश्चरमवृत्तिव्याप्यत्वेऽपि फलव्याप्यत्वानङ्गीकारादिति भावः ॥ ४ ॥

**मातुलिङ्गं गदां खेटं पानपात्रं च बिभ्रती । नागं लिङ्गं च योनिं च बिभ्रती नृप मूर्धनि ॥ ५ ॥**

**तप्तकाञ्चनवर्णाभा तप्तकाञ्चनभूषणा । शून्यं तदखिलं स्वेन पूरयामास तेजसा ॥ ६ ॥**

**शून्यं तदखिलं लोकं विलोक्य परमेश्वरी । बभार रूपमपरं तमसा केवलेन हि ॥ ७ ॥**

**सा भिन्नाञ्जनसङ्काशा दंष्ट्राञ्चितवरानना । विशाललोचना नारी बभूव तनुमध्यमा ॥ ८ ॥**

( १ गुप्तवती ) लक्ष्यां निर्दिशति । मातुलिङ्गमिति । बीजपूराख्यं फलमित्यर्थः । 'खेटं' चर्म 'बिभ्रती' करैरिति शेषः । नागादित्रयं मूर्धनि बिभ्रती, 'लिङ्गम्' अत्र पुंचिह्नं रुद्रस्य 'योनिः' स्त्रीचिह्नं विष्णोः, स्त्रीपुंसात्मकत्वं च 'विष्णुर्योनिं कल्पयत्विति श्रुतेः' परिशेषान्नागो ब्रह्मणश्चिह्नं स्यात् । तेनास्याः ब्रह्मविष्णुरुद्रात्मकत्वं स्त्रीपुंसात्मकत्वं च प्रदर्शितं भवति ॥५॥ अलक्ष्यामाह । शून्यमिति । प्रलयकाले स्थूलरूपाभावेन संस्कारात्मनावस्थितं जगत् स्वेन तेजसा चिन्मात्ररूपेण या व्याप्तवतीत्यर्थः ॥ ६ ॥ महालक्ष्मीरेव महाकाल्यात्मकत्वेनापि परिणतेत्याह । शून्यमिति ॥ ७ ॥ ८ ॥

**खड्गपात्रशिरःखेटैरलंकृतचतुर्भुजा । कबन्धहारं शिरसा बिभ्राणा शिरसां स्रजम् ॥ ९ ॥**

**तां प्रोवाच महालक्ष्मीस्तामसीं प्रमदोत्तमाम् । ददामि तव नामानि यानि कर्माणि तानि ते ॥ १० ॥**

महामाया महाकाली महामारी क्षुधा तृषा । निद्रा तृष्णा चैकवीरा कालरात्रिर्दुरत्यया ॥११॥

( १ गुप्तवती ) 'शिरः' दण्डारोपितग्रीवाभागं खट्वाङ्गनामकं 'कवन्धाः' शिरोहीनदेहाः उरसेति शेषः । उरसि कवन्ध मालां शिरसि शिरोमालां च दधतीत्यर्थः । ता प्रोवाचेति तु प्रथमाद्वितीययोर्व्यत्यासेन तामसीवाक्यमेतदिति केचित् । स तु वृथा प्रयासः, तदुत्तरार्धस्य नाम कर्म च मे मातर्देहि तुभ्यं नमो नम इत्यस्य बहुषु पुस्तकेषु दर्शनेन प्रत्युताऽसमञ्जसता च । एतेन विभक्तिव्यत्यासेनैव केषाञ्चित्पाठोऽपि नादेयः । सात्विकीप्रश्नमन्तरेणैतस्यैव नामप्रधानस्योत्तरत कथनाच्च ॥ ९ ॥ १० ॥ ११ ॥

इमानि तव नामानि प्रतिपाद्यानि कर्मभिः । एभिः कर्माणि ते ज्ञात्वा योऽधीते सोऽश्नुते सुखम् १२

तामित्युक्त्वा महालक्ष्मीः स्वरूपमपरं नृप । सत्त्वाख्येनातिशुद्धेन गुणेनेन्दुप्रभं दधौ ॥ १३ ॥

अक्षमालाङ्कुशधरा वीणापुस्तकधारिणी । सा बभूव वरा नारी नामान्यस्यै च सा ददौ ॥१४॥

( १ गुप्तवती ) माहामायादिनामदशकस्यान्वर्थकत्वमाह इमानीति । उक्तंच कालिकापुराणे । 'गर्भान्तर्ज्ञानसम्पन्नं प्रेरितं सूतिमारुतैः । उत्पन्नं ज्ञानरहितं कुरुते या निरन्तरम् । पूर्वातिपूर्वसंस्कारसंघातेन नियोज्य च । अहरादौ ततो मोहममत्वज्ञानसंशयम् । क्रोधोपरोधलोभेषु क्षिप्त्वा क्षिप्त्वा पुनः पुनः । पश्चात्कामेन संयोज्य चिन्तायुक्तमहर्निशम् । अमोदयुक्तं व्यसनासक्तं जन्तुं करोति या । महामायेति संप्रोक्ता तेन सा जगदीश्वरी' इति । एवं देवीपुराणे नाम निर्वचनाध्याये अन्यत्र चेतरनामनिर्वचनानि द्रष्टव्यानि । ईदृशार्थज्ञानपुरःसरं नामकीर्तनं फलाय विद्यते एभिरिति ॥ १२ ॥ महासरस्वतीत्वेनापि सैव परिणतेत्याह । तामिति । इमानि तवेति श्लोक एतन्नामदशकेऽपि योज्यः ॥ १३ ॥ १४ ॥

महाविद्या महावाणी भारती वाक् सरस्वती । आर्या ब्राह्मी महाधेनुर्वेदगर्भा सुरेश्वरी ॥१५॥

अथोवाच महालक्ष्मीर्महाकालीं सरस्वतीम् । युवां जनयतां देव्यौ मिथुने स्वानुरूपतः ॥ १६ ॥

इत्युक्त्वा ते महालक्ष्मीः ससर्ज मिथुनं स्वयम् । हिरण्यगर्भौ रुचिरौ स्त्रीपुंसौ कमलासनौ १७

ब्रह्मन् विधे विरञ्चेति धातरित्याह तं नरम् । श्रीः पद्मे कमले लक्ष्मीत्याह माता स्त्रियं च ताम्१८

महाकाली भारती च मिथुने सृजतिस्म ह । एतयोरपि रूपाणी नामानि च वदामि ते ॥ १९ ॥

नीलकण्ठं रक्तबाहुं श्वेताङ्गं चन्द्रशेखरम् । जनयामास पुरुषं महाकाली सितां स्त्रियम् ॥ २० ॥

( १ गुप्तवती ) ॥ १५ ॥ मिथुने पुत्रः पुत्री चेति भ्रातृभगिनीयुगले ॥ १६ ॥ अत्र स्वयमिति पदं स्वकीयमेव श्रीनामकं व्यष्ट्यन्तर्गतं रूपान्तरं धृत्वेत्यर्थकमिति केचिद् व्याचक्षते, महालक्ष्मीरिति व्यष्ट्या एव नामेति च वदतामस्माकं तु नायं क्लेशः ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥

स रुद्रः शंकरः स्थाणुः कपर्दी च त्रिलोचनः । त्रयी विद्या कामधेनुः सा स्त्री भाषाक्षरा स्वरा२१

सरस्वतीं स्त्रियं गौरीं कृष्णं च पुरुषं नृप । जनयामास नामानि तयोरपि वदामि ते ॥ २२ ॥

विष्णुः कृष्णो हृषीकेशो वासुदेवो जनार्दनः । उमा गौरी सती चण्डी सुन्दरी सुभगा शिवा ॥

एवं युवतयः सद्यः पुरुषत्वं प्रपेदिरे । चक्षुष्मन्तोऽनुपश्यन्ति नेतरेऽतद्विदो जनाः ॥ २४ ॥

( १ गुप्तवती ) त्रयीविद्या शास्त्रीया वेत्येकैकं भिन्नमेव वा नामद्वययुगम् ॥ २१ ॥ २२ ॥ २३ ॥ एवं मिथुनत्रयं सृष्ट्वा तेषां विवाहाय कन्यादातृदम्पत्यपेक्षणात् स्वासां पुरुषान्तराभावात् स्वयमेव द्विद्विरूपतां धृतवत्य इत्याह । एवमिति । पुरुषत्वं महालक्ष्मीर्ब्रह्मत्वं महाकालीरुद्रत्वं महासरस्वती विष्णुत्वं प्रपेदे इत्यर्थः । आसां हि युवतित्वे सत्येव पुरुषत्वं न तु व्यक्तिभेदेनोभयं वाप्यर्धनारीश्वरवदवच्छेदेनाव्याप्यवृत्ति किन्तु शरावस्थजलातपन्यायेनोभयमपि व्याप्यवृत्तीति भावः । तदिदं रूपं चर्मचक्षुषामदृश्यमित्याह । चक्षुष्मन्त इति । ज्ञानस्यैव चक्षुर्गुणपौष्कल्येन मुख्यचक्षुष्ट्वं नवार्णस्येति भावः । अतद्विद इति छेदः ॥ २४ ॥

ब्रह्मणे प्रददौ पत्नीं महालक्ष्मीर्नृप त्रयीम् । रुद्राय गौरीं वरदां वासुदेवाय च श्रियम् ॥ २५ ॥
स्वरया सह सम्भूय विरिञ्चोऽण्डमजीजनत् । बिभेद भगवान् रुद्रस्तद्गौर्या सह वीर्यवान् ॥२६॥
अण्डमध्ये प्रधानादिकार्यजातमभून्नृप । महाभूतात्मकं सर्वं जगत् स्थावरजङ्गमम् ॥ २७ ॥
पुपोष पालयामास तल्लक्ष्म्या सह केशवः । महालक्ष्मीरेव मता राजन् सर्वेश्वरेश्वरी ॥ २८ ॥

(१ गुप्तवती) ॥ २५ ॥ अवशिष्टां सृष्टिमाह । स्वरयेति । त्रयीविद्यया सङ्गम्येत्यर्थः । तत् ब्रह्माण्डप्रधानादिमूलप्रकृतिमहदहङ्कारादिक्रमेण सांख्यतन्त्रोक्ततत्त्वसमूहम् ॥ २६ ॥ २७ ॥ महालक्ष्मीरिति निराकारसाकारद्वयमस्या एव नान्ययोः । तेन व्यष्टित्रयान्तर्गतमहालक्ष्म्यास्तमःसत्त्वोपसर्जनकरजोगुणप्राधान्यात् तुरीयाया गुणत्रयसाम्यरूपत्वेन वा रजस्तमोऽसङ्कलितशुद्धसत्त्वरूपत्वेन पुराणान्तरसिद्धत्वेऽपि प्रकृतेः रजःप्राधान्येन तदविरोधिगुणद्वयवत्तया सगुणनिर्गुणरूपद्वयवत्तया च महालक्ष्मीरुपास्येति निगर्वः । अतएव व्यष्टिप्राये महालक्ष्मीनामदशकस्य कीर्तनाभावप्रयुक्तामाशङ्कां परिहर्तुमाह । सैवेति । तस्या एवान्याभ्यो नामदातृत्वेनानवस्थापत्त्या दात्र्यै दात्रन्तराभाव एवकारार्थः ॥ २८ ॥

निराकारा च साकारा सैव नानाभिधानभृत् । नामान्तरैर्निरूप्यैषा नाम्ना नान्येन केनचित् २९

इति प्राधानिकरहस्यम् ।

(१ गुप्तवती) नामान्तरैरन्ययोर्व्यष्ट्योर्नामभिरेव, अस्या एव तुरीयात्वेन स्वतन्त्रनामानपेक्षणादिति भावः । तस्मात् पार्थक्येन तुरीयामपहृत्य व्यष्टित्रयमध्यगा महालक्ष्मीरेव सर्वोत्तमेत्येतदुपासकाभिमान इति ग्रन्थस्य स्वारसिकाशयः । अतएव सप्तशत्यां चत्वारि स्तोत्राणि, तेषु देवीसूक्तं महाकाल्यादित्रितयाभेदेन तुर्यायाः स्तवनं, इतराणि त्रीणि क्रमेण गुणिमूर्तित्रयपराणीति विवेकः । परे तु तुर्यैवोपास्या व्यष्टयस्तिस्रोऽप्यवमा एवेति वर्णयन्तोऽमुं ग्रन्थं क्लेशेन लापयन्तो महाकालीमहालक्ष्मीमहासरस्वत्यश्चरित्रत्रयस्य क्रमाद् देवतास्तुर्या तु नवार्णस्य देवतेति व्यवस्थापयन्ति, एतन्मते सप्तशत्या व्यष्टय एवोपास्या न तु तुर्येति पर्यवस्यति चेत्तत्र पाञ्चरात्रलक्ष्मीतन्त्रे परदेवताया इन्द्रस्य च संवादे महालक्ष्मीमेवादौ पश्चान्महाकाल्यादिभ्रामर्यन्ता इति क्रमेण दशावताराः नवोक्तानेव कथयित्वा सर्वान्ते यद्वर्णितम् 'एतासां परमा प्रोक्ता कूटस्था सा महीयसी । महालक्ष्मीर्महाभागा प्रकृतिः परमेश्वरी । अमुष्यास्तुतये दृष्टं ब्रह्माद्यैः सकलैः सुरैः । नमो देव्यादिकं सूक्तं सर्वकामफलप्रदम् । इमां देवीं स्तुवन्नित्यं स्तोत्रेणानेन मामिह । क्लेशानतीत्य सकलानैश्वर्यं महदश्नुते । अमुष्याः सावतारायाः महालक्ष्म्या ममानघ । जन्मानि चरितैः सार्धं स्तोत्रवैभववादिभिः । कथितानि पुरा शक्र वसिष्ठेन महात्मना । स्वारोचिषेन्तरे राज्ञे सुरथाय महात्मने । समाधये च वैश्याय प्रणतायावसीदते' इत्यादिकं तद्विरोधात् महालक्ष्म्या व्यष्ट्यन्तर्गताया एव कूटस्थता स्वाभेदो देवीसूक्तस्य स्वैकपरता व्यष्टिद्वारा चरित्रत्रयस्य स्वपरतेत्यर्थानां तुर्ययैव स्पष्टीकरणात्, तस्मात्सप्तशती सर्वापि महालक्ष्म्या अभेदवेषेण तुर्यापरेव, अतएवैकेन वा मध्यमेनेति मध्यमचरित्रमात्रस्य चरित्रत्रयसमष्ट्या विकल्पः सङ्गच्छत इति दिक् ॥२९॥ इति गुप्तवत्यां प्राधानिकरहस्यव्याख्या ।

---

## वैकृतिकरहस्यम् ।

ऋषिरुवाच ।

त्रिगुणा तामसी देवी सात्त्विकी या त्रिधोदिता । सा शर्वा चण्डिका दुर्गा भद्रा भगवतीर्यते ॥१॥
योगनिद्रा हरेरुक्ता महाकाली तमोगुणा । मधुकैटभनाशार्थं यां तुष्टावाम्बुजासनः ॥ २ ॥
दशवक्त्रा दशभुजा दशपादाञ्जनप्रभा । विशालया राजमाना त्रिंशल्लोचनमालया ॥ ३ ॥
स्फुरद्दशनदंष्ट्राभा भीमरूपापि भूमिप । रूपसौभाग्यकान्तीनां सा प्रतिष्ठा महाश्रियाम् ॥ ४ ॥
खड्गबाणगदाशूलशङ्खचक्रभुशुण्डिभृत् । परिघं कार्मुकं शीर्षं निश्चोतद्रुधिरं दधौ ॥ ५ ॥
एषा सा वैष्णवी माया महाकाली दुरत्यया । आराधिता वशीकुर्यात्पूजाकर्तुश्चराचरम् ॥ ६ ॥

(१ गुप्तवती) श्रीः । त्रिगुणेति तमःसत्त्वोभयोपसर्जनकरजोगुणप्रधानेत्यर्थः । शर्वेति पुंयोगाभावान्न ङीषानुगागमौ ॥ १ ॥ महाकाल्याः स्वरूपान्तरमाह । योगनिद्रेति ॥ २ ॥ प्रतिवक्त्रं नेत्रत्रयमभिप्रेत्याह । त्रिंशदिति ॥ ३ ॥ ४ ॥ दक्षिणाधःकरमारभ्य वामाधःकरपर्यन्तं क्रमेणायुधान्याह । खड्गेति । शीर्षं खट्वाङ्गम् ॥ ५ ॥ ६ ॥

सर्वदेवशरीरेभ्यो याविर्भूतामितप्रभा । त्रिगुणा सा महालक्ष्मीः साक्षान्महिषमर्दिनी ॥ ७ ॥
श्वेतानना नीलभुजा सुश्वेतस्तनमण्डला । रक्तमध्या रक्तपादा नीलजङ्घोरुरुन्मदा ॥ ८ ॥
सुचित्रजघना चित्रमाल्याम्बरविभूषणा । चित्रानुलेपना कान्तिरूपसौभाग्यशालिनी ॥ ९ ॥
अष्टादशभुजा पूज्या सा सहस्रभुजा सती । आयुधान्यत्र वक्ष्यन्ते दक्षिणाधःकरक्रमात् ॥१०॥
अक्षमाला च कमलं बाणोऽसिः कुलिशं गदा । चक्रं त्रिशूलं परशुः शङ्खो घण्टा च पाशकः ॥११॥
शक्तिर्दण्डश्चर्म चापं पानपात्रं कमण्डलुः । अलंकृतभुजामेभिरायुधैः कमलासनाम् ॥ १२ ॥
सर्वदेवमयीमीशां महालक्ष्मीमिमां नृप । पूजयेत्सर्वदेवानां सलोकानां प्रभुर्भवेत् ॥ १३ ॥

( १ गुप्तवती ) महालक्ष्म्या रूपान्तरमाह । सर्वदेवेति ॥ ७ ॥ ८ ॥ ९ ॥ सहस्रभुजेति वस्तुतोऽनन्तभुजापीत्यर्थः ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥

गौरीदेहात्समुद्भूता या सत्त्वैकगुणाश्रया । साक्षात् सरस्वती प्रोक्ता शुम्भासुरनिबर्हिणी ॥१४॥
दधौ चाष्टभुजा बाणमुसले शूलचक्रभृत् । शङ्खं घण्टां लाङ्गलं च कार्मुकं वसुधाधिप ॥ १५ ॥
एषा संपूजिता भक्त्या सर्वज्ञत्वं प्रयच्छति । निशुम्भमथनी देवी शुम्भासुरनिबर्हिणी ॥ १६ ॥
इत्युक्तानि स्वरूपाणि मूर्तीनां तव पार्थिव । उपासनं जगन्मातुः पृथगासां निशामय ॥ १७॥
महालक्ष्मीर्यदा पूज्या महाकाली सरस्वती । दक्षिणोत्तरयोः पूज्ये पृष्ठतो मिथुनत्रयम् ॥ १८॥

( १ गुप्तवती ) महासरस्वत्या रूपान्तरमाह । गौरीदेहादिति ॥ १४ ॥ १५ ॥ १६ ॥ प्रथमप्रश्नस्य समाधानमुपसंहरन्नेव द्वितीयप्रश्नोत्तरं प्रतिजानीते । इत्युक्तानीति ॥ १७ ॥ महालक्ष्म्याः पूजामाह । महालक्ष्मीरिति । दक्षिणोत्तरविभागः पूजकानुसारेण ॥ १८ ॥

विरिञ्चिः स्वरया मध्ये रुद्रो गौर्या च दक्षिणे । वामे लक्ष्म्या हृषीकेशः पुरतो देवतात्रयम्॥१९॥
अष्टादशभुजा मध्ये वामे चास्या दशानना । दक्षिणेऽष्टभुजा लक्ष्मीर्महतीति समर्चयेत् ॥ २० ॥
अष्टादशभुजा चैषा यदा पूज्या नराधिप । दशानना चाष्टभुजा दक्षिणोत्तरयोस्तदा ॥ २१ ॥
कालमृत्यू च संपूज्यौ सर्वारिष्टप्रशान्तये । यदा चाष्टभुजा पूज्या शुम्भासुरनिबर्हिणी ॥ २२ ॥

( १ गुप्तवती ) मिथुनत्रयं देशतो व्यवस्थापयति । विरिञ्चिरिति ॥ १९ ॥ अस्या एव स्वरूपान्तरेण पूजाप्रकारमाह । अष्टादशेति । वामदक्षिणविभागो देव्यनुसारेण । अस्या इति विशिष्योक्तेः । दशानना दशभुजाभ्यामेकैकस्या रूपद्वयसत्त्वेऽपि प्रधानदेवताया द्वितीयरूपेण पूजायामन्ययोरपि द्वितीयरूपेणैवाङ्गत्वम् । प्रथमरूपेण पूजायां तु प्रथमरूपेणैवेति । लक्ष्मीर्महतीत्यत्र द्वितीयाविभक्त्यभावः । इतिशब्देन कर्मत्वस्याभिधानात् ॥ २० ॥ इतरयोः स्वातन्त्र्येण पूजायामसाधारणेतिकर्तव्यताया अभावेन त्रितयसाधारणीमेव तामाह । सार्धेन । अष्टादशेति । दक्षिणोत्तरयोरित्युत्तरान्वयि । देवतात्रयस्य द्वितीयस्वरूपेण स्वतन्त्रपूजात्रयेऽपि दक्षिणे काल उत्तरे मृत्युश्चेति देवते पूजनीये इत्यर्थः ॥ २१ ॥ २२ ॥

नवास्याः शक्तयः पूज्यास्तथा रुद्रविनायकौ । नमो देव्या इति स्तोत्रैर्महालक्ष्मीं समर्चयेत्॥२३॥
अवतारत्रयार्चायां स्तोत्रमन्त्रास्तदाश्रयाः । अष्टादशभुजा चैषा पूज्या महिषमर्दिनी ॥ २४ ॥
महालक्ष्मीर्महाकाली सैव प्रोक्ता सरस्वती । ईश्वरी पुण्यपापानां सर्वलोकमहेश्वरी ॥ २५ ॥

( १ गुप्तवती ) अष्टादशभुजायाः स्वतन्त्रपूजायामन्यदप्यङ्गमाह । यदा चेति । नव शक्तयः कवचोक्ताः

शैलपुत्र्यादयः पीठशक्तयो वा । रुद्र इति । दक्षिणोत्तरयोरित्यर्थः । अथ करणमन्त्रानाह । नम इति । नमो देव्या इत्येकेन वा अथर्वशीर्षस्थमन्त्रेण । रौद्रायै इत्यादिस्तोत्रमन्त्रैः सर्वैरपि वा ॥ २३ ॥ अवतारत्रयेति । महाकाली 'त्वं स्वाहा त्वं स्वधा' इति स्तोत्रमन्त्रैर्महालक्ष्मीं 'देव्या यया ततं' इति स्तोत्रमन्त्रैर्महासरस्वतीं 'देवि प्रपन्नार्तिहरे' इति स्तोत्रमन्त्रैरर्चयेदित्यर्थः । इदानीं चण्डीस्तवोपासकानामष्टादशभुजाया मध्यमचरित्रदेवताया महालक्ष्म्या एव पूजनं नित्यं काम्यंच, इतरयोः पूजनं कृताकृतं, महालक्ष्म्या एव समष्टित्वेन तत्पूजयैवान्ययोः पूजितप्रायत्वादिति ध्वननाय विस्तरेण तदेव वर्णयति । अष्टादशेत्यादिना ॥ २४ ॥ २५ ॥

महिषान्तकरी येन पूजिता स जगत्प्रभुः । पूजयेज्जगतां धात्रीं चण्डिकां भक्तवत्सलाम् ॥ २६ ॥
अर्घ्यादिभिरलङ्कारैर्गन्धपुष्पैस्तथाक्षतैः । धूपैर्दीपैश्च नैवेद्यैर्नानाभक्ष्यसमन्वितैः ॥ २७ ॥
रुधिराक्तेन बलिना मांसेन सुरया नृप । प्रणामाचमनीयेन चन्दनेन सुगन्धिना ॥ २८ ॥
सकर्पूरैश्च ताम्बूलैर्भक्तिभावसमन्वितैः । वामभागेऽग्रतो देव्याश्छिन्नशीर्षं महासुरम् ॥ २९ ॥
पूजयेन्महिषं येन प्राप्तं सायुज्यमीशया । दक्षिणे पुरतः सिंहं समग्रं धर्ममीश्वरम् ॥ ३० ॥
वाहनं पूजयेद्देव्या धृतं येन चराचरम् । यः कुर्यात् प्रयतो धीमांस्तस्या एकाग्रमानसः ॥ ३१ ॥

( गुप्तवती ) ॥ २६ ॥ २७ ॥ रुधिराक्तेनेति । ब्राह्मणादिभेदेन बलिव्यवस्था पूर्वमेवोक्ता न प्र(वि)स्मर्तव्या ॥ २८ ॥ २९ ॥ सिंहस्य वाहनात्मकं रूपमाह । समग्रं धर्ममिति । चतुर्दशविद्याविहितकर्मात्मकमित्यर्थः ॥ ३० ॥ यस्तस्याः पूजां कुर्यात्स सिंहं पूजयेदिति पूर्वेणान्वयः ॥ ३१ ॥

ततः कृताञ्जलिर्भूत्वा स्तुवीत चरितैरिमैः । एकेन वा मध्यमेन नैकेनेतरयोरिह ॥ ३२ ॥
चरितार्धं तु न जपेज्जपँश्छिद्रमवाप्नुयात् । प्रदक्षिणा नमस्कारान् कृत्वा मूर्ध्नि कृताञ्जलिः ॥ ३३ ॥
क्षमापयेज्जगद्धात्रीं मुहुर्मुहुरतन्द्रितः । प्रतिश्लोकं च जुहुयात् पायसं तिलसर्पिषा ॥ ३४ ॥

( १ गुप्तवती ) ततः अङ्गदेवतापूजोत्तरं चरित्रत्रयेण समुचितेन वा मध्यमचरित्रमात्रेण वा स्तोत्रचतुष्टयेन वा स्तुवीत । अत्र पूर्वपूर्वासम्भवे सत्युत्तरोत्तरपक्षो व्यवस्थितः ॥ ३२ ॥ ३३ ॥ प्रतिश्लोकमिति । उक्तमन्त्रविभागान्यतमोपलक्षणमिदम् । अत्र केचित् कवचादित्रयस्य रहस्यत्रयस्य च प्रतिश्लोकं होममनुतिष्ठन्ति । तत्र कवचांशे होमो न युक्तः तन्त्रान्तरे निषेधात् । यथा । चण्डीस्तवे प्रतिश्लोकमेकैकाहुतिरिष्यते । रक्षा कवचगैर्मन्त्रैर्होमं तत्र न कारयेत् । मौर्ख्यात् कवचगैर्मन्त्रैः प्रतिश्लोकं जुहोति यः । स्याद्देहपतनं तस्य नरकं च प्रपद्यते । अन्धकाख्यो महादैत्यो दुर्गाहोमपरायणः । कवचाहुतिजात् पापान्महेशेन निपातितः' इत्यादि ॥ ३४ ॥

जुहुयात्स्तोत्रमन्त्रैर्वा चण्डिकायै शुभं हविः । नमोनमःपदैर्देवीं पूजयेत्सुसमाहितः ॥ ३५ ॥
प्रयतः प्राञ्जलिः प्रह्वः प्रणम्यारोप्य चात्मनि । सुचिरं भावयेदीशां चण्डिकां तन्मयो भवेत् ॥ ३६ ॥
एवं यः पूजयेद्भक्त्या प्रत्यहं परमेश्वरीम् । भुक्त्वा कामान् यथाकामं देवीसायुज्यमाप्नुयात् ॥ ३७ ॥
यो न पूजयते नित्यं चण्डिकां भक्तवत्सलाम् । भस्मीकृत्यास्य पुण्यानि निर्दहेत्परमेश्वरी ॥ ३८ ॥
तस्मात् पूजय भूपाल सर्वलोकमहेश्वरीम् । यथोक्तेन विधानेन चण्डिकां सुखमाप्स्यसि ॥ ३९ ॥

इति वैकृतिकरहस्यं समाप्तम् ॥

( १ गुप्तवती ) तावदशक्तस्य पक्षान्तरमाह । जुहुयात् स्तोत्रमन्त्रैर्वेति । अयं होमः प्रकरणात् पूजाङ्गम् ॥ ३५ ॥ ॥ ३६ ॥ अस्याः काम्यत्वनित्यत्वे क्रमेणाह । एवं य इति द्वाभ्या ॥ ३७ ॥ ३८ ॥ उपसंहरति । तस्मादिति ॥ ३९ ॥ इति श्रीगुप्तवत्यां वैकृतिकरहस्यव्याख्या ।

## मूर्तिरहस्यम् ।

### ऋषिरुवाच ।

नन्दा भगवतीनाम या भविष्यति नन्दजा । सा स्तुता पूजिता भक्त्या वशीकुर्याज्जगत्त्रयम् ॥१॥
कनकोत्तमकान्तिः सा सुकान्तिकनकाम्बरा । देवी कनवर्णाभा कनकोत्तमभूषणा ॥ २ ॥
कमलाङ्कुशपाशाब्जैरलंकृतचतुर्भुजा । इन्दिरा कमला लक्ष्मीः सा श्रीरुक्माम्बुजासना ॥ ३ ॥
या रक्तदन्तिकानाम देवी प्रोक्ता मयाऽनघ । तस्याः स्वरूपं वक्ष्यामि शृणु सर्वभयापहम् ॥४॥
रक्ताम्बरा रक्तवर्णा रक्तसर्वाङ्गभूषणा । रक्तायुधा रक्तनेत्रा रक्तकेशातिभीषणा ॥ ५ ॥
रक्ततीक्ष्णनखा रक्तदशना रक्तदन्तिका । पतिं नारीवानुरक्ता देवी भक्तं भजेज्जनम् ॥ ६ ॥

( १ गुप्तवती ) अथ नन्दजादिमूर्तिसप्तकस्योपास्तिं संक्षिप्याह । नन्देत्यादिना । पाशाब्जैरिति अब्जः शङ्खः कमलमेव वा । लक्ष्मीध्याने हस्ताभ्यां पद्मद्वयधारणस्यान्यत्र दर्शनात् ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ पतिं नारीवेत्यनुरागमत्रांशे दृष्टान्तः ॥ ६ ॥

वसुधेव विशाला सा सुमेरुयुगलस्तनी । दीर्घौ लम्बावतिस्थूलौ तावतीव मनोहरौ ॥ ७ ॥
कर्कशावतिकान्तौ तौ सर्वानन्दपयोनिधी । भक्तान् संपाययेद्देवी सर्वकामदुघौ स्तनौ ॥ ८ ॥
खड्गं पात्रं च मुशलं लाङ्गलं च बिभर्ति सा । आख्याता रक्तचामुण्डा देवी योगेश्वरीति च ॥ ९ ॥
अनया व्याप्तमखिलं जगत् स्थावरजङ्गमम् । इमां यः पूजयेद्भक्त्या स व्याप्नोति चराचरम् ॥१०॥
अधीते य इमं नित्यं रक्तदन्त्यावपुस्तवम् । तं सा परिचरेद्देवी पतिं प्रियमिवाङ्गना ॥ ११ ॥
शाकम्भरी नीलवर्णा नीलोत्पलविलोचना । गम्भीरनाभिस्त्रिवलीविभूषिततनूदरी ॥ १२ ॥
सुकर्कशसमोत्तुङ्गवृत्तपीनघनस्तनी । मुष्टिं शिलीमुखापूर्णं कमलं कमलालया ॥ १३ ॥

( १ गुप्तवती ) ७ ॥ ८ ॥ पात्रं मधुपानसाधनम् ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ शिलीमुखा बाणाः धनुर्बाण-पद्मशाकान् बिभ्रती चतुर्भुजैरित्यर्थः ॥ १३ ॥

पुष्पपल्लवमूलादि फलाढ्यं शाकसंचयम् । काम्यानन्तरसैर्युक्तं क्षुत्तृण्मृत्युज्वरापहम् ॥ १४ ॥
कार्मुकं च स्फुरत्कान्ति बिभ्रती परमेश्वरी । शाकम्भरी शताक्षी सा सैव दुर्गा प्रकीर्तिता ॥१५॥
विशोका दुष्टदमनी शमनी दुरितापदाम् । उमा गौरी सती चण्डी कालिका सापि पार्वती ॥१६॥
शाकम्भरीं स्तुवन् ध्यायन् जपन् संपूजयन्नमन् । अक्षय्यमश्नुते शीघ्रमन्नपानामृतं फलम् ॥१७ ॥
भीमापि नीलवर्णा सा दंष्ट्रादशनभासुरा । विशाललोचना नारी वृत्तपीनपयोधरा ॥ १८ ॥
चंद्रहासं च डमरुं शिरःपात्रं च बिभ्रती । एकवीरा कालरात्रिः सैवोक्ता कामदा स्तुता ॥१९॥
तेजोमण्डलदुर्धर्षा भ्रामरी चित्रकान्तिभृत् । चित्रानुलेपना देवी चित्राभरणभूषिता ॥ २० ॥

( १ गुप्तवती ) १४ ॥ शताक्षीमूर्तिदुर्गामूर्त्योरवतारान्तरत्वाभावेन शाकम्भरीपूजाविधिमेव तत्रातिदिशति । सैवेति ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ चन्द्रहासं खड्गम् ॥ १९ ॥ सप्तमीं मूर्तिमाह । तेज इति ॥ २० ॥

चित्रभ्रमरपाणिः सा महामारीति गीयते । इत्येता मूर्तयो देव्या व्याख्याता वसुधाधिप ॥२१॥
जगन्मातुश्चण्डिकायाः कीर्तिताः कामधेनवः । इदं रहस्यं परमं न वाच्यं कस्यचित्त्वया ॥ २२ ॥

व्याख्यानं दिव्यमूर्तीनामधीष्वाऽवहितः स्वयम् । तस्मात् सर्वप्रयत्नेन देवीं जप निरन्तरम् ॥२३॥
सप्तजन्मार्जितैर्घोरैर्ब्रह्महत्यासमैरपि । पाठमात्रेण मन्त्राणां मुच्यते सर्वकिल्बिषैः ॥ २४ ॥
देव्या ध्यानं मया ख्यातं गुह्याद्गुह्यतरं महत् । तस्मात् सर्वप्रयत्नेन सर्वकामफलप्रदम् ॥ २५ ॥

इति वैकृतिकरहस्यं तन्त्रोक्तं समाप्तम् ।

( १ गुप्तवती ) २१ ॥ २२ ॥ रहस्यत्रयस्याप्यध्ययनं विधत्ते । व्याख्यानमिति । अवहितः अर्थावधानसहित इति सर्वं शिवम् ॥ २३ ॥ २४ ॥ २५ ॥ इति गुप्तवत्यां मूर्तिरहस्यव्याख्या ।

( १ गुप्तवती ) चतुष्टये पीठिकानां प्राचीनानांच तुष्टये । चमत्कृतिकरी भूयान्नवीनानांच मत्कृतिः ॥ १ ॥ साधुच्छाया प्रमितप्रमोदवर्षे चिदम्बरे जनिता । साधुच्छायाप्रमितप्रमोदवर्षं चिदम्बरे तनुतात् ॥ २ ॥ गुरुरेव शिवो गुरुमेव भजे गुरुणैव सहास्मि नमो गुरवे । न गुरोरधिकं शिशुरस्मि गुरोर्मतिरस्तु गुरौ जयनाथगुरौ ॥ ३ ॥ श्रीकाशीपुरवासिसोमपसुधीगम्भीरराड्भारतीपुत्रेणाग्निचिता मया रचितया चण्डीस्तुतेष्टीकया । या नन्दादिषु सप्तमी भ्रमरिणी भीमातटे सन्नतिक्षेत्रे नः कुलदेवता वसती सा श्रीचन्द्रला प्रीयताम् ॥ ४ ॥ इति श्रीमत्पदवाक्यप्रमाणपारावारीणधुरीणसर्वतन्त्रस्वतन्त्रश्रीमद्गम्भीररायभारतीदीक्षितात्मजभास्कररायभारतीदीक्षितमहाग्निचिता विरचिता गुप्तवती-समाख्या सप्तशतीव्याख्या समाप्ता । नमश्चण्डिकायै नमो नमः । न वै देयमनुक्रोशाद्दीनार्त्तातुरकेष्वपि । आप्ताचरित इत्येव धर्म इत्येव वा पुनः ॥ १ ॥

समाप्ता.

